तारो यत्परिधयोऽग्नयो हि तानेवैतत्स्वगाकरोति तस्मादाह स्वगा दैव्या होतृभ्य इति स्वस्तिर्मानुषेभ्य इति तदस्मै मानुषाय होत्रेऽहलामाशास्ते ॥२१॥ अथ परिधीननुप्रहरति स मध्यममेवाग्रे परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः तं तऽएतमनु जोषं भराम्येष नेत्त्वदपचेतयाताऽइत्यग्नेः प्रियं पाथोऽपीतमित्यथेतरावनुसमस्यति ॥२२॥ अथ जुहूं चोपभृतं च संप्रगृह्णाति। अदो हैवाकृतिं करोति यदनयाकृतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं चोपभृतं च संप्रगृह्णाति ॥२३॥ सं वै विश्वेभ्यो देवेभ्यः संप्रगृह्णाति। यद्वाऽअनादिष्टदेवतायै हविर्गृह्यते सर्वा वै तस्मिन्देवता अपिविन्यो मन्यन्ते न वाऽएतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः संप्रगृह्णात्येतद्वै वैश्वदेवꣳ हविर्यज्ञे ॥२४॥ स संप्रगृह्णाति ॥ सꣳस्रवभागा स्थेषा बृहन्त इति सꣳस्रवो ह्येव खलु परिशिष्टो भवति प्रस्तरेष्ठाः परिधेयाश्च देवा इति प्रस्तरश्च हि परिधयश्चानुप्रहृता भवन्तीमां वाचमभि विश्वे गृणन्त इत्येतद्वै वैश्वदेवं करोत्यासद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥२५॥ स यस्यानसो हविर्गृह्णन्ति। अनसस्तस्य धुरि विमुञ्चन्ति यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति यस्यो पात्र्यै स्फ्ये तस्य यतो युनजाम ततो विमुञ्चामेति यतो ह्येवं युञ्जन्ति ततो विमुञ्चन्ति ॥२६॥ युञ्जौ ह वाऽएते यज्ञस्य यत्स्रुचौ। तेऽएतद्युङ्क्ते यत्प्रचरति स यं निधायावद्येद्यथा वाहनमवार्छेदेवं तत्तेऽएतत्स्विष्टकृति विमोचनमागच्छतस्ते तत्सादयति तद्विमुञ्चति तेऽएतत्पुनः प्रयुङ्क्तेऽनुयाजेषु सोऽनुयाजैश्चरित्वैतद्विमोचनमागच्छति ते तत्सादयति तद्विमुञ्चति तेऽएतत्पुनः प्रयुङ्क्ते यत्संप्रगृह्णाति तद्यां गतिमभियुङ्क्ते तां गतिं गत्वा विमुञ्चते यज्ञं वाऽअनु प्रजास्तस्मादय पुरुषो युङ्क्तेऽथ विमुञ्चतेऽथ युङ्क्ते तद्यां गतिमभियुङ्क्ते तां गतिं गत्वाथ ततो विमुञ्चते स सादयति घृताची स्थो धुर्यौ पातꣳ

सुम्ने स्थः सुम्ने मा धत्तमिति साध्व्यौ स्थः साध्वी मा धत्तमित्येवैतदाह ॥[illegible]॥

ब्राह्मणम् ॥१[८.३.]॥ ॥ अध्यायः ॥८॥ ॥

स यत्राह । इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति यदतो होतान्वाह सूक्तऽइव तदाह यजमानायैवैतदाशिषमाशास्ते तद्यदेतदुपरिष्टाद्यज्ञस्याशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥१॥ यज्ञं वाऽएष जनयति । यो यजतऽएतेन क्रतुना अविजानन्नन्वेति तं जनयन्त्याशिषमाशास्ते तामस्मै यज्ञ आशिषᳬ संनमयति यामाशिषमाशास्ते यो माजीजनतेति तस्माद्वाऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥२॥ देवान्वाऽएष प्रीणाति । यो यजतऽएतेन यज्ञेनऽर्ग्भिस्त्वद्यजुर्भिस्त्वदाहुतिभिस्त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वाथाशिषमाशास्ते तामस्मै देवा आशिषᳬ संनमयन्ति यामाशिषमाशास्ते यो नोऽप्रैषीदिति तस्माद्वाऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥३॥ अथ प्रतिपद्यते । इदं द्यावापृथिवी भद्रमभूदिति भद्रᳬ ह्यभूद्यो यज्ञस्य सᳬस्थामगन्नार्ध्म सूक्तवाकमुत नमोवाकमित्युभयं वाऽएतद्यज्ञ एव यत्सूक्तवाकश्च नमोवाकश्चाराध्म यज्ञमविदाम यज्ञमित्येवैतदाहाग्ने त्वᳬ सूक्तवागस्युपश्रुती दिवस्पृथिव्योरित्यग्निमेवैतदाह त्वᳬ सूक्तवागस्युपशृण्वत्योरनयोर्द्यावापृथिव्योरित्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्यन्नवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्येवैतदाह ॥४॥ शंगवी जीवदानूऽइति । शंगवी ते जीवदानू स्तामित्येवैतदाहात्रस्नूऽअप्रवेदेऽइति माह कस्माच्चन प्रत्रासीर्मा तऽइदं पुष्टं कश्चन प्रविदतेत्येवैतदाह ॥५॥ उरुगव्यूतीऽअभयंकृताविति । उरुगव्यूती तेऽभये स्तामित्येवैतदाह वृष्ट्यावा रीत्यापेति वृष्टिमत्यौ ते स्तामित्येवैतदाह ॥६॥ शम्भुवौ मयोभुवाविति । शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाहोर्जस्वती च पयस्वती चेति रसवत्यौ तऽउपजीवनीये स्तामित्येवैतदाह ॥७॥ सूपचरणा च स्वधिचरणा

चेति । सूपचरणाह ते ऽसावस्तु यामधस्तादुपचरसि स्वधिचरणा त ऽइयमस्तु यामुपरिष्टादधिचरसीत्येवैतदाह तयोराविदीति तयोरनुमन्यमानयोरित्येवैतदाह ॥८॥ अग्निरिदꣳ हविः । अजुषतावीवृधत महो ज्यायो ऽकृतेति तदाग्नेयमाज्यभागमाह सोम इदꣳ हविरजुषतावीवृधत महो ज्यायो ऽकृतेति तत्सौम्यमाज्यभागमाहाग्निरिदꣳ हविरजुषतावीवृधत महो ज्यायो ऽकृतेति तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तमाह ॥९॥ अथ यथादेवतम् । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायो ऽक्रतेति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आज्यपा अग्निर्होत्रेणेदꣳ हविरजुषतावीवृधत महो ज्यायो ऽकृतेति तदग्निꣳ होत्रेणाहाजुषतेत्येवं या इष्टा देवता भवन्ति ताः संपश्यत्यसौ हविरजुषतासौ हविरजुषतेति तद्यजस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाहाजुषतेत्यवीवृधतेति यद्धि देवा हविर्जोषयन्ते तदपि गिरिमात्रं कुर्वते तस्मादाहावीवृधतेति ॥१०॥ महो ज्यायो ऽक्रतेति । यज्ञो वै देवानां महस्तꣳ ह्येतज्ज्यायाꣳसमिव कुर्वते तस्मादाह महो ज्यायो ऽक्रतेति ॥११॥ अस्यामृधेद्धोत्रायां देवंगमायामिति । अस्याꣳ राध्नोतु होत्रायां देवंगमायामित्येवैतदाहाशास्ते ऽयं यजमानो ऽसाविति नाम गृह्णाति तदेनं प्रत्यक्षमाशिषा संपादयति ॥१२॥ दीर्घायुत्वमाशास्त ऽइति । सा यामुत्रोत्तरा देवयज्या तदिह प्रत्यक्षं दीर्घायुत्वꣳ ॥१३॥ सुप्रजास्त्वमाशास्त ऽइति । तद्यदमुत्र भूयो हविष्करणं तदिह प्रत्यक्षꣳ सुप्रजास्त्वं प्रशासनꣳ स कुर्याद्य एवं कुर्यादुत्तरां देवयज्यामाशास्त ऽइति त्वेव ब्रूयात्तद्धि जीवातुं तत्प्रजां तत्पशून् ॥१४॥ भूयो हविष्करणमाशास्त ऽइति तद्वेव तत्सजातवनस्यामाशास्त ऽइति प्राणा वै सजाताः प्राणैर्हि सह जायते तत्प्राणानाशास्ते ॥१५॥ दिव्यं धामाशास्त ऽइति । देवलोके मे ऽप्यसदिति वै यजते यो यजते तद्देवलोक ऽएवैनमेतदपिविनं करोति यदनेन हविषाशास्ते तदश्यात्तदृध्यादिति यद्-

नेन हविषाशास्ते तदस्मै सर्वᳪ समृध्यतामित्येवैतदाह ॥१६॥ ता वा ऽ एताः । पञ्चाशिषः करोति तिस्र इडायां ता अष्टावष्टाक्षरा वै गायत्री वीर्यं गायत्री वीर्यमेवैतदाशिषोऽभिसंपादयति ॥१७॥ नातो भूयसीः कुर्यात् । अतिरिक्तᳪ ह कुर्याद्यदतो भूयसीः कुर्याद्यद्धि यज्ञस्यातिरिक्तं द्विषन्तᳪ हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मान्नातो भूयसीः कुर्यात् ॥१८॥ अपीद्धि कनीयसीः स्युः । तदस्मै देवा रासन्ता मिति तदस्मै देवा अनुमन्यन्तामित्येवैतदाह तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषा इति तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्मा ऽ एतद्वनवामहा ऽ इ त्येवैतदाह ॥१९॥ इष्टं च वित्तं चेति । द्यावापृथिवी वा ऽ एतद्यज्ञं तयोरिदं तस्मा दाहेष्टं च वित्तं चेत्युभे चैनं द्यावापृथिवी ऽ अᳪहसस्पातामित्युभे चैनं द्यावापृथि वी ऽ आर्त्तेर्गोपायतामित्येवैतदाह ॥२०॥ तद्ध हैक ऽ आहुः । उभे च मेति तथा होताशिष आत्मानं नान्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञ ऽ आशीः किं नु तत्र ऽ र्त्विजां यां वै कां च यज्ञ ऽ ऋत्विज ऽ आशिषमाशासते यजमानस्यैव सा न ह स एतां कं चनाशिषं प्रतिष्ठापयति य आहोभे च मेति तस्माद् ब्रूयादुभे चैनमित्येव ॥२१॥ इह गतिर्वामस्येति । तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधा ति तस्मादाहेह गतिर्वामस्येति ॥२२॥ इदं च नमो देवेभ्य इति तद्यज्ञस्यैवैन त्सᳪस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदं च नमो देवेभ्य इति ॥२३॥ अथ शम्योराह । शम्युर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सᳪस्थां विदां चकार स देव-लोकमपीयाय तत्तद्ध तिरोबभूव मनुष्येभ्य आस ॥२४॥ तद्वा ऽ ऋषीणामनुश्रुतमा स । शम्युर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सᳪस्थां विदां चकार स देवलोकमपी यायेति ते तामेव यज्ञस्य सᳪस्थामुपायन्याᳪ शम्युर्बार्हस्पत्योऽभ्यध्यायत्तद्यस्मा त्स्वेवैष एतद्यज्ञस्य सᳪस्थामुपैति याᳪ शम्युर्बार्हस्पत्योऽवेत्तच्छम्योराह तस्माद्ध श म्योराह ॥२५॥ स प्रतिपद्यते । तच्छम्योरावृणीमह ऽ इति तां यज्ञस्य सᳪस्थामावृ-

णीमहे यात्त शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह ॥२६॥ गातुं यज्ञाय गातुं यज्ञपतय
ऽइति । गातुᳩ ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सᳩस्थां दैवी स्वस्ति-
रस्तु नः स्वस्तिर्मानुषेभ्य इति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदा-
होर्ध्वं जिगातु भेषजमित्यूर्ध्वं नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥२७॥ शं
नोऽअस्तु द्विपदे शं चतुष्पदऽइति । एतावद्वाऽइदᳩ सर्वं यावद्द्विपाच्चैव चतुष्पा-
च्च तस्माऽएवैतद्यज्ञस्य सᳩस्थां गत्वा शं करोति तस्मादाह शं नोऽअस्तु द्विपदे
शं चतुष्पदऽइति ॥२८॥ अथानयेत्युपस्पृशति । अमानुषऽइव वाऽएतद्भवति य-
दार्त्विज्ये प्रवृत इयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तद्व
खलु पुनर्मानुषो भवति तस्मादनयेत्युपस्पृशति ॥२९॥ ब्राह्मणम् ॥२[९. १.]॥ ॥

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति । जुहूं च स्रुवं चाध्वर्युरादत्ते वेदᳩ
होताज्यविलापनीमग्नीत् ॥१॥ तद्धैकेषामध्वर्युः । पूर्वेणाहवनीयं पर्येति तद्व त-
था न कुर्याद्बहिर्धा ह यज्ञात्स्यादत्तेनेयात् ॥२॥ जघनेनो हैव पत्नीम् । एकेषाम-
ध्वर्युरेति नोऽएव तथा कुर्यात्पूर्वार्धो वै यज्ञस्याध्वर्युर्जघनार्धः पत्नी यथा भसत्तः
शिरः प्रतिदध्यादेवं तद्बहिर्धा हैव यज्ञात्स्यादत्तेनेयात् ॥३॥ अन्तरेणो हैव प-
त्नीम् । एकेषामध्वर्युरेति नोऽएव तथा कुर्यादन्तरियाद्ध यज्ञात्पत्नीं यत्तेनेयात्तस्मा-
द्व पूर्वेणैव गार्हपत्यमन्तरेणाहवनीयं चेति तथा ह न बहिर्धा यज्ञाद्भवति यथो
ऽएवादः प्रचरन्नन्तरेण संचरति स उऽएवास्यैष संचरो भवति ॥४॥ अथ पत्नीः
संयाजयन्ति । यज्ञाद्धि प्रजाः प्रजायन्ते यज्ञात्प्रजायमानाः । मिथुनात्प्रजायन्ते मिथुनात्प्र-
जायमाना अन्ततो यज्ञस्य प्रजायन्ते तदेना एतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्र-
जनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पत्नीः सं-
याजयन्ति ॥५॥ चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे-द्वे
हि खलु भवतो मिथुनमेवैतत्प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥६॥

ता वाऽआज्यहविषो भवन्ति । रेतो वाऽआज्यꣳ रेत एवैतत्सिञ्चन्ति तस्मादाज्यहविषो भवन्ति ॥७॥ तेनोपाꣳशु चरन्ति । तिर इव वै मिथुनेन चरन्ति तिर इवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥८॥ अथ सोमं यजति । रेतो वै सोमो रेत एवैतत्सिञ्चति तस्मात्सोमं यजति ॥९॥ अथ त्वष्टारं यजति । त्वष्टा वै सिक्तꣳ रेतो विकरोति तस्मात्त्वष्टारं यजति ॥१०॥ अथ देवानां पत्नीर्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्यजति ॥११॥ स यत्र देवानां पत्नीर्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता आसते यावन्न समिष्टयजुर्जुहोतीदं नु नो जुह्वत्विति ताभ्य एवैतत्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर इवैव पुꣳसो जिघत्सन्ति या इव तु ता इवेति ह स्माह याज्ञवल्क्यः ॥१२॥ अथाग्निं गृहपतिं यजति । अयं वाऽअग्निर्लोक इममेवैतल्लोकमिमाः प्रजा अभिप्रजनयति ता इमं लोकमिमाः प्रजा अभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥१३॥ तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वाऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वाऽअनु जाया तदेवास्यात्र पत्नी स्वगाकृता भवतीति तꣳ ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात्तस्मादिडान्तमेव स्याद्यन्नो प्रस्तरस्यैव रूपं क्रियते ॥१४॥ स यदि प्रस्तरस्य रूपं कुर्यात् । यथैवादः प्रस्तरेण यजमानꣳ स्वगाकरोत्येवमेवैतत्पत्नीꣳ स्वगाकरोति ॥१५॥ स यदि प्रस्तरस्य रूपं कुर्यात् । वेदस्यैकं तृणमाच्छिद्याज्ये जुह्वामनक्ति मध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम् ॥१६॥ अथाग्नीदनुप्रहरति । तूष्णीमेवानुप्रहृत्य चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशति तेनोऽअस्यात्मानं नानुप्रवृणक्ति ॥१७॥ अथाह संवदस्वेति । अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति ॥१८॥ अथ जुहूं च स्रुवं च संप्रगृह्णाति । अदो ह्येवाहुतिं करोति यदनयाहुतिर्भूत्वा देवलोकं गच्छा-

दिति तस्माज्जुहूं च स्रुवं च संप्रगृह्णाति ॥१९॥ स वाऽअग्नये संप्रगृह्णाति । अग्ने ऽदब्धायोऽशीतमेत्यमृतो ह्यग्निस्तस्मादाहादब्धायविशीततमेत्याग्निष्ठो ह्यग्निस्तस्मादाहाशीततमेति पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्याऽइति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाहाविषं नः पितुं कृणित्वत्यन्नं वै पितुरनमीवं न इदमकिल्विषमन्नं कुर्वित्येवैतदाह सुषदा योनावित्यात्मन्येतदाह स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥२०॥ अथ वेदं पत्नी विस्रꣳसयति । योषा वै वेदिर्वृषा वेदो मिथुनाय वै वेदः क्रियतेऽथ यदेनेन यज्ञ ऽउपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥२१॥ अथ यत्पत्नी विस्रꣳसयति । योषा वै पत्नी वृषा वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्मादिदं पत्नी विस्रꣳसयति ॥२२॥ सा विस्रꣳसयति । वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूया इति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥२३॥ तमा वेदेः सꣳस्तृणाति । योषा वै वेदिर्वृषा वेदः पश्चाद्धि परीत्य वृषा योषामधिद्रवति पश्चादेवैनामेतत्परीत्य वृष्णा वेदेनाधिद्रावयति तस्मादा वेदेः सꣳस्तृणाति ॥२४॥ अथ समिष्टयजुर्जुहोति । प्राग्ने यज्ञोऽनुसंतिष्ठाताऽइत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्प्रत्यङ्ङु हैवास्यैष यज्ञः संतिष्ठेत तस्माद्वाऽएतर्हि समिष्टयजुर्जुहोति प्राग्ने यज्ञोऽनुसंतिष्ठाताऽइति ॥२५॥ अथ यस्मात्समिष्टयजुर्नाम । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम ॥२६॥ अथ यस्मात्समिष्टयजुर्जुहोति । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायतऽउप ह वै ता आसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो हविरिति ता एवैतद्यथायथं व्यवसृजति यत्र-यत्रासां चरणं तदनु यज्ञं वाऽएतदजीजनत यदेनमतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजुर्जुहोति ॥२७॥ स जुहोति । देवा

गातुविद इति । गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमिते-
ति तदेतेन यथायथं व्यवसृजति मनसस्पत इमं देव यज्ञ७ स्वाहा वाते धा इत्य-
यं वै यज्ञो योऽयं पवते तदिमं यज्ञ७ सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञ७
संदधाति तस्मादाह स्वाहा वाते धा इति ॥२८॥ अथ बर्हिरनुप्रहरति । अयं वै
लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ओषधीर्दधाति ता इमा अस्मिंल्लोके
ऽओषधयः प्रतिष्ठितास्तस्माद्बर्हिरनुप्रहरति ॥२९॥ तौ वा अतिरिक्तौ जुहोति । स-
मिष्टयजुर्भ्या७ ह्यतो यज्ञस्य यजू७षि समिष्टयजुर्वा अतिरिक्तं तद्यदा हि समिष्टयजुर्जु-
होत्यथैताभ्यां जुहोति तस्मादिमा अतिरिक्ता असंमिता ओषधयः प्रजायन्ते ॥३०॥
स जुहोति । सं बर्हिरङ्क्ता७ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रो
विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति ॥३१॥ अथ प्रणीता दक्षिणतः प-
रीत्य निनयति । युक्तं वा एतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङ् हाविमुक्त
एव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणी-
ता दक्षिणतः परीत्य निनयति ॥३२॥ स निनयति । कस्त्वा विमुञ्चति स त्वा
विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषायेति तद्वृष्टिमुत्तमां यज-
मानाय निराह स येनैव प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन
विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथ पत्नीकरणान्कपालेना-
धोऽधः कृष्णाजिनमुपास्यति रक्षसां भागोऽसीति ॥३३॥ देवाश्च वा असुराश्च ।
उभये प्राजापत्याः पस्पृधिर एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भ-
विष्यत्यस्माकमयं भविष्यतीति ॥३४॥ ततो देवाः । सर्वं यज्ञ७ संवृज्याथ यत्पा-
पिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन्नस्ना पशोः पत्नीकरणैर्हविर्यज्ञात्सुनिर्भ-
क्ता असन्निति वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्येव स ना-
वह७मत उत हि वशे लब्ध आह किं मा बभक्थेति स यमेवैभ्यो देवा भागमक-

ल्पयंस्तमेवैभ्य एष एतद्भागं करोत्यथ यदधोऽधः कृष्णाजिनमुपास्यत्यनः विवैभ्य एतदन्धे तमसि प्रवेशयति तथोऽएवासृक्पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसाᳫं हि स भागः ॥३५॥ ब्राह्मणम् ॥३ [१.२.]॥ ॥

सᳫंस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा क्षुदम्भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥१॥ स एष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽत्यु तᳫं सृजेते यो ऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानᳫं शमयति ॥२॥ पूर्णं निनयति । सर्वं वै पूर्णᳫं सर्वेणैवैनमेतच्छमयति संततमव्यवच्छिन्नं निनयति संततेनैवैनमेतदव्यवच्छिन्नेन शमयति ॥३॥ यद्वेव पूर्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते व्यस्य तद्वृहन्ति क्षण्वन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति ॥४॥ पूर्णं निनयति । सर्वं वै पूर्णᳫं सर्वेणैवैतत्संदधाति संततमव्यवच्छिन्नं निनयति संततेनैवैतदव्यवच्छिन्नेन संदधाति ॥५॥ तदञ्जलिना प्रतिगृह्णाति । सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सᳫं शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधाति ॥६॥ अथ मुखमुपस्पृशते । द्वयं तद्यस्मान्मुखमुपस्पृशतेऽमृतं वाऽआपोऽमृतेनैवैतत्सᳫंस्पृशतऽएतदु चैवैतत्कर्मात्मन्कुरुते तस्मान्मुखमुपस्पृशते ॥७॥ अथ विष्णुक्रमान्क्रमते । देवान्वाऽएष प्रीणाति यो यजतऽएतेन यज्ञेनऽर्ग्भिरिव यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥८॥ यद्वेव विष्णुक्रमान्क्रमते । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्र-

थमेन पदेन पस्पारेऽथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैतामु एवैष एतस्मै विष्णुर्यज्ञो
विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान्क्रमते तद्वाऽइत एव पराचीनं भूयिष्ठा इव
क्रमन्ते ॥९॥ तदु तत्पृथिव्यां विष्णुर्व्यक्रंस्त । गायत्रेण छन्दसा ततो निर्भक्तो
योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो नि-
र्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मो दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो
निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येवमिमाँल्लोकान्त्समारुह्याथैषा गतिरे-
षा प्रतिष्ठा य एष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा
स स्वर्गो वा लोकस्तदेवमिमाँल्लोकान्त्समारुह्याथैतां गतिमेतां प्रतिष्ठां गच्छति प-
रस्ताद्वैवार्वाङ् क्रमेत य इतोऽनुशासनं चिकीर्षेद्द्वयं तत्परस्मात्परस्मादर्वाङ् क्रमते
॥१०॥ अपसरणतो ह वाऽअग्रे देवा जयन्तोऽजयन् । दिवमेवाग्रेऽथेदमन्तरिक्षम-
थेतोऽनपसरणात्सपत्नाननुदन्त तथोऽएवैष एतदपसरणत एवाग्रे जयञ्जयति दि-
वमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदतऽइयं वै पृथिवी प्रतिष्ठा तद-
स्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥११॥ तदु तद्दिवि विष्णुर्व्यक्रंस्त । जागतेन
छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रै-
ष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रं-
स्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै
प्रतिष्ठायाऽइत्यस्याँ हीदँ सर्वमन्नाद्यं प्रतिष्ठित तस्मादाहास्मादन्नादस्यै प्रतिष्ठा-
याऽइति ॥१२॥ अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ् प्रेक्षते ॥१३॥
स प्रेक्षते । अगन्म स्वरिति देवा वै स्वरगन्म देवानित्येवैतदाह सं ज्योतिषा-
भूमेति सं देवैरभूमेत्येवैतदाह ॥१४॥ अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा
तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्यमुदीक्षते ॥१५॥ स उदीक्षते । स्वयम्-
भूरसि श्रेष्ठो रश्मिरित्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो र-

श्मिरिति वर्चोदा असि वर्चो मे देहीति हैवाह ब्रवीमीति ह स्माह याज्ञव-
ल्क्यस्तद्ध्येव ब्राह्मणेनेष्टव्यं यद्ब्रह्मवर्चसी स्यादित्युतो ह स्माहौपोदितेय एष वाव
मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृ-
ध्यते ॥१६॥ अथावर्तते । सूर्यस्यावृतमन्वावर्तऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वै-
तस्यैवावृतमन्वावर्तते ॥१७॥ अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद्गार्हपत्यमु-
पतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति
यावद्वेवास्येह मानुषमायुस्तस्माऽउ एवैतदुपतिष्ठते तस्माद्गार्हपत्यमुपतिष्ठते ॥१८॥
स उपतिष्ठते । अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहप-
तिस्त्वं मयाग्ने गृहपतिना भूया इति नात्र तिरोहितमिवास्त्यस्थूरि णौ गार्हप-
त्यानि सन्त्वित्यनार्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह शतꣳ हिमा इति
शतं वर्षाणि जीव्यासमित्येवैतदाह तदप्येतद्भुवन्नाद्रियेतापि हि भूयाꣳसि शता-
द्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद्भुवन्नाद्रियेत ॥१९॥ अथावर्तते । सूर्यस्यावृत-
मन्वावर्तऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते ॥२०॥ अथ
पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसंतनवदिति यदि पुत्रो न स्याद-
प्यात्मन एव नाम गृह्णीयात् ॥२१॥ अथाहवनीयमुपतिष्ठते । प्राञ्चे यज्ञोऽनुसं-
तिष्ठाताऽइति तूष्णीमुपतिष्ठते ॥२२॥ अथ व्रतं विसृजते । इदमहं य एवास्मि सो
ऽस्मीत्यमानुष-इव वाऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳ
सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सो
ऽस्मीत्येवं व्रतं विसृजेत ॥२३॥ ॥ ब्राह्मणम् ॥४ [९.३.]॥ ॥ सप्तमः प्रपाठकः ॥
कण्डिकासंख्या ११४ ॥ ॥ नवमोऽध्यायः ॥ ॥ अस्मिन्काण्डे कण्डिकासंख्या ८३७ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे श्रीहविर्यज्ञनाम प्रथमं काण्डं समाप्तम् ॥ ॥

# EXTRACTS MADE FROM THE COMMENTARIES OF SÂYANÂCÂRYA AND HARISVÂMIN.

अग्न्याधानेऽग्नयः पवमानेष्टिभिर्निष्पाद्याः पवमानेष्टयश्च दर्शपूर्णमासप्रकृतिकत्वात् तदधिगमसापेक्षज्ञाना इति प्रथमे काण्डे दर्शपूर्णमासौ प्रतिपाद्येते । तदनुष्ठानारम्भश्च पूर्णमासपूर्वकः अतश्च तस्य पूर्णमासस्य प्रथमं यदङ्गं व्रतोपायनं तदङ्गत्वेनाग्नेरुपस्पर्शनं विधत्ते व्रतमुपैष्यन्निति । अग्निप्रणयनं तत्प्रबलीकरणानुपमन्वाधानं चार्थसिद्धत्वादनुष्ठानक्रमानादृत्य मध्ये व्रतोपायनस्य प्राथम्यमविरुद्धम् ॥१॥ इदानीमग्न्युपस्पर्शनलक्षणानाङ्गाभ्यां सहितं मन्त्रकं व्रतोपायनं विधत्ते स इति । स यजमानः अग्निमाहवनीयम् [illegible]पम् राध्यतां समृद्धं भवतु तिरोहितमविस्पष्टार्थं पदम् ॥२॥ स्वीकृतस्य व्रतस्य [illegible]प्तिपर्यन्ततामाहाथेति । संस्थिते यागे पर्यवसिते ॥ अत्र व्रतोपायने मन्त्रान्तरं विधातुं पूर्वमन्त्रस्यैव विशेषमाह यत एतेन वक्ष्यमाणेनेदमहमित्यादिना [illegible] तोक्तेनैवोक्तत्वात् एवकारेणैष मन्त्रः प्रशस्यते न तु पूर्वो निषिध्यते [illegible] [२.१.११.] द्वयमप्याहाग्ने व्रतपतऽइदमहमिति वेति ॥३॥ यदिदं [illegible]ति कोटिद्वयमेव न तृतीया कोटिरस्ति ॥४॥ अनेन मन्त्रेण व्रतमुपेयुषो नियममाह स इति । स इत्थं कृतव्रतोपायनः सत्[illegible] न वदेदित्यर्थः । यस्मात्कारणात् यद्यत्सत्यं तत्तदवश्यं वक्तव्यं स्यात् अनृतवदनं चाप्रतिषिद्धं स्यात् इत्यतं च नाभिप्रायः ॥५॥ प्रसङ्गाद्विसर्जनमाह see १.९.३.२३. । व्रतोपायनात्प्रागयं अहमेव मनुष्योऽस्मि व्रतमुपेत्य स एव मनुष्यः इदमस्मिन्ननुव्रतसमये इदमिति क्रियाविशेषणत्वान्नपुंसकत्वम् नन्वसौ मनुष्यो व्रतसमयेऽपि मनुष्य एव तत्किमुच्यते य एव मनुष्योऽस्मि स एवेदमस्मीति । तत्राह मानुष इवेति मनुष्योऽपि हि तदा [स]त्यात्मकत्वात्सत्यवदनाद्वा देव इत्युक्तम् व्रतत्यागे कर्म व्रतारम्भात्प्रागिव स्वभावसिद्धं मनुष्यत्वमेवेति ॥ ननु यथा व्रतोपायने अनृतात्सत्यमुपैमीत्युक्तम् एवं तत्त्यागे सत्यादनृतमुपैमीति किं नोक्तमित्यत आह न हीति । महत उत्कृष्टाद्देवत्वात्प्रच्युतेनात्यन्तनिकृष्टमानुषत्वप्राप्तिकथनस्यानवक्लृप्तत्वम् ॥६॥ व्रतप्रसङ्गादागतं तद्विसर्जनं समाप्य पूर्वेद्युर्यजमानेन व्रतानन्तरं यत्कर्तव्यं तद्वक्तव्यं प्रतिजानीते अथेति । यतो अशनानशनापरनामकमारण्याद्यशनमेव यजमानेन कर्तव्यम् अतस्तदनन्तरमेव तस्य निरूपणं क्रियतऽइत्यर्थः ॥ प्रतिज्ञातस्याशनानशनपक्षस्य प्रशंसार्थं केवलानशनपक्षं निराकर्तुमुपन्यस्यति तदु हेति । तत्रास्मिन्नशनानशनविषये अनशनं सर्वात्मना अशनत्यागम् ॥ उपवसथनामनिर्वचनेन देवानामागमनं द्रढयति तेऽस्येति उप समीपे यजमानस्य वसन्ति देवा अस्मिन्निति पर्वदिवस उपवसथनामक इत्यर्थः ॥७॥ गृहे मनुष्येष्वागतेष्वनश्नत्सु यः कश्चिद्यजमानः स्वयं पूर्वं भुञ्जीतेति यत्तदेवानुचितं तर्कयामः अथ यः कश्चिद्देवेष्वनश्नत्सु पूर्वोऽश्नीयादिति यत्तस्यानवक्लृप्तिः किमु वक्तव्या अपाठेन चेन्मुनिना निर्णीतोऽनशनाख्यः तर्हि स एव परमार्थः ॥८॥ कथमशनानशनपक्ष इति चेत् अस्यापि मुनिनैव याज्ञवल्क्येन मान्यत्वेन नीतत्वादित्याह तदिति । [अशनानशनलक्षणस्वमतसमर्थनाय प्रत्येकपक्षौ दूषयति

यदीति । दैविके हि कर्मणि देवान्प्रत्युद्दिष्टस्यैव हविषः प्रथममनुपयोगः काममन्यस्य पित्र्ये पुनरतिनियमाज्जविषोऽन्यदपि अनुपयोज्यमिति पितृदेवत्यतामापादयति याज्ञवल्क्यस्याशयः । तत्किं दैविके कर्मणि प्रागपि भोक्तव्यमिति यस्तमाशयमाजानानः शङ्कते तमाह यद्यु इति यदि तु अश्नाति तदा अशिशिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात् ॥ अशनानशनपक्षयोरुभयोरपि दोषश्चेत्का गतिरिति यद्द्रव्यमशितमप्यनशितवद्भवति तदश्नीयात् । यस्य द्रव्यस्य संबन्ध्यन्नं हविर्ह्विन देवा न गृह्णन्ति तदशितमपि सदनशितवद्भवति । तथाच यथादीरितदोषद्वयाभावमाह स यदिति ॥९॥ आरण्यग्रहणं प्राकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणम् वृक्ष्यं वृक्षोद्भवं फलम् । वृषा नाम कश्चित्तस्य पुत्रो वार्ष्णस्तस्य मुनेर्मतमपवदति तदु तथेति । शमीधान्यं तिलमाषादि । उपचिनोतीत्युपचम् अल्पेनापि माषपिष्टेन मिश्रितं व्रीहिपिष्टं तृचतुरान्माखाबपितं (!खाङ्कापि A. C.!) उपचितं बहु भवति इति प्रसिद्धं तदाह व्रीहियवाविति अतो माषोपयोगे व्रीहियवावेव यत उपयुक्तौ स्याताम् अतस्तथा न कुर्यात् अतो युक्तमारण्यमेवाश्नीयादिति ॥१०॥ स प्रसिद्धोऽध्वर्युः अप एवाभिमुख्येन प्राप्नोति । एतच्चापां प्रणयनमथ संयौतीति [२.२.३.] वक्ष्यमाणसंयवनार्थम् अतः संयवनात्प्राक्प्रणीतानां नाशे पुनः प्रणयनं कार्यम् कृते तु संयवने तन्नाशेऽपि प्रयोजनस्य जातत्वान्न पुनः प्रणेतव्यम् ॥ उक्तं प्रणयनं प्रशंसति यज्ञो वाऽइति । अपां यज्ञसाधनतया यज्ञरूपत्वात्तद्विस्तारात्मकस्य प्रणयनस्य यज्ञविस्ताररूपत्वात्प्राशस्त्यम् ॥१२॥ व्याह्रियन्तऽइति व्याहृतयो मन्त्राः दुर्ज्ञानत्वाभिधानाच्च [°त्वानि° A. B.] अनिश्चित्य वचनादनिरुक्ताः ॥१३॥ अनियोग एवकारः । व्याप्नुवन्ति सकलं जगदित्यापः ॥१४॥ अथवास्य कर्मणो यदेवाङ्गं प्रापयितव्यमध्वर्य्वादयः प्रमादान्न प्रापयन्ति तद्वैकल्यमुदकाचमनप्रोक्षणादिना परिहरन्त आपयन्ति ॥१५॥ अपां वज्रत्वमेता आपो वज्रीभूत्वेत्यादिप्रसिद्धं श्रुत्यन्तरे वज्रो वाऽइति । न केवलं प्रसिद्धिबलाद्वज्रत्वम् उपपत्तिबलाच्चेत्याह वज्रो हीति । उपपत्तेः प्रसिद्धिं वैशब्द आह । तां प्रसिद्धामुपपत्तिं दर्शयति तस्मादिति । यस्मादापो वज्रः तस्माद्येन पथा गच्छन्ति तं पन्थानं निम्नं गर्तं कुर्वन्ति गत्वा वा यत्र तृणं गुल्मं वा उपतिष्ठन्ते निर्दहन्ति निःसारं कुर्वन्ति ॥ देवा एतमुदकलक्षणं वज्रमुदयच्छन्नुक्तप्रकारप्रणयनात्मकमुद्यमनं तस्य कृतवन्त इत्यर्थः तस्य वज्रस्य सम्बन्धिन्यभये [ते]न वज्रेण परिहितभये अनाष्ट्रे नाशयन्तीति नाष्ट्राण्यसुररक्षसानि तद्रहिते निवाते तत्संस्पृष्टेन वातेनापि रहिते स्थाने यथा देवाः कृतवन्तः तथैवैषामध्वर्युः ॥१७॥ प्रणयनप्रकारमाह ता इति । चमसादिपात्रस्योपरि सिक्त्वा पूरयित्वा न पुनः कुतश्चिज्जलाशयादुद्धृत्य गार्हपत्यस्योत्तरभागे स्थापयेत् आपस्तम्बस्तु स्थापितपात्रस्य समन्त्रकं पूरणमाह इह तु ब्राह्मणे पूरितस्य स्थापनम् ॥ उदपात्रस्थापनं प्रयोजनान्तरेण स्तौति वज्रं वाऽइति । संस्पृणाति हिनस्ति । अतो हिंसापरिहाराय स्वयं संनद्ध एवोद्यच्छेत ॥१८॥ उद्यन्तुः प्रतिष्ठामुक्त्वा उद्यन्तव्यस्यापि प्रतिष्ठामाह स इति ॥१९॥ सादितानामपां प्रणयनमाह ता इति । आहवनीयस्य संनिहितोत्तरभागे प्रणयति नोत्वासादयति ॥२०॥ अन्तरेणेति बलादग्निमिति लभ्यते । संचरान् संचरेयुः लिङर्थे लेट् ॥ साक्षादुत्तरभागे आहवनीयप्रणयनं विवक्षितमिति दर्शयितुं ततः प्राक्प्रत्यगासादनं निषेधति अतिष्कृत्य उत्तरभागमतीत्य प्राग्भागे अनाप्ता उत्तरभागमप्राप्ताः प्रत्यगेव नासादयेत् । तत्र दोषं वक्तुमुपोद्घातमाह । व्यन् सपत्नऽइति [पा° ४.१.१४५] स्मृतेर्भ्रातृव्यः तस्य भावो भ्रा-

तृव्यं शात्रवम् युवादिवाद्यात्वे [पा° ५.१.१३०] अण्। विशिष्टं भ्रातृव्यम् [illegible]
अग्नेर्यथा भवति तथा सोऽतिहरन्नध्वर्युः कुर्यादित्यर्थः । यत्र [illegible]
न्धिनीरप उपस्पृशन्त्यृत्विग्यजमानाः तत्रापस्पर्शनमतो भ्रातृव्यं शत्रुमुद्दिश्य [illegible]
येत । अतिहरणस्य वैरकारणसंबन्धार्थः प्रयोगाऽनुवादः [illegible] इ-
त्यपौनरुक्त्यम् ॥ संप्रति सम्यक् ॥२१॥ प्रणीताप्रणयनानन्तरं [illegible]
येति ॥ विराजश्छन्दसोऽक्षरेषु दशत्वमस्ति । प्रथमश्च यज्ञो ज्योतिष्टोमः एष वाव प्रथमो य-
ज्ञो यज्ञानां यज्ज्योतिष्टोम इति श्रुतेः तत्र च नवत्युत्तरशतसंख्याकाः स्तोत्रियाः [illegible]कान-
विंशतिसंख्यया विभज्यमानासु दश लभ्यन्तेऽत्यस्ति तत्रापि दशसंख्या [illegible]
गाद्विराड्यज्ञयोरेकत्वादिह दशसंख्यासंपत्त्या विराडात्मको यज्ञ इह [illegible] भ-
वति ॥ रभ राभस्ये राभस्यं कार्योपक्रमः किमपि कार्यं कर्तुमुपक्रान्तः ॥२२॥१॥१॥

आदानं हविर्निर्वापार्थम् यज्ञाय हि तदादानम् [illegible] हविः [illegible] निर्वाप-
काले व्रीहिरूपम् तदग्निहोत्रहवण्या शूर्पं निर्वपन्नध्वर्युः [illegible]
निजां त्रयाणां गुणः श्लाविति [पा° ७.४.७५.] अभ्यासस्य गुणः ॥१॥ [illegible] हि चित्त-
विक्षिप्तहेतोर्वाग्व्यवहारस्याभावात्तदैकाग्र्यं माति अविकलो यतो यतः संपद्यते । [illegible]-
पदेशत्वेऽप्यागमानुशासनस्यानित्यत्वादिडभावः शुषधस्यामिति [पा° ७.२.१८.] [illegible]
इति निपातितम् ॥ शूर्पं चाग्निहोत्रहवणीं च प्रतपति ॥२॥ नाप्नोतीति नाष्टा [illegible] प्रजाः ।
ततेन तपनेन यज्ञमुखाद्यज्ञप्रारम्भात् एतादिति क्रियाविशेषणम् ॥३॥ [illegible]-
ति मन्त्रेण हविर्निर्वापार्थं शकटसमीपं प्रगच्छेत् ॥ यथा कृष्णो मृगः पृथिवीमनुप्रविश्य [illegible]-
त्येव न गच्छति यथा व्याघ्रादिरभितः पाशाभ्यां बद्धो ब्रियमाणः नैव [illegible]
यतः केनचित्संसर्गिणा प्रतिबद्धः किं तु परिछिन्नः प्रतिबन्धकाभावात् [illegible]
चरति तथैव निर्वप्स्यमानहविरादानार्थं रक्षोऽप्युक्तविशेषणविशिष्टं सद्व निर्वपन्तं पुरुषम-
नुगच्छेत् अतस्तदेतत्पुरुषेण गम्यमानमन्तरिक्षं ब्रह्मणा उर्वन्तरिक्षमन्वेमीत्यनेन मन्त्रेण [illegible]
तमत एवाभयं कुरुते । उरु विस्तीर्णं प्रतिबन्धकराहित्यलक्षणमुक्तं [illegible] हि मन्त्रार्थः
॥४॥ अनस एव न शालायाः सकाशाद्ग्रहणे कारणमाह स इति । अन एव हि प्रथम
धान्यस्याधिकरणम् अनसः सकाशान्नीयमानं धान्यं पश्चादेव किं ततः [illegible] ([illegible]) गृ-
तत (B. पतते A. C.!!) शालागतं भवति शालाशब्दाच्छान्दसत्वेन [illegible]
दण् ॥ यदग्रे गृहप्रवेशात्प्रागनसि स्थितमत एव गृ[illegible] मनुपकर्तं तदेव यज्ञसाधनं
करवाणीति ॥५॥ बहोर्भावो भूमा । अनोवाह्यमनसा वोढुमर्हम् ॥६॥ [illegible] विधि-
श्रुतिसिद्धं यज्ञसाधनत्वं स्तोतुं स्मारयति । न केवलं श्रुतिसिद्धं तस्य तत्साधनत्वम् प्रत्यक्षा-
दिप्रमाणैरपि तस्य साधनत्वं सिद्धमित्याह यज्ञो हीति (see १.१.१०.) । यस्मादनस एव प्र-
हणं तस्माद्ग्रहणमन्त्रा धूरसीत्यादय अनोऽन्वयवलिङ्गा दृश्यन्ते न पुनः कोष्ठगतस्य कुम्भी-
गतस्य वा धान्यस्य कुम्भीशब्दस्तन्निष्ठं धान्यं लक्षयति ॥ [illegible] भस्त्राया इति । ष-
ष्ठ्यर्थे चतुर्थी । तस्मिन्पक्षे भस्त्रायाः के मन्त्रा इत्याह तद्वृषीनिति । उक्तार्थं । तदा तु
तान्येव यज्ञभस्त्रायाः प्रतिपादिकानि स्युरिति हे भस्त्रे या त्वं धूरसि इत्येव भस्त्रापक्षे विशेषः ।
यानि यजूंषि प्रकृतावनस्यासन् तान्येव भस्त्रायामपि स्युः । निर्ममे [°मे AC.] अनुतिष्ठानि ॥७॥

पात्रीतो ग्रहणे धर्मविशेषमाह । तस्मिन्पात्रीपक्षे तस्या अधस्तात्स्फ्यमुपोह्य उपनिधाय see कात्या° २.३.२८.२९. । अनसो ग्रहणे स्फ्योपहितपात्रीतो ग्रहणेऽतिशयितं प्रयोजनमाह यत इति । यतो यं स्फ्यमाश्रित्य युनजाम यज्ञेन योगं प्राप्नवाम ततस्तस्मिन्नेव स्फ्ये विमुञ्चाम वियोगमपि करवाम । अनसो निर्वापपक्षे हि युक्तप्रभृतौ शकटस्य धुरोर्निदिध्यात् पात्रीतः पुनर्निर्वापे तदाधारभूते स्फ्ये तयोर्निधानं विमोकः see कात्या° ३.६.११.२०. ॥८॥ अथ धुरः समन्त्रकमभिमर्शनं विधास्यंस्तदुपोद्घातत्वेन देवतासूयतां तस्याः प्रतिपादयति तस्येति । एनच्छकटमनसो योगे खलु ये बलीवर्दा वहन्ति एषां वहं वहनसाधनं स्कन्धरूपमङ्गमग्निदग्धमिव दृश्यते अतो वोढव्या धूरग्न्यात्मिकेत्यवसीयते ॥ शकटनिर्वापस्य प्राशस्त्यातिशयं द्योतयितुं तस्मिन्वेदिहविर्धानयोः संपत्तिमाहाथ यदिति । शकटस्याधःपतनं वारयितुमीषादण्डाग्रोत्तम्भनार्थौ मेथी कस्तम्भी ईषाद्वयं यत्र संसृतं ततः प्रत्यग्भागः तयोरीषयोर्मध्यदेशः प्रउगम् तच्च पश्चाद्विस्तृतम् पुरस्ताद्ध्रसीयः वेदिरपि तथाविधा त्रिंशत्पदानि पश्चात्तिरश्ची भवति चतुर्विंशतिं पुरस्तात्तिरश्चीति श्रुतेः अतस्तत्सारूप्यात्प्रउगस्य वेदित्वव्यपदेशः । धान्यनिधानाय परिश्रितप्रदेशो नीडः हविर्धानमपि परिश्रितम् परिश्रयणसाम्यान्नीडस्य हविर्धानत्वम् ॥९॥ धुरि भवोऽग्निर्धुर्यः । हविर्ग्रहणाय शकटस्य परिश्रितप्रदेशं पश्चाद्भागं यास्यंस्तं धुर्यमग्निमतिक्रमिष्यन्भवति तदवगमे च स क्रुध्येत् तस्य प्रसादनीयैतत् धूरसीति मन्त्रोच्चारणेन तस्मा एवाग्नये निह्नुतेऽपनयति अतिक्रमजनितं स्वापराधं प्रशंस्य प्रसादयति स चाग्निरतिक्रामन्तमप्यध्वर्युं न बाधते ॥१०॥ तन्मन्त्रोच्चारणेन शत्रुहिंसनं महर्षिव्यवहारेण संवादयति तदिति । अर्धमासशः पौर्णमास्यां दर्शे च ॥११॥ ध्रातं तृप्तं देवानां तृप्तिजनने पर्याप्तमित्यर्थः । ध्रै तृप्ताविति [धा° २२.११.] भौवादिको धातुः । मा ह्वार्षीत्कुटिलगतिर्मा भवतु । ह्वरनिषेध एवाह्वलाशब्दार्थः ॥१२॥ शकटस्यारोहणं विधत्तेऽथेति । पस्पार पालयामास स्पृ प्रीतिपालनयोः [धा° २७.१३.] See १.३.१. ॥१३॥ पुरोडाशीयानां व्रीहीणां समन्त्रकमवेक्षणं विधत्तेऽथेति । वायुः प्राणो भूत्वा नासिके प्राविशदिति श्रुतेः प्राणवातयोरेकत्वम् तथा सति मन्त्रेणैव प्राणात्मकाय वाताय तद्रूभवनकीर्तनं कुरुते ॥१४॥ यदि तु तत्र तृणादिकं न भवेत्तदा पुरोडाशीयं व्रीहिसमूहमेवानेन मन्त्रेणाभिमृशेत् ॥१५॥ अभिपद्यते आलभते स्पृशति । यज्ञो धानाकरम्भादिपञ्चहविष्क इति पञ्चसंख्यायोगसाम्यात्पाङ्क्तः । तत्तथा सत्येतदेतेन पञ्चशब्दोपेतमन्त्रोच्चारणेनात्रास्मिंश्छकटे पाङ्क्तयज्ञमेव धारयति ॥१६॥ भागं दोग्धीति भागदुघो भागप्रदः दुहः कब्घश्चेति [पा° ३.२.७०.] । तादृशः पूषा पाणितलाभ्यां सर्वस्य जनस्याशनं भोज्यमन्नमुपनिधाता उपनिधातुमुपस्थापयितुं शीलवान् ताच्छीलिकस्तृन् न लोकेति [पा° २.३.६९.] कर्मणि षष्ठ्याः प्रतिषेधः ॥१७॥ असमदमकलहं परस्परमविरोधम् ॥१८॥ स्वस्वनामोद्देशेन गृहीतं हविः क्षणमेव ताः सर्वा देवता मन्यन्ते । यत्काम्या यस्य फलस्येच्छया । काम्यच्चेति [पा° ३.१.९.] यच्छब्दादिच्छार्थे काम्यच् तस्माद्देवतानामावश्यमादेष्टव्यम् । आग्नेयवद्यथाक्रममग्नीषोमीयादीनि हवींषि गृह्णीयात् ॥१९॥ निरुप्तशेषस्याभिमर्शनं विधत्तेऽथेति । तत्तत्र शकटे यस्मादेव स्थानाद्गृह्णाति तत्स्थानं वर्धयति ॥२०॥ परिवेष्टितमेव खल्वनो भवति धान्यनिधानार्थं तन्मध्येऽवस्थितस्याध्वर्योश्चक्षुः पाप्मगृहीतमिव काचकामलादिदोषदूषितमिव द्रष्टुं न समर्थं भवति कथं तस्य दर्शनोपाय इति तदुच्यते ॥ तत्तथा

सति एतन्मन्त्रकरणकेन प्रेक्षणेन स्वःशब्दप्रतिपादितं यज्ञादि [illegible] प्रथमत उपलभ्यमानमतोऽस्माच्छकटस्थानादवलोकयति ॥ २१ ॥ [illegible] सृत्य इतोऽस्माल्लोकात्प्रच्यावयितुं तस्य च यजमानस्य फलं [illegible] ति [पा° ३. ४. १३.] तोसुन्प्रत्ययः । दृंहति दृढीकरोति ॥ [illegible] विधत्तेऽथेति । उर्विति मन्त्रस्य प्रागाम्नातं ब्राह्मणमतिदिशति [illegible] ऽन्नु रक्षश्चरतीत्यादिको (see k. ४.) यो वाक्यशेषः [illegible] बन्धुरनुकूलः ॥ २२ ॥ गार्हपत्ये आहवनीये वा यस्मिन्नसौ [illegible] निरुप्तस्य हविषः सादनं च कर्तव्यम् ॥ २३ ॥ २ ॥ १ ॥

इडापिङ्गलादिनाडीद्वारा बहिर्निर्गच्छन्प्राणः प्राणित्युच्यते [illegible] त्यङ्खिति तावेतौ वृत्तिभेदौ प्राणोदानावित्युच्येते तत्र प्राङ् [illegible] यति अन्तः प्रवेशयानुगुणं चेष्टतऽइत्युदानः तस्य च [illegible] एवं द्विधाभिन्नस्यैतस्य वायुवाख्यस्य पवित्रस्य परिमाणमनुसृत्य [illegible] ॥ २ ॥ द्वि- त्वपक्षमेव निगमयति द्वेऽइति अथ यः प्राणापानयोः सन्धिः स व्यान इति [illegible] धिरूपतया तदुभयानतिरिक्तत्वाद्द्वित्वपक्ष एव श्रेयान् ॥ प्रादेशमात्रमिति [illegible] ॥ ३ ॥ आवृत्य शयनं कृतवान् वरणाद्वृत्र इति नाम ॥ ४ ॥ पूतिर्गन्धः । [illegible] प्सन्ते स्म मान्बधेति [पा° ३. १. ६.] इति बधेर्धातोः सन्प्रत्ययः । [illegible] परिवर्तमाना अतिपप्लुविरे जलाशयमतिक्रम्य तीरदेशं प्राप्ता [illegible] [धा° २२. ६२.] प्लुताश्च (प्लु° C.) ता आपो दर्भात्मना परिणताः । [illegible] दौर्गन्ध्यं प्राप्ताः आपूयिताः पूयी विशरणे दुर्गन्धे च [धा° १४. १६.] [illegible] । इतरासु दर्भात्मना परिणतजलव्यतिरिक्तास्वप्सु [illegible] किंचित् [illegible] । [illegible] नापूयिताब्विकारदर्भमयाभ्यां पवित्राभ्यामाभ्यामपामुत्पवनं [illegible] ततश्च विधास्यमानं प्रोक्षणं मेध्याभिर्मेधार्हाभिः प्लुताभिरद्भिः [illegible] ॥ ५ ॥ अग्निहोत्रहवण्या पात्रेण साकं प्रोक्षणीरपः । उदिङ्गयति ऊर्ध्वं सेचनेन [illegible] । [illegible] तो वर्तमानं समुद्रं गच्छन्तीत्यग्रेगुवः । अग्रेगुवः आपः [illegible] वताभ्यः पूर्वं सोमरसमास्वादयन्ति तेन सोमपानेनाग्रे प्रथमं स्वात्मानं पुनन्ति । [illegible] शस्ते अद्यास्मिन्काले ॥ ७ ॥ प्रोक्षणपात्रगतेनैवोदकेन तत्पात्रगतमुदकं [illegible] त्रपाठेन प्रोक्षणजनितमपराधमेताभ्यो प्रोक्षणीभ्यो निह्नुतेऽपनयति । [illegible] विषः प्रोक्षणं विधत्तेऽथेति । बन्धुरनुकूलं स्तावकमर्थवादवाक्यं [illegible] मेव अतस्तत्सर्वत्र योजनीयमिति भावः ॥ १० ॥ तथा वर्धकिः ॥ १२ ॥ ३ ॥ १ ॥

अथ निरुप्तव्रीहियवावहननार्थं कृष्णाजिनादानं विधत्तेऽथेति । [illegible] दने [धा° २६. ३७.] ॥ १ ॥ कृष्णाजिनस्य यज्ञरूपत्वं वक्तुं त्रयीमयत्वं प्रतिपादयति [illegible] । ब- भ्रूणि पिङ्गलवर्णानि हरीणि हरितवर्णानि ॥ २ ॥ शिल्पं चित्रं रूपम् see [illegible] । सोमाङ्गभूता दीक्षापि कृष्णाजिनस्योपरि क्रियते । यदि भूम्यामेवावहननादिकं [illegible] त- स्य हविषोऽवश्यं स्कन्नदोष इत्यभिप्रायः ॥ ३ ॥ कृष्णाजिनवत्प्रसक्तमवधूननं पात्राणां निषे- धति अतिनत्येवेति । न केवलं रक्षांसि निरस्यति तत्संपर्कादयज्ञियमपि अपास्यति यज्ञोत्ति

॥४॥ The explanation of the conclusion of k. 5., of k. 6. and of the beginning of k. 7. is wanting in ABC. तदिति कृष्णाजिनोलूखलयोरन्योऽन्यं हिंसा मा भूदिति पृथिवीकृष्णाजिनयोरैकमत्यप्रार्थनं वदतीत्यर्थः ॥७॥ यज्ञो यज्ञसाधनं हविरुलूखले प्रत्यष्ठात्प्रतिष्ठितमभूत् प्रासारि प्रसारितो विस्तारितोऽभूत् ॥८॥ अवदवतु तर्पयतु ॥९॥ निर्वापादौ मन्त्ररूपाया वाचो हविःकरणसाधनत्वाद्वागेव हविःकृत् ॥११॥ हविःकृदाह्वानमन्त्रे विशेषमाह तानोति । राजन्यबन्धोः क्षत्रियजातेः । आपस्तम्बस्तु राजन्यवैश्ययोर्विपरीत्येनासूत्रयत ॥१२॥ पुरा खल्वेतदाह्वानानन्तरं जाया हविष्कृदुपोत्तिष्ठति अतस्तदानीं जायैव हविःकृदभूत्तस्मादिदानीमप्येतदाह्वानानन्तरं जाया वान्यः कोऽपि ऋत्विग्वा उपोत्तिष्ठति स एव हविःकृदित्यर्थः ॥ हविःकृदाह्वानसमये दृषदुपले शम्यया समाहन्ति ॥१३॥ समाहननजनिताया वाचो यज्ञविघातकासुरराक्षसादिनिवृत्तिहेतुतामुपपादयितुमितिहासमुदाहरति मनोरिति । पापं निकर्षं पराजयं सचते प्रापयति ॥१४॥ श्रद्धैव देवो यस्य स श्रद्धादेवः श्रद्धालुः । आवमिति ह्रस्वोच्चारणम् ॥१५॥ मनोरौ वेति [पा° ४. १. ३८.] मनावी । वदन्त्यै षष्ठ्यर्थे चतुर्थी यत्र यस्मिन्देशे वदन्त्यास्तस्याः शब्दं शृण्वन्ति । इदानीं मनुष्यशरीरान्निर्गतवाचः श्रवणादस्माकं पापीयः अतिशयितं पापं पराजयः प्राप्नोति ॥१६॥ स खल्वृषभः देवानां मधुरवागासीत् ॥१८॥ नलादीनि द्रव्याणि शूर्पस्योपादानभूतानि ॥१९॥ उलूखलान्निःकृष्यावहतान्व्रीहीन् शूर्पे प्रक्षिपति ॥ चशब्दाद्वविषे च संज्ञां संज्ञानं समानज्ञानत्वम् ॥२०॥ तुषाणां राक्षसभागत्वात्तैस्तन्निरसनं विधत्ते ॥२१॥ वितुषीकृतानां तण्डुलानां व्रीहाणां च पृथक्करणं विधत्तेऽथेति ॥ यदा यस्मिन्काले एते व्रीहितण्डुलाः एतद्विवेचनं प्राप्नुवन्ति तस्मिन्समये यत्र यस्यां पात्र्यामधि उपर्येनानपविनक्ति ॥२२॥ तत्पात्रीगतं हविरनुमन्त्रयते ॥२३॥ तस्मिन्फलीकरणे शाखान्तरीयं मन्त्रविधिमनुवदति तद्धेति । तं निषेधति तदु तथेति ॥२४॥ ४ ॥१॥

कपालोपधानपेषणयोर्युगपदनुष्ठानं विधत्ते स इति । आग्नीध्रः कपालानामुपधाताध्वर्युः पेषणार्थं दृषदुपले उपदध्यात् ॥१॥ शिरःकपालान्तर्गतं मांसं मस्तिष्कः ॥२॥ अङ्गारविभजनार्थं काष्ठमुपवेषः । धृष्णोत्यनेनेति धृष्टिः । अथ यज्ञे एनेन काष्ठेन तदङ्गारादिकमुपालंभते प्राप्नोति ॥३॥ अग्निगताशुद्धांशस्य निरसनं विधत्ते तेनेति ॥४॥ शुद्धादग्नेः पुरोडाशश्रपणार्थमङ्गाराहरणं विधत्तेऽथेति । आस्कौति विभजति स्कुञ् आप्रवणे [A. °वणे B. C. see धा° ३१. ६.] । योऽग्निर्देवान्यजति ॥५॥ नेन्नोऽस्माकं हविषो भागेनैव राक्षसादय उपोत्तिष्ठेयुरित्यनेनाभिप्रायेणाङ्गारस्योपरि कपालोपधानं कृतवन्तः ॥ यजुषा आ देवयजमिति मन्त्रेण संस्कृतत्वादेष एव हि कपालोपधाने मुख्यो नान्य इत्यर्थः ॥६॥ समानं जायन्तऽइति सजाता ज्ञातयः ॥७॥ दक्षिणहस्तेनान्यस्याङ्गारस्याहरणं विधत्तेऽथेति । नेदिहेत्यादि यदि सव्यपाण्यङ्गुल्या अभिनिधानं न कुर्यात्तदा इहास्मिन्कपाले उपर्यङ्गारनिधानात्पुरस्तादेव राक्षसाः प्रविशेयुः अतः कपालस्योपर्यङ्गाराध्यूहनपर्यन्तमङ्गुल्याभिनिहितमेव भवेत् ॥८॥ पुरा पुरोडाशाधिश्रयणात्प्राक् ॥९॥ मध्यमकपालात्पूर्वदेशे स्थाप्यस्य कपालस्योपधानं विधत्ते ॥११॥ लोकत्रयातिवर्तिनश्चतुर्थस्य सद्भावोऽसद्भावश्च अनद्धा वै अस्माकमप्रत्यक्ष एव लोकत्रयवत्प्रसिद्ध्यभावात् ॥१२॥ कपालानि ॥१३॥ अवहननवत्पेषणम् see १. ४. ४. ॥१४॥ कृष्णाजिनस्योपरि । पेषणीयतण्डुलानां धारणाद्धिषणा पर्वतावयवत्वात्पर्वतीति एतदुभयं प्रसिद्धमिति हिशब्दयो-

र्थः । पार्थिवेन धारणाख्येन रूपेण येयमदिया [illegible] पृथिव्यसि [illegible] ॥ दृषदः पश्चाद्भागे शम्याम्° । विष्टब्धे विविधमधस्तादुपविश्याम [illegible] ॥ दृषद [illegible] । [illegible] तिशयेन दृषदः सकाशादल्पपरिमाणा । १.४.१६. इति [illegible] तत्र दृष-दुपलयोरुभयत्रावस्थानादूनूवम् तन्मध्येऽवस्थानाच्छम्यायाः [illegible] ॥ [illegible] दृषद उपरि तण्डुलान्प्रक्षिपति । धिनवत्प्रीणयेत् धिवि प्रीणनार्थः [धा° १५.८३.] ॥ [illegible] ॥ नासिका-भ्यां बहिर्निर्गच्छन् श्वासरूपो वायुः प्राणः ताभ्यां [illegible] पुनः प्रविशन्नपानः [illegible] त्रि-विधं सर्वासु नाडीषु अनिति प्रेरयतीति मध्यवृत्तिर्वायुर्व्यानः ॥ [illegible] ति ॥११॥ हविः देवानां सोर्व प्राणधारणयुक्तमेव [illegible] साधनं हविरवहननपेषणाभ्यामृत्विजो मारयन्ति ॥ [illegible] ॥ तथा [illegible] नवं न युक्तमिति भावः मन्त्रप्रयोगेन तस्य निर्दोषत्वं [illegible] स्थापयति ॥ पिंषन्तीति एवं समन्त्रकमध्वर्युणा [illegible] सर्वं चूर्णीकुर्युः तथा उपहितानि च कपालानि अङ्गारैः प्रक्षेप्तानि कुर्युः ॥ [illegible] ॥ [illegible] पिनष्टि अथ तस्मिन्नेव समये एकोऽन्य आग्नीध्रादिः आज्यं निर्वपति तत्र [illegible] रणमिति देवतादेशेन रहितेनैव यजुषा गृह्णीयात् । देवतानाम [illegible] तद्विलक्षणमनिरुक्तं तादृशं च महीनामित्यादि यजुः तत्रप्रसिद्धदेवताद्यानिर्[illegible] । मह्यन्ते पूज्यन्ते मह्यः ॥२२॥ १ ॥२॥

पिष्टानां पिण्डकरणार्थं पात्र्यां संवापं विधत्ते । पवित्रयुक्ते पात्रे । [illegible] १.२.१०. ॥१॥ वेदिमध्ये । उपसृजत्याभिरिति पिष्टसंसर्जनार्था आप उपसर्जन्यः ताभिः [illegible] ताः पिष्टानामुपरि पवित्राभ्यां प्रतिगृह्णीयात् ॥२॥ संयौति सम्यग्मिश्रीकरोति । [illegible] ननाय अधिवर्जनं पुरोडाशस्याग्नावधिश्रयणं करिष्यन्नपस्तु संयौति यथा [illegible] पुरोडा-शोऽग्नेः सकाशाज्जायेत ॥३॥ स खल्वध्वर्युर्यस्मिन्काले तस्य हविर्द्वयस्य पुनः [illegible] णं करिष्यन्न भवेत्तदानोमिदमग्नेरित्येकं भागमभिमृशतीदमग्नीषोमयोरित्यपरं [illegible] यथाम-ख्यमाग्नेयाग्नीषोमीयपुरोडाशौ ॥ पुरोडाशकपालस्याज्यस्य चाग्नेरुपरि अधिश्रयणस्य [illegible] तां विवक्षिषुः कर्तृभेदमाह । एष अध्वर्युः । आग्नीध्रः २.१.२२. इत्यतः [illegible] श्रयते ॥४॥ आज्यं यज्ञशरीरस्यार्धभागः उपस्तरणाभिघारयोः प्रयाजादीनां च तत्साध्यत्वात् इत-रोऽर्धः पुरोडाशादिहविः । सहाधिश्रयणेन तदर्धद्वयमेकीकृत्य अग्निं प्रापयामीत्यध्वर्यो[illegible] चाभिप्रायः ॥५॥ अधिवृणक्ति अग्नावुपरि वृणक्ति वर्जयति [illegible] स्थापयति । [illegible] सो-मयागाङ्गस्य यत्प्रवृञ्जनं सोमे तत्सदृशमेवैतत्पुरोडाशप्रवृञ्जनम् ॥७॥ उपहितेषु कपालेषु तं विस्तारयति ॥८॥ सत्रेति निपातोऽनेकार्थत्वादत्रातिशयवाची सत्रा पृथु अतिपृथुम् । [illegible] विगतऽर्चिकम् ॥९॥ पत्न्यान्तरमपवदति कस्तदिति । यं देव[illegible] मन्येत तत्परिमाणविशिष्टं ॥१०॥ क्षिणवन्ति हिंसन्ति विवृहन्ति विश्लेषयन्ति क्षिणु हिंसायाम् [धा° ३०.४.] ॥११॥ तं पुरोडाशम् परितोऽग्निर्यस्य स पर्यग्निः ॥१३॥ शृतं पक्वम् श्रा पाके [धा° २४.४५.] निष्ठायां शृतं पाकऽइति [पा° ६.१.२७.] निपातितम् ॥१४॥ अभिवासयति साङ्गारेण भस्मना छादयति । नग्नः स्वभावतो विवसनः मुषितः चोरादिभिरपहृतवसनः ॥१६॥ इष्यन्ते

ऽनेनेति यज्ञः पुरोडाशः स म्लानिरहितोऽभूत् ॥१७॥ निर्णिज्यते शोध्यतेऽनेनेति निर्णेजनमुदकम् ॥१८॥ २ ॥२॥

यं होतृकर्मणि प्रावृणत ते देवा इत्यर्थः । प्राधन्वत्प्रागङ्कदम्रियत धवि गमने [धा° १५.८८.] । भीषा पूर्वाग्निवन्मरणभयेन निलीनोऽन्तर्हितो बभूव । ष्ठिवु निरसने [धा° १५.५२.] । अप्रपदनमनाशयभूताः । वः पञ्चम्यर्थे चतुर्थी युष्मत्सकाशात् । ततो निष्ठीवनलक्षणवीर्यधारणात्ताभ्योऽद्भ्यः सकाशात् ॥१॥ यथेदानीं ब्राह्मणः पुरोहितः । तं बध्यं बधार्हं ज्ञातवन्तः । अनन्तरं चैनं विश्वरूपं त्रित एवेन्द्रसहाय्यार्थं जघान इन्द्रश्च तज्जननजनितात्पापादतिमुक्तोऽभवत् यस्मात्स इन्द्रो देवः अतोऽस्मिन्पापसंश्लेषो न युक्त इत्यर्थः ॥२॥ ते लौकिका जना विश्वरूपहननानन्तरमेतदूचुः । एषु त्रितादिषु यद्विश्वरूपबधजनितमेनस्तद्यज्ञो मृजीत शोधयेदिति अत एतत् एतेन पात्रीनिर्णेजनादिनिनयनेन एषु तदेनो यज्ञः संशोषयति तस्मादवहननपेषणादिजनितस्यैनसो रूपं पात्र्यादिनिर्णेजनमाप्त्येभ्यो निनेतव्यमित्यर्थः ॥३॥ वयमपीदमेनः परः परस्तादन्यत्राधारात्तरे अन्यत्रास्मत्तो नयाम ॥४॥ अन्वाहरति यज्ञसंबन्धि दोषजातं परिहरत्यनेनेति अन्वाहार्यो नाम ऋत्विग्भ्यो देय ओदनः ॥ निनीतमुदकगङ्गारेण प्रतपति ॥ एवं संस्कृतं पुरोडाशं पशुत्वेन स्तौति ॥५॥ यज्ञियः सारांशो मेधः ॥६॥ अस्य यजमानस्य ते एते पुरुषादयः आलब्धाः सन्तो यत्परिमाणविशिष्टवीर्यवद्भविः स्युः अस्य व्रीहियवयोः सर्वपशुसारत्वं विदुषो यजमानस्य तन्निष्पादितं पुरोडाशादिकं हविः तावद्वीर्यवद्भविरेव भवति एवं च पशुरूपमेव संस्क्रियते । लोमवगादिपञ्चावयवयोगाच्च या पशौ पाङ्क्तसंपदभिज्ञैरुच्यते सात्रापि पुरोडाशे विद्यते ॥७॥ लोमवत्पिष्टानां सूक्ष्मबाहुबहुत्वाच्च । त्वचीव श्लक्ष्णीभावदर्शनात् । दारुणः कठिनः । अस्थ्यन्तर्गतो धातुर्मज्जा । एषो एषा उ ॥८॥ अशितव्यं भक्षितव्यम् ॥१॥ ३ ॥२॥

वेदिकरणार्थं स्फ्यादानं विधित्सुः स्फ्यस्य वज्ररूपत्वं वक्तुमितिहासं व्याचष्टे इन्द्र इति । न्यूनाधिकराहित्येन तृतीयांशवज्ञानं दुर्लभमित्यभिप्रेत्य पक्षान्तरमाह यावद्वेति तृतीयाभागान्न्यूनमधिकं वा यावदेव किंचित्तावानेव स्फ्यः । चतुर्थभागस्य परिणामप्रकारमाहाथ यत्रेति तत्तत्र देशे प्रहृतः स वज्रः शकलो भूत्वा शीर्णोऽभूत् ॥१॥ संव्याधे युद्धे ॥२॥ संश्यति सम्यक्तनूकरोति तीक्ष्णीकरोति ॥५॥ स्तम्बयजुर्हरणं विधित्सुः तस्यासुरनिर्हरणलक्षणं प्रयोजनं वक्तुमाख्यायिकामाह देवा इति । यद्वदा खलु । ततोऽनन्तरक्षणम् ॥८॥ अनपजय्यं न जेतुं शक्यं पुनरुत्थानरहितम् see पा° ६.१.८०. ॥९॥ पलाय्य अय गतौ [धा° १४.१.] क्त्वो ल्यप् see पा° ८.२.१९. ॥१०॥ इतोऽस्माद्वेदिलक्षणात्स्थानादुपसंरुद्धान्प्रतिबद्धगतीनसुरान्करिष्यथ । अभिनिधास्यामः अभितः सर्वतो निरुद्धगतीन्निहितान्करिष्यामः । यच्चतुर्थं लोकजातमस्ति अस्माकमप्रत्यक्षं तेनापि याजितान्करिष्यामः । ततोऽनन्तरं पुनः संगता न भविष्यन्ति विशीर्णा बाधिता एव भवेयुः ॥११॥ यदत्र स्तम्बयजुर्हरणं करिष्यते एतन्निदानेन मूलकारणेन निरूप्यमाणं सत् देवैः कृतं तदसुरनिरसनमतो यज्ञविघातकासुरनिर्हरणार्थं स्तम्बयजुर्हरणमिति विधिरुन्नेयः ॥१२॥ वेदेरुत्तरतः परीत्य वर्तते ॥१३॥ शत्रुनिर्हरणमपि तत्प्रयोजनम् ॥ अध्वर्युरस्याः पृथिव्या एव सकाशात्सर्वं स्तम्बयजुर्हरति नान्तरिक्षादेः अन्तरिक्षद्युलोकयोर्हर्त-

व्यस्य स्तम्बस्याभावात् न तत्र तत्तरणं संभवति ॥१४॥ [illegible] स्योपरि प्रहरणम् ॥१५॥ स्फ्यमाददानोऽध्वर्युरेनां पृथिवीमु[illegible] त्वेतत्करोति अत उत्तरमूलत्वेन प्रहरणा[illegible]शंकार्या [illegible] ॥ [illegible] ष्पन्नस्य सतृणस्य पांसोरादानमन्त्रमनूद्य व्याचष्टे व्रजं गच्छति । [illegible] रे दसुरजातमपक्रमणरहितमितस्ततोगमनरहितं करोति ॥ [illegible] र्षविति । अस्यै अस्याः पृथिव्याः संबन्धिनि यत्र स्थाने [illegible] तेन च तां पृथिवीमपघ्नन्ति हिंसन्ति ॥ उत्करे निधानमन्त्र[illegible] । अ न्धे सर्वप्रकाशरहितेऽतिशयिते तमसि यस्मिन्गता न पुनरा[illegible] ॥ [illegible] ॥ स्तम्बयजुरुत्करे निवपन्नुपरि [illegible] ॥ [illegible] ॥ अभि निदधाति अभितो निक्षिपति बाधते । एतत् [illegible] त्वात्प्रतिपादकत्वात् ॥२०॥ अनन्ता अप्रत्यक्षमेत ॥ [illegible] ॥

वेदिपरिग्रहं वक्तुमितिहासमुपन्यस्यति । [illegible] ॥१॥ उक्ष्णोऽनडुहः संबन्धिभिः । पश्चात्प्रतीचीं दिशमा[illegible] ॥ [illegible] ॥ यदि अस्यै अस्याः सम्बन्धि स्थानं न प्राप्नुयामः ॥३॥ [illegible] ॥४॥ [illegible] र्बः । हेडृ अनादरे [धा० ८.३२.] ॥५॥ पूर्वस्यां दिशि [illegible] वि ष्णवात्मकेन यज्ञेनार्चन्तः पूजयन्तः श्राम्यन्तः कर्मानुष्ठान[illegible] च तेन यज्ञात्मकस्य विष्णोराधारभूतेन स्थानेन सर्वां पृथिवीं [illegible] तेऽनेनेति यज्ञस्थानस्य वेदिनामत्वम् यतो [illegible] पृथिवीम पक्षतवन्तः तस्माद्गायत्रेणेत्यादिभिर्मन्त्रैः स्फ्येन वेदिं दक्षिणतः [illegible] यात् ॥७॥ वेदेः खननं विधित्सुरितिहासशेषमाह । [illegible] मूलान्युपेत्य भूम्यन्तर्गतः सन्मुम्लोचास्तंगतोऽदृश्यो बभूव ॥८॥ [illegible] वे दिं त्र्यङ्गुलखातामेव मेने ॥९॥ वेदिनामनिर्वचनान्तरमाह ॥१०॥ गायत्रेण [illegible] प्रा क्कृतः पूर्वः परिग्रहः तदपेक्षयास्योत्तरत्वं तस्य स्वरूपमाह [illegible] । वेदिं [illegible] दि शि तेन यजुषा स्फ्येन लेखया परिगृह्णीयात् ॥११॥ पूर्वोत्तरपरिग्रहयोः [illegible] प्र शंसति । प्रजापतिः संवत्सरात्मकः संवत्सरकालभरणेन ज्ञातत्वात् [illegible] [१.५.२.१६.] प्राजापत्यात्मकः ॥१२॥ व्याहृतयो भूराद्यवयवाः । पूर्वे परिग्रहे [illegible] ह्याम्यन्तास्त्रयः उत्तरपरिग्रहे अस्यन्ताः षट् ॥१३॥ गार्हपत्याहवनीययोर्मध्ये सा वेदिः कार्या । व्यामः प्रसारितकरद्वयान्तरालत्वाणः । सवनत्रयादिरूपेण यज्ञस्य त्रिवृत्त्वम् । [illegible] नात्रेति ॥१४॥ वेद्यंसयोराहवनीयस्य स्पर्शं विधत्ते ॥१५॥ [illegible] काशो ययोः तथाविधावंसौ यस्याः सा । हस्तेन संगृहीतुं शक्या कशाहता ॥१६॥ प्राच्यां दिशि प्रवणं निम्नं यस्याः सा । अथो इति पक्षान्तरं द्योत्यते ॥ [illegible] पां सुभिरान्वत्यकरणं । नाद्भिः श्लक्ष्णीकरणम् । पुरीषं खातं पांसुम् । तदा तत्र [illegible] क्षिणतोऽवस्थितं पितृलोकं क्षिप्रमियात् ज्योक् चिरम् ॥१७॥ वेदिमार्जनप्रशंसार्थं [illegible] ह । आ समन्तान्मृतं सर्वदा नश्वरमामृतं तद्विपरीतं यद्देवयागाधिकरणभूतं स्थानम् [illegible] त्स्थानात् तदा वयमेतत्स्थानं परित्यज्य तत एव चन्द्रमसि निहितं तस्मिन्नेव स्थाने पुनर्वस्

कुर्वाणास्तेन यज्ञेनासुरान्पुनरभिभवेम । ईदृग्विधोपायजनितहर्षद्योतको हन्तशब्दः ॥१८॥ वेदिकरणानन्तरं वज्ररूपाणां [see १. १. १७.] प्रोक्षणीनामासादनं यज्ञरक्षार्थं विधित्सुः प्रोक्षणीरित्यादिकं संप्रैषं विधत्ते । गुपू रक्षणे see पा° ३. १. ५०. । अथानन्तरमास[illegible]ग्नीध्रः स्फ्यमुद्यच्छन्विधारयति तदकृत्वा पूर्वं वेदिमध्ये निहितस्य स्फ्यस्योपरि सादनेऽस्फ्यलक्षणा वज्रौ संगतौ भवेतां तेन च यजमानस्य बाधः स्यात् समो गम्यृच्छिभ्यामिति [पा° १. ३. २९.] आत्मनेपदम् ॥२०॥ प्रतीकग्रहणेन विहितं संप्रैषमन्त्रं साकल्येनानुवदति । यजमानस्य पत्नीं योक्त्रेण संनह्य यत्प्रागग्नावधिश्रितमाज्यं तेनागच्छ । प्रोक्षण्यासादनादिकमन्येन कारयितुं कामयेत तदा एतत्संप्रैषवाक्यं ब्रूयात् । यदि तु स्वयमेव कुर्यामिति कामयेत ॥२१॥ द्विषतो बध इति मन्त्रेण स्फ्यं बहिर्वेद्युदङ्ङिरस्यति ॥२२॥ तत्खल्वस्या वेदेः खननादिकं क्रूरं कर्माभूत्तदनेन स्फ्यस्य निरसनेनास्यां वेदेरहार्षीन्निरास्यत् तस्मात्पाण्योः क्रूरकर्मसंश्लेषादवनेजनेन शुद्धिः कार्या ॥२३॥ भृतानां हविषां यागात्प्राक् निर्मिताया वेदेश्च बर्हिःस्तरणात्पूर्वं स्पर्शनिषेधं विधित्सुः तत्सिद्ध्यर्थमितिहासमाचष्टे । अवमर्शं अवमृश्य संस्पृश्य । इतोऽस्माल्लोकात्प्रदीयमानं यद्धविः तस्मात् ॥२४॥ ह आ इत्येति पदच्छेदनम् आगत्य ॥२५॥ यत्खलु देवानामर्थं परिषूतं परिगृहितं शुश्रुम तदेतदात्मक एष यज्ञः ॥ बर्हिषः स्तरणात्पूर्वमशान्ता सती सा वेदिः स्तीर्यमाणेन बर्हिषा खलु शान्ता भवति अतो बर्हिषः स्तरणात्पूर्वं यदि वेदिमध्ये किंचित्तृणादिकमापद्येत तदा तन्निरासार्थमपि तामशान्तां न स्पृशेत् किं तु स्तरणसमये बर्हिषः स्तरणं कुर्वन्नेव तत्तृणादिकं निरस्येत् तस्मिन्समयेऽध्वर्युः पादेनापि तामभितिष्ठति ॥२६॥ ५ ॥२॥

प्रोक्षणीरासादयेतिप्रैषमन्त्रानुसारेण [२. ५. २१.] प्रथमं प्रोक्षणीनामासादनमुक्तम् इध्मबर्हिषोरुपसादनं विशेषवक्तव्याभावात्सिद्धमित्यभिप्रेत्य क्रमप्राप्तं स्रुक्संमार्जनं विधत्ते ॥ मनुष्याणां भोज्यान्ने सूपशाकादौ पक्वे सति भोजनस्थाने च शोधिते तत्परिवेषणसाधनानि दव्यादीनि (दर्व्या°?) पात्राणि अद्भिः प्रक्षालनेन शोध्यन्ते अतो मानुषव्यवहारविदानवादेव (निदा°?) व्यवहारस्य देवानामन्ते हविषि पद्ये (पक्वे?) वेद्याव (वेद्यां च?) संस्कृतायां तत्परिवेषणसाधनानां स्रुचां संमार्जनं युक्तमिति यत्स्रुच इत्येवमन्तस्य वाक्यसंदर्भस्याभिप्रेतोऽर्थः ॥१॥ देवपात्राणां स्रुचां न मानुषपात्रवदद्भिः प्रक्षालनं केवलं करोति किं तु संमार्जनेनैव सहितं प्रक्षालनम् निर्णिक्ताभिः स्रुग्भिः प्रचराणीत्यनेनाभिप्रायेण । आपो हि कुशाः see १. ३. ५. अतः कुशैः संमार्जने यज्ञियाभिरद्भिरेव प्रक्षालनं कृतवान्भवति ॥३॥ प्रथमं स्रुवस्य संमार्जनं विधातुं तस्यादानप्रतपने विधत्ते ॥४॥ see १. २. ३. ॥५॥ स्रुवस्यान्तरतो बिलमध्ये वेदाग्रैरिति प्राक् संमार्ष्टि संमार्जनप्रकाराभिनयार्थ इतशब्दः । अनुपरतः उपरतिमप्राप्तः सन् । वाजो हविर्लक्षणमन्नं तदेव यज्ञः तदर्हत्वेन तद्भक्षम् वाजस्यान्नस्येन्धनं दीपनं भूयःकरणमनेन क्रियतऽइतिवाजेध्या यज्ञः ॥ जुह्वादीनां स्रुचां संमार्जनं विधत्तऽएतेनैवेति । प्राशित्राख्यो भागः ह्रियतेऽनेनेति प्राशित्रहरणं गोकर्णाकृति पात्रम् ॥६॥ अनेन प्रकारेण प्रागपवर्गं वेदाग्रैर्बिलमध्ये संमार्जनमनेन प्रकारेण प्रत्यगपवर्गमात्माभिमुखं बाह्यतः पृष्ठभागे वेदाग्रमूलैः । अयं प्राणवृत्त्यात्मको वायुः इतीव अनेन प्रकारेण प्राक्संचरति उदानवृत्त्यात्मकश्च इतीव अनेनैव खलु प्रकारेण प्रत्यक्संचरति इतिशब्दोऽत्राप्यभिनयार्थः अतः प्राक्प्रत्यक्सं-

मार्जनाभ्यां स्रुक्षु प्राणापानावेव स्थापयति ॥ यस्माच्च स्रुचामुपरिभागस्य संमार्जनं प्राचीनं पृष्ठभागस्यं च प्रतीचीनं तस्मादरत्नेः उपरिभागस्य लोमानीतोऽग्र [illegible] प्राचीनानि [illegible] पृष्ठभागस्य चेतीव इत्थं प्रतीचीनानि ॥७॥ स पत्न्याऽग्नीध्रः तत्संमार्जनानन्तरं संमृष्टं पात्र पुनरग्नौ प्रतप्याध्वर्यवे दद्यात् तदेतत्पुनः प्रतपनं लौकिकदृष्टान्तेनोपपादयति । यथा लोके का-स्यादिकं लौकिकं पात्रमवमृश्यावमृश्य निर्णिज्य प्रक्षाल्य [illegible] अन्ततः अनवमर्शमवमर्शनमकृत्वैव केवलमुदकेनैव परितः [illegible] येत् एवं तत्संमार्जनानन्तरं पुनः प्रतपनम् ॥८॥ प्राङ्मुख-इत्यादिः [illegible] यथा संमार्जनसाधनं कुशोदकादिकं न पतति तथा संमृजीत ॥१०॥ स्रुक्संमार्जनानां वेदाग्राणा-माहवनीये प्रहरणं शाखान्तराभिमतमुपन्यस्यति । यज्ञसाधना हि वेदः संमार्जनानां प्रयुक्त-त्वात् एतानि च (वेदाग्राणि) तस्यावयवा अभूवन् अतस्तदग्रभागो न [illegible] देव वेदाग्राणां यज्ञियत्वमपि तु एभिर्वेदाग्रैः स्रुचः संमृष्टवन्त ऋत्विजः अतः [illegible] यज्ञसंबन्धि किंचिदङ्गम् यदि तदग्रेऽन्यत्र निरस्येत्तदा तत यज्ञाद्बाह्यत्वेन [illegible] हि यज्ञेऽन्तर्भवति । नैवेत्थं भवेदिति । तदेकीयमतं निषेधति । [illegible] संमार्जनतृणाना-मग्नौ प्रहरणमयुक्तं तस्मादेतान्युत्करे प्रक्षिपेत् ॥११॥ प्रेपक्रमप्राप्तं पत्नीसंनहनं विधत्ते । गार्ह-पत्यानुष्ठेयेषु पत्नीसंयाजादिषु पत्न्याः संबन्धात्सा यज्ञस्यापरार्धः । मदीयो यज्ञः प्रागपवर्गो विस्तीर्यमाणो गच्छेत् अतः परार्धमारभ्य यज्ञो विस्तारयितव्यः । अतो [illegible] पत्न्या यज्ञेन सार्धं बन्धनम् युक्ता सा मदीयं यज्ञमनुलक्ष्य यज्ञसमाप्तिपर्यन्तमासीत न [illegible] दौ रथे नियमेनास्ते ॥१२॥ युगस्य धुरि बलीवर्दादियोजनार्थं नाम योक्त्रम् [illegible] मनडुदश्वादिकम् । अयज्ञियस्य पत्न्या नाभेरधोभागस्य यज्ञियस्योपरिभागस्य मध्ये संनहनेन सांकर्यनिवारणात् यज्ञियेनैवोपरिभागेन विधास्यमानमाज्यावेक्षणं [see k. १८.] [illegible] भ-विष्यति ॥१३॥ परिहितस्य वासस उपरि ॥१४॥ [illegible] लंकारार्थां मणिमुक्तादिखचितां मेखलामेव बध्नाति । [illegible] ॥१५॥ [illegible] मूलाग्रे संयोज्यैकीकृत्य उपरिष्टाल्लम्बयेन्नेद्ग्रन्थिकरणाभावे योक्त्रं विस्रस्तं स्यात् ॥ संनहन-समये गार्हपत्यस्य नैरृत्यां दिशि पत्न्या अन्वासनं विधित्सुः [illegible] निषेधति । देवानां हि पत्नी गार्हपत्यस्य पश्चात्प्राङ्मुखी सर्वदा उपविशति अतस्तत्रान्वा-सीना पत्नीमामेव देवपत्नीमभ्यारोहेत्ततश्चाल्पकाले म्रियेत तत्स्थानवर्जनेन तु तां [illegible] तस्माद्देवपत्नीस्थानाद्दक्षिणभागेऽन्वासीत ॥१७॥ रेतसः पुत्रोपभुक्ताद्यपरिणाम[illegible] योरभेदोपचारात्तादात्म्यं विहितम् ॥१८॥ आर्तिर्हिंसा तद्रहितेन ॥१९॥ आहवनीये हविःश्र-पणपक्षश्चेत् [see १.२.२३.] आज्यं प्रथमतो गार्हपत्येऽधिश्रित्य पत्न्या [illegible] च प-त्न्यवेक्षणानन्तरं ततः पुरस्तात् हृत्वा आहवनीयसमीपं च नीत्वा पुनस्तस्मिन्नधिश्रयति आ-ज्यपुरोडाशादिलक्षणं सर्वमपि मदीयं हविः आहवनीये संस्कृतं भवेदित्यभिप्रायेण । अस्मि-न्नपि पक्षे पत्न्यवेक्षणाद्धेतोस्तत्संनिधानाय अग्रे प्रथमतः पशुपुरोडाशाधिश्रयणकाले अमुत्र गार्हपत्येऽधिश्रयणं कर्तव्यमन्यथा [यदि पुरोडाशाधिश्रयणकाले एवाहवनीये आज्यमधिश्र-येत् तदा] गार्हपत्यसमीपे अन्वासीनायाः पत्न्यास्तदवेक्षणस्यानुपपत्तेः भिन्नदेशत्वात् यदि च पत्नीमवेक्षयिष्यामीति तदर्थं सामि संस्कारमध्ये तत्प्रत्यक्ष पश्चात्पत्न्याः समीपं [illegible] सं-

स्कारविघातः स्यादिति तस्याप्ययुक्तत्वात् यदि तु एतद्दोषपरिजिहीर्षया पत्नीं तन्नावेक्षयेत्तदास्याः पत्न्या यज्ञादन्तरायो भविष्यतीति तस्याः तदवेक्षणस्य प्रार्थनीयत्वात् । यस्य तु पत्न्यां रजोदर्शनादिनिमित्तवशेन असंनिधानात्तदीयकर्माण्याज्यावेक्षणादीनि न क्रियन्ते तस्योक्तदोषाभावात्प्रथमत एवाहवनीये आज्याधिश्रयणं कार्यम् ॥२०॥ अतोऽस्मादेव खल्वाज्याद्देवपत्नीनां यागः अतस्तत्संबद्धस्याज्यस्यान्तर्वेद्यासादने सति तथैव पत्नीरवसभाः अवगतजनसमूहाः करोति यष्टव्यदेवसंघस्य वेद्यामवस्थानात् अहेति निपातो विनिग्रहे देवपत्नीनां तु सभाप्रापणादस्य यजमानस्य पत्न्यपि परःपुंसा स्वपुरुषादन्यत्र राजवीथ्यादौ पुरुषसमूहं प्राप्ता भवति ॥ तेषां मतं याज्ञवल्क्यमतेन दूषयति यथादिष्टं यथादेशनं यथाशास्त्रं पत्न्याः संबन्धि कार्यं भवतु ॥२१॥ see १.३.३-६. ॥२२-२४॥ जग्ध्वा भक्षयित्वा see पा° २.४.३६. । यस्मादेवं गव्यं पयः परम्परया उदकरसपरिणामरूपं तस्मात्तत्कार्यस्याज्यस्यापां च यदुत्पवने संसर्जनं तद्रसस्यैव संपूर्णत्वाय कार्त्स्न्याय ॥२५॥ ख्यातिरत्र पश्यतिकर्मा ॥ ये एवं यजमानमवेक्षयन्ति ते स्वकीये यज्ञे कस्मादेव स्वयं यजमाना एव सन्तः अध्वर्यवो न भवन्ति कथं वा स्वयमेव होतारो भूत्वा याज्यानुवाक्यादीनि नानुब्रूयुः तत्परित्यज्य तेषां शाखिनामत्रैवावेक्षणं यजमानेनैव कर्तव्यमिति कस्मात्कारणात् अद्धा ज्ञाता । एवं तां अद्धां प्रहस्य अध्वर्युणैव तदवेक्षणं कार्यमिति प्रतिपादयति । दक्षिणाभिः परिक्रीतत्वादृत्विग्भिः यत्फलमाशास्यते तद्यजमानस्यैवेति न तेन पृथगाशासनं कार्यम् ॥२६॥ अवेक्षणस्य करणं हि चक्षुः तच्च यथाभूतमेव वस्तु विषयीकरोतीति सत्यमेव देवलोकरूपमस्ति ॥२७॥ १ ॥३॥

अथ जुहूपभृद्ध्रुवास्वेतस्याज्यस्य स्रुवेण ग्रहणं विधित्सुस्तत्समुदायस्य पुरुषावयवकल्पनया स्तुत्यर्थं तत्साध्यस्य यज्ञस्य पुरुषतादात्म्यमाह ॥१॥ तादृगवयवक्लृप्तिमभिनयेन दर्शयति । या जुहूः सेयमयं दक्षिणो बाहुः योपभृत्सेयं वामबाहुः ध्रुवा आत्मा देहमध्यः । तस्माद्ध्रुवास्थस्याज्यस्य सर्वयागसाधारण्यम् ॥२॥ जुह्वादिषु सर्वासु स्रुक्षु स्रुवस्य संचरणमुपपादयितुं तस्य प्राणरूपतामाह ॥३॥ स्रुवस्य वायुरूपत्वाल्लोकत्रयात्मिकासु स्रुक्षु संचरणं युक्तम् ॥५॥ तासु स्रुक्षु आज्यग्रहणं विधित्सुः तस्य पुरोडाशादिहविरन्तरवत्प्रसक्तं देवतादेशनपूर्वकत्वं निवारयति । विस्तीर्यमाणो यज्ञः प्रथममग्न्यादिभ्यः प्रधानभूतेभ्यो देवेभ्यो विस्तीर्यते तत ऋतुभ्यः प्रयाजदेवताभ्यः छन्दोभ्यश्चानुयाजदेवताभ्यः ॥६॥ अथ तस्मिन्यज्ञे यदाज्यग्रहणं तत्प्रयाजानुयाजदेवतार्थं चशब्दादेव स्विष्टकृद्यागार्थं च तथा सति तदाज्यं देवतानामानादिश्य अनुक्त्वा आज्यस्वरूपसंबन्धिनैव रूपेण देवताया अनादेशनेन (see २.१.२२.) गृह्णन्ति ॥ जुह्वां चतुर्वारं स्रुवेणाज्यं गृह्णीयात् ॥७॥ जामितादोषराहित्याय । हविर्ग्रहणाज्यग्रहणयोर्देवतादेशने सत्येकरूप्येणा (°ण!) जामिता स्यात्तमिमं दोषं विपक्षे दर्शयति जामि हेति ॥८॥ जुहूमनु भागी तस्य जुहूर्भाग इत्यर्थः see पा° १.४.९०. । तथा भोक्तृभोग्यस्य च क्रमेण भागी ॥११॥ सार्वभौमो राजापारां निरवधिकां विशं राज्यं प्रावसाय प्राप्यापि एकगृहात्मनैव जयति स्वाधीनं करोति तत्र च एकमेकं वस्तु यथा कामयते तथा समवैति प्राप्नोति तदेतद्राज्ञः सामर्थ्यमेतेनैव वीर्येण जनितं यद्वीर्यं जुह्वा ग्रहणेन भोक्तुर्निष्पन्नम् ॥१४॥ अत्तू राज्ञः सकाशात्पृथक् स्वतन्त्रा एव भवेयुः । रक्षार्थं क्षत्रियाधीनत्वे सत्येव वैश्यस्य धनसमृद्धिर्भवति । परः परस्तादन्यत्र गोप्यस्थाने निहितं यद्धनमस्ति ॥१५॥ सर्वे-

षां छन्दसामनुष्टुप्सकाशात्सृष्टेराम्नातत्वात्सा वागात्मिका [illegible]
॥१६॥ शाखिनां समन्त्रकग्रहणस्य प्रत्येकं त्रिरावृ[illegible] [illegible]
न्विति अत्रापि हि ग्रहणस्य त्रिवसंख्या [illegible] [illegible] ॥ [illegible] ॥

पूर्वभागे संनहनरज्ज्वा ग्रन्थिर्यथा भवति तथा ॥३॥ [illegible]
आहवनीयनिकटे तद्ग्रहणक्रियामेव तस्मिन्स्थापयति । [illegible]
केशसंघातः शिरसः पूर्वभागे हि भवति अतो यज्ञस्यापि पूर्वभागे [illegible]
युज्यते ॥५॥ संनहनस्य विस्रंसने सति यजमानस्य स्त्री प्रकर्षेण [illegible]
मपत्यं प्रसूयते । अस्य यजमानस्यैषा रज्जुर्नीविरिव भवति लोके हि [illegible]
णपार्श्वऽएव नीविः परिकल्प्यते तस्माद्दक्षिणभागे संनहनरज्जु[illegible]
भवति । संनहनस्योपरि दर्भास्तरणछादनम् [illegible]
ति ॥६॥ बर्हिषा वेदिं छादयति । योऽयं प्रस्तरः स ऊर्ध्व[illegible]
तद्व्यतिरिक्तानि श्मश्रुप्रभृतीनि यान्यवाङ्मुखानि लोमानि [illegible]
स्य तान्येव संपाद्यन्ते ॥७॥ हविर्ग्रहणायागता ये देवा [illegible]
वांसः प्रयोगाभिज्ञा अनूचानाः अनुज्ञातृरूपा ऋत्विजः समीपे [illegible]
जमाने तद्बहुलस्तरणं कृतमुपसेवनीयतमत्वलक्षणं फलं भवति [illegible]
नुवादो ॥ एकं मुष्टिं वेदेः पूर्वभागे स्तीर्वा द्वितीयं मुष्टिं [illegible]
ततस्तृतीयं मुष्टिं वेदेरपरार्धे द्वितीयमुष्टिनानवरुद्धं स्तृणीयादित्येकः पक्षः [illegible]
ति । प्रवृत्य प्रवृत्य प्रथममुष्टिं वेद्यपरार्धे स्तीर्वा [illegible]
स्तृणीयादेवमेव तृतीयमपि एवं मुष्टित्रयस्य [illegible] (see [illegible]
स° ७.३२.) ॥१०॥ आहवनीयं हुतं हविर्वहनसमर्थं करोति । वेदेः पूर्वभागे[illegible]
नीयो यज्ञस्य शिरः ॥१२॥ परितो धीयन्तऽइति परिधयः पा° [illegible] इति [illegible] ।
प्राधन्विषुः प्रागमन्प्रामृषत see २.३.१. । अवकल्पयत [illegible] ॥१॥ [illegible]
र्ध्यति हिंसिष्यति ॥२॥ युङ्क्थ युक्तान्कुरुत ॥३॥ परिधीनां [illegible] । [illegible]
रिष्यति । हविः स्कन्नमिति यत्तदागः स अपराधो न भवति ॥१५॥ [illegible]
मर्शने कृते सति यथा वषट्कारेण प्रत्तं हविः तस्यै देवतायै हुतं भवति [illegible]
मानस्य एतेषु भुवपत्यादिनामकेषु परिधिरूपाग्निषु तत्स्कन्नं हविर्हुतं [illegible] ॥१७॥
इध्मस्येत्यवयवावयविसंबन्धार्था षष्ठी इध्मस्य अवयवभूतान् । अग्निमिन्धनाय [illegible] क्रि-
यते अतस्तदवयवानां समिन्धनसामर्थ्यमेव न तु परिधानसामर्थ्य[illegible]
तानन्यानेव परिधीनध्वर्यव आहरेयुः ॥१८॥ अग्निवाय्वादित्यरूपेण [illegible] ए-
वावस्थानादग्निरपि ब्रह्मात्मकः ॥१९॥२०॥ ३ ॥२॥

मन्त्रः स्पष्टार्थ इत्यभिप्रेत्य ब्राह्मणेन न व्याख्यायते ॥२॥ पूर्वाघार[illegible] वि-
धत्ते । वायव्यां दिशमारभ्याग्नेयदिग्भागपर्यन्तमविच्छिन्नधारया होमः पूर्वाघारः स च यत्र परि-
समाप्यते तत्रैकं समिधमादध्यात् तत्र धर्मविशेषमाह अभ्याधानात्पूर्वं मध्यमं परिधिं तया
समिधा संस्पृशेत् ॥५॥ उत्तराघारसमिधोऽभ्याधानं विधत्ते । द्वितीयाघारो नैर्ऋतीं दिशमारभ्यै-
शानीं दिशं प्रति वर्तते ॥७॥ अदःशब्दो विप्रकृष्टार्थवाची विप्रकृष्टेऽनुयाजप्राक्कालेऽभ्या-

धानायैका समिदवशेषितव्या तस्या अभिधास्यमानमभ्याधानमनूद्य प्रसंगात्तस्य प्रयोजनमाह ॥९॥ एवमाहवनीये कर्तव्याः परिधिपरिधानादयो विहिताः अथ वेद्यां हविरासादनार्थं प्रस्तरस्तरणं विधित्सुस्तदर्थं विधृत्योः सादनं विधत्ते । आहवनीयसमीपाद्बर्हिषा स्तीर्णां वेदिमुपावृत्य बर्हिषः सकाशाद्द्वे तृणे आदाय बर्हिष उपरि तिर्यगग्रे निदधाति । प्रस्तरो हि यज्ञस्य स्तुपः केशसंघातः बर्हींषि श्मश्रुप्रभृतीनि लोमानि तथा च प्रस्तरबर्हिषोर्मध्ये तिर्यङ्ग्निहिते एते तृणे भ्रूस्थानीये ॥ विधृत्यै विविधं धारणाय इतरथा हि प्रस्तरबर्हिषोः सांकर्यात् क्षत्रियवैश्ययोरपि सांकर्यः स्यात् ॥१०॥ तत्तत्र विधृत्योरुपरि ॥११॥ प्रस्तरस्योपरि सव्यं हस्तं निदध्यात् जुह्वादीनां सादनपर्यन्तम् ॥१२॥ जुह्वमादाय प्रस्तरे सादयेत् न तु ग्रहणमात्रं मन्त्रस्य सादनलिङ्गत्वात् ॥ ततः स्रुगाज्यव्यतिरिक्तं हविः पुरोडाशादिकं सादयेत् ॥१४॥ प्रस्तरस्य ॥१५॥ आसन्नानि हवींषि ॥१५॥ ४ ॥ ३ ॥

अथेध्मेनाग्निसमिन्धनहेतुभूताः सामिधेनीर्विधास्यन् तासां नाम निर्वक्ति । सामिधेनीभिः प्र वो वाजा इत्यादिभिर्ऋग्भिः ॥१॥ इध्मेन संदीप्यमानायाग्नये तत्समिन्धनार्था या ऋचो वक्तव्याः ताः सामिधेनीरनुब्रूहीत्यध्वर्युसंप्रैषार्थः ॥२॥ प्रवरात्पूर्वं सामिधेनीरनुब्रुवाणस्य होतृत्वं नास्ति यदा खल्वेनं प्रवृणीते अग्निर्देवो दैव्यो होतेति [see ५.१.५.] अथानन्तरमेवासौ होता भवति अतः सामिधेन्यनुवचनसमये होतृत्वाभावात् होतरनुब्रूहीत्यपार्थकम् ॥३॥ अग्निदेवत्या ऋचः सामिधेनीरनुब्रूयात् ॥४॥ त्रिवृता हि देवा इति श्रुतेस्तदीया यज्ञाः प्रारम्भपरिसमाप्त्योस्त्रिरावृत्तियुक्ताः । यज्ञलिङ्गत्वादत्रापि ॥६॥ पञ्चदशस्तोमस्येन्द्रस्य च सह प्रजापतिबाहुसकाशादुत्पत्तिः इन्द्रसंबन्धाद्वज्रोऽपि पञ्चदशस्तोमात्मकः ॥ सामिधेनीरभीति अभिरभागेऽइति [पा° १.४.९१.] लक्षणे अभिः कर्मप्रवचनीयः कर्मेति [पा° २.३.८.] द्वितीया ॥७॥ भवन्वर्धमानः ॥८॥ उपरिष्टाद्दर्शपूर्णमासयोरिति [k. ११.] विशेषणात् वाक्यशेषे च तं काममनपराधं राध्नोतीति कामप्राप्तिश्रवणात्तद्विकृतिभूता काम्येष्टिरत्रेष्टिशब्देन विवक्षिता अत एवापस्तम्बो दर्शपूर्णमासव्यतिरिक्तेष्टिपशुबन्धानां सामिधेनीसाप्तदश्यं सूत्रयामास ॥ अथ तासां कामेष्टीनां प्रधानयागस्योपांशुत्वं विधत्ते ॥ हेमन्तशिशिरयोरेकीकरणेन संवत्सरस्य पञ्चऽर्तवः । अनपराधमविकलम् ॥ उपांशूच्चारणस्य पार्श्वस्थानामर्थविशेषाप्रत्ययकत्वादनिरुक्तत्वम् अनिरुक्तं च विशेषनिरुक्तिविरहात्सर्वात्मकम् ॥१०॥ दर्शपूर्णमासयोरेव पक्षान्तरं विधाय प्रशंसति । मासापेक्षया य एकविंशः सूर्यः तमेव गतिप्रतिष्ठारूपं सामिधेनीनामेकविंशतिसंख्यया प्राप्नोति ॥११॥ इमं च पक्षमधिकारिविशेषे नियच्छति । गता प्राप्ता यस्य श्रीः तस्यैव यजमानस्य नान्यस्य ॥ गतश्रीव्यतिरिक्तस्यापीमं पक्षं कर्तव्यत्वेनाशंक्य निरस्यति । यो यजमानः श्रैष्ठ्यं नैकृष्ट्यं च न कामयेत स तादृङ् तत्प्रकारविशिष्ट एव भवति यादृशाय यथोपलब्धप्रकारेण नियतेन ते होतारः सामिधेनीरन्वाहुः । यस्य खल्वेवमनियतमनुवचनप्रकारं विदुषो यजमानस्य एता एकविंशतिसामिधेनीरन्वाहुः स पापीयान्वा श्रेयान्वा भवति ॥ य इत्थं श्रेयानित्यादिना योऽर्थः प्रतिपादितः सो विचार एव केवलं न तु तथानुवचनं कार्यम् ॥१२॥ कथं तर्ह्यनुवक्तव्यमित्यत आह त्रिरिति । अनवानन्ननुच्छ्वसन् । तत्तिसृणामृचां संतानं लोकत्रयसंतत्यै भवति । संतनोति संदधाति । स्पृणुते प्रीणयति बलयति वा ॥१३॥ अस्य हेतुः यावदनुवक्तुं स्ववशः शक्तिः स्यात् । सामि ऋङ्मध्ये । यथाशक्त्य-

नुवचनपक्षे एषैव निन्दा ॥१४॥ एतद्यथाशक्त्यनुवचनं निन्दायुक्तत्वात्स होता यदा न का- मयेत तदा एकैकामृचमनुक्रुसन्ननुब्रूयात् ॥१५॥ छिद्रान्वेषणशीलाय राजमानाय प्रशंसाय- भूतं द्वारं न प्रयच्छन्ति । उपतिष्ठते प्राप्नोत्यनेनेत्युपस्थानं प्राप्तिसाधनद्वारम् ॥१६॥५॥३॥

तस्मिन्सामिधेन्यनुवचने धर्मविशेषं विधत्ते । हिं इति शब्दमुच्चार्य ॥ सामवदिमन्या- यज्ञवाहिंकारप्रणवयोः सामावयवत्वात्सामिधेनीषु तत्कारणेन सामिधेनीयुक्तः मन्त्रोऽपि साम- वान्यज्ञः संपद्यते । ओमोमिति वीप्सया सर्वासु सामिधेनीषु स्थितस्य प्रणवस्यानुकरणम् ॥१॥ सामिधेनीनां लिङ्गविशेषं विधत्ते स वाऽएतीति । आ इति एति प्र इति प्रेति आङ्- पसर्गयुक्ताः प्रोपसर्गयुक्ताश्चर्चोऽनुब्रूयादित्यर्थः । आङुपसर्गो ह्याभिमुख्ये वर्तते प्रशब्दस्य प- राङ्मुखत्वेऽपि वृत्तिरस्ति । देवयजनान्निष्क्रम्य पराङ्मुखो प्रवर्तमानैव गायत्री युम्नाकं प्रति यज्ञं वोढुं शक्नोति नार्वाची । सा तु संनिधानान्मनुष्यानपि तु शक्नोति अतो लिङ्गद्वययु- क्ता एवानुवक्तव्याः ॥४॥ प्राणस्य परागवृत्तित्वात् उदानस्यान्तःप्रवेशवृत्तित्वयात् ॥५॥ पशू- नां तृणादिभक्षणाय यद्गमनं प्रति परागगमनं तत्प्रशब्दार्थः यच्च सायमागमनं तदाकारस्यार्थः । सर्वजगत्प्रगमनस्वभावमावर्तनस्वभावं च ॥६॥ आयाहीत्यनेन यदस्मान्प्रत्याभिमुख्यगमनं प्रतिपादितं तत्स्वर्गवासिदेवापेक्षया पराङ्मुखत्वेनेतिलिङ्गमपि प्रतिलिङ्गं संपद्यतऽइत्यस्यको- यमताभिप्रायः । तदेतद्दुरधिगममायाहीत्युक्ते [illegible] शीघ्रं श्रुतावधारयति न तु प्रगमनम् ॥८॥ द्युशब्दो दिनवचनः [निघ° १.९.] दिवसानभि गता इति व्युत्पत्त्या अभि- द्यव अर्धमासाः ॥ नोऽद्ध्याइत्यादिहविर्नकवाक्यद्वयः ॥९॥ [illegible] ऽतिशयितमानुकूल्यमाख्यायिकया दर्शयति ॥ माथवो मधुनाम्नः पुत्रः विदेघो नाम राजा स्वमुखे विघ्नरहितमग्निं धारयामास ॥१०॥ [illegible] मुखगतमग्निं स्तुवन् तं विदेघ- माह्वातुं निश्चितवान् ॥११॥ विदेघाः इति प्रकृतिः असूयार्था ॥१२॥ तस्मिन्नमयं माथवस्य तापशमनाय सरस्वत्यां नद्यां निमग्नोऽभूत् सोऽग्निस्तस्मात्स्थानादारभ्य प्राङ् दहन्निमां सर्वां पृथिवीमभितो व्याप्नोत् । प्राचीनं दहतोऽस्य पुरस्तात्सदानीरा नाम नदी उत्तरा उदक्प्र- वाहा एति गच्छति तया च व्यवहितः सोऽग्निः एनमग्निं सापि निःशेषेण धारयति इतस्ततो गमनं निवार्य धारितवती स चाग्निस्तां नदीमितरनदीवन्नातिदहति न अतिशयेन ददाह शोषयामास । अत एव सदा सर्वदा नीरं जलमस्यामस्तीति व्युत्पत्त्या सदानीरेत्युच्यते । तथा च निघण्टुः [अमर° १.२.३७. see Wilson Vishnupur. p.183.] करतोया सदानीरा बाहुदा सैतवाहिनीति । तां ह नदीं पुरा तद्दहनकाले ब्राह्मणा न तरन्ति न स्पृशन्ति अग्निदाहाभावेनाविशुद्धत्वात् ॥१४॥ तस्या नद्याः प्राग्देशः सर्वोऽपीदानीं ब्राह्मणावासः । तत्र स्थानमतिशयेन निवासायोग्यं बभूव तथा स्रावितं भयभाण्डे निक्षिप्तनीरवदंशेऽनुष्ठितं यज्ञदानादिकमतिशयेन स्रवणशीलं फलप्रदानासमर्थम् यतो वैश्वानराग्निनानास्वादितमतस्त- त्स्थानमपवित्रम् ॥१५॥ जघन्ये निकृष्टे सर्वास्ववस्थितेति नैदाघे ग्रीष्मसंबन्धिकालेऽपि संयच्छ कोपयति बहुजलतया प्रकुपिता भवति ॥१६॥ स च माथवः अग्निं प्रतीक्ष्योवाच ॥ इति पृष्टे सोऽप्यग्निरिममुवाच ॥ यस्मादेवं माथवाग्निना [illegible] विदेहदेशाः अपि माथवा (मा- धवाः!) इत्युच्यन्ते ॥१७॥ यस्माद्घृतशब्दोच्चारणेनाग्निः प्रज्वलितो बभूव तस्मात्सामि- धेनीषु यत घृतप्रातिपदिकयुक्तं पदं तत्सामिधेनीनामेवाग्निसमिन्धनहेतुर्भवति ॥२०॥ त-

स्माद्घृताच्ये[त्ये]तत्पदं सामिधेनीषु युक्ततरमिति निगमयति ॥ सुम्नं सुखं स्वर्गादिलक्षणमात्मनऽइच्छतीति सुम्नयुः । गा स्तुतौ । जिगीषति जेतुमिच्छति । देवान् स्तुत्या जिघांसति हन्तुं प्राप्तुमिच्छति । हन्तिरत्र गत्यर्थः तस्माज्जिगीषतीति व्याख्यानं युज्यते । अज्झनगमां सनीति [पा° ६.४.१६.] सनि दीर्घत्वम् ॥ यन्नामविशेषैरनिरुक्तं तत्सर्वात्मकम् ॥२१॥ वीतयऽइति पदं व्याख्यातुमितिहासमाह ॥ यथोर्ध्वबाहुना शाखाग्रं स्पृश्यतऽइति एवमेव द्यौरपि हस्तम्पृश्येव बभूव ॥२२॥ वितरामतिशयेन विप्रकृष्टाः । विश्लिष्टा इतिः वीतिः । तथा च वीतयऽइत्यस्य विविधमानायेत्यर्थो भवति ॥ एतां वीतयऽइति पदेन युक्तामग्नऽआयाहीत्यादिकाम् ॥२३॥ हविषो दाता हव्यदातिः ॥२४॥ तृतीयां सामिधेनीमनूद्य व्याचष्टे । अङ्गिरसा महर्षयो यदग्निं समिद्धमकुर्वन् तस्मादग्निरप्यङ्गिर इति संबोध्यते ॥ इतरे येऽङ्गारा आसुस्तेऽङ्गिरसोऽभवन्निति अङ्गिरसामङ्गारपरिणामरूपवादङ्गिरःशब्दाभिधेयता अङ्गिरोऽप्यङ्गाररूप इति युक्तं तस्याप्यङ्गिरस्त्वम् ॥२५॥ यविष्ठो युवतमः नित्यं तरुण अजरणः ॥२६॥ अदः विप्रकृष्टं द्युस्थानं यस्मिन्देवाः सर्वे वसन्ति । अवणीयं प्रशस्यम् । देवेषितं द्युलोकरूपं स्थानमाच्छ अभिलक्ष्य विवावसि प्रकाशय ॥२७॥ ईडेन्यः स्तोतव्यः नमस्यो नमस्कर्तव्यः । तमांसि तिरस्कृत्य ॥२९॥ ऋङ्मन्त्रे यन्नेति पदं तदोमिति अङ्गीकारार्थतया प्रतिपत्तव्यम् ॥३०॥ ईड स्तुतौ ॥३१॥ दीदेतिः दीप्तिकर्मा छान्दसो धातुः दीदयेव दिदीपऽइव ॥३२॥ अग्निविशेषणभूतेनापि वृषंछब्देनेन्द्रोऽप्युपस्थाप्यते वृषंछब्दस्य तन्नामधेयत्वात् अतो वृषंछब्दयुक्तस्य तृचस्यानुवचनादितरयज्ञवत्सामिधेनीनामपीन्द्रसंबन्धः सिध्यति ॥३३॥ योत्स्यमानांस्तान्निवारयितुं गायत्री मध्ये प्रादुर्भूत्वा सेयं पृथिव्येव । मेरोरग्रभागे हि अमरावती नाम नगरी तस्यां हि देवाः तथा मेरोरधस्ताद्भागे च यत् इरामुखं नाम नगरं तस्मिन्ह्यसुरा निवसन्ति तयोर्मध्ये पृथिवी वर्ततऽइति हशब्दद्योतितशास्त्रप्रसिद्धिः । मन्त्रि गुप्तभाषणे धा° ३३.६. । असुररक्षसमसुरविरोधि रक्षः समासान्त अप्रत्ययः रक्षःशब्दस्य नियतनपुंसकत्वात्तत्समासान्तस्यापि तथात्वम् ॥३४॥ यद्यपि होतारमिति होतृशब्दो द्वितीयान्तः तथापि होता अरमित्यपि श्रुतिसामान्यात्प्रतीयते स च अरंशब्दो यशब्दपर्यायः [?ऽलंश°] बालमूललघ्वलमङ्गुलीनामिति [पा° ८.२.८. वा° २.] लत्वस्य विकल्पितत्वात् स च शब्दोऽत्र निवारणार्थः आत्मानं निवारणविशिष्टं नैव ब्रवाणीति पाठान्तरमनुब्रुवतामभिप्रायः तं दूषयति । होतारमित्यार्षं पाठं परित्यज्य होता य इति पाठविपरिणामस्य मनुष्यबुद्धिप्रभवतया मानुषत्वम् ॥३५॥ निदानेन मूलकारणेन विचार्यमाणा ॥३६॥ यत्र सप्तदश सामिधेन्यः तत्र पृथुपाजास्तं सबाध इति द्वे धाय्याख्ये ऋचौ सामिधेनीषु प्रक्षेप्तव्ये तयोः स्थानं पूर्वोत्तरपक्षाभ्यां दर्शयति । पुरस्तादष्टम्याः पूर्वम् । अन्नं च तदाद्यं च अन्नाद्यमिदं धाय्यारूपं मुखप्रदेशऽएव धारयाम इति वदन्तः । अनवक्लृप्ता असमर्था । ऊर्ध्वं द्वयोर्धाय्ययोः प्रक्षेपात् अग्निं दूतमित्यष्टमी दशमी संपद्यते तथा चाष्टमीत्वभङ्गेन गायत्री वाऽएषा निदानेनेति प्रतिपादितं गायत्रीत्वमसमर्थं स्यात् तस्मात् समिध्यमानवतीसमिद्धवत्योर्मध्ये धाय्ये प्रक्षेप्तव्ये सा च समिध्यमानवती पाञ्चदश्ये नवमी साप्तदश्ये अष्टम्या सहोत्कर्षात् एकादशी संपद्यते ॥ उभयत्र वाशब्दश्चार्थे ॥ उक्तमापस्तम्बेन समिध्यमानवतीं समिद्धवतीं चान्तरेण पृथुपाजवत्यौ धाय्ये दधातीति ॥३७॥ तस्या दशम्याः सामिधेन्याः प्राक् अनुयाजार्थायाः समिधः यदन्यत्सर्वम् अस्मिन्नेव सभये

इध्मशेषस्य सर्वस्याभ्याधानम् एतर्हि हि होता अग्नेः समिन्धनं परिसमापयतीत्यत्र समिन्ध इत्यनेन समिन्धनस्य भूतत्वप्रतिपत्तेः ॥ अतिरिक्तं शत्रुवर्धनहेतुः ॥३०॥ अन्तिमां सामिधेनीमनूद्य व्याचष्टे ॥३१॥ अध्वरशब्दो हि सोमयागे रूढः स चात्र दर्शपूर्णमासाभिप्रायेण मन्त्रेण प्रस्तूयत इति सोमयागेन यावदेव फलं प्राप्नोति तावद्दर्शपूर्णमासयागेनापि ॥३२॥ १ ॥४॥

सामिधेन्यनुवचनानन्तरमग्ने महाँ असीति निगदस्यानुवचनं विधित्सुस्तस्य निगदस्याग्नेः प्रशंसायाः कर्तव्यतां तदुपोद्घातत्वेन प्रतिपादयति ॥ हविर्वहनार्थं गुरुतमं तमग्निमन्वारभ्य अग्निं योजयित्वा तस्योत्साहं जनयितुमस्तुवन्ननया च स्तुत्या तमाप्तिं वीर्यं संपादयन्तीत्यर्थः ॥१॥ स त्रेधात्मानं व्याकुरुताग्निं तृतीयं वायुं तृतीयमित्यादिश्रुतेः ॥२॥ जातकर्मप्रसङ्गेन विधीयते ॥३॥ तत्र धर्मविशेषमाह परस्तादिति । तस्मिन्नार्षेयप्रवरणे ऊर्ध्वमृषिमारभ्य तत्पुत्रपौत्रादिक्रमेणार्वाचीनं वरणं कर्तव्यम् यथा आङ्गिरस-बार्हस्पत्य भारद्वाजेत्यादि तथा च ज्यैष्ठ्यस्य पतये एवैतं निह्नुते अनेन प्रवरणेन निवेदयति ॥४॥ देवेद्ध इत्यादिनिवित्पदानां स्पष्टोऽर्थः ॥५॥ आस्यरूपं पात्रमास्यपात्रम् । अग्नौ प्रक्षिप्तस्य हविषो देवैर्भुज्यमानत्वादग्नेरेव पात्रत्वम् । यस्य खलु भोज्यस्य वस्तुनः संबन्धि पात्रं प्राप्तुमिच्छति तत्प्राप्नोत्य[illegible] ॥१३॥ निवित्पदानन्तरमावाहननिगदमप्यनूद्य पदशो व्याचष्टे ॥१४॥ दर्शपूर्णमासयोरुभयत्र योऽग्निः पुरोडाशदेवता तदावाहनानन्तरं निर्वापसमये यस्यै देवतायै येन क्रमेण निरुप्तं तेनैव क्रमेण तस्याः अग्नीषोमावावहेत्यादिवाक्यैरावाहनं कार्यम् ॥ कर्मवाचिना प्रयाजानुयाजशब्देन तत्सम्बन्धिनो देवा लक्ष्यन्ते तेषामाज्यमेव हि भागः जौहवौपभृतयोराज्ययोस्तदर्थित्वश्रवणात् ॥ अग्निं होत्रायेत्यनेन स्विष्टकृतोऽग्नेरावाहनं विवक्षितम् ॥ आ च वहेति वाक्येन प्राक्प्रतिपादितस्याज्यभागादिदेवतानां सर्वासामावाहनस्य निगमनम् ॥ अनुष्ठ्या अनुक्रमेण सम्यक् ॥१७॥ अनुवाक्या हि द्युलोकरूपा तिष्ठंश्च द्युलोकसंबन्धी भवति अतोऽनुवाक्या तावत्तिष्ठतैवानुवक्तुं योग्या अनुवचनसाम्यात्सामिधेन्यादिकमपि तिष्ठतैव पठितुं युक्तम् ॥१८॥ इयं पृथिव्यात्मिकैव याज्या ॥१९॥ २ ॥४॥

सामिधेनीभिर्ऋग्भिः समिद्धस्याग्नेः लौकिकाग्निसकाशादतिशयमाह । राक्षसादिभिर्धर्षितुं स्प्रष्टुमशक्यः ॥१॥ अथैताः सामिधेनीः प्रत्येकं तत्तल्लिङ्गोपन्यासेन प्राणापानश्रोत्रादिकरणग्रामविशिष्टात्मसंस्कारहेतुतया प्रशंसति । प्रगमनयुक्तत्वात्प्राणः प्रशब्दवान् प्राणवृत्तिर्हि इडापिङ्गलाभ्यां प्राचीनं निर्गच्छति । बहिर्निर्गतस्य वायोरात्माभिमुखी वृत्तिरपानः उदानवायुर्देहस्योत्क्षेपणादधिकतेजोयुक्तः ॥३॥ वनोवाह्यते भृशं वहति देवान् शीघ्रं प्रापयति ॥५॥ अन्तस्था अन्तरवस्थिता । प्राणापानादिपञ्चवृत्त्याश्रयभूतो यः क्रियाशक्त्यात्मको देहमध्येऽवस्थितः प्राणः तमनया दीपयति अस्माच्च प्राणादारभ्य अन्ये प्राणाश्चक्षुःश्रोत्रादय ऊर्ध्वगामिनः अन्ये पायूपस्थयोन्यादयोऽवाञ्चः ॥८॥ अभिलषितस्त्रीविरहे अतिशयेन शोकहेतुत्वात् शोचिष्केशशब्देन पुंव्यञ्जनं लक्ष्यते तथा च एतच्छब्दवत्यैतयर्चा आनन्दव्यापारस्य उपस्थाख्यस्येन्द्रियस्य समिन्धनं कृतं भवति ॥९॥ तत अनन्तरमेकादश सामिधेनीः तदनुवचनसमये शपतो द्वेष्यस्य प्राणापानादिवियोजनहेतुत्वेन प्रशंसति । प्रथमायामनूच्यमानायामेनं होतारं यदि द्वेष्यः शपेत् अनुव्याहारः शाप इति हि धूर्तस्वामी भाष्यकारः तं प्रति होता ब्रूयात् एतर्हि आत्मनः स्वसंबन्धिनं प्राणं हे शत्रो अग्नौ निहितवानसि तेन च प्राणेन नि-

मित्रेन पीडां प्राप्स्यसीति ॥ ११॥ मनसो मोषणं विपरिलोपस्तेन गृहीतः अत एवातिशयेन मूढः [मूल्हः B. गूढः A. गूढः C.] ॥ १६॥ उद्धायेति [उद्धा C.] उद्धमनम् [उद्धानम् A. उ-द्धानम् C.] ऊर्ध्वश्वसनं [! ऊर्ध्वश्वस° A. C. ऊर्ध्वं वंस° B.] तत्प्राप्येत्यर्थ. ॥ १८॥ अपिनज्ञो बन्धुयुक्तः ॥ २०॥ न्येति नितरां प्राप्नोति ॥ २२॥ ३ ॥ ४॥

अथाघाराख्यौ होमौ विधातुं सिद्धमर्थमनुवदति ॥ १॥ चनशब्दोऽप्यर्थे । स्वाहेत्यपि श-ब्दं न ब्रूयात् ॥ ५॥ उपवहं वहप्रदेशोपरिश्लिष्टमौन्नत्यकरं दारु लौकिकाः कुर्वन्ति ॥ ७॥ आहवनीयस्य दक्षिणभागे असुरान्प्रति उच्छ्रितवन्तः । उच्छ्रितं पर्वतादिकमिव वीर्यमपि दुरा-सदम् । आघारयोर्दक्षिणोत्तरपरिधिसंधिमारभ्योभयतः करणम् ॥ ८॥ यद्वृक्षादीनां मूलं तत्तू-ष्णीमिव हि अदृश्यमानत्वात् ॥ १०॥ एवमाघारयोः प्रतिनियतधर्मान्विधायानुष्ठानक्रमं विधत्ते । पूर्वाघारानन्तरं नोत्तराघार अपि तु अग्नीमग्नीदित्याग्नीध्रं प्रति संप्रैषं ब्रूयात् अग्निमाहवनीयम् रथादिवहने अनडुदश्वादिकं योच्यमाणास्तदीयस्कन्धस्योपरि युगधुरमध्युह्य पश्चात्पाशैर्युञ्जन्ति बध्नन्ति अतो धुरोऽध्यूहनस्थानीयः पूर्वाघारहोमः ॥ १३॥ परिक्रम्य परिक्रम्य तत्तत्परिधिदेश गत्वा तदनुसारेणाग्निं संमार्ष्टि । एकैकस्मिन्परिधौ संमार्जनस्य त्रिरावृत्तिं विधत्ते ॥ १४॥ परि-धित्रयानुसारेण परितोऽग्निं संमृज्य तदनन्तरमग्नेरुपरिष्टात्तूष्णीं त्रिः संमृज्यात् प्राजेत्प्रेरयेत आ-घारयोर्मध्ये संमार्जनस्य करणात्तद्व्यवधाने सति मनश्च वाक्चैतदुभयं समानविषयं समा-नाश्रयमपि भिन्नमिव भवति ॥ १५॥ ४ ॥ ४॥

स्रुक्प्रभृतेः पूर्वभागे । तदतिक्रमजनितमपराधं तन्नमस्कारेण शमयति ॥ १॥ हवीरूपेण वेद्यामवस्थितो यज्ञोऽत्र विष्णुशब्देन विवक्षितः दक्षिणातिक्रमवेलायां तस्यातिक्रमशंका मा भूदित्यर्थः ॥ २॥ यत्र स्थित्वाध्वर्युर्जुहोति तत्र तस्यान्तिकमिति नेदीयस्त्वव्यपदेशः ॥ ३॥ विद ज्ञानऽइत्यस्माच्छान्दसो लङ् सिपि दश्चेति [पा° ८. २. ७५.] दकारस्य रुत्वे वेरिति रूपम् । स्वि-ष्टकृत् शोभनयागस्य कर्ता ॥ ४॥ होमानन्तरं प्रत्याक्रम्य ध्रुवासमञ्जनम् । ध्रुवयेति ध्रुवामि-त्यर्थः ध्रुवौस्थस्याज्यस्य सर्वयज्ञसाधारण्याद्यज्ञस्य मध्यदेह एव ध्रुवा । आघारशेषस्य तस्यां समञ्जनाच्छिर एव तस्मिन्प्रति दधाति । अर्धस्य देशभागस्य ग्रामादेः ॥ ५॥ ध्रुवामनु ध्रुवा-भागी यजमानः उपभृद्भागः शत्रुः । उपभृतेति द्वितीयार्थे तृतीया ॥ ६॥ ध्रुवापेक्षया इतरा स्रुचः ॥ ७॥ प्राजापत्यस्य पूर्वाघारस्योपांशुत्वं प्रतिपादयितुं मनोवाग्भ्यां कृतं संवादमुपन्यस्यति । अहमेव भद्रः अहमेव भद्र इति स्वस्वोत्कर्षविषये ॥ ८॥ प्रश्नं प्रति प्रजापतिं जग्मतुः ॥ ११॥ विसिष्मिये विगतस्मया भग्नवीर्या बभूव । गर्भः देवमनुष्यादीनामुत्पत्तिहेतुः । अ-हव्यवाट् हव्यवहनस्याहेतुभूतैव ॥ १२॥ तत्र एतत् वाचः सकाशात्पतितं रेतः चर्मणि अ-न्यस्मिन्वा यस्मिन्कस्मिंश्चित्पात्रे देवा धृतवन्तः भूत्वा च तत्प्रतिदिवसं पृच्छन्ति अत्रास्मिन्पात्रे किमेतत्प्रसिद्धं रेतः कथम्भूतमिति विचारयन्तः । विचार्यमाणानामिति [पा° ८. २. ९७.] प्लुतः । अत्रैव त्याऽदिति यस्मादेवमुक्तवन्तः ततस्तस्मात्स गर्भोऽत्रिः संबभूव । यतो गर्भाशयात्सृतो गर्भोऽत्रिः संपन्नः तस्मात्सृतगर्भा रजस्वला स्त्रीनाम्नात्रेयीत्याख्यायते तया योषिता सह संभा-षणादिकं कुर्वन्पुरुष एनस्वी [एव स्त्री ABC] भवति । तैत्तिरीयकेऽप्याम्नातम् तन्मलवद्वाससा न संवदेत न सहासीतेति ॥ ननु यस्या गर्भोऽत्रिः संजातः सैव वागात्रेयी सर्वस्त्रीणां कथमात्रे-यीत्वमित्यत आह स्त्रीरूपधारिण्या एतस्याः खलु वाग्देवतायाः एते लौकिकाः सर्वे गर्भाः सं-

भूताः गर्भाशयलक्षणे चर्मणि धृतं रेतो हि गर्भात्मना परिणमति तच्च वायव्यान्यग्रग्रेति मिदं सर्वासामात्रेयीत्वम् ॥१३॥ ५ ॥४॥

चतुर्थे सामिधेन्यादिराघारान्तः प्रदर्शितः प्रयोगः पञ्चमेऽथास्मिन्प्रवरादिर्निरूप्यते । तत्र दैवहोत्रार्षेयमानुषहोतॄणां वरणं विवक्षुरादौ तदङ्गत्वेनाश्रावणं विधत्ते ॥१॥ आश्रावणाङ्गत्वेन इध्मबन्धनदर्भाणां ग्रहणं विधत्ते । एवकारो वक्ष्यमाणपक्षद्वयनिरासार्थः । वेपनः कम्पनशीलः ॥२॥ स्तरणसमिन्धनलक्षणस्य कार्यस्य करणादिदं बर्हिरादिकं यजमानस्य किंचिदङ्गम् ॥ तन्निराकरोति इध्मसंनहनाग्निसंमार्जनलक्षणकार्यद्वयकरणादेतदिध्मसंनहनात्मकमेव यजमानस्य किंचिदङ्गम् अतस्तद्धारणपक्ष एव श्रेयान् ॥३॥ अथो दैवहोतुरग्नेर्वरणं विधत्ते ग्रग्ने आर्षेयवरणमानुषहोतृवरणाभ्यां पूर्वम् ॥४॥ विद्वानित्यनेन यष्टव्यदेवतापरिज्ञानं चिकित्वानिति परिज्ञातस्यार्थस्याविस्मरणम् अनुष्ठा अनुक्रमेण ॥६॥ नभोऽङ्गिरोमनुषां वत्युपसंख्यानमिति [पा॰ १.४.१८. वा॰ २.] भसंज्ञया रुत्वाभावः ॥७॥ ऋषीणां संबन्धिनमध्वर्युर्होतारं वृणीते ॥९॥ ब्रह्म परिवृढं कर्म तत्साधकत्वादग्निरपि ब्रह्म स यथा आवहति तद्वत् ॥११॥ साङ्गवेदाध्ययिनोऽनूचानाः प्रावितारः कर्तारः अवतिस्तत्क्रियावचनः ॥१२॥ असावित्यत्र होतुर्नाम प्रथमान्तं निर्दिशेत् ॥ see ३.५.३. ॥१३॥ हे सवितः सकलकर्मानुज्ञातर्देव एतदनेन मम वरणेन मद्व्याजेन त्वामेव वृणीतेऽध्वर्युः । तेन मन्त्रपाठेन सवितुरनुज्ञा लब्धा भवति । होतुः कर्म होत्रम् इह हौत्रं कर्तुमग्निं वृणीते न तु मामित्यर्थः ॥१५॥ होता अनुवाक्याः पठिष्यन्याज्याभिर्यक्ष्यंश्च भवति ॥१६॥ रातिर्दानं धनं लभेम । उर्व्यायामुरुत्वे महत्त्वे । सुप्रीतादित्या वयमदितये देवमात्रे अपापिनः अनपराधिनो भवेम अथ वा दितिः खण्डनं नाशः तदभावाय चिरकालजीवनाय भवेम ॥१७॥ अनुब्रवदनुब्रूयात् ॥१८॥ यथा सर्वेऽपि नरा आ सर्वतः शंसन्ति तथाविधशंसनाय प्रियाम् । अथ साधारण्येन नराणां यो जीव आशंसितः स युक्त एव न हि केवलं तद्धोत्रज्ञानामेव संलापोऽपेक्षितः अपि तु यो शुष्टां वाचं जानाति यश्च न सर्वैरप्ययं साधु उक्तवानित्येवंरूपा वाचो (यया वाचा ABC.) जिज्ञास्यन्ते उच्चार्यन्ते ॥ होतृवर्ये होतृवरणे । अमायि हिंसितमभूत् ॥२०॥ अग्न्यादीनामुरुत्वं लोकसिद्धम् ॥२२॥ संमर्शनदेशाद्धोतृषदनं प्रत्यागच्छेत् । परागतं वसु यस्मात्स्वं धनं यस्मात्स ॥२३॥ अर्वाक् अर्वाक् अभिमुखं धनं यस्य स ॥२४॥ हे विश्वकर्मन्महादेव त्वं शरीरस्य पाता भवसि ॥ उपवेशनस्थानादीषदुत्तरतश्चलनं समन्त्रकं विधत्ते हे उभावग्नी युवां मा मामुत्कृष्टमाधिपत्येन मोषिष्टं दाहं मा कार्ष्टम् उष दाहे यतो लोकः स्थानं वां संबन्धी अतो हेतोर्मा मा हिंसिष्टमिति प्रार्थना युक्ता । होतृषदनादुदङ्मुखमेजति एजृ कंपने ॥२५॥ the explication of नमेह - भागधेयं is wanting in ABC. । यथा लोके कश्चित्पाचकः तत्स्वामिनं पृच्छति पचामन्नं यथा आनेष्यामि यथा वा आनीतं पात्रे समर्पयामीति ॥२६॥ १ ॥५॥

अथ स्रुगादापननिगदं नवधा विभज्य व्याचिख्यासुराद्यं भागमनूद्य तस्यार्थमाह । वेदितव्यस्य मन्त्रे अनिर्देशात् इदमिति तत्कर्मप्रदर्शनम् इदमनुष्ठेयं कर्म वेत्तु जानातु । तस्य हौत्रेण प्रतिनियतं संबन्धमाह तस्यो हि तस्यैव हि स च संबन्धनियम एवकारार्थेन उशब्देन द्योत्यते । प्रकर्षेणावतीति प्रावित्रो यज्ञः । घृतपूर्णां स्रुचमास्यस्व हस्ते धारय उपसर्गादस्यत्यूह्योर्वेति [पा॰ १.३.२९. वा॰ ३.] आत्मनेपदम् ॥१॥ मन्त्रे स्रुचामित्येकस्या एव नि-

र्देशं द्विवनिर्देशपत्तनिन्दापुरःसरं दूषयति । प्रत्युद्यामिनं प्रतिकूलोद्योगवन्तम् ॥२॥ देवानि- छतीति देवद्युः विश्वैरपि देवैर्वरणीया विश्ववारा । कुशलादिस्तुतिमात्रेण प्रायेण परितोषादी- डेन्या मनुष्याः । हविःप्रदानमन्तरेणापरितोषाद्देवा यज्ञियाः ॥३॥ देवमनुष्यात्मकासु प्रजासु मध्ये याः प्रजा यष्टव्यत्वेन यज्ञमन्वभजन् तं प्रकारमाह । यज्ञसंस्पर्शवतां न कदाचित्पराभ- वोऽस्ति तदसंस्पृष्टं च न किंचिदस्तीति यज्ञस्तुतिः ॥४॥ निगदविभागगतां नवसंख्यां प्र- शंसति । व्याहृतय उक्तवाक्यानि तानि च नव सप्त शीर्षण्या द्वाववाञ्चाविति ॥५॥ अथा- श्रावणप्रत्याश्रावणे विधातुमाख्यायिकामाह ॥६॥ अध्वर्युकर्तृकमाश्रावणमाग्नीध्रकर्तृकं प्रत्या- श्रावणम् । स्वर्गाख्यफलोदयात् वीजवं यज्ञस्य । अध्वर्य्वादयः सम्यक् प्रदाय-प्रदाय एको ऽन्यस्मै सोऽप्यन्यस्मा इत्येवं प्रकारेण यज्ञमनुतिष्ठन्ति यजमानमनपेक्ष्य तस्य तत्र व्यापारा- भावात् । यथा जलैरापूर्णं घटादिपात्रं गृहान्तर्गतप्रभूतभाण्डपूरणसमये परस्परहस्तेन संचरन्ति तद्वत् ॥७॥ अथ संग्रहेणोक्तं यज्ञसंप्रदानं विशिंषन्नध्वर्य्वादेः स्वस्वकालेषु मौनं विधत्ते । होतारं प्रत्यनुब्रूहीत्युक्त्वा प्रस्तुतानुपयोगि वचनं न ब्रूयात् होताप्यनुवचनद्वारेण वाग्रूपयज्ञ- स्य स्वस्मिन् (ज्ञः स्वस्व° B. ज्ञः स्व AC.) समावेशात् न व्याहरेत् ॥८॥ स वषट्कारे- णेति सोऽध्वर्युः होतृकृतेन वषट्कारेण हविःप्रदानसाधनेन अग्नौ योनिभूते रेतोभूतं हविः सिञ्चति ॥ अथ सोमविषयं वाङ्नियमं प्रतिजानीतेऽथेति ॥११॥ यदा उद्गातार स्तोत्रं प्रार- भेरन् तावदध्वर्युर्ग्रहणादनन्तरं नापव्याहरेत् ॥१२॥ तऽउद्गातारोऽपि यदाध्वर्युरुपावर्तध्वमिति ब्रू- यात्तदानीं तस्य यज्ञस्तान्प्राप्नोति अतः प्रभृति उत्तमास्तोत्रियापर्यन्तं न वदेयुः ॥१३॥ होता- पि यैषान्तिमा च स्तोत्रियेति यदा प्रज्ञापयन्ति तदा प्रभृति न वदेत् ॥१४॥ यथा पूर्णपात्रम- भिमतप्रदेशे घटादिषु प्रक्षेपमकृत्वा अन्यत्र परासिञ्चेत् । संविदानाः ऐकमत्यं प्राप्ताः स्वस्व- कर्तव्यमेकाग्रेण जानन्तः । एवं सत्येकोऽप्यृत्विङ्न मुह्यति स्वानुष्ठेयं न विस्मरति । भर्तव्यः पोषयितव्यः ॥१५॥ आश्रावणादिपंचकमनूद्य प्रशंसति । यज्ञोऽपि पाङ्क्तः धानाः करम्भ इ- त्यादिहविर्गतपञ्चसंख्यायोगात् पाङ्क्तः पशुः चत्वारः पादाः शिर एकमिति वा लोमवङ्मां- सास्थिमज्जभेदेन वा ॥१६॥ समप्लावयन् सर्वत्र व्याप्तानकुर्वन् ॥१८॥ यदीष्ट्वा सौर्यादिक- या फलान्तरसाधनभूतया यजेत तत्र वा ॥१९॥ चरुपुरोडाशादिना विशेषेण राजतऽइति वि- राट् वेद्यात्मिका पृथिवी सा धेनुत्वेन प्रकल्प्यते । स्तनपानाय वत्सस्य कण्ठगतं पाशं व्य- श्लेषयन् । अपरिवीतं वत्समूर्ध्वमूधसोऽभिमुखमनयन् । उपासीदन् दोहाय गोः समीपे स्थि- ताः । य एतदाश्रावणादिकमेवं दोहात्मकतया जानाति ॥२०॥ २ ॥५॥

प्रयाजान्विधित्सुर्निर्वचनद्वारेण तान्प्रशंसितुमाख्यायिकामाह । एतस्मिन्दर्शपूर्णमासात्म- के यज्ञे प्रजापतौ आश्रावयास्तु श्रौषडित्यादिसप्तदशात्मकस्य प्रजापतेर्यज्ञरूपत्वात् यज्ञे प्रजा- पताविति सामानाधिकरण्यम् ॥२॥ स्वं पयः प्रतिनियतधनरूपं क्षीरं । पयःकार्यत्वादाज्यम- पि पयः गोमहिष्यादीनां संवत्सरपर्यन्तप्रायेण दोहात्मत्वम् ॥५॥ अभितरामु वै शत्रोरत्यन्तम- भिमुखं खलु अग्नावपि ईषदीषत्पुरस्तादाक्रम्य जुहुयात् ॥६॥ आश्रावणस्य प्रदानाङ्गतया त- योः प्रदेशैक्यलाभादित्यभिप्रायात्पक्षान्तरमाह यत्रोऽएवेति । आहवनीयमध्ये यस्मिन्नेव प्रदेशे ऽग्निं प्रज्वलितं मन्येत तत्र पञ्चाप्याहुतीर्जुहुयात् यस्मात्समिद्धाग्निदेशहोमादाहुतयोऽपि प्र- दीप्ताः फलजननसमर्था स्युः ॥७॥ हे होतः समिन्नामिका अग्निमूर्तीः प्रति तासां यागाय या-

र्यां पठेति प्रैषार्थः ॥८॥ ऋतवो ह वा ऽइत्यत्र [k. १.] संघशो विहिताः पञ्च प्रयाजाः तेषु कैकं विधाय प्रशंसति ॥ अवृञ्जत स्वैर्लब्धत्वादसुरेभ्यस्तं वर्जितमकुर्वन् । वसन्ते निखिलवृक्षाणां कुसुमाद्युद्गमेन प्रदीप्तताऽस्ति ॥१॥ यदिदं शुष्कं प्राणिजातं सरीसृपं फलकलामगोधादिकं ग्रीष्महेमन्ताभ्यां नितरां परित्यक्तं शरीरक्षीणं भवति तत्सर्वं वर्षाः द्वितीयाबहुवचनं ताः प्रति ईडितमिव अहो विनष्टप्रायं सत् इदानीं पुनश्चेष्टतऽइति सर्वैः प्रशंसितमिव सर्वं स्वोचितं तृणजलादिरूपमिष्यमानमिष्टं कुर्वत् इतस्ततश्चरति वर्षासु तृणजलादिसमृद्धिसंभवात् ॥११॥ आस्तृतदर्भवर्हिषि शेरते ॥१२॥ परार्ध्यः परस्मिन्नर्धभागे भवः ॥१३॥ प्रयाजमन्त्रेषु ॥ एकस्य पुंसो जायाबहुत्वं संभवति स्त्रियास्त्वेक एव पतिः ॥१४॥ चतुर्थे बर्हिराख्ये प्रयाजे होतव्ये सति उपभृतः सकाशाज्जुह्वां समानयत्याज्यम् । अभ्यावृत्याभ्यावृत्य कार्मवशादेहसंबन्धं प्राप्नुवन्ति ॥१६॥ संयत्तयोः युद्धाय प्रयतमानयोः ॥१७॥ उपभृतः सकाशादाज्यस्यानेताध्वर्युः शत्रोः सकाशात् बलिमुपायनद्रव्यम् यजमानाय प्रदापयति ॥१८॥ उभावुपभृदुपरीतनीं कृत्वा जुहूं विधारयेत् ॥२०॥ इत विजितमेव । अनु तदनुसृत्य एतस्मिन्नेवोत्तमप्रयाजे सर्वप्रयाजव्यतिरिक्तं सकलमपि यज्ञं संस्थापयाम नेदस्माकं यज्ञं समापनात्प्रागेव असुरा आगच्छेयुः ॥२१॥ उभयत्राच्युतः अमावास्यायां च [illegible] च नित्यः ॥२२॥ पौर्णमास्याममावास्यायां च विष्णुरग्नीषोमौ प्रजापतिश्चेति विकल्पिता उपांशुयाजदेवताः एकादशकपालदेवता अग्नीषोमौ अमावास्यायां चोभयत्र साधारणोऽ[illegible]ऽग्निः इन्द्राग्नी एकादशकपालदेवता दधिपयोदेवते इन्द्रमहेन्द्राविति या [illegible]देवताः सन्ति ता अनतिक्रम्य तत्तद्देवताकं यागं समस्थापयन्नित्यर्थः अत्र देवतानाम नेयतत्वाद्यादेवतमिति संग्रहेणाभिधानम् । यातयामा निर्गतसारः ॥२३॥ स इत्यनर्थको वाक्यालंकारार्थः । प्रयाजहोमेभ्योऽवशिष्टमाज्यं । यथापूर्वमित्याग्नेयो[illegible] हविषां पूर्वं पूर्वमनतिक्रम्य । पशोः पुरोडाशस्य वाज्यव्यतिरिक्तस्य हविषोऽवत्तम् ॥२५॥ ३ ॥५॥

अथ प्रयाजान्प्रकारान्तरेणा[illegible] प्रशंसति । प्राणोपाध्यभावे शरीरसंबन्धायोगात्प्रेया पुरुषसमिन्धनहेतुत्वम् । समिधः प्राणवसमर्थ[illegible] प्रासङ्गिकं नैमित्तिकमभिमर्शनमाह तस्मादिति । यजमानो ज्वरादिनोपतापवान्यदि स्यात्तदाध्वर्युः समिद्यागसमये प्राणप्राबल्यायात्मनाभिमृशेति यजमानं ब्रूयात् यावदाशंसेत अस्योपतापः शाम्यतु ॥१॥ हेमन् हेमि हेमन्ते । प्रतितरामिव अत्यन्तं प्रतिकूला-इव हिमोपहतपत्रत्वा पक्वीणा-इव । अर्धे भागे देशे ॥५॥ इत्थं प्रयाजान्प्रशस्य तदनुमन्त्रणाम [illegible] धातुमाख्यायिकामाह । वायूपऽएव मन्त्रे विवदमाना सेहमित्यामहे । नोऽस्माकं वाचमस्माभिरुक्तां पुंलिङ्ग[illegible] मिथुनेन स्त्रीलिङ्गप्रतिवचनाभिधानेन मिथुनं कृत्वा यः अनुक्रमेण नितरां न आक्रामति स सर्वं पराजयं प्राप्नुयात् ॥६॥ एकः पुत्रः एका पुत्री ॥७॥ उक्तार्थज्ञानं प्रशंसति पञ्च-पञ्चेत्येवेति ॥१६॥ ४ ॥५॥

अथ वसन्तादिप्रयाजदेवे[illegible] कथमग्नेः संबन्ध इति तदुपपादनायाख्यायिकामा[illegible] । ईयिरे ऐरन् ॥१॥ तेषु यामृद्धिं देवाः भुवा व्यथन्ते तादृशीमेधतुमृद्धिमसुरेषु प्रवर्धयां चक्रुः तेषु प्रवर्धितेषु सत्सु असुराः के चन वपनात्पूर्वं वृष्टिबाहुल्यात्कृषन्तो यन्ति किल के चन कृष्टे क्षेत्रे बीजानि वपन्तो यन्ति उप्तबीजाश्च के चन सस्यानि सम्यक्पाजतानि तैः परस्परभुजा यतः परिणतानि सस्यानि लुनन्तो यन्ति के चन लूनानि व्रीहिफलानि मृणन्तः प्रहरन्तः काले

बलीवर्दाक्रमणादिना स्तम्बाद्वान्यं पृथक्कुर्वन्तः । तथा असुरदेशे कंलुखर्षानपेक्षिता [! BC. सुरदेशेकोलुख A?] नीवारादयो मुञ्जमुञ्जः सर्वदा परिपक्वा आसन् ॥३॥ अतोऽस्मादवतिक्रमाद्धेतोः असुरसंघो देवसंघाय शात्रवमाचरितुमिच्छति एतत्कनीय इन्नु निकृष्टं खलु अतः प्रवृद्धैः सह कलहो न कार्यः किं तु यथा इदमृवतिक्रमलक्षणं विछिन्नं कार्यमन्यथा भवेत् एतावन्मात्रमबबुध्यध्वम् ॥४॥ अस्य भ्रातुरहं समान इति स्वात्मानं ब्रुवाणः कश्चित्पुरुषो यत्पुण्यं कर्म दर्शपूर्णमासादिकं करोति तत्रासावपि भागवान्भवति ॥८॥ आवाहनक्रमेणैव सर्वत्र यागो दृष्ट अत्र कथं वैलक्षण्यमिति ब्रह्मवादिनामाशयः तैर्दृष्टं तत्कारणं दर्शयति उत्तमान्ह्वेति । यस्मात्प्रथमभागकल्पनासमये एनानुत्तमान् चरमभाविन एव देवाः कल्पितवन्तः पश्चादपगतानां तेषां पुनरागमनाय यतो युष्मान्प्रथमान्यजामेत्यब्रुवन्. तस्मादुक्तविधं वैलक्षण्यं संजातमिति अत्रैषामावाहनीतिमवं देवानाज्यपानावहेत्यभिधानादद्रष्टव्यं (see ४. २.१७.) आज्यपाः खलु प्रयाजानुयाजदेवाः ॥९॥ आदिमध्यावसानेष्वनुष्ठेयानामाज्यभागप्रधानस्विष्टकृद्यागानामग्निदेवताकत्वमभिधातुमाह । चतुर्थप्रयाजेनैव पुरा देवाः दर्शपूर्णमासाख्यं यज्ञमाप्त्वा तं पञ्चमेन समस्थापयन् तत्र यष्टव्यान्देवान्क्रमेणोद्दिश्य स्वाहाकृतवात् । यदत ऊर्ध्वं यज्ञस्यावशिष्टमाज्यभागाद्यस्ति तेन स्वर्गं लोकं समाश्नुवत ॥१०॥ आसिसंक्षन्नासङ्गं प्रतिबन्धमैच्छन् ॥१२॥ एतं यजमानं प्रति यदि निन्दको यज्ञस्य पूर्वभागे वैकल्यविषयं वाक्यं ब्रूयात्तं प्रति स यजमानोऽपि ब्रूयात् ॥१६॥ स्वद्वेषकात्स्वयं परः उत्कृष्टो भवति ॥१८॥ संवत्सरं खलु जयति प्रयाजैः जयन् जितप्रकारः पूर्वाध्याये उक्तः । योऽस्य संवत्सरस्य द्वाराणि जानाति स खल्वेवैनं जयति नानभिज्ञः । यान्प्रयाजानन्तरतः मध्यतो हि न व्यवजानाति ते च यथा येन प्रकारेण अस्योपकारका भवन्ति (न व्यवजानाति) सोऽनुष्ठाता तैर्यक्ष्यमाणैरनुष्ठेयैः प्रयाजैः किं साधयेत् । the explanation of तस्य - प्रपद्यते is wanting ॥१९॥ आज्यद्रव्यं प्राजापत्यत्वेन प्रशंसति । प्रजापतेः सकलदेवतासमष्ट्यात्मकत्वेन अयमसाविति निर्वक्तुमशक्यत्वादनिरुक्तत्वम् ॥२०॥ अध्वर्युः पुरोडाशस्थापनदेशमाज्येनास्तृतं कृत्वा हविःपुरोडाशाद्द्विरवदायावत्तस्योपरि आज्यमभिघारयति । यथैव खलु अत्र सदः सदसो देवयजनस्य संनिधाविष्टं साङ्गं स्यात् एवमाज्यस्य यजमानदवत्यवप्रकारं जानतो यजमानस्य देशान्तरस्थस्यापि भवति व्यवधानदोषो नास्तीत्यर्थः । पापमङ्गभ्रंशादिलक्षणं ॥२१॥ १ ॥६॥

आग्नेयं पुरोडाशं विधातुमाख्यायिकामाह । इमां क्षितिमिदानीं परिदृश्यमानप्रकारं स्वर्गजयम् । धीत्वा पीत्वा यथा सरघा मधु निःशेषेणास्वाद्य गतसारं परिशेषयन्ति एवं यज्ञं विदोहं कृत्वा तं यूपेनाछाद्य तिरोहिता अभवन् ॥१॥ अनुश्रुतप्रकारं पुनरनुवदति । see ऐतरेयब्राह्म° २.१. शतपथब्रा° ३.२.२.१२. । तं यूपेन योपितं यज्ञमृषयोऽन्वैच्छन्नन्वेषणे मतिं कृत्वा ॥२॥ तदन्वेषणेन अन्वेष्टव्यं पूजयन्तोऽन्वेषणप्रयासेनात्मानं खेदयन्तः इतस्ततः संचेरुः देवा अन्यच्च हि पूर्वं जेतुं शक्यमर्थं श्रमेणैव जयन्ति । अथ तदन्वेषणे एतेषां देवा अपि रुच्युत्पानमकुर्वन् (? मुध्युत्पा° A. B. C.) तेऽपि स्वयमपि तदर्थं मतिं कृत्वा परस्परं यूपं प्रजाकामेयुक्ता किं तव मतं किं तव मतमिति ब्रुवाणास्तेरुः परिभ्रम्य च कूर्मरूपं धृत्वा सर्पन्तं पुरोजग्मा इत् आजग्मुः आ इत्युपसर्गश्रुतेर्योगक्रियाध्याहारः । ते सर्वेऽपि अयं कूर्म एव अस्माभिरन्वेष्टव्यो यज्ञ इति निश्चिताः ॥३॥ प्रारोचत रुचिमुदपादयत् । तमसृजन्त उदपादयन्

तमेवाङ्गकलापैर्विस्तारितवन्तः ॥ यथा पराभावी सन्कम्यचिदुपादिष्टः सन्मुखादन्यमपायदेशनात् अयमेव अवरः पश्चाद्भावी भवति तथानुक्रमेणोच्यते । उपनीतस्यैव वेदाधिकाराद्ब्रह्मचारिणऽइत्युक्तम् ॥४॥ पुरोडाशं नामनिर्वचनद्वारेण स्तौति । यतः स धर्मस्वरूपेणास्मा मनुष्यैर्दृष्टस्ततः यागसमये पुरः पूर्वस्मिन्काले यज्ञमुखे अदाशयत् फलमदापयत् तथा यः पुरोडाशः एभ्यो मनुष्येभ्योऽर्थं यज्ञं प्रारोचयत् ॥ स उभयत्र दर्शे पौर्णमास्यां च नित्यं कर्तव्यो भवति ॥५॥ उभयसाधारण्यमेव स्थापयति । यज्ञसाधनत्वात्पुरोडाशो यज्ञ एव स उभयकालेऽपि तयोः पूर्वकाले क्रियते ॥६॥ अस्या आग्नेयेष्टेरैहिकफलार्थं पृथक्प्रयोगमाख्यायमाह । एनमध्वर्युः (र्युम् ?) एतयैव आग्नेयेष्ट्यैव । तमग्निं बहुधा प्रशंसति यस्यै काम्याऽइति ॥७॥ अज्ञातमामतिशयेन प्रत्यक्षफलदम् ॥१॥ अथ पृथक्प्रयोगव्याख्यायो आतिथ्येष्टेर्धर्मविकमङ्गमाह । यदीष्टिं दर्शपूर्णमासात्पृथगेव कुर्वीत । see ४.५.१०. । प्रधानदेवता उपांशु यजेत तदुपांशुत्वं काम्येष्टिरूपं खलु । मूर्धन्वत्यौ (see पा° ४.४.१२०.) अग्निर्मूर्धा भुवो यज्ञस्येति [वाजस° स° १३.१४.१५.] मूर्धन्शब्दवत्यौ प्रधानस्य याज्ये । स्विष्टकृद्याज्यापुरोऽनुवाक्ये विराजौ विराट्छन्दस्के प्रेद्धोऽअग्नऽइमो(?)ऽअग्नऽइत्येते [वाज° स° १७.७६. and ?] भवतः ॥१२॥ २॥६॥

अग्नीषोमीयमेकादशकपालं विधातुमाख्यायिकामाह । see शतप° ५.५.४.२-८. ॥१॥ यदेकस्मिन्नङ्गे घृतविन्दवः परिदृश्यन्ते तत् एकत्र अङ्गे मधोर्विन्दव इव वर्णाः ... आश्चुतिताः आचारं (?) प्राप्ताः । उठरमावयत् अवतिरवगत्यर्थः (! अयति° A. B. C.) अगमयत् ॥५॥ असाविन्द्रो मे पुत्रं कुवित् बहुप्रकारमवधीदिति क्रुद्धो भूत्वा अपेन्द्रमेव इन्द्रेण विरहितमेव सोममाजह्रे स च सोमो यथापेन्द्रः प्रसुतः प्रदानेऽप्यपेन्द्र एवाभूत् ॥६॥ शुक्रः शोधितः सोमः ॥७॥ अथ सौ त्वष्टा मम सोममतिप्रसुतमनाकारित एवापिबदिति क्रुद्धः सन् स्वयमेव नष्टस्य यज्ञस्य यज्ञवेशसं यज्ञहिंसापरिहारं कृतवान् प्रवर्तयामास प्रवर्तयामास स च हुतः सोमः अग्निप्राप्तिसमकालऽएव पुरुषरूपेण संबभूव । केचित्... सामर्थ्यात् अग्निमप्राप्यैव मध्ये संबभूवेत्याहुः । स च संभवन्नग्नीषोमावेव भि व्याप्नुवन्भक्षयन् संबभूव न केवलं जगत्कारणभूतौ तावेव किं तु लोके या विद्या यद्यशो यदन्नीयमन्नं या च श्रीः तानि सर्वाण्यभिलक्ष्य भक्षयन् संबभूव ॥८॥ सर्वं व्याप्य वर्ततऽइति वृत्रः । सर्वसाम्यादहिः । रक्षणाय परिजगृहतुः ॥९॥ स त्वष्टा ग्रहप्रचारसमये (ग्रहप्रचार° C.) इन्द्रशत्रुरिति पूर्वपदोदात्ततयेन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा मन्त्रं प्रयुक्तवानतस्तमिन्द्रो जघान । यद्यसौ अन्तोदात्ततया तत्पुरुषसमासेन वा इन्द्रस्य शत्रुरिति व्यस्तनिर्देशेन वा अयावदा निश्चितमेव स इन्द्रं हन्यात् ॥१०॥ इषुमात्रं धनुषः सकाशाद्बलात्प्रक्षिप्तोषुर्यावद्दूरं गच्छति तावन्मात्रं प्रतिक्षणं तिर्यक् उभयपार्श्वतः अवर्धत । प्राक्पश्चात्समुद्रावपि शरीरवृद्ध्या आवाधकार । यावद्यावत्प्रवृद्धं आस तावत्तावत्प्रवृद्धाभ्भक्षक एवाभूत् ॥११॥ इन्द्रस्तु वृत्रशरीरवृद्धिक्रमानुसारेणैवेषदीषत्प्रणुन्नो दूरऽएव चरन्नोदनमसहमानो वृत्रमनुगताविग्नीषोमौ ... उपमन्त्रयामास ॥१३॥ ततो वृत्रवदननिर्गमनादावयोः किं फलं लब्धं स्यात् ॥१४॥ तावनु सर्वेऽपि वृत्रमुखाद्गता देवाः निरीयुः । यदिदमिदानीं परिदृश्यमानप्रकारमिन्द्रस्य सर्वाधिपत्यमस्ति तदग्नीषोमीयैकादशकपालयागेनैवाभवत् । एष एव बहूर्ह वेत्युपक्रम्य पौर्णमा-

स्यामसाधारण्येनानुष्ठेयस्य हविषो बन्धुः बन्धकोऽर्थनियामकः एतदेव ब्राह्मणमित्यर्थः ॥१५॥ दृतिरिव चर्मनिर्मितपात्रमिव स यथा संल्लीनः संकुचितकुक्षितनुः पतति एवं संल्लीनो (संप्लीनो B.) भूमावशयिष्ट । तथा निर्धूतसक्तुका (निर्धू° A.) भस्त्रा चर्ममयी संलीना (संल्लीना B.) तद्वत्संलीनः (संल्लीनः B.) शेते कुक्षिगतानां सक्तुस्थानीयानां देवानामुदकस्थानीयानामसृगादीनां च स्रावात् ॥१६॥ इदानीमेतत्सर्वं त्वं भवसि पूर्वं यदहमभवम् अतो व्याकुर्वेव शरीरं द्विविधमा सर्वतो भग्नं कुरु विदारय । अमुया इदानीमनुभूयमानप्रकारया स्थित्या मा भूवं सर्वदा न भवामीति । यद्वस्तु सौम्यं श्रेष्ठं स्रुतमासीत्तं चन्द्रमसं चकार प्रतिनिर्देशापेक्षया पुंलिङ्गता यदसुर्यमसुरेभ्यो हितमुच्छिष्टमासीत्तेनेमाः सर्वा अपि प्रजाः उदरप्रदेशेन अयुध्यत् (B. अयुध्ययत् A. C.) तद्रूपेणोपस्थापयामास । तस्माद्यः कश्चिद्यदि बह्वन्नं भक्षयेत्तर्हि तदा सर्वेऽपि जना इदानीं वृत्र एतर्हि अन्नाद आसीदित्याहुः । असौ चन्द्रः पूर्वपक्षे चन्द्रस्याप्यायनप्रकार उपरिष्टाद्वक्ष्यते see ६.४.१५. ॥१७॥ प्रयाजानन्तरं वक्तव्यौ तावाज्यभागौ अग्नीषोमीयपुरोडाशप्रसङ्गेन विधातुमाह । यतो वृत्रदेहान्निर्गतयोर्युवयोरिदं पुरोडाशद्रव्यं प्रातिस्विकमभूदतो युवामेव प्रभूतभागभाजौ भवथः युवयोर्मध्येऽस्मानपि अन्वाभजतम् ॥१८॥ निर्वपान् निर्वपेयुः यष्टारः तत्र च निरूप्तप्रधानदेवताभ्यः पूर्वमाज्यभागं यजेयुः । निर्वापाभावादेव पशुसोमयोरप्राप्तस्याज्यभागस्य पुनर्निषेधेनैष्टिकमाज्यभागविधानं स्तूयते यथा दशमाध्यायस्याष्टमे पादे द्वितीयाधिकरणे (but where? in the Mîmânsâsûtra?) न सौम्येऽध्वरऽइत्यत्र किं निषिध्यते उत पर्युदस्यते अथार्थवाद इति त्रेधा विकल्प्यार्थवाद इति सिद्धान्तितम् ॥१९॥ [illegible] खलु कारणेन सर्वेऽपि देवास्त्रेधा त्रिप्रकारेणाग्निसोमेन्द्रात्मका एकदेवत्या एकैकदेवतार्था अभवन् । अग्न्यादीनामेकदेवत्वलक्षण[illegible] स्वयमपि स्वकीयानां मध्ये एक एव श्रेष्ठो भवति ॥२२॥ आज्यभागोपांशुयाजपुरोडाशानां यदग्नीषोमदेवताकत्वमस्ति तत्प्रशंसति । किमेतावद्बहु क्रियते । एतावदिति संग्रहेणोक्तस्य विवरणमग्नीषोमयोरिति । एतावती सूर्यचन्द्रादिभेदेन त्रैधा विभूतिः विभावो (विभवो A.) बहुभावः विभूतिरित्यस्य व्याख्यानं प्रजातिरिति प्रजातिः प्रकर्षेणोत्पत्तिः ॥२३॥ सूर्यादियुगलत्रयस्याग्नीषोमात्मकतां विभज्य योजयति । सूर्योऽह्नश्चन्द्रराज्योश्चाग्निसोमात्मकतायामुष्णत्वशीतत्वे हेतू । आपूर्यमाणपक्षस्याग्नेयत्वमग्नेर्भिन्नस्य सवितुः किरणानामनुक्रमेण चन्द्रमस्यनुप्रवेशात् अपक्षीयमाणपक्षस्य सौम्यत्वं च क्रमेण सूर्यांशापनये सति स्वकीयकारणोपवापात् (°यकिर°?) ॥२४॥ अतस्त्रिविधविभूत्याप्तये त्रयाणामपि यागानामग्नीषोमीयत्वं युक्तम् ॥२५॥ आसुरिराचार्यस्त्वेवं मन्यते । उभयेषु (?) त्रिषु यागेषु आज्यभागाभ्यामेव सूर्याहोऽर्धमासयुगलत्रयात्मकासु (°यात्सकलासु the mspts.) त्रिविधासु विभूतिषु द्वे वस्तुनी यतमे वाहोरात्ररूपे वा शुक्लकृष्णपक्षरूपे वा द्वे आप्नोति । वीप्सया त्रिविधान्यपि युगलानि परिगृह्यन्ते । त्रिष्वपि यागेषु एकैकेनैव त्रिविधामप्यग्नीषोमयोर्विभूतिमाप्तवान्भवति ॥२६॥ अथाज्यभागादियागत्रयद्रव्ययोराज्यपुरोडाशयोरेकदेवतात्वप्रयुक्तं जामितादोषमाक्षिप्य द्रव्यमन्त्रधर्माणां भेदेन त्रेधा तत्परिहरति । आज्यपुरोडाशस्य प्रदानमिति शेषः । अथवा आज्यस्य पुरोडाशस्य वा पश्चावप्यग्नीषोमयोरेव दीयतऽइत्यर्थः । कथमेतावता [illegible] । तत्राह यदिति । एकरूपं यद्वस्तुद्वयं तद्विलक्षणेन वस्त्वन्तरेणाव्यव-

तमेवाङ्गकलापैर्विस्तारितवन्तः ॥ यथा पराभावी सन्कन्यचिद्यादिदः [illegible] नात् अयमेव अवरः पश्चाद्भावी भवति तथानुक्रमेणोच्यते । उपनीतस्यैव [illegible] राद् ब्रह्मचारिणऽइत्युक्तम् ॥४॥ पुरोडाशं नामनिर्वचनद्वारेण स्तौति । यतः स [illegible] मनुष्यैर्दृष्टस्ततः यागसमये पुरः पूर्वस्मिन्काले यज्ञमुखे अदाशयत् [illegible] पुरोडाशः एभ्यो मनुष्येभ्योऽर्थं यज्ञं प्रारोचयत् ॥ स उभयत्र दर्शे पौर्णमास्यां च नित्यं कर्त- व्यो भवति ॥५॥ उभयसाधारण्यमेव स्थापयति । यज्ञसाधनत्वात्पुरोडाशो यज्ञ एव स उभ- यकालोऽपि तयोः पूर्वकाले क्रियते ॥६॥ अस्या आग्नेयेष्टेर्दर्शतिफलार्थं पृथक्प्रयोगमाख्यातमाह । एनमध्वर्युः (र्युम् ?) एतयैव आग्नेयेष्ट्यैव । तमग्निं बहुधा प्रशंसति यस्य कस्याऽइति ॥७॥ अज्ञातमामतिशयेन प्रत्यक्षफलदम् ॥९॥ अथ पृथक्प्रयोगाख्यायां [illegible] माह । यदीष्टिं दर्शपूर्णमासात्पृथगेव कुर्वीत । see ६.५.१०. । प्रधानदेवता उपांशु यजेत तदुपांशुत्वं काम्येष्टिरूपं खलु । मूर्धन्वत्यौ (see पा° ८.४.१२०.) अग्निर्मूर्धा भुवो [illegible] [वाजस° स° १३.१४.१५.] मूर्धन्शब्दवत्यौ प्रधानस्य याज्ये । [illegible] राजौ विराट्छन्दस्के प्रेद्धोऽअग्नऽइमो(?)ऽअग्नऽइत्येते [वाज° स° १०.०६. and ?] [illegible] ॥१२॥ २॥६॥

अग्नीषोमीयमेकादशकपालं विधातुमाख्यायिकामाह । see शतप° ५.५.४.१-८. ॥१॥ [illegible] देकस्मिन्नङ्गे घृतबिन्दवः परिदृश्यन्ते तत् एकत्र अङ्गे मध्येऽबिन्दव इव [illegible] आश्वुतिताः आत्तरं (?) प्राप्ताः । जठरमावयत् अवतिरवगत्यर्थः (! अयति° A. B. C.) [illegible] यत् ॥५॥ असाविन्द्रो मे पुत्रं कुवित् बहुप्रकारमवधीदिति क्रुद्धो भूत्वा [illegible] इन्द्रेण विरहितमेव सोममाजह्रे स च सोमो यथापेन्द्रः प्रसुतः प्रदानेऽप्यपेन्द्र एवाभूत ॥६॥ [illegible] शोधितः सोमः ॥७॥ अथ सं त्वष्टा मम सोममतिप्रसुतमनाकारित एवापिबदिति क्रुद्धः सन् स्वयमेव नष्टस्य यज्ञस्य यज्ञवेशसं यज्ञहिंसापरिहारं कृतवान् प्रवर्तयामास [illegible] स च हुतः सोमः अग्निप्राप्तिसमकालऽएव पुरुषरूपेण संबभूव । केचित्प्रवर्तनसामर्थ्यात् [illegible] स्पृशन्नेव मध्ये संबभूवेत्याहुः । स च संभवन् [illegible] व्याप्नुवन्नभक्षयन् संबभूव न केवलं जगत्कारणभूतौ तावेव किं तु लोके या विद्या यद्यशो यदन्नीयमन्नं या च श्रीः तानि सर्वाण्यभिलक्ष्य भक्षयन् संबभूव ॥८॥ सर्वं व्याप्य वर्ततऽइति वृत्रः । [illegible] । रक्षणाय परिजगृहतुः ॥९॥ स त्वष्टा ग्रहप्रचारसमये (ग्रहप्रचार° C.) इन्द्रशत्रुरिति पूर्वपदो- दात्ततयेन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा मन्त्रं प्रयुक्तवानतस्तमिन्द्रो जघान । यद्यसौ अन्तोदात्ततया तत्पुरुषसमासेन वा इन्द्रस्य शत्रुरिति व्यस्तनिर्देशेन वा ब्रूयात्तदा निश्चित- मेव स इन्द्रं हन्यात् ॥१०॥ इषुमात्रं धनुषः सकाशाद्बलात्प्रमुक्तोऽपुर्यावद्दूरं गच्छति ता- वन्मात्रं प्रतिक्षणं तिर्यक् उभयपार्श्वतः अवर्धत । प्राक्पश्चात्समुद्रावपि शरीरवृद्ध्या प्रत्याप- चकार । यावद्यावत्प्रवृद्ध आस तावत्तावत्प्रवृद्धान्नभक्षक एवाभूत् ॥११॥ इन्द्रस्तु वृत्रशरी- रवृद्धिक्रमानुसारेणैवेषदोषत्प्रणुन्नो दूरऽएव चरन्नोदनमसहमानो वृत्रमनुगतावग्नीषोमावित्य- मुपमन्त्रयामास ॥१३॥ ततो वृत्रवदननिर्गमनाद्वावयोः किं फलं लब्धं स्यात् ॥१४॥ तावनु सर्वेऽपि वृत्रमुखान्निर्गता देवाः निरीयुः । यदिदमिदानीं परिदृश्यमानप्रकारमिन्द्रस्य सर्वाधि- पत्यमस्ति तदग्नीषोमीयैकादशकपालयागेनेष्टाभवत् । एष एव बहुरं वेत्युपक्रम्य पौर्णमा-

स्यामसाधारण्येनानुष्ठेयस्य हविषो बन्धुः बन्धकोऽर्थनियामकः एतदेव ब्राह्मणमित्यर्थः ॥१५॥ दृतिस्त्विव चर्मनिर्मितपात्रमिव स यथा संम्लीनः संकुचितकुक्षितनुः पतति एवं संम्लीनो (संम्रीनो B.) भूमावशयिष्ट । तथा निर्धूतसक्तुका (निर्ध्° A.) भस्त्रा चर्ममयी संलीना (संम्लीना B.) तद्वत्संलीनः (संम्लीनः B.) शेते कुक्षिगतानां सक्तुस्थानीयानां देवानामुदकस्थानीयानामसृगादीनां च स्रावात् ॥१६॥ इदानीमेतत्सर्वं त्वं भवसि पूर्वं यदहमभवम् अतो व्याकुर्वेव शरीरं द्विविधमा सर्वतो भग्नं कुरु विदारय । अमुया इदानीमनुभूयमानप्रकारया स्थित्या मा भूवं सर्वदा न भवामीति । यद्वस्तु सौम्यं श्रेष्ठं सुतमासीत्तं चन्द्रमसं चकार प्रतिनिर्देशापेक्षया पुंलिङ्गता यदसुर्यमसुरेभ्यो हितमुच्छिष्टमासीत्तेनेमाः सर्वा अपि प्रजाः उदरप्रदेशेन अयुध्यत् (B. अयुध्ययत् A. C.) तद्रूपेणोपस्थापयामास । तस्माद्यः कश्चिद्यदि बह्वन्नं भक्षयेत्तर्हि तदा सर्वेऽपि जनौ इदानीं वृत्र एतर्हि अन्नाद आसीदित्याहुः । अमी चन्द्रः पूर्वपक्षे चन्द्रस्याप्यायनप्रकार उपरिष्टाद्वक्ष्यते see ६.४.१५. ॥१७॥ प्रयाजानन्तरं वक्तव्यौ तावाज्यभागौ अग्नीषोमीयपुरोडाशप्रसङ्गेन विधातुमाह । यतो वृत्रदेहान्निर्गतयोर्युवयोरिदं पुरोडाशद्रव्यं प्रातिस्विकमभूदतो युवामेव प्रभूतभागभाजौ भवथः युवयोर्मध्येऽस्मानपि अन्वाभजतम् ॥१८॥ निर्वपान् निर्वपेयुः यष्टारः तत्र च निरूप्तप्रधानदेवताभ्यः पूर्वमाज्यभागं यजेयुः । निर्वापाभावादेव पशुसोमयोरप्राप्तस्याज्यभागस्य पुनर्निषेधेनैष्टिकमाज्यभागविधानं स्तूयते यथा दशमाध्यायस्याष्टमे पादे द्वितीयाधिकरणे (but where? in the Mîmânsâsûtra?) न सौम्येऽध्वरऽइत्यत्र किं निषिध्यते उत पर्युदस्यते अथार्थवाद इति त्रेधा विकल्प्यार्थवाद इति सिद्धान्तितम् ॥१९॥ एवमेव खलु कारणेन सर्वेऽपि देवास्त्रेधा त्रिप्रकारेणाग्निसोमेन्द्रात्मका एकदेवत्या एकैकदेवतार्था अभवन् । अग्न्यादीनामेकदेवत्वलक्षणश्रेष्ठत्वपरिज्ञानेन स्वयमपि स्वकीयानां मध्ये एक एव श्रेष्ठो भवति ॥२२॥ आज्यभागोपांशुयाजपुरोडाशानां यदग्नीषोमदेवताकत्वमस्ति तत्प्रशंसति । किमेतावद्बहु क्रियते । एतावदिति संग्रहेणोक्तस्य विवरणामग्नीषोमयोरिति । एतावती सूर्यचन्द्रादिभेदेन त्रैधा विभूतिः विभावो (विभवो A.) बहुभावः विभूतिरित्यस्य व्याख्यानं प्रजातिरिति प्रजातिः प्रकर्षेणोत्पत्तिः ॥२३॥ सूर्यादियुगलत्रयस्याग्नीषोमात्मकतां विभज्य योजयति । सूर्योऽग्निश्चन्द्रोऽरात्र्योश्चाग्निसोमात्मकतायामुष्णत्वशीतत्वे हेतू । आपूर्यमाणपक्षस्याग्नेयत्वमग्नेर्भिन्नस्य सवितुः किरणानामनुक्रमेण चन्द्रमस्यनुप्रवेशात् अपक्षीयमाणपक्षस्य सौम्यत्वं च क्रमेण सूर्यांशापनये सति स्वकीयकारणोपवापात् (°यकिर°?) ॥२४॥ अतस्त्रिविधविभूत्याप्तये त्रयाणामपि यागानामग्नीषोमीयत्वं युक्तम् ॥२५॥ आसुरिराचार्यस्त्वेवं मन्यते । उभयेषु (?) त्रिषु यागेषु आज्यभागाभ्यामेव सूर्याहोऽर्धमासयुगलत्रयात्मकासु (°यात्सकलासु the mspts.) त्रिविधासु विभूतिषु द्वे वस्तुनी यतमे वाहोरात्ररूपे वा शुक्लकृष्णपक्षरूपे वा द्वे आप्नोति । वीप्सया त्रिविधान्यपि युगलानि परिगृह्यन्ते । त्रिष्वपि यागेषु एकैकेनैव त्रिविधामप्यग्नीषोमयोर्विभूतिमाप्तवान्भवति ॥२६॥ अथाज्यभागादियागत्रयद्रव्ययोराज्यपुरोडाशयोरेकदेवतात्वप्रयुक्तं जामितादोषमाक्षिप्य द्रव्यमन्त्रधर्माणां भेदेन त्रेधा तत्परिहरति । आज्यपुरोडाशस्य प्रदानमिति शेषः । अथवा आज्यस्य पुरोडाशस्य वा पश्चावप्यग्नीषोमयोरेव दीयतऽइत्यर्थः । कथमेतावता जामितेति । तत्राह यदिति । एकरूपं यद्वस्तुद्वयं तद्विलक्षणेन वस्त्वन्तरेणाव्यव-

हितं तेनाव्यवधानेन तद्वस्तु जामि भवति अत्र तु व्यवधानम् । अतोऽनेन अनेन [illegible] न च खल्वजामि । केनेति । उच्यते । आज्यस्य द्रव्यस्येतरम् [illegible] था पुरोडाशस्येतरं धानाख्यम् अन्योन्यावेतयोरुभयोरितरत्वम् अन्यदिवेति [illegible] मपि कर्मद्वयमन्यदिवान्यदिव भवति अतोऽन्ययोर्न जामितास्ति ॥ [illegible] धानद्वययोरजामित्वम् प्रधानद्वययोर्जुषाण इत्यस्यासंभवात् [illegible] थाप्याज्यभागस्य ऋचमग्निर्वृत्राणि [वाज° स° ३३.१.] त्वं से [illegible] स° ११.५२.] कृत्वा जुषाणोऽग्निराज्यस्य वेतु जुषाणः सोम इति जुषाणेन यजति । प्रधाना-भ्यां तु क्रमेण अग्नीषोमा योऽअद्य वाम् अग्नीषोमा सवेदसेत्यनूच्य [illegible] आ जभार युवमेतानीत्यृग्भ्यां [ऋक्स° १.१४.१.२.१.६.५.] यजति ॥ [illegible] उच्चैश्च भेदादजामित्वम् । उपांशोः प्रजापतित्वप्रवादस्य प्रजापतिरुचितामनु [illegible] योऽअद्य वामित्येतामनुवाक्यामनुब्रूते ॥२७॥ उपत्सर्य उप [illegible] ॥२८॥ आज्यभागो-पांशुयाजयोर्जामितापरिहाराय याज्यापुरोऽनुवाक्ययोर्विलक्षणयमुक्त्वा प्रशंसति । उदाहृतौ जुषा-[illegible] मन्त्रौ तत्रादनुष्ठानमनु तत्सामर्थ्यात् । अन्यत्र [illegible] ऽस्थि अस्थिवद्दृढं करोति तस्मादन्यतरत [illegible] युक्तम् ॥२९॥ द्विविधप्रजात्यतिरेकेण प्र-जानन [illegible] याज्यानुवाक्यायुगलयोरुक्तं [illegible] ॥३०॥ The explanation of ३१. ३२. is wanting in ABC. । पक्षान्तरमाह । न पूर्वौ पौर्णमासीमुपवसेत् [illegible] । तस्मिन्पक्षे गुणमाह । यथा कश्चित्परराष्ट्रं प्राप्य प्रतिमुखं पलायमानं हननो [illegible] म-न्यवचूर्णितं करोति ॥३३॥ इत्थं पक्षान्तरं से [illegible] भिधाय प्रथमं पक्षं निजाभयितु पुनरु-पादत्ते । यथा कश्चिन्मन्दोऽन्येन पूर्वमेव पातितं पुनः स्वयं पिष्यात् । [illegible] कार-णान्तरमाह सोऽन्यस्येति । उत्तरोपवासी अन्येन यत्कृतं कार्यं तस्यानुकारी अन्येनाध्यवसि-तस्य पुनरध्यवसायी भवति । संप्रत्युपवसन्तं दृष्ट्वा तदनुकर्तुं स्वयमपि [illegible] त्येवं प्रतिभवनात् ॥३४॥ संप्रतिपक्षं सिद्धान्तयितुमाख्यायिकामाह । संधयः [illegible] । ऋतुमुखानि वसन्तादीनि ॥३५॥ संहातुं संगतो भवितुम् । सोमव्यतिरिक्तपुरोडाशादिमाध्या हविर्यज्ञाः ॥३६॥ स एव प्रजापतिः कालात्मकः दृढपर्वा संवत्सरमध्ये यदन्नं [illegible] पर्वं भवति तत्सर्वमभिलक्ष्य भोक्तुमुत्थितवान् कालावयवानां विच्छेदाभावा [illegible] मन्नं भोगायोग्यमासीत् (भोगयो° the mspts.) । इदानीमुपवासयोग्यं पर्व विधत्ते संप्रति देव पर्वविस्रंसनसमकालएव प्रजापतेः पर्व संप्रत्युपवसम् चिकित्सितवान्भवति । प्रजा-पतिवत्स्वयमपि सर्वान्नादो भवति ॥३७॥ आज्यभागस्थाननियमम् [illegible] ॥३८॥ अथ कोपाचित्य-त्वमाह । अविज्ञान्यमिव विज्ञानेन हीनमिव वैषम्याभावेन साक्षात्स्थानविज्ञानस्याशक्य-त्वात् ॥ तस्य कस्य पुरस्तादित्यत आह [illegible] । उक्तहविःपुरोभागे विशेषमाह यत्रोऽइ-ति ॥३९॥ आज्यभागयाज्यानुवाक्ययोर्या [illegible] वाणविलक्षणयं पूर्वमुक्तं [क° २७.] तदपि तयोश्च-क्षुष्प्रयुक्तम् । अस्थन्नस्थनि मुखे अस्थिमये सति अक्षयजुषोः [अक्षजुषयोः A. अक्षजुषाणयोः?] काठिन्यमृदुत्वसाम्याद [illegible] । ॥४०॥ आग्नेयसाम्ययोः [illegible] गयोर्यच्च [illegible] लौकिकच-क्षुसाम्येन समर्थयति । अन्वायते अनुप्राप्ते । आजरसं वयोहानिपर्यन्तं चक्षुर्मोघं न भवति अमुष्मिन् स्वर्गलोकेऽपि सचक्षुरेव संभवत्याज्यभागयोश्चक्षुर्वेदिता ॥४१॥ १ ॥६॥

अथामावास्यानि हवींषि विधातुमाख्यायिकामाह । अबलीयानहमिति मत्वा नास्तृषि स्तृङ् हिंसायां लुङ् अहं न हिंसितवानस्मीति भीतः सन्पुनर्बाधशङ्कया निलीनोऽभूत् । अत्यन्तं विप्रकृष्टदेशं गतवान् परावदिति दूरनाम [निघ° ३.२६.] तस्योपसर्गाच्छन्दसि धात्वर्थ इति [पा° ५.१.११८.] मतुप् ॥१॥ लब्धेनेन्द्रेण सह एतां रात्रिं रात्रिशब्दो दिनस्योपलक्षणः कृष्णामप्यमावास्यादिवसं सहोषितवान् । स इन्द्रो देवानां धनरूपो वासयिता वा यत एवं यतश्च देवानां मध्ये वीरः अतस्तदागमनायाग्नेर्विलम्बो युक्तः ॥२॥ अस्माकं य इन्द्रः प्रवासमकरोत्स नो वसुस्थामा अग्निना सह वसतीत्युक्त्वा ताभ्यां सन्निभावेन सह वसन्नामिन्द्राग्निभ्यामेतद्द्वादशकपालं हविरिति शेषः प्रयच्छाम इत्यर्थः । मानुषं मनुष्येभ्यः कर्तव्यं सत्करणाम् ॥३॥ व्यस्मये विस्मितोऽभवं विगतप्रबले स्मयदर्शनात् अतः कृशोऽस्मि तस्मादिदं कठिनं पुरोडाशं मां न प्रीणयति अतः मम प्रीतिकरं हविः संपादयत ॥४॥ स एवोभयतश्चन्द्रदर्शनरहितायां संपूर्णामावास्यायां भूलोकमागत्याप्स्वोषधीषु च प्रविशति स प्रविष्ट एव चन्द्रमा देवधनं यत एषां व्रीहियवसोमादिरूपेणान्नं भवति । इह भूलोके ओषधिषु ॥५॥ तमनुप्रविष्टं सोमं गोभिरनुक्रमेण विविधं स्थापयित्वा धारयित्वैव समभरन् । तत्प्रकारमाह यदोपधीरभक्षयन्गावस्तेन ओषधिभ्यः सोममभरन् तथानुप्रविष्टसोमा अपः पिबन्ति गावस्तेनाद्भ्यः ॥६॥ न श्रयते न तिष्ठति न सात्म्यं भजते । शृतेन पक्वक्षीरेणैव तमश्रयन् ॥७॥ यद्यपि तैत्तिरीयके प्रथमं शृतं पश्चाद्दधीति क्रमस्तथाप्यत्र सायंप्रातर्दोहाभ्यां दधिपयसोः संभक्तादनेन क्रमेणाभिधानमिति द्रष्टव्यं तत्प्रशंसति तत्प्रथमतश्चन्द्रात्मकमेतत्तद्रूपेण परिणतं वस्तुतः समानमेकरूपमेव । the explanation of the rest of the kandikâ is wanting in ABC. ॥८॥ अंशुः सोमः यथाप्याययेदेवं सांनाय्यमपि तथा पीतवतां पाप्मानं हरिमाणं शरीरहरितत्वमपहन्ति ॥९॥ विहितस्य सांनाय्यस्याधिकारितां निश्चेतुं केषांचिन्मतमाह । अनवरुद्धा न संपन्ना ॥१०॥ स्वाभिमतं पक्षमाह । नन्वत्र विषये अन्तरेण मध्ये एव श्रुतवन्तः स्म इन्द्रेणोक्तं वचनम् तत्प्रमाणत्वेन पुनः श्रावयन्निगमयति ॥११॥ अमावास्योपवासस्य कालं विधित्सुः पुरा कल्पमाह । पौर्णमास्यां क्रियमाणं यज्ञविरस्ति तद्वृत्रहननसंबन्धि वृत्रहननाय तदन्तर्गतनिगमनावसरे एकादशकपालोपांशुयाजहविषोः प्रदानात् आमावास्यं तु हविर्वृत्रहत्यमेव वृत्रं हतवत इन्द्रस्याप्यायनार्थं कृतत्वात् । वृत्रस्य चन्द्रत्वं प्रागुक्तम् see ६.३.१७. । एनं वृत्रमेतेन हविषा । अतः सर्वपापक्षयाय चन्द्रदर्शनरहितायां शुद्धामावास्यायामेवोपवसेदित्यर्थः ॥१३॥ उपवासतिथिविषये केषांचित्पक्षमाह । ते चन्द्रदर्शनयुक्तायां चतुर्दशीयुक्तामावास्यायामेवोपवसन्ति परस्मिन्नहनि अव्यवहिते एव भविष्यति काले उदयं न प्राप्नोतीति अदो अविप्रकृष्टं प्रत्यक्षं (विप्रकृष्टमप्रत्यक्षं?) चन्द्रारथं (?थ A.?) खलु देवानामविक्षीणमन्नं भवति अथ चन्द्रक्षयसमनन्तरमेवैभ्यो देवेभ्यः वयमितो लोकात्प्रदास्याम इति । दृष्टोपवासपक्षदोषाभिधानपुरःसरमदर्शनोपवासमेव समर्थयते असोमयाजी त्वित्यादिना तुशब्दः पक्षं व्यावर्तयति असोमयाजी क्षीरयाजी भवति समेव नयेदिति निगमितत्वात् अदो एव इतं क्षीरमेव ले[illegible] सत् सोमो राजा भवति ॥१४॥ अस्तु । ततः किमित्यत आह । यथा पुरा आमावास्यातः पूर्वदिवसे गावः केवलाश्चन्द्रानुप्रवेशरहिता ओषधीरघश्चाहारं कृत्वा केवलं चन्द्ररहितमेव पयो दुह्रे दुहते एवं तत्क्षीरयजनं चन्द्रानुप्रवेशरहितं

केवलं भवति अतो दृष्टोपवासे चन्द्रस्यौषधीष्वननुप्रवेशेन कदाचिदप्यस्मिन्नमावास्यादिने क्षीरस्य चन्द्रात्मकत्वाभावात्स पक्षो न युक्त इत्यर्थः । अस्तु । को दोष इत्याशङ्क्यावश्यं चन्द्रानुप्रवेशवता क्षीरेणभवितव्यमित्याह एष वाऽइति एतत्सांनाय्यब्राह्मणमद्भ्यास्येयम् । तदमावास्यायामप्स्वोषधीष्वनुप्रविष्टं ताभ्य क्षीररूपेण संभृत्य आहुतिभ्यः सकाशात्पुनरुत्पादयति क्षीरयाजी । स एषोऽमुं लोकमागतः पुनराहुतिद्वारेणान्तरिक्षेऽउत्पन्नः प्रतीच्यां दिशि दृश्यते ॥१५॥ तदेतच्चन्द्राख्यमन्नं प्रदिभ्रमति ॥१६॥ चन्द्रोपक्षयऽएवाप्रच्यावः च्युतस्य च भूलोकप्रवेश उक्तः । निष्ठ्या नीचाः उक्तार्थश्चाप्निकृष्टतराः ॥१७॥ तपस्यादित्य एवेन्द्रः परमैश्वर्ययोगात् चन्द्रस्य वृत्रत्वं प्रतिपादितम् पुरा अमावास्यातः पूर्वदिवसे प्रत्यग्दिङ्मुखोऽपि सन् अथैनं सूर्याख्यमिन्द्रं प्रत्यमुममावास्यादिवसं प्रति समीप एव आगच्छति अथ इन्द्रस्य व्यस्तं मुखं प्राप्नोति ॥१८॥ तं ग्रसन् सूर्य उदेति ॥१९॥ पूर्वस्यां दिशि भक्षितः पश्चादागत्य निर्गतो रेखामात्रो दृश्यते स च पुनः कलाक्रमेण तस्यैव सूर्यस्यान्नत्वाय प्रवर्धते ॥२०॥ विजिगीषमाणः शत्रूञ्जित्वा ॥२१॥ ४ ॥६॥

प्रधानयागः सकलः साख्यानः संप्रकीर्तितः । प्राधान्येनाथ तद्धर्मा निरूप्यन्तेऽत्र सप्तमे ॥

तत्रादौ संनिहितत्वात्सांनाय्यधर्माः प्रथममुच्यन्ते । तत्र वत्सापाकरणार्थशाखाच्छेदं विधास्यन् तदुचितं शाखायाः पर्णत्वं सार्थवादमाह । यत्र यस्मिन्देशे गायत्री पक्षिरूपेण सोममानेतुं (तच्चा)नयनायागच्छन्त्याहरन्त्या (°च्छन्दाह°?) अपाधस्ता (?°वस्ता AC.) अधस्तात्प्रदेशेऽस्यागत्य पर्णं प्रचिच्छेद वाशब्दश्चार्थे गायत्र्याः सोमस्य च । पतितात्पर्णादुत्पन्नः पलाशः तस्मात्सोमांशस्यैव संपादितप्रायत्वादस्यैव शाखाच्छेदनम् ॥१॥ समवासृतानि संयोजयन्ति । आगतेन्त्री अर्धकत्वसमर्थनाय सर्वङ्गसद्धर्थकतामाह ॥ शाखान्तरे पठितं मन्त्रमनूद्य निराचष्टे see तैत्तिरीयसं° १.१.१. । यदेनं भागं ब्रूयाद्यजमानस्य द्वितीयः शत्रुरुपागच्छति अतो न ब्रूयात् ॥३॥ अपाकृत्य पृथक्कृत्य । यज्ञं यज्ञसाधनं क्षीरं संभरेयुः ॥४॥ अदः आयये हविर्ग्रहणादौ see १.२. १७. ॥६॥ तद्ब्रह्मणाव एतन्मन्त्रपाठेन शाखायै पशूनां परिदानम् तदधीनत्वेन रक्षणार्थम् ॥८॥ दोहनार्थं तस्यां पवित्रं कुशद्वयात्मकं त्रिवृद्वा बध्नीयात् ॥९॥ अमावास्यायां रात्रौ संनयतः क्षीरस्यान्यार्थत्वेन नियोगात् अग्निहोत्रस्य द्रव्यान्तरं विधत्ते । इन्द्रार्थस्य दुग्धस्याग्न्यर्थत्वस्यायुक्तत्वात् ॥ दोहकालोपलक्षणार्थं शुष्कति समकालं तदोमे परिसमाप्तऽएव उखा सांनाय्यस्थाली अध्वर्युणा अपणप्रदेशे उपक्लृप्ता भवति तस्याः समानयनानन्तरं उपसृष्टा वत्सेन संगतां प्रब्रूतादिति दोग्धारं प्रत्यध्वर्युराह यदा उपसृष्टा तदा उपसृष्टेति दोग्धा ब्रूयात् स च शूद्रव्यतिरिक्तो भवेत् ॥१०॥ यज्ञे यथा घर्मं प्रवर्ग्यं प्रवृञ्ज्यात् एवं स्थाल्यधिश्रयणेन प्रवृणक्ति प्रवर्ग्यं कृतवान्भवति अतो यज्ञसंपादनम् । ह्वला नाशः ॥११॥ प्रागग्रं स्थाल्यां निदध्यात् । पवते गच्छति ॥१२॥ सांनाय्यस्य सोमात्मकत्वात्तत्पवनसाधनदशापवित्रवदस्याप्युदगग्रत्वं युक्तम् ॥१३॥ वाचा मन्त्रेण साध्यत्वाद्वाग्यज्ञः ॥१५॥ पयस आसेचनसमयेऽध्वर्युर्जपति ॥१६॥ अतः परं वाङ्नियमं विसृजेदथ काममिति ॥१७॥ दोहनपात्रक्षालनोदकस्य पुनः क्षीरे समर्पणमाह । उदस्तोकमुदकबिन्दुधाराम् पल्यङ्ग्य परितो गमयित्वा दोहपात्रऽउदकमासिच्य प्रक्षाल्य । पयसोऽवशिष्टं यदहायि हृतमभूत् तदपि इह भवेत् । क्षीरस्य कार्त्स्न्याय । उदकस्यापि क्षीरोपादानतामाह । तोक्मीकरणं सान्नकत्वाय । आतञ्चनद्रव्यं सूत्रकार आह

[कात्य° ४. २. ३३.] प्राग्घुतशेषेणेति यवाग्वेत्यर्थः ॥१८॥ सोमस्य देवानामतिप्रियत्वात्कीर्तितेनैव [°नैतद्द्र° A.] द्रव्यं तेभ्यः स्वादु करोति ॥१९॥ नेत्वोरमुपरिभागे अवमृशेयुः ॥२० ॥२१॥ १ ॥७॥

अवदानस्वरूपं विवक्षुराख्यायिकामाह । ऋणत्वे जननमेव निमित्तम् ॥१॥ संग्रहेणोक्तं विवृणोति ॥२॥ अनुब्रुवीत अनुवचनं कुर्यात् अधीयेत । ऋषीणां संबन्धी वेदाख्यो निधिः ॥३॥ वासयेत गृहान्नादिप्रदानेनेदानीमवकाशं प्रयच्छेत् ॥५॥ अवदयते दयतिर्दानार्थः । अवप्रत्यर्पणं देवानां स्वभूतमृणं विभज्य दत्तवान्भवति । यत्किंच चरुपुरोडाशादिकमग्नौ जुह्वति तदवत्तं हविरवदानमिति प्रसिद्धं भवति ॥६॥ अनुवाक्यात्मकमिदं खलु प्रथमम् । एवं क्रमेण पुरोऽनुवाक्याद्यश्चतस्रो देवताः क्रमेण चवार्यवदानान्यनुप्राप्ताः हिशब्दश्चार्थे । कस्मै प्रयोजनाय पञ्चममवद्येत्तदभिमानिन्याः पञ्चम्या देवताया अभावात् ॥७॥ अथ पुनश्चतुरवत्तमेव स्थापयति एतदिति । एतदेव कुरुपञ्चालदेशे प्रसिद्धम् अतस्तत्र प्रज्ञातत्वादनुष्ठानसंप्रदायानुरोधेन चतुरवत्तमेव कर्तव्यम् ॥८॥ अवदानस्येयत्तां विधत्ते । इवशब्दोऽनर्थको वाक्यालंकारे । यावन्मात्रमेव अङ्गुष्ठपर्वमात्रमेव । आधिक्यदोषमाह ॥९॥ इदानीं चतुरवदानप्रकारं दर्शयति । पुरोडाशांशौ द्वौ तदध उपरि चोपस्तृताभिघारिताज्याभ्यां चतुरवत्तवम् पुरोडाशस्योभयत आज्यकरणं प्रशंसति द्वे वाऽइति । सर्वाप्याहुतिः सोमाज्यभेदेन द्विविधा तत्र सोमस्य स्वरूपेणाहुतित्वादाज्यापेक्षैव नास्ति अवशिष्टौ हविर्यज्ञपशुयज्ञावाज्याहुतिकौ भवितव्यौ ॥१०॥ अनुवाक्यायाज्ययोः क्रमेण देवताह्वानहविःप्रदानसाधनत्वं वक्ष्यते आह्वातव्यानां देवानां द्युलोकसंबन्धात्तयोः क्रमेण द्युभ्वात्मकता तयोः स्त्रीलिङ्गत्वाद्द्वन्द्वे वषट्कारस्य पुंलिङ्गत्वात्सह मिथुनतास्ति ॥११॥ पुरोऽनुवाक्यादीनां द्युत्वात्मकताभिधानस्य प्रयोजनमाह । तयोः समनन्तरं वषट्कुर्यात् । वौषडित्युच्चारणकाले वा समनन्तरं वा प्रदानमस्तु सर्वथा वषट्कारात्प्राक् न जुहुयात् ॥१२॥ प्रदानस्य वषट्कारानन्तरत्वं प्रकारान्तरेणोपपादयति तत्पात्रोद्धारपूर्वकप्रदानमिव भवति । उक्तवैपरीत्ये दोषमाह । भूमौ निदग्धं प्रास्तं दुष्टत्वेनोपयोगाभावाद्दग्धम् । अमुया अनेन वषट्कारात्पूर्वकालहोमेन दग्धं स्यात् ॥१३॥ पुरोऽनुवाक्यायाज्ये गायत्रीत्रिष्टुभौ कर्तव्ये इति विधातुमाह । असौ द्युलोकः । अनुवाक्याया गायत्रीत्वे द्यावापृथिव्यावुभेऽअपि योजितत्वान्भवति ॥१५॥ अमुष्या अधि द्युलोकस्योपरि । एने द्यावापृथिव्यौ । तस्मात्सायुज्यादिमे सहाभ्यवहरतः द्यावापृथिवीभ्यां स्वाहेति सह प्रदानात् अथवा वृष्ट्यन्नयोः परस्परसापेक्षत्वात्सह भोगः ॥१६॥ अनुवाक्याया उच्चारणधर्ममाह । अह्वयन्निव वर्णानालोडयन्निव शनैः अह्वतिर्गत्यर्थः ॥ कार्यभेदं चाह अनुवाक्यया यष्टव्यदेवानाह्वयति याज्यया हविःप्रदानसाधनम् ॥१७॥ पुरस्तात् मन्त्रस्य पुरोभागे लक्षणं यष्टव्यदेवनाम (°वानाम AC.) [य]स्यां सा पुरोऽनुवाक्या । अमुष्या अधस्तादाक्षमाणीव अधोभागे तेषां परिभ्रमणात् ॥१८॥ उक्तं पुरस्ताउपरिष्टाल्लक्षणमेव विशिनष्टि । यस्या अनुवाक्यायाः प्रथमात्पदादग्निः प्रत्नेन सोम गीर्भिरित्यादिलक्षणां यष्टव्यदेवतां ब्रूयात्सैव समृद्धानुवाक्या याज्या तु सा समृद्धा यस्या उत्तमात्पदाज्जिह्वा अग्ने चकृषऽइत्यादिकादभिहितायाः देवताया उपरि वषट्करोति ॥२०॥ याज्यानन्तरभाविनं वषट्कारं विभज्य विधाय प्रशंसति । वौगित्युच्चारणं कुर्यात् वौगित्येतदौकारस्थाने आकारे कृते वागिति भवति । तस्मादेवं वौषडिति

वषट्कुर्यात् ॥२१॥ इत्थं दर्शपूर्णमासोभयमाधारणमत्रदानादिकं अपहृत्यागतं धर्ममभिधाय न (!) तत्प्रसङ्गाद्यवादिशब्दाभिधानद्वारेण दर्शपूर्णमासयागं प्रशंसति । दार्श ... ॥२२॥ संवृञ्जीमहि अपहरेमहि । समवृञ्जत स्वाधीनं कृतवन्तः ॥२३॥ ... यवेति नाम । तेनापूर्यमाणपक्षेण सममृदयन्त ॥२४॥ ... हेरात्रमाससंवत्सराणामपि नाम दर्शयति । यवशब्दाभिधेयान् ... सो यव्यः । सुत्तु एकः स्वेकः सर्वस्यापि कालस्य ... मकारोप[यु]ञ्जनेन सुमेक इति परोक्षनाम संपन्नम् । ... हरति यवा चेति यवा अयवा च हि यवनीवायवत्येव (!) भवति ... अथवा देवैर्वायवात्मकस्य कृष्णपक्षस्यापि यवनात्पक्षद्वयमपि यवा । ... दीनां मध्ये येन निमित्तेन ना (!) होता भवेत् तत्कार्यं याविहोत्रम् [°र्या यादि° A.B.C.] । तैत्तिरीयकेऽपि ऋतव्या उपदधातीत्यत्र [५.४.२.] चयनप्रकरणे यवादयो व्याख्याताः ॥२५॥ २ ॥७॥

अथाग्नये स्विष्टकृद्भागं तस्य प्रधानयागसमानन्तर्यं च विधातुमाख्यायिकामाह । पश्वभिमानी देवो रुद्र इह यज्ञवास्तावुपिवा [°°स्तवरोपि° A.B.C.] ...भूत् अत एव वास्तावेव स्थितत्वाद्रुद्रो वास्तव्य इति वेदविदः कथयन्ति ॥१॥ स्वयं यज्ञप्रदेशं (यज्ञाप्र° B. यज्ञं विप्र° A.) प्रत्युत्तमा (°त्युर्ध्वक्राम?) स क्रुद्धो (?... B. ... AC.) भूयोत्तरस्यां दिशि स्विष्टकृत्काले यज्ञं प्रतिराउमुत्तस्थौ ॥२॥ अमुं यज्ञं विमृष्टं मा कार्षीः । यज्ञं समवृहत् ऊर्ध्वं प्रापयत् न च हविरादिकं बहिः क्षिप्तवान् तथा किमपि यज्ञाश्रयत्रानां न हिंसितवान् ॥४॥ तेषां सर्वेषामाङ्गतिर्ङ्गता ॥५॥ यावन्तः प्रदानशेषान्तर्यैकमग्रदानं कुरु ॥६॥ अवशिष्टभाक्त्वेन रुद्रस्य वास्तव्यत्वप्रसिद्धिमाह ॥७॥ प्राच्यादिदेशभेदेन शर्वादिनामभेदेऽपि देवतैकैव ॥८॥ स्विष्टकृतऽइति विशेषणस्य कारणमाह । वयि अमुत्राङ्गनोयदेशे आङ्गत्याधारभूते सति ॥९॥ अथ स्विष्टकृन्निगदमभिदधाति (till to k. १५.) स होता स्विष्टकृदनुवाक्यानन्तरं ये अग्नये ... प्रयाजाज्यभागादिदेवा स्विष्टाः तान् तं स्विष्टकृतमग्निं च संपश्यति संस्मरेत् संभूयानुवदेत् संदर्शनप्रकारमनूद्य क्रमेण व्याचष्टे अयालग्निरित्यादिना (ल A.B.C.) अयं स्विष्टकृदग्निः प्रथमाज्यभागदेवस्य प्रियाणि धामानि निःशेषाण्ययाड् इष्टवान् तत्तेनैतद्भागपाठेन प्रथमाज्यभागं स्विष्टं कृतवानित्युक्तवान्भवति । एष स्विष्टकृन्निगदः आवाहननिगदेनैव व्याख्यातप्रायः see ४.२.१६. ॥१०॥ एतेन यजदग्नेरिति भागेन भूयसीं प्रीतिमुत्पादयन् । सर्वथाग्नेः संतुष्टत्वाय स्विष्टकृत्त्वकारणस्य प्रकाशनादेवं संपश्यन् ॥११॥ देवतां देवतानाम पूर्वामयाट्कारात्प्राक् । तद्विरुद्धं स्विष्टीकरणस्यैवानभ्यर्हितत्वेन (°आत° BC.) प्रथमं निर्देष्टव्यवात् ॥१२॥ यक्षद्यजेत । स्विष्टकृत इदानीमपि अकृतत्वाद्याडिति नोच्यते । यथा आवाहिता देवताः सर्वा अपीष्टा एवं स्वं महिमार्थमपि यष्टव्यं । यत इतः प्राक् किं चन स्वाय महिम्नऽइदं हविरिति न क्रियते तस्मादत्र स्विष्टकृन्निगदाभिधानसमये तत्तेन स्वं महिमानमित्यनेन तं प्रीणितवान्भवति ॥१३॥ इद्धशब्देनाग्निरुच्यते तद्रूपप्रीतिविवात्प्रजा अपीषः । एज्याः पुनः पुनरिज्याः (?इष्य B. यष्टा CA.) । यायजूकाः इज्याशीलाः ॥१४॥ जातवेदा आङ्गत्याधारः स्विष्टकृदग्निः हविः सौविष्टकृतं सेवताम् ॥१५॥ इत्थं स्वि-

ष्टकृन्निगदं व्याख्याय तस्य याज्यां पुरोऽनुवाक्यां चाह । अवक्लृप्ततमे अत्यन्तं योग्ये । अयं स्विष्टकृद्भागः तृतीयसवनस्थानीयः अन्तिमत्वसाम्यात् ॥१६॥ स्विष्टकृतो हुतावशिष्टरूपत्वादेतद्यज्ञस्य वास्तुस्थानीयं । प्रजापतेः बलवज्जाः ऊरोबाहुभ्यः सकाशादिन्द्रेण सहोत्पन्नत्वात्रिष्टुबिन्द्रियम् ॥१७॥ पेसुकमभिवर्धनशीलम् पिस्यति अतिवृद्धो भवति ॥१८॥ पतन्नेकं बाहुं भूमौ प्रसारितवान् स बाहुर्विस्रस्तोऽभूत् । अपत् प्राप्तमभूत् । सछन्दसौ समानछन्दस्के ॥१९॥ स्विष्टकृदवदानहोमप्रदेशयोर्विशेषमाह । उत्तरदिशो (॰रपूर्वदिशो ABC.) लोकपालत्वेन रुद्रसंबन्धः सर्वशास्त्रप्रसिद्धः ॥२०॥ उत्तरदेशे प्रदानेऽपि प्रधानहविषा सहासंस्पर्शं विधत्ते । प्रधानाहुतिभ्यः सकाशादभ्यर्धे संनिहितप्रदेशऽएव न तासां स्थाने । विपक्षे बाधमाह इतरा इति । इतराः पशुफलजनकाः । यदि ताभिः सह स्विष्टकृदाहुतिमासज्जयेत् तदा रुद्रेण सह पशून्योजयेत् अत यजमानस्य गृहावस्थिताः पशवः समीपऽएव म्रियमाणाः प्राप्नुयुः ॥२१॥ आहवनीयगार्हपत्ययोरन्यतरस्मिन्हविःश्रपणं विधास्यति तदर्थं तयोराधानप्रदेशपरिमाणं विधातुमाह । यस्त्विह भूमावेवावशिष्टः स गार्हपत्यः तस्मादिदानीमपि दिवं गन्तुकामा एतमाहवनीयं यज्ञसाधनं गार्हपत्यात्प्राग्देशं यजमानायोद्धरेयुः ॥२२॥ विक्रम्यतेऽनेनेति एकपादप्रक्षेपपरिमितः अंशो विक्रमः । गार्हपत्यमवधीकृत्य ॥२३॥ गार्हपत्ये अपयेयुरिति यत्सोऽपस्खलः अपस्खलनाम च हविषां भवति । फलितानां व्रीह्यादीनां तुषविमोकादिसंपादनप्रदेशः खलः यथा व्रीह्यादिराशिः खलाद्बहिरपि प्राप्तो व्यर्थो भवति एवमन्यत्रश्रपणमपि ॥२६॥ अन्येषां पक्षमाह । यस्मादेष आहवनीयः आहवनार्हः अथ एष पक्वस्य हविषो होमाय योग्यो न त्वामस्य पाकाय ॥२७॥ अग्नेः परिस्तरणं विधातुमाह । एवकारेण स्वतर्पणादपि ब्राह्मणतर्पणमेव श्रेय इत्ययमर्थो द्योत्यते । यजमानो ब्रूयात् ॥२८॥ ३ ॥७॥

The commentary of *Harisvâmin*, the extracts out of which are now beginning, is much shorter, than that of *Sâyaṇa*, and leaves the greater part of the text unexplained. प्राशित्रावदानविध्यर्थमाख्यायिकामाह । प्रजापतिः प्राणपिण्डलोककालयज्ञात्मा । अभिध्यातवान् लोकात्मना दिवं कालात्मना उषसं प्राणपिण्डात्मना ऋक्षेभ्यो मृगेरोहितं (?) रोहिणीनाम नक्षत्रं यज्ञात्मना वाचम् । मिथुनी मिथुनवान् ॥१॥ दुहिता न गन्तव्येति संधां संधानं मर्यादामतीत्य । व्याध ताडने ताडयेषुणा । इच्छब्दोऽवधारणार्थः नूनंशब्दो यस्मादर्थे यस्मान्नैव तदास ॥३॥ क्ष्मया क्ष्मायां (क्ष्मयां ABC.) पृथिव्याम् । तदाग्निमारुतं नाम शस्त्रं तस्मिन् तद्विभज्याख्यायते see ऋक्संहि॰ ८.१.२७.२. ॥४॥ यदिदमिषोरनीकं यज्ञरसविलिप्तं तद्यथा न वृथा स्याद्यथा च प्रधानाहुतेः न महत्स्यात्तथा उपायं जानीत ॥५॥ प्रसन्नः एव ब्राह्मणशेषः किं चित्तु वक्ष्यामः ॥ नो इति प्रतिषेधः नु इति वाक्यपूरणः । दतः दन्तान् ॥७॥ ततो बृहस्पतिप्राशनादर्वाक् ॥८॥ संसारस्वभावाद्यदत्र किंचिदशान्तं तन्निर्मिमीते बहिः करोति निष्कर्षति । पशुत्वमिडायाः प्रसिद्धं पशवश्च रुद्राद्रक्षणीया अतो रुद्रिये प्राशित्रे दत्तेऽप उपस्पृश्येडावदेया ॥९॥ खदत् (॰दन् C. ॰दम B. ॰दच A.) खद स्थैर्ये हिंसायां च [धातु॰ ३.१३.] अल्पतरत्वादस्थिरमगाढबलं निःसरणवद्भवति इतरथा तु चतुर्गृहीतं महत्त्वाद्गाढं स्यात् ॥१०॥ तिर्यक् प्रजहीत (!) ओहाङ् गतौ [धा॰ २५.

७.] प्रगछेत्प्राशित्रम् ॥१२॥ तत्प्रातगृह्णातीत्यत आरभ्य ब्रह्मत्वं प्राह (प्राग AC. प्राशित्र B.) आध्यायसमाप्तेः ॥१३॥ अथ परिक्षाल्य पात्रं नाभिमालभतऽइति शाखान्तरात् इति केचित् ॥१४॥ अथास्मै ब्रह्मभागमित्याध्वर्यवम् । प्रतिविद्वान् जानन् एष मे भाग इत्याशयः ॥१८॥ आ ए-तस्मादध्वर्युवचनात् । पाकयज्ञार्हया इडया पाकयज्ञेषु कृतशंपा भक्ष्यते तेन पाकयज्ञार्हेत्युच्य-ते । ब्रह्मा हि प्रायश्चित्तैर्यज्ञं भिषज्यति ॥१९॥ अनुयाजप्रसवविधिः । यस्मादनुयजतेऽध्वर्युश्च यज्ञं प्राङ्बृहस्पतये च न मर्त्यं मनुष्याय तेन कारणेन ब्रह्मानुज्ञया यज्ञादीनप्रयाजान् ॥२१॥ सूतिर्गन्त्री ॥२२॥ ४ ॥७॥

इडाब्राह्मणमेतत्, तत्रेडाया मानवीमिडां देवतां वक्तुं मानवी घृतपदी मैत्रावरुणीत्यं-तानि च निगदपदानि व्याख्यातुमितिहासः प्रवृत्तः । स चेतिहासः प्रसङ्ग एव किंचिच्च दर्शयामः । अवनेग्यते हस्ताद्यवनेक्तीति अवनेग्यं कार्यं कृत्यः । परिचारका आनीतवन्तः । भाविनोऽर्थस्य सिद्ध्यर्थं देवतैव मत्स्यरूपेणाजगाम ॥१॥ पाल रक्षणे । वक्ष्यत्योघः उदक-संघातः स इमा भरतवर्षनिवासिनीः प्रजा निःशेषं वोढा देशान्तरं प्रापयिता ॥२॥ क्षुल्लकाः क्षुद्रकाः अल्पकाः । गॄ निगरणे निगरति । बिभरासि बिभ्रिया: पुष्णीयाः । अतिवर्धै अति-रिच्य वर्धितास्मि । कर्षूः खातिका ॥३॥ शश्वच्छब्दोऽत्र सामर्थ्यात्क्षिप्रवचनः काष्ठा महामत्स्यः । ज्येष्ठं वृद्धतमम् । इतिथीमित्यभिनयः तेन संख्येयाः समादर्शितवान् इयतीनां दशा-नां द्वादशानां वा पूरणीतिथी इयतिथीं यावतिथीं तावतिथीमिति प्राप्ते छान्दसो यशब्दस्य अश-ब्दलोपः । समा संवत्सरः मामुपासासै उपासीथाः ॥४॥ नावमुपकल्प्य मत्स्यमुपासितवान् ओघे चोत्थिते नावमधिरूढः । शृङ्गे भवितव्यतयैव निष्पादिते । उत्तरं गिरिं हिमवन्तम् ॥५॥ समवायात् एकीभावाय अधः गछेत् अवतरेत् ॥६॥ पिब्दमाना पिबद् [°बध् AC.] कारणे घृतप्रभवत्वात् घृतं स्रवन्ती सुस्निग्धा उदकादुत्थिता ॥७॥ आवयोर्दुहितेति ब्रूहीत्यूचतुः । अपित्वं भागः तं प्रार्थितवन्तौ । तच्च भागित्वं वा जज्ञौ वाशब्दश्चशब्दार्थे जानातिश्च प्रतिपूर्वो द्रष्टव्यः प्रतिज्ञातवती च न च प्रतिज्ञातवतीति यावता मैत्रावरुणीति व्यपदिश्यते तावत्प्रतिज्ञातवती यन्न तस्याः किंचित्ताभ्यां क्रियेतेत्येवं न प्रतिज्ञातवती ॥८॥ अजीजनथाः जनितवानसि । म-या हेतुभूतया मय्युपह्वयमानायाम्-उपहूतो यजमान इत्येतेन होतृवचनेन यामाशिषमाशासि-ष्यसे ॥९॥ उपस्तरणादिविशेषः शाखान्तरात् पशुप्रभवघृतादिप्रभवत्वात्पशव इडा ॥१२॥ इ-हेत्यभिनयेन प्रदेशिनीपर्व मध्यमं दर्शयति । शाखान्तरात् ॥१४॥ हेवन्तरं शाखान्तरात्त्व ओष्ठ-योरित्यत्राविशेषेण निलिम्पेदिति श्रुतम् शाखान्तरे बधरमधरऽउत्तरमुत्तरे । किं पुनर्निलिम्पनं द्रव्यत्वात्संनिधानाददनीयत्वाच्च आज्यम् तत्राज्ये तदेवैनां प्रापयतऽइति इडानि[illegible]दे-डमेवाज्यमिति गम्यते ॥१५॥ निलेपार्थवादोऽयम् तनिष्ठं तनुतमम् पाकयज्ञार्हा मनुष्यप्रधा-नत्वान्मन्दतरवीर्या । इह तनिष्ठे देशे । एतामिडामेतयदोष्ठयोर्निलिम्पते तत्पुरा रक्षोभ्यो या-वदेवोच्चैरुपह्वानं श्रुत्वा नागच्छन्ति रक्षांसि तावत्प्रापयते प्राणेष्वेव हूयतऽइति वक्ष्यते तं प्रा-णदेशं प्रापितवान् ॥१६॥ अवान्तरेडावदानमेतत् ॥१७॥ अत ऊर्ध्वं हौत्रमिडोपह्वानं विधीय-ते । तदपि द्विविधमुपांशु चोच्चैश्च तत्र प्रथमं तावदुपांशूपह्वानं युज्यते । उपपूर्वो ह्वयति-रभ्यनुज्ञायां वर्तते । इयमिडा सर्वैरृत्विग्यजमानैर्विभज्य भक्षणीया तत्र वोऽनतिरेकं (नाति-रेको B.) शङ्कानिवृत्तये परस्परमनुज्ञातव्यः तद्धै तत्साधारणमेवानुज्ञानं मध्यास्थानीति (म-

ध्यव° BC. मध्यक A.) होता सर्वैरन्वारब्धः करोति ॥१८॥ इडाया एवैतानि रथन्तरादीनि पृथिव्यादीनि च रूपाणि ततश्च तस्यामुपहूतायां तान्युपहूतानि भवन्ति तेषु चोपहूतेषु ता उपहूता भवति देवतानामननुज्ञातां मनुष्या भक्षयितुं नार्हन्ति अतः सानुज्ञाप्यते । मामित्येतच्च तुल्यहेतुत्वात्सर्वेषामृत्विग्यजमानानां प्रदर्शनार्थम् ॥१९॥ अथोपांशूपह्वयतऽइति यदुक्तं (K. १८.) तस्य विच्छेदार्थमथ प्रतिपद्यतऽइत्याह तेनेत ऊर्ध्वं यथाप्राप्तमुच्चैर्वक्तव्यम् ॥२४॥ वत्सा वै दैव्या अध्वर्यव इति सांनाय्यं हविः संभवत्यध्वर्युवदित्यभिप्रायः ॥२७॥ सामान्यरूपेण यजमान इति वाच्यं न विशेषरूपेण देवदत्तो यज्ञदत्त इति ॥२९॥ यो मनोरथो यजमानस्य तस्मिन्नयमनुज्ञातः समृध्यताम् ॥३७॥ वशब्दः समुच्चयार्थः । अन्ये तु प्रत्यक्षमेव प्राशिष्यन्ति । ब्रह्माग्नीध्रोरपि ग्रहणे पञ्चसंख्या संपन्ना ॥३९॥ यत्र काले होतः प्रतिपद्यते इडोपहूतेत्येतं निगदं तदा चतुर्धा कृत्वा पुरोडाशमाग्नेयं शाखान्तरात् बर्हिषि सादयति ॥४०॥ यत्र काले आशिषमुपहूतो यजमान इति होता आशास्ते तदा यजमानो जपति ॥४२॥ पवित्रयोः पवित्राभ्यामिति विभक्तिव्यत्ययः पवित्रपूतास्तनवामहऽइति वाक्यशेषात् मार्जयन्ते आत्मानं शोधयन्ति ॥४३॥ अपिमृजति संसृजति ॥४४॥ १ ॥८॥

अनुयाजब्राह्मणमेतत् अथाग्निं कल्पयतीत्यस्मिन्क्रमे (see ३.३.१२.) उल्मुके द्वे ऊर्ध्वं नयन्त्यग्नितः पृथक्कुर्वन्त्यृत्विग्यजमानाः साक्षादध्वर्युरितरे तदनुज्ञानेन । यातयामो गतरसो गतवीर्यः एतत् एतस्मिन्ननुयाजकाले अग्निर्भवति देवेभ्यो यज्ञमूढवान्भवति ततश्च गतवीर्यत्वादनुयाजेष्वक्षमः स्यादाभ्यां तु प्रागुन्नीताभ्यां पुनः संसृष्टाभ्यामगतवीर्यो भविष्यति ॥१॥ अनु याजे नीते पश्चात्संगमयन्ति ॥२॥ उल्मुकसमासेन पुनर्नवीकृतोऽग्निः समिधा सामिधेनीस्थानीयया चैषा तऽइत्यन्यऽर्चा समिध्यते ॥३॥ see ४.४.१५. ससृवान् ससृतवानिति प्राप्ते तकारलोपः ॥५॥ उत्तरस्यां कण्डिकायां बर्हिषो जगतीत्वं वक्ष्यते अस्यां तु जगत्या अनुयाजेषु प्राथम्यकारणमाह । तद्वै तत्र सामिधेनीषु स्थानविपर्यासं मन्यन्ते विद्वांसः यज्जगत्यां परिमाणतो ज्येष्ठायामेव तिष्ठमानायामल्पाक्षरा गायत्री प्रथमं युज्यते तद्यथायथं कर्तुमिहानुयाजेषु देवा जगतीं प्रथमामकल्पयन् सा च जगती बर्हिः । पापं ज्येष्ठापेक्षया कनिष्ठं नेत्पापमेव सत् वस्यः प्रशस्यतरं यजेनेदमसत् तदनुकाराच्च प्रजास्वपि यत्पापं वित्तबन्धुकर्मादिना तद्वस्यः वसुतरं प्रशस्यतरमितरस्माद्पापान्मा भूत् ॥१०॥ येयं बर्हिराख्या देवतात्रेज्यते एषा अयं लोकः परिवृढो हि सः ॥११॥ नरः प्रजाः शंसन्ति वदन्त्यस्मिन्नित्यन्तरिक्षं नराशंसः । अन्तरिक्षमु वै त्रिष्टुप् मध्यमत्वादेकादशभागत्वाच्च दश दिश आत्मनैकादश रुद्रसंबन्धाद्वा ॥१२॥ बर्हिरादिषु यष्टव्येषु बर्हिर्यजेत्यादिना होतापि सर्वत्र देवं देवमित्याह न बर्हिरादेव केवलम् । यस्माच्छन्दोदेवत्या अनुयाजाश्छन्दांसि च देवानां देवाः तस्माद्देवान्यजेत्येवाध्वर्युराह गृहभोगाः पशुमन्त (°मत ABC.) एवेति गृहाः पशवः ॥१४॥ सर्वत्रैव यागे देवतायाऽएव होत्रा वषट्क्रियते अध्वर्युणा च हूयते अत्र तु अनुयाजेषु न प्रसिद्धा देवतास्ति बर्हिर्नराशंसयोर्देवतात्वेनाप्रसिद्धेरग्नेश्च गायत्रीप्रधानत्वात् तेन वसुवने वसुधेयस्येति शब्दाभ्यामग्निमिन्द्रं चोपादाय ताभ्यां बर्हिरादीनुपलक्ष्य इन्द्राग्न्यात्मकेभ्यो बर्हिरादिभ्यो वषट्करोति होताध्वर्युश्च तदात्मकेभ्यो जुहोति । वसु हविर्लक्षणं भजति वसुवनिः । वसूनि हवींषि धीयन्तेऽस्मिन्निति वसुधेयः ॥१५॥ वसुवने इत्यामन्त्रितान्तं [against the ac-

cent] वसुधेयस्येति षष्ठ्यन्तं ते कथं बर्हिर्वेविति प्रथमान्तेन आदित्येदिना नत्वप्यंते । नैष दोषः । एवमु हैतदिति ध्रुवं देऽस्यते विभक्ती व्यत्ययेन चतुर्थ्यर्थश्रुत्वे दर्शयति । तस्यापि यास्काचार्येण [यस्का° ACB.] वसुवननाय च वसुधानाय चेति [निरुक्त° ९.४२.४३.] तादर्थ्ये चतुर्थ्या एकवाक्यता दर्शिता ॥१६॥१७॥ २ ॥८॥

ऊह वितर्के प्रेरणे वत्र द्रष्टव्यः अन्योन्यविपरीतं नामयति ॥१॥ यस्मादेतत्समाने अभिन्ने व्यूहनकर्मणि विलक्षणमाक्रियतेऽभिव्यज्यते भोक्तृत्वं भोग्यत्वं च तस्माद्यज्ञानुकारिणा भूतेष्वपि समानादभिन्नात्पुरुषात् भोक्ता पतिः भोग्यश्च भार्या ज्ञायते यथा समाने कर्मणि शुद्धपभृतौ । तथा च ननु (च न AC. च ननु च B.) समानजातीयत्वाद्विशेषाद् एव नास्ति कुतो भोक्तृभोग्यभावः (°ग्ये भागः B.) पशुन्यायेन श्विद्वर्तते (°न श्विदा व° A. °न कश्चिदा वर्तते C.) न स यज्ञानुकारः स्यात्किं तर्हि यजमानैकत्वानुकारः स्यात् सत्यम् एवं व्यवहारस्य यज्ञमूलत्वादन्याय्यस्यापि तमेव व्यवहारं दर्शयति । इदं हि अधुनापि ज्ञात्याः [समा]नजातीयाः दीव्यमाना रममाणाः परितुष्टान्तःकरणाः नाकार्यकारिण इत्यपरिवृताः (-इत्य प° C. -इव प° A.) आसते । कथं दीव्यमानाः । विदेवम् । दिवेर्व्यवहा[रा]र्थस्य अन्योऽन्यं भोक्तारो भोग्यैः सह भोग्या भोक्तृभिः सह दीव्यामहे व्यवहृत्य [व्य]वहृत्य । व्यवहर्तृणामभिप्रायेण व्यवहारं दर्शयति इदं प्रत्यक्षमेव विवाहेन वयं संगच्छामहे एकस्मादेव पुरुषान्मूलभूतादुत्पद्य पुनरेककुटुम्बारम्भेण समानापत्यारम्भेण च संयुज्यामहे इति भर्तॄणां याचितां चाभिप्रायवचनम् । एवं व्यवहारं दीव्यमाना आसतेऽथ के (तस्मिंके B. तत्यात्क A. तैत्क C.) पुनः संगच्छामहऽइत्याह्नः किमनन्तरऽएव पुरुषे नेत्याह चतुर्थे तृतीये वा वाशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः चतुर्थे वा तृतीये वा । तथा च काण्वानां तृतीये पुरुषे संगच्छामहऽइति श्रूयते चतुर्थे संगच्छामहऽइति सौराष्ट्राणां व्यवहारः तृतीये संगच्छामहऽइति दाक्षिणात्यानां ते हि मातुलदुहितृषु (°हितुः त्रिषु ABC.) पितृष्वसृपुत्रेषु संगच्छन्ते ते च मूलपुरुषात्[illegible]तृतीया भवन्ति ॥ एतस्मादेव स्रुग्व्यूहनात्कारणात्तथा भवति ॥६॥ स्रुग्गतेनाज्येन संस्नेहयति । परिधयोऽपि अग्नयो देवास्तेऽपि देवपात्रेण देवान्समर्कन्ति पलायित्वा तु न समग्रम् ॥७॥ वयि पार्थिवाग्न्यात्मको तृप्ते पार्थिवा वसवस्तृप्यन्ते वस्वर्थं वामनादिम ॥८॥ अभिपद्याभिगम्य हस्तेनालभ्य ॥९॥ स्वगा अव्ययमेत[illegible]नं स्वस्थानगामिनं करोति । अगन् अगमत् गतः अपिनयति संनयति ॥११॥ व्यसु खादसु इमं प्रस्तरं देवाः येभ्यो होष्यते कीदृशम् वयः पक्षिभूतम् Here is the conclusion of B. ॥१४॥ यथा पृथिवी मूल्यमूलान्नसंस्पृष्टा पृश्निस्तद्योगाच्च वशा वश्या काम्या ॥१५॥ तं प्रकृतं प्रस्तरं प्राग्रं सूक्तवाके उक्ते पश्चात्समग्रमेव प्रक्षिपति । युप रुप लुप विमोहने [धा° २६.१२४.] मूर्छयेयुः । ऋषी गतौ नयनेऽत्र द्रष्टव्यः [illegible] (विस्मा° A.C.) सुदग्धवाय ॥१८॥ संवदस्वेत्यादीनां व्याहृतीनां ब्राह्मणस्तावदर्थः । अग्नीदध्वर्यु प्रेष्यति संवदस्व त्वं मया सह शम्युवाकप्रैषार्थमिति । तमध्वर्युः पृच्छति किमगमत्प्रस्तरशरीरो यजमानः स्वर्गलोकम् किं दग्धः प्रस्तर इत्यर्थः । अग्नीदगन्निति प्रतिवचनमाह गतो यजमानो दग्धः प्रस्तर इत्यर्थः । अध्वर्युस्त्वाह यद्येवं ततः शम्युवाकपरि[धि]प्रहरणयोः कालो वर्तते ततश्चाश्राव्य होतारमाकर्णय । अग्नीचाह श्रौषट् (°हा वौ AC.) अपोत्येवायमतित्वाहितो (अपोत्यो A. अपोत्यो C.) ब्रूहि

वं यद्विवक्षितमिति । स्वगा दैव्या होतृभ्य इति शम्युवाकप्रैषः हे होतः शम्योर्ब्रूहि अस्य ऋषेरार्षं ब्रूहि स्वगा स्वस्थानगामिभ्यो (°मिर्वा AC.) दैव्या देवेभ्यो होतृभ्यः परिधिशरीरेभ्यो ह्वयताम् मानुषेभ्यस्तु होतृभ्यः स्वस्तिरविनाशोऽस्त्वित्येवंरूपं वा ब्रूहीति ॥ श्रुतिस्तु सांकेतिकं सूक्ष्मतरमर्थं व्याचष्टे तत्र च यथैव प्रहरणसंबन्धसूक्तवाकप्रैषसंबन्धमाश्रावणमनुषङ्गतः परिधीनामुपकारकमित्युक्तम् तथेहापि परिधिप्रहरणसंबन्धशम्युवाकप्रैषसंबद्धा व्याहृतयोऽनुषङ्गात्प्रस्तरवृत्तान्तं प्रकाशयन्तीति (°यतीति AC.) दर्शयति संवादयैनं देवैरिति प्रियमिवातिथिमागतैर्देवैः संभावय ॥२०॥ बहूनां मानुषाणां होतॄणामभावादेकवचनस्थानऽएवैतद्बहुवचनम् ॥२१॥ संप्रगृह्णाति संगते उद्गृह्णाति संस्रवहोमाय आज्यशेषस्य स्वगाकाराय च ॥२३॥ अपिविन्यो भागिन्योऽत्र वयमपीत्येवं मन्यन्ते ॥२४॥ स यन्निधायावमृशेदिति प्रसङ्गेनार्थप्राप्तं चरकश्रुतिप्राप्तं च निधायात्मदानं प्रतिषेधति वाहनमश्वादि यथा तद्वाहयेत् अधः पतेत् एवं निधानं स्रुचोः प्राग्विमोकात् अधश्चलनं तद्यज्ञस्य स्यात् । विमुच्यतेऽस्मिन्निति विमोचनं स्थानम् ते तत्र सादयत्यध्वर्युः विश्रमार्थं विमुञ्चति । गतिमध्वानम् ॥२७॥ ३ ॥ ८ ॥

आध्वर्यवः सूक्तवाकप्रैषः शम्युवाकप्रैषश्चाधस्तादुक्तास्तत्प्रसङ्गात्सूक्तवाकशम्युवाकयोरेतद्ब्राह्मणम् तत्रापि सूक्तवाकस्य प्रयोजनं विवक्षुः कालसंबन्धगतमुपादाय (!) प्रयोजनमाह । यस्मिन्काले अध्वर्युराहेषिता इत्यादि (see ८.३.१०.) अतस्तत्त इति सर्वनामव्यत्ययो द्रष्टव्यः तत ऊर्ध्वं होता यदाह इदं द्यावापृथिवी इत्यादि (k. ४.) तत्सूक्तान्याहेति सूक्तवाकशब्दनिर्वचनम् ॥१॥ वक्छब्दः समुच्चये । देवान्प्रीत्वा तर्पयित्वा शास्त्रपरिषदीव संतप्रश्ने (!) संद्वा (!) तेषु देवेषु तेषां मध्ये अपिवो भागी भवति । अप्रैषीत्तर्पितवान् ॥३॥ प्रतिपद्यते होता वक्तुमारभते । आध्मं ऋद्धवत्तः । नमोवाकमन्नदानवचनम् । वं सूक्तानां वक्तासि नाहं मानुष इति वेदित्वा मामधिष्ठातुमर्हसि । उपशृणोतीत्युपश्रुतिः ततः सप्तमी द्विवचनमुपश्रुत्योरिति प्राप्तं ततश्छान्दसः पूर्वसवर्णः । अवति तर्पयति इत्योमा ॥४॥ शंगवी शं च ते गावौ च शंगव्याविति प्राप्ते पूर्वसवर्णः । जीवनस्य दात्र्यौ । अत्रसनशीले ते देवते उपासीनो न त्रस्यतीति देवधर्मं यजमाने दर्शयति नाहेति । नास्ति प्रवेदनं प्रलाभः एतयोः दुर्लभे ॥५॥ गावः अवन्ति तृप्यन्त्यस्यामिति गव्यूतिः गोप्रचारः सा च क्षेमऽउर्वी भवति । व्याघ्रादिभये त्रसन्ति न दूरं ग्रामाद्गावो गच्छन्तीत्यनुर्वी गव्यूतिर्भवति तेन गवां क्षेमहेतू स्तामित्यर्थः । वृष्टेर्दात्र्यौ ददातेर्वनिप् यकारश्चागमः वृष्टिदातारौ । रीतिस्तृप्तिस्तामापतऽइति रीत्यापा सुक्त्वर्पवत्यौ ॥६॥ ऊर्जः मतुपि असुगागमः वकारस्य च भवम् ॥७॥ आवेदनमावित् ॥८॥ महो मंहनं पूजा विभूतिः ॥११॥ see ८.१.२१. ॥१२॥ अमुत्र see ८.१.३० ॥१३॥ अमुत्र see ८.१.३३. ॥१४॥ सजाता भ्रातरः आत्मिकास्तु प्राणाः तेषां च तस्य संभक्तिस्तैरवियोगः सजातवनस्या वन[सु]शब्दः कण्ड्वादिषु द्रष्टव्यः कण्ड्वादिभ्यो यक् [प° ३.१.२७.] वननं वनस्या ॥१५॥ अश्यात् अशू व्याप्तौ प्राप्नोतु ॥१६॥ तिस्र इडायाम् see ८.१.३०.३३.३७. ॥१७॥ शाखान्तराधीतानां प्रतिषेधः ॥१८॥ रासताम् रासृ (!) दाने । वनु याचने याचताम् वयं च मानुषा होतारः आत्मनि बहुवचनम् अधिशब्दोऽग्नेरित्यस्य पञ्चम्यन्तद्योतनार्थं अनेकपञ्चम्यर्थसंभावेऽपादानार्थद्योतकः [पा° २.३.२८.] ॥१९॥ अञ्जसा ऋजु सम्यक् । तत्तदा तद्विज्ञानं भवितव्यतावशादेव अन्तर्हितं विच्छिन्नं मनुष्येभ्यो बभूव ॥२४॥ संस्थानं ण-

त्वं यद्विवक्षितमिति । स्वगा दैव्या होतृभ्य इति शम्युवाकप्रैषः हे होतः शम्योर्ब्रूहि अस्य ऋषेरार्षं ब्रूहि स्वगा स्वस्थानगामिभ्यो (°मिर्वा AC.) दैव्या देवेभ्यो होतृभ्यः परिधिशरीरेभ्यो ह्रूयताम् मानुषेभ्यस्तु होतृभ्यः स्वस्तिरविनाशोऽस्त्वित्येवंरूपं वा ब्रूहीति ॥ श्रुतिस्तु सांकेतिकं स्फुटतरमर्थं व्याचष्टे तत्र च यथैव प्रहरणसंबन्धसूक्तवाकप्रैषसंबन्धमाश्रावणमनुषङ्गतः परिधीनामुपकारकमित्युक्तम् तथेहापि परिधिप्रहरणसंबन्धशम्युवाकप्रैषसंबद्धा व्याहृतयोऽनुषङ्गात्प्रस्तरवृत्तान्तं प्रकाशयन्तीति (°यतीति AC.) दर्शयति संवादयैनं देवैरिति प्रियमिवातिथिमागतैर्देवैः संभाषय ॥२०॥ बहूनां मानुषाणां होतॄणामभावादेकवचनस्थानऽएवैतद्बहुवचनम् ॥२१॥ संप्रगृह्णाति संगते उद्गृह्णाति संस्रवहोमाय आज्यशेषस्य स्वगाकाराय च ॥२३॥ अपित्विन्यो भागिन्योऽत्र वयमपीत्येवं मन्यन्ते ॥२४॥ स यन्निधायावृश्चेदिति प्रसङ्गेनार्थप्राप्तं चरकश्रुतिप्राप्तं च निधायात्रदानं प्रतिषेधति वाहनमश्वादि यथा तद्वाक्रेत् अधः पतेत् एवं निधानं स्रुचोः प्राग्विमोकात् अधश्चलनं तद्यज्ञस्य स्यात् । विमुच्यतेऽस्मिन्निति विमोचनं स्थानम् ते तत्र सादयत्यध्वर्युः विश्रमार्थं विमुञ्चति । गतिमध्वानम् ॥२७॥ ३ ॥ ८ ॥

आध्वर्यवः सूक्तवाकप्रैषः शम्युवाकप्रैषश्चाधस्तादुक्तस्तत्प्रसङ्गात्सूक्तवाकशम्युवाकयोरेतद्ब्राह्मणम् तत्रापि सूक्तवाकस्य प्रयोजनं विवक्षुः कालसंबन्धगतमुपादाय (!) प्रयोजनमाह । यस्मिन्काले अध्वर्युराहेषिता इत्यादि (see ८. ३. १०.) अतस्तत इति सर्वनामव्यत्ययो द्रष्टव्यः तत ऊर्ध्वं होता यदाह इदं द्यावापृथिवी इत्यादि (k. ४.) तत्सूक्तान्याहेति सूक्तवाकशब्दनिर्वचनम् ॥१॥ वच्छब्दः समुच्चये । देवान्प्रीत्वा तर्पयित्वा शास्त्रपरिषदीव संतप्रश्ने (!) संद्त्वा (!) तेषु देवेषु तेषां मध्ये अपित्वी भागी भवति । अप्रैषीत्तर्पितवान् ॥३॥ प्रतिपद्यते होता वक्तुमारभते । आधर्म ऋजवतः । नमोवाकमन्नदानवचनम् । त्वं सूक्तानां वक्तासि नाहं मानुष इति वेदित्वा मामधिष्ठातुमर्हसि । उपशृणोतीत्युपश्रुतिः ततः सप्तमी द्विवचनमुपश्रुत्योरिति प्राप्तं ततश्छान्दसः पूर्वसवर्णः । अवति तर्पयति इत्योमा ॥४॥ शंगवी शं च ते गावौ च शंगव्याविति प्राप्ते पूर्वसवर्णः । जीवनस्य दात्र्यौ । अत्रसनशीले ते देवते उपासीनो न त्रस्यतीति देवधर्मं यजमाने दर्शयति नाहेति । नास्ति प्रवेदनं प्रलाभः एतयोः दुर्लभे ॥५॥ गावः अवन्ति तृप्यन्त्यस्यामिति गव्यूतिः गोप्रचारः सा च क्षेमऽउर्वी भवति । व्याघ्रादिभये त्रसन्ति न दूरं ग्रामाद्गावो गच्छन्तीत्यनुर्वी गव्यूतिर्भवति तेन गवां क्षेमहेतू स्तामित्यर्थः । वृष्टेर्दात्र्यौ ददातेर्वनिप् यकारश्चागमः वृष्टिदातारौ । रीतिस्तृप्तिस्तामापतऽइति रीत्यापा सुब्व्यत्ययवत्यौ ॥६॥ ऊर्जः मतुपि असुगागमः वकारस्य च भवम् ॥७॥ आवेदनमावित् ॥८॥ महो मंहनं पूजा विभूतिः ॥११॥ see ८. १. २१. ॥१२॥ अमुत्र see ८. १. ३० ॥१३॥ अमुत्र see ८. १. ३३. ॥१४॥ सजाता भ्रातरः आत्मिकास्तु प्राणाः तेषां च तस्य संभक्तिस्तैरवियोगः सजातवनस्या वन[स्]शब्दः कण्ड्वादिषु द्रष्टव्यः कण्ड्वादिभ्यो यक् [प° ३. १. २७.] वननं वनस्या ॥१५॥ अश्यात् अशू व्याप्तौ प्राप्नोतु ॥१६॥ तिस्र इडायाम् see ८. १. ३०. ३३. ३७. ॥१७॥ शाखान्तराधीतानां प्रतिषेधः ॥१८॥ रासताम् रासृ (!) दाने । वनु याचने याचताम् वयं च मानुषा होतारः आत्मनि बहुवचनम् अधिशब्दोऽग्नेरित्यस्य पञ्चम्यन्तत्वद्योतनार्थं अनेकपञ्चम्यर्थसंभावेऽपादानार्थद्योतकः [पा° २. ३. २८.] ॥१९॥ अञ्जसा ऋजु सम्यक् । तत्तदा तद्विज्ञानं भवितव्यतावशादेव अन्तर्हितं विच्छिन्नं मनुष्येभ्यो बभूव ॥२४॥ संस्थानं श-

म्युना दृष्टं प्रार्थयामहे ॥२६॥ अनया दक्षिणस्य पाणेः कनिष्ठिकया इति [illegible] पृथिव्या उपदर्शनं दर्शयति । अथ कनिष्ठिकया पृथिवीमुपस्पृशतीति [illegible] (!)। अग्निर्देवो दैव्यो होतेति [५.१.५.] व्रियमाणोऽग्निर्भवं चिकीर्षन् [illegible] येन मानुषायतनं पृथिवीमुपगतोऽस्ति ॥ एवं प्रासङ्गिकं [illegible] ॥ ॥१॥

पत्नीसंयाजब्राह्मणमेतत् ॥ देवानां पत्नीः देवैः सह संगता [illegible] । [illegible] यात्परास्तमभिमुखमायन्ति ॥१॥ गार्हपत्यमुत्तरेणातीत्य पत्नी चा[illegible] यजेदिति (यजा° A. C.) अपरे शाखिन आहुः । [illegible] येत्तचायुक्तमित्यभिप्रायः ॥३॥ चरणशब्दे सर्वं होत्राध्वर्यवमध्याय्यम् । [illegible] मिथुनेन लिङ्गद्वयेन चर्यते लोके ॥८॥ आहवनीयादारभ्य एवैतस्मिः [illegible] नमिच्छन्ति । पुंसः अन्तर्हिता पुंसश्चादृश्यमाना (पुंसश्च दृश्यमाना C.) [illegible] च्छन्ति तस्माद्यज्ञाङ्गानुकारात् क्षुद्रयोषितस्तु पुंसः समक्षं [illegible] ॥१०॥ [illegible] बन्धौ सूक्तवाकशम्युवाकौ तदभावेऽनुपपन्नौ । [illegible] अवसानमवसादं पत्न्याः कुर्यात् रूपं प्रतिनिधिः ॥१४॥ [illegible] ॥१८॥ अशीतमः भोक्तृतमः । आत्मनि अग्नौ दक्षिणाग्निहोमादि [illegible] ॥२०॥ [illegible] दतिरिक्तां जुहोति । समिष्टयजुर्हि देवताविसर्जनार्थम् ॥३०॥ [illegible] देर्गत्वा स्वदेशेऽवस्थिता एव प्रणीता नोचैर्नयति भूमौ पर्यस्यति । [illegible] ॥३२॥ फलीक्रियन्ते तण्डुला एभिरिति फलीकरणाः ॥३३॥ [illegible] । नि रभजन् बहिर्यज्ञात्कृतवन्तः । अस्ना लोहितेन । भागिनं [illegible] । [illegible] भागमदत्त्वा यं निर्भजन्ति स आशंसत एव । अबलो हि बलवतो वशं [illegible] कुतश्चित्कालपर्यायात् किं त्वं मां बभक्थ मनसि किं मत्तो [illegible] । [illegible] ([illegible] A C.) लोहितम् ॥३५॥ २ ॥१॥

याजमानकर्माभिधायि ब्राह्मणमेतत् । अध्वर्युर्निनयति । [illegible] रूपम् यज्ञसमृद्ध्यर्थं यज्ञमनु विलग्ना दक्षिणेति । दक्षिणामन्वारभ्य सा हि [illegible] निष्पादिता परिक्रीयते यथान्यत्रापि परिक्रयसंबन्धः परिक्रीता एवमत्रापि ॥१॥ यः [illegible] त्यः तमोषतः यस्तु कृतनियतकर्मा तमतिसृजतः ॥२॥ यद्वै यज्ञस्य मिथ्या क्रियते [illegible] न्यथाकरणं च ॥४॥ अध्वर्योर्निनयने व्यापृतवान्मन्त्रस्याशीर्लिङ्ग[illegible] ॥६॥ सर्वमेवातः परं याजमानम् ॥७॥ तद्वै तत्र इत एव लोकात्पराचीन[illegible] बहुतमाः क्रमन्ते ॥९॥ आदित्यस्य ये रश्मयः कदम्बकेसरवद[illegible] ये पूर्वं यजमानाः तेजःशरीराः उपरित[न]मेव तद्यज्ञरूपो प्रजापतिः । स्वर्गो वा लोकः [illegible] कर्मकर्तॄणाम् प्रजानां पतिः ज्ञानिनामुपभोग्यं स्थानम् तत्र ते गच्छन्तीत्यभिप्रायः । भाः प्रकाशमात्रं सूर्यरूपम् ॥१०॥ प्राङ्निरीक्षणेन संतर्पिता गच्छन्ती देवा निरीक्षिता भवन्तीत्यभिप्रायः ॥१३॥ उपगम्य उदता (!) पितुरुपोदिता स्त्रीभ्यो ढक् [पा° ४.१.१२०.] ॥१६॥ प्रदक्षिणमावर्तते ॥१७॥ असहायो वाच्यः स्थूरः तत्रासहायमात्रं लक्ष्यते स्थूरोऽस्मिन्नस्तीति स्थूरी न स्थूरी अस्थूरी । ससहायानि ॥१९॥ पुत्ररहितश्चेन्मृतपुत्रो वा तथा इदं मे कर्मेदं वीर्यं देवदत्तोऽहं संतनवानीति नामग्रहणम् ॥२१॥ see १.१.६. ॥२३॥ समाप्तोऽयं पौर्णमासिकः

सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां प्रकृतिभूतः । यद्यप्ययं (?यथोक्तोयं A. यथायं C.) कृताधानस्य भवति तथापि आधानेष्टीनां तनूहविःसंज्ञकानां पौर्णमासिको यागः प्रकृतिः तस्मात्पूर्वमुपदेश्यः । ननु तर्हि तनूहविषामेव सर्वेष्टिप्रकृतित्वं (°तत्वं A. C.) कृत्वा तान्येव पूर्वं कस्मान्नोपदिष्टानि सत्यम् किं तु तेष्वितिकर्तव्यतावैकृत्यदर्शनात्सर्वप्रकृतित्वं न संभवति तस्मात्पौर्णमासयाग एव पूर्वमुपदिष्टः ॥ ॥ आचार्यहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु नवमो (अष्टमो AC.) ऽध्यायः समाप्तः ॥ ॥

---

## VARIOUS READINGS AND CORRECTIONS OF THE PRESS.

---

अध्याये १ ब्राह्मणे १ कण्डिकायाम् १ M. B. C read प्राङ्ङ्ष्ठ° instead of °ङ्ङ्° and so is the general usage of Vedic manuscripts: see Benfey »die Hymnen des Sâmaveda Leipzig 1848. Brockhaus« p. XLVIII. I have retained this manner of writing only in the Nomin. mascul. of the themata terminating in ञ्च्. - ३ न्वेवो M apograph. - १० °डुपचं Sây. - १७ निर्दह्न्ति M. - २. ७ निर्म्मे Sây. B. निर्ममे Sây. A. C. but निर्मिमा ३. १. २१. - ८ °र्ध्वधधस्ताड्° Sây. - १२ °ताद्गात° MBC. °ताद्ध्रात° Sây. which reading I now prefer: see ४. ३. १८. - ३. ५ °तिपप्लुविरे Sây. - ४. १ °वत्साया° M. - १६ वर्धयति M. B. C unaccented against पा° ८. १. ५६. — अध्या° २. ब्रा° १. क° ८. एत्वामप° M. - १५ द्विनसाव M. °सातऽड्° ? - २. ७ प्रवृज्यादि° M. - ६ तन्न I. ११ ज्ञणवन्ति MBC. ज्ञिणवन्ति Sây. see ७. ४. १६. and ६. ३. ६. - ३. १ अप्रदनवद् I. देवां अन्विष्य Sây. - ४. १६ क्रूरं कु° Sây. - ५. ५ °मनुरिति M. - ६ निपात्य Sây. - ६ पा[illegible]व M apograph. - २० वब्रो ह I - २२ प्रह्रामीति M apogr. - २३ अस्याः क्रूरमभूत्तद्यस्या एतद° Sây. — अध्या° ३. ब्रा° १. क° ७. °रतः संमा° B

prima manu. °रतः संमा° B sec. manu. C. M. See प्रा° ८. ५. ६३. — ११ इन्द्र-दिति Sây. - २० °दाय प्राडुद्राद्रवति M. °द्राह्वति coni. त्यवां नाशंसति M apogr. - २५ रसस्यो वैव I. B prima m. - २.७ °भृति चतुर्भुवाणाम् coni. - ३.३ प्रगहंति M. B. C. °ह्रति I. - ११ पूर्वार्धो वै M apogr. - ५.१२ स न Sây. against the accent, for the mspts have ह्रैव, not ह्रैव; सन is Datif Part. Praes. — अध्या° ४. ब्रा°. १. क° १०. विद्य° M. माधव° Sây. - १३ निर्वेद M apogr. - १३ मदा-नीरित्युत्तरेनं निर्धारयति Sây.! - २१ त्रिगाछसति M apogr. °शांसति Sây. - २५ °तिर्व्यूणा° M. B. C sec. manu. = धृ? - २१ इट° M apogr. इन्द्र° Sây. see ४.३.५. - ३३ तृच° Sây. त्रिच° MBC. - ३५ मुक्रनुर्य° BC. M sec. m. मुक्रनुर्य° M prima m. - ३१ °न्धिढुं instead of °न्धिढुं see ४.३.१८. - २.१७ °नुष्या C. B. and Sây. - ३.१६ °मुगम्र° M. °मुग्रम्र° I. B. C. घ is my coniecture. १८ उध्माय M. B. C. and Sây. उध्माय I. उद्ध्माय is my coniecture. द्ध is very often given in the mspts by ध्र: see Benfey p. XLVII. - ४.१३ °गानि and ५.१२ °ढि in all the manuscripts: see Benfey p. XXXIV. - ५.११ the accent allows to consider प्रतिप्रश्नं either as a bahuvrîhi, or as an avyayîbhâva: the latter menning is understood by Sâyana. - १३ वा यस्मिन्वा in all the mspts. Sâyana seems to read वान्यस्मिन्वा. — अध्या° ५. ब्रा° १. क° ६. and २६ अनुष्या C. and Sây. - २० स्तोत्रवर्ये I. - २५ उदीषिष्ट has lost the augment after मा, else it should be read उदीषिष्टं. - २.१ बेल° M. B. C. स्तोत्र° Sây. - ११ °मात्स वषट्कारेणा° Sây. - ३.६ वै संक्रा° M apogr. संगतया: Sây. - ११. Sây. reads नुष्ठकं. - १७ मित्र आग° Sây. — अध्या° ६. ब्रा° १. क° १. अन्तर्यात I. - ४ इन्वतो M. B. C. - ११ ज्ञयं ज्ञयति M. B. C. The final न् is changed very

often in the manuscripts into Anusvâra: see Benfey p. XXXVII. XXXVIII. वेद्ह M. °च्यथा यथास्य M. apogr. - २१ सतः is Gen. Part. praes., Sây. reads सदः. - ५.२ यच्यमास M. C prima manu. जघ्यमाः C sec. m. B. I. - ४ सस-र्य्यैवा° M. सर्य्यै B. C. समथै I. The mspts use to have र्कृ. र्त. र्प्य instead of र्क. र्त. र्प. - तमसृजन्त M. apogr. तम° is my coniecture. - ३.९ दनायुः Sây. - १६ संव्लीनः M. संब्लीनः I. संछीनः Sây. संलीनः Sây. and my coni. - १७ मा आकुरु Sây. against the accent. उदरेणायुध्यत्त° Sây. - १८ °जतऽइति M. जत-मिति C.B.I. - २२ इन्द्रज्येष्ठा दे° Sây. — अध्या° ७. ब्रा° १. क° १. अपाधस्ता Sây. अपादस्ता means either: *the archer Apâd*, or: *an insidiator* from the root दसु उपक्षये धा° २६.१०४. - ३ द्वितीयोऽवतीति M. apogr. ऽयती° is my coni. १० °खा भवत्य° M. - ५.१३ निदग्धं Sây. - १८ अधस्ताक्ष° Sây. - ३.१० °मया-लाग्नि° Sây. - ११ सस्रे Sây. आपदीति M. apogr. अपदिति Sây. - २१ °रुद्रेण प-शू° Sây. - ४.१२ प्रजह्रीत Harisv. — अध्या° ८. ब्रा° १. कं° १. अवनेन्यमु° Har. ७ चकार M. चचार I.B. पिव्द्माना Har. - ९ याममुया M. apogr. यामु मया coni. - २५ °त्येवोपह्वयेतोपह्वतेडोपह्वतेडेति वे°? coni. - २.५ ससृवान् Har. ३.२१ ह्रोतृह्कलामा° M. ह्रोत्रे दकलामा° I. ह्रोत्रेऽह्व° coni. see ७.१.११. - २२ ने न त्व° M. नेत्व° I. C. नेत्व° coni. see Benfey p. XLVII. - २६ यत्तो ह्वोवं M. apogr. - २७ तत्सादयति coni. — अध्या° ९. ब्रा° १. क° १ सूक्तानि तदाह् Har.? २ ह्युक्का M. apogr. ह्युक्ता coni. - ४ दिवस्पथिव्योरि° M against पा° ६.२.१४२. दिव° coni. - ५ शंघवी M on both times. शंगवी I. C. नाह् Harisv. - २.२० ऽध-वित्यशी° M. against the rule. - ३.११ जयं जयति the mspts. see ६.१.११. -

prima manu. °रतः संमा° B sec. manu. C. M. See प्रा° ८. ५. ३३. - ११ द्वन्द्व-दिति Sây. - २० °दाय प्राकुर्वन्ति M. °दाकुर्वन्ति coni. त्वर्वा नात्येति M apogr. - २५ रसस्यो वैव I. B prima m. - २. ७ °भृति चतुर्थुत्रागाम् coni. - ३. ३ प्रगाहंति M. B. C. °हृति I. - ११ पूर्वार्धी वै M apogr. - ५. १२ स न Sây. against the accent, for the mspts have कैव, not कैव; सते is Datif Part. Praes. — अध्या° ४. ब्रा°. १. क° १०. विद्य्य° M. माधव° Sây. - १३ निर्वेद M apogr. - १४ नदा-नीरित्युत्तरेनं निर्धारयति Sây.! - २१ त्रिगाछसति M apogr. °धामानि Sây. - २५ °तिर्व्वृणा° M. B. C sec. manu. = घृ? - २१ इड° M apogr. ईडन्य° Sây. see ४. ३. ५. - ३३ तृच° Sây. त्रिच° MBC. - ३५ मुक्रतुर्ग° BC. M sec. m. मुक्रतुर्ग° M prima m. - ३१ °न्धिढुं instead of °न्धिट्ठुं see ४. ३. १८. - २. १७ °नुच्या C. B. and Sây. - ३. १६ °मुगश्च° M. °मुयश्च° I. B. C. घ is my coniecture. - १८ उघ्नाय M. B. C. and Sây. उभ्नाय I. उद्घ्माय is my coniecture. द्घ is very often given in the mspts by घ्र: see Benfey p. XLVII. - ४. १३ °णोति and ५. १२ °ढि in all the manuscripts: see Benfey p. XXXIV. - ५. ११ the accent allows to consider प्रतिप्रश्नं either as a bahuvrîhi, or as an avyayîbhâva: the latter menning is understood by Sâyana. - १३ वा यस्मिन्वा in all the mspts. Sâyana seems to read वान्यस्मि-ं I. — अध्या° ५. ब्रा° १. क° ६. and २६ अनुध्या C. and Sây. - २० क्लोत्रवर्ये I. - २५ उदोषिष्टं has lost the augment after मा, else it should be read उदौषिष्टं. - २. १ वेव° M. B. C. क्लैत्र° Sây. - १२ °ग्रात्स वषट्कारेणा° Sây. - ३. ६ वै संक्रा° M apogr. संगतयोः Sây. - ११. Sây. reads नुष्ठकं. - १७ मित्र आग° Sây. — अध्या° ६. ब्रा° १. क° १. अत्तर्यात I. - ३ इन्वतो M. B. C. - ११ जयं जयति M. B. C. The final न is changed very

often in the manuscripts into Anusvâra: see Benfey p. XXXVII. XXXVIII. वेद् M. °घ्यथा यथास्य M. apogr. - २१ सतः is Gen. Part. praes., Sây. reads सद्ः. - ৮. २ यग्यमास M. C prima manu. ज्ञ्यमास C sec. m. B. I. - ४ सस-र्प्यैवा° M. सर्प्यै B. C. समर्थे I. The mspts use to have र्कृ. र्त. र्प्य instead of र्क. र्त. र्प. - तमसृजन्त M. apogr. तम° is my coniecture. - ३. ६ द्नायुः Sây. - १६ संव्लीनः M. संब्लीनः I. संह्लीनः Sây. संलीनः Sây. and my coni. - १७ मा आकुरु Sây. against the accent. उद्रेणायुध्यत्त° Sây. - १८ °ज्ञतऽइति M. ज्ञत-मिति C. B. I. - २२ इन्द्रस्येष्टा दे° Sây. — अध्या° ७. ब्रा° १. क° १. अपाधस्ता Sây. अपादस्ता means either: *the archer Apâd*, or: *an insidiator* from the root दसु उपक्षये धा° २६. १०४. - ३ द्वितीयोऽवतीति M. apogr. ऽयती° is my coni. - १० °खा भवत्य° M. - २. १३ निदग्धं Sây. - १८ अधस्ताद्य° Sây. - ३. १० °मया-लाग्नि° Sây. - ११ सस्रि Sây. आपदीति M. apogr. अपदिति Sây. - २१ °द्रुद्रेणा प-शू° Sây. - ४. १२ प्रजह्लीत Harisv. — अध्या° ८. ब्रा° १. क° १. अवनेह्यमु° Har. - ७ चकार् M. चचार् I. B. पिव्द्मानां Har. - ६ याममुया M. apogr. यामु मया coni. - २५ °त्येवोपह्वयेतोपह्लतेडोपह्लतेडेति वे°? coni. - २. ५ ससृवान् Har. - ३. २१ ह्लोतृह्ललामा° M. ह्लोत्रे दकलामा° I. ह्लोत्रेऽह्व° coni. see ७. १. ११. - २२ ने न व° M. नेव° I. C. नेत्व° coni. see Benfey p. XLVII. - २६ यतो ह्लेवं M. apogr. - २७ तत्सादयति coni. — अध्या° ६. ब्रा° १. क° १ सूक्तानि तदाह् Har.? - २ क्युक्ता M. apogr. क्युक्ता coni. - ४ दिवस्पथिव्योरि° M against पा° ६. २. १४२. दिव° coni. - ५ शंघवी M on both times. शंगवी I. C. नाह् Harisv. - २. २० °ध्य-वित्यशी° M. against the rule. - ३. ११ ज्ञयं ज्ञयति the mspts. see ६. १. १६. -

१६ वाव see शान्तनाचार्य° ४.१४ वावादीनामुभावनुदात्तौ. Boehtlingk »über den Accent im Sanscrit §. 2« reads erroneously वाचा. —

*Read:* पत्र १. पङ्क्ति १३ °मानुष-इव. २. १४ यज्ञमेवै°. २० ऽइति. २२ तन. ३. १५ °लानि च. ४. १ स्मऽर्षयो. १० एव गृ°. ११ °स्तादु°. १३ ऽएन°. १७ केनंम°. १८ नद्भ्याह्. २१ °ताद्व्रातमनसो. ६. ५ ऽ-इवै°. १६ ऽभिप्रमुञ्चात्र सर्वत इव. ७. २२ यज्ञः. ८. ८ ऽअस्ये. किं च. ९ [illegible]. ९. ६ °मेवैत°. १०. ३ °ना॰सं°. ५ यथंगनि. १० किं च. ११ °ष्क एव. २२ ऽउपालभतऽउपेव. १२. १ [illegible]. ४ °द्यमभ्यृ°. १४ साव इ°? १५ °ह्म्यया. १३. ७ °मेकं. १४. ३ ऽउभा°. ५ ज्ञायेत. १३ जागतिन्ति. १८ वा. २२ भैषी°? १५. १८ ऽउ. २२ देवाः. १६. ६ कृविर्कृविरेव. २०. २२ यज्ञम°. २१. १० °यँश्चन्द्र°. २२ °ज्जिरे. २२. १५ र्मिर्णि°. २७. २ and ४ °क्लैवं. ९. १०. १४ धृ°. १५ तु? २८. ४ °स्रा॰-. १६ न्वृषि°? २९. ४ स्यां. ३०. १०. १२. १३. १४. १९ °न्द्धे. ३१. १४ °त्र-मेवै°. २० °न्द्धे. ३२. २ °ब्रूह्तीत्येव. ३. ४. ६ °न्द्धे. ९ °भि संपा°. १५. १९ °चऽर्ते°. १८ °धेनीः. ३३. ४ वशः. ३४. २१ स्मैतां? ३७. ४ °वऽर्चा°. ३८. १८ °कृऽर्षि°. ४०. ४ प्र व इति. ४२. १६ युञ्जन्ति. ४४. १२ °त्रैव. ४६. २२ मोदोपिष्टं. ४७. १ मो-. ४९. ७ °इनयन्ये. २२ वै स क्राम°. ५०. १ °रामेव. २ कुर्यात् ।. ६. ७ यज्ञ-य°. ५१. २ °तु-ष्य°. °तु-वे°. २२ and ५२. १९ °क्षा-स्वा°. ५३. ७ °ना॰ हि. १० तन्मि°. १२ and १९ °स्न-प°. ५८. ११ वाभि सं°. ६०. १६ ये-यम°. ७०. ८ य एष. ७२. १० वै स. ७९. १६ इता°. ८५. १७ पन्नि°? ९०. १० °घस्स°. १४ °यसिता॰. ९४. ९ °दर्वाङ् क्रमेत. —

ओम् । स यद्वाऽइतश्चेतश्च सम्भरति । तत्सम्भाराणाꣳ सम्भारत्वं यत्र-यत्राग्ने-
र्यक्तं ततस्ततः सम्भरति तद्यशसैव त्वदेवैनमेतत्समर्धयति पशुभिरिव त्वन्मिथुने-
नेव त्वत्सम्भरन् ॥१॥ अथोल्लिखति । तद्यदेवास्यै पृथिव्याऽअभिष्ठितं वाभिष्ठ्यूतं
वा तदेवास्याऽएतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वाऽउल्लिखति ॥२॥
अथाद्भिरभ्युक्षति । एष वा अपाꣳ सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं
वाऽआपोऽन्नꣳ हि वाऽआपस्तस्माद्यदेमं लोकमाप आगच्छन्त्यथेहान्नाद्यं जायते
तदन्नाद्येनैवैनमेतत्समर्धयति ॥३॥ योषा वाऽआपः । वृषाग्निर्मिथुनेनैवैनमेतत्प्रज-
ननेन समर्धयत्यद्भिर्वाऽइदꣳ सर्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति ॥४॥
अथ हिरण्यꣳ सम्भरति । अग्निर्ह वाऽअपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः
सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्माद-
प्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किं चन करोत्यथ यशो
देवरेतसꣳ हि तद्यशसैवैनमेतत्समर्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धि-
रण्यꣳ सम्भरति ॥५॥ अथोषान्त्सम्भरति । असौ ह वै द्यौरस्यै पृथिव्याऽएतान्प-
शून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेव तत्पशुभिरेवैनमे-
तत्समर्धयति तेऽमुत आगता अस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं
मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्धयति तस्मादूषान्त्सम्भरति ॥६॥
अथाखुकरीषꣳ सम्भरति । आखवो ह वाऽअस्यै पृथिव्यै रसं विदुस्तस्मात्तेऽधो
ऽध इमां पृथिवीं चरन्तः पीविष्ठा अस्यै हि रसं विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं

विदुस्तत उत्किरन्ति तदस्या एवैनमेतत्पृथिव्यै रसेन समर्धयति तस्मादाखुकरीषꣳ सम्भरति पुरीष्य इति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवावरुद्ध्यै तस्मादाखुकरीषꣳ सम्भरति ॥७॥ अथ शर्कराः सम्भरति । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे सा हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं ताꣳ ह स्म वातः संवहति सोपैव देवाञ्जगामोपासुरान्त्सा यत्र देवानुपजगाम ॥८॥ तद्धोचुः । हन्तेमां प्रतिष्ठां दृꣳहामहै तस्यां ध्रुवायामशिथिलायामग्नी आदधामहै ततोऽस्यै सपत्नान्निर्भक्ष्याम इति ॥९॥ तद्यथा शङ्कुभिश्चर्म विहन्यात् । एवमिमां प्रतिष्ठाꣳ पर्यबृꣳहन्त्सेयं ध्रुवाशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नी आदधत ततोऽस्यै सपत्नान्निरभजन् ॥१०॥ तथोऽएवैष एतत् । इमां प्रतिष्ठाꣳ शर्कराभिः परिबृꣳहति तस्यां ध्रुवायामशिथिलायामग्नी आधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्कराः सम्भरति ॥११॥ तान्वा एतान् । पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्य ॥१२॥ तदाहुः । षड्वाऽऋतवः संवत्सरस्येति न्यूनमु तर्हि मिथुनं प्रजननं क्रियते न्यूनाद्वाऽइमाः प्रजाः प्रजायन्ते तच्छ्रेयसमुत्तरावत्तस्मात्पञ्च भवन्ति यदु षड्वाऽऋतवः संवत्सरस्येत्यग्निरेवैतेषाꣳ षष्ठस्तथोऽएवैतदन्यूनं भवति ॥१३॥ तदाहुः । नैवैकं चन सम्भारꣳ सम्भरेदित्यस्यां वाऽएते सर्वे पृथिव्यां भवन्ति स यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति तस्मान्नैवैकं चन सम्भारꣳ सम्भरेदिति तदु सम्भरेव भरेद्यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतिर्भवति तदु भवति तस्मादु सम्भरेव भरेत् ॥१४॥ ब्राह्मणम् ॥१॥

कृत्तिकास्वग्नीऽआदधीत । एता वाऽअग्निनक्षत्रं यत्कृत्तिकास्तद्धि सलोमं यो अग्निनक्षत्रेऽग्नी आदधाति तस्मात्कृत्तिकास्वादधीत ॥१॥ एकं द्वे त्रीणि । चत्वारीति वाऽअन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति

तस्मात्कृत्तिकास्वादधीत ॥२॥ एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वाऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात्कृत्तिकास्वादधीत ॥३॥ अथ यस्मान्न कृत्तिकास्वादधीत । ऽऋक्षाणाᳯं ह वाऽएता अग्रे पत्न्य आसुः सप्तऽर्षीनु ह स्म वै पुरऽर्क्षा इत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तराहि सप्तऽर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृध्याऽइति तस्मान्न कृत्तिकास्वादधीत ॥४॥ तद्वेव दधीत । अग्निर्वाऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादिव दधीत ॥५॥ रोहिण्यामग्नीऽआदधीत । रोहिण्याᳯं ह वै प्रजापतिः प्रजाकामोऽग्नीऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्धि रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान्रोहिण्यामाधत्ते ॥६॥ रोहिण्यामु ह वै पशवः । अग्नीऽआदधिरे मनुष्याणां कामᳯं रोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहᳯंस्तमु हैव पशुषु कामᳯं रोहति य एवं विद्वान्रोहिण्यामाधत्ते ॥७॥ मृगशीर्षेऽग्नीऽआदधीत । एतद्वै प्रजापतेः शिरो यन्मृगशीर्षᳯं श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः श्रियᳯं ह गच्छति य एवं विद्वान्मृगशीर्षेऽआधत्ते ॥८॥ अथ यस्मान्न मृगशीर्षेऽआदधीत । प्रजापतेर्वाऽएतच्छरीरं यत्र वाऽएनं तदविध्यंस्तदिषुणा त्रिकाण्डेनेत्याहुः स एतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्यं तस्मान्न मृगशीर्षेऽआदधीत ॥९॥ तद्वेव दधीत । न वाऽएतस्य देवस्य वास्तु नायज्ञियं न शरीरमस्ति यत्प्रजापतेस्तस्मादिव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति ॥१०॥ फल्गुनीष्वग्नीऽआदधीत । एता वाऽइन्द्रनक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति को ह्येतस्यार्हति गुह्यं नाम ग्र-

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनोऽएव व्यजयन्त येयमेषां विजितिस्ता-
मथ यान्येवैषां तस्मिन्त्संग्रामेऽउपैव आर्छंस्तानि तैरेव शल्यानि निरहरंस्तान्यन्वहरन्
यत्त्र्यम्बकैरयजन्त ॥१॥ अथ यदेष एतैर्यजते । नेद्ध न्वेवैतस्य तथा कं चनापु-
र्ह्वतीति देवा अकुर्वन्निति न्वेवैष एतत्करोति याश्च न्वेवास्य प्रजा जाता याश्चा-
जातास्ता उभयी रुद्रियात्प्रमुञ्चति ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते
तस्माद्वाऽएष एतैर्यजते ॥२॥ ते वै रौद्रा भवन्ति । रुद्रस्य ह्येतास्तस्माद्रौद्रा भव-
न्त्येककपाला भवन्त्येकदेवत्या असन्निति तस्मादेककपाला भवन्ति ॥३॥ ते वै
प्रतिपुरुषं । यावन्तो गृह्याः स्युस्तावन्त एकेनातिरिक्ता भवन्ति तत्प्रतिपुरुषमे-
वैतदेकैकेन या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येकेनातिरिक्ता भवन्ति तथा
एवास्य प्रजा अजातास्ता रुद्रियात्प्रमुञ्चति तस्मादेकेनातिरिक्ता भवन्ति ॥४॥ स
जघनेन गार्हपत्यं । यज्ञोपवीती भूत्वोदङ्ङासीन एतान्गृह्णाति स तत एवोपात्या-
योदङ्ङ्तिष्ठन्नवहन्त्युदीच्यौ दृषदुपलेऽउपदधात्युत्तरार्धे गार्हपत्यस्य कपालान्युपदधा-
ति तद्यदेव तामुत्तरां दिशꣳ सचन्तऽएषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दि-
शꣳ सचन्ते ॥५॥ ते वा अक्ताः स्युः । अक्तꣳ हि हविस्तऽउ वाऽअनक्ता एव
स्युरभिमानुको ह रुद्रः पशून्त्स्याद्यदञ्ज्यात्तस्मादनक्ता एव स्युः ॥६॥ तान्त्सर्वान्पा-
त्र्याꣳ समुद्वास्य । अन्वाहार्यपचनादुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य
देवस्य दिक् पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वाऽअस्य
जाधितं प्रज्ञातमवसानं यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति ॥७॥ पलाशस्य पला-
शेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशं ब्रह्मणैवैतज्जुहोति स सर्वे-
षामेवावद्यत्येकस्यैकं नावद्यति य एषोऽतिरिक्तो भवति ॥८॥ स जुहोति । एष
ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहेत्यम्बिका ह वै नामास्य स्वसा
तयास्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्त्र्यम्बका नाम तथा अस्य

प्रजा ज्ञातास्ता रुद्रियात्प्रमुञ्चति ॥९॥ अथ य एष एकोऽतिरिक्तो भवति । तमाखूत्करऽउपकिरत्येष ते रुद्र भाग आखुस्ते पशुरिति तदस्माऽआखुमेव पशूनामनुदिशति तेनोऽइतरान्पशून्न हिनस्ति तद्यदुपकिरति तिर-इव वै गर्भास्तिर-इवैतद्यदुपकीर्णं तस्माद्वाऽउपकिरति तथा एवास्य प्रजा, अज्ञातास्ता रुद्रियात्प्रमुञ्चति ॥१०॥ अथ पुनरेत्य जपन्ति । अव रुद्रमदीमह्यव देवं त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजं सुखं मेषाय मेष्याऽइत्याशीरेवैषैतस्य कर्मणः ॥११॥ अथापसलवि त्रिः परियन्ति । सव्यानूरूनुपाघ्नानास्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादित्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशासते तदु ह्येव शमिव यो मृत्योर्मुच्याति नामृतात्तस्मादाह मत्योर्मुक्षीय मामृतादिति ॥१२॥ तदु हापि कुमार्यः परीयुः । भगस्य भजामहाऽइति या ह वै सा रुद्रस्य स्वसाम्बिका नाम सा ह वै भगस्येष्टे तस्माडु हापि कुमार्यः परीयुर्भगस्य भजामहाऽइति ॥१३॥ तासामुतासां मन्त्रोऽस्ति । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुत इति सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह मामुत इति ॥१४॥ अथ पुनः प्रसलवि त्रिः परियन्ति । दक्षिणानूरूनुपाघ्नाना एतेनैव मन्त्रेण तद्यत्पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न इदं कर्मानुसंतिष्ठाताऽइति तस्मात्पुनः प्रसलवि त्रिः परियन्ति ॥१५॥ अथैतान्यजमानोऽञ्जलौ समोप्य । ऊर्ध्वानुदस्यति यथा गौर्नोदङ्क्षुयात्तदात्मभ्य एवैतद्बल्यान्निर्मिमते तान्विलिप्सन्त उपस्पृशन्ति भेषजमेवैतत्कुर्वते तस्माद्विलिप्सन्त उपस्पृशन्ति ॥१६॥ तान्द्वयोर्मूतकयोरुपनह्य । वेणुयष्ट्यां वा कुपे वोभयत आबध्योदङ् परेत्य यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्तस्मिन्नासजत्येतत्ते

रुद्रावसं तेन परो मूजवतोऽतीहीत्यवसेन वा अध्वानं यन्ति तदेनꣳ सावसमेवान्ववार्जति यत्र-यत्रास्य चरणं तदनु ह वा अस्य परो मूजवद्भ्यश्चरणं तस्मादाह परो मूजवतोऽतीहीत्यवततधन्वा पिनाकावस इत्यहिꣳसन्नः शिवोऽतीहीत्येवैतदाह कृत्तिवासा इति निष्वापयत्येवैनमेतत्स्वपन्नु हि न कं चन हिनस्ति तस्मादाह कृत्तिवासा इति ॥१७॥ अथ दक्षिणान्बाहूननु पर्यावर्तन्ते । ते प्रतीतं पुनरायन्ति पुनरेत्याप उपस्पृशन्ति रुद्रियेणेव वा एतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयन्ते ॥१८॥ अथ केशश्मश्रू । समारोह्याग्नी उदवसायैतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत उत्सन्नयज्ञ इव वा एष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥१९॥ ब्राह्मणम् ॥३ [६.२.]॥ ॥

अक्षय्यꣳ ह वै सुकृतं चातुर्मास्ययाजिनो भवति । संवत्सरꣳ हि जयति तेनास्याक्षय्यं भवति तं वै त्रेधा विभज्य यजति त्रेधा विभज्य प्रजयति सर्वं वै संवत्सरः सर्वं वा अक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यनारु हैवैतद्धत्वा देवानप्येत्यक्षय्यमु वै देवानामेतेनो हैवास्याक्षय्यꣳ सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्मास्यैर्यजते ॥१॥ अथ शुनासीर्येण यजेत । या वै देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरꣳ सा या चैव देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन्कुरुते तस्माच्छुनासीर्येण यजते ॥२॥ तस्यावृत् । नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा एकꣳ समिष्टयजुः ॥३॥ अथैतान्येव पञ्च हवीꣳषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरभयतो वरुणपाशा-

त्प्रजाः प्रामुञ्चदेतैर्वै देवा वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथोऽए-
वैष एतैर्या चैव देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च सं-
वत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन्कुरुते तस्माद्वाऽएतानि
पञ्च हवीꣳषि भवन्ति ॥४॥ अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति ।
स बन्धुः शुनासीर्यस्य यं पूर्वमवोचाम ॥५॥ अथ वायव्यं पयो भवति । पयो ह
वै प्रजा जाता अभिसंजानते विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्यायाभिसंजा-
नान्ताऽइति तस्मात्पयो भवति ॥६॥ तद्यद्वायव्यं भवति । अयं वै वायुर्योऽयं प-
वतऽएष वाऽइदꣳ सर्वं प्याययति यदिदं किं च वर्षति वृष्टादोषधयो जायन्त
ऽओषधीर्जग्ध्वापः पीत्वा तत एतदद्भ्योऽधि पयः सम्भवत्येष हि वाऽएतज्जनयति
तस्माद्वायव्यं भवति ॥७॥ अथ सौर्य एककपालः पुरोडाशो भवति । एष वै सूर्यो
य एष तपत्येष वाऽइदꣳ सर्वमभिगोपायति साधुना त्वदसाधुना त्वदेष इदꣳ सर्वं
विदधाति साधौ त्वदसाधौ त्वदेष मा विजिग्यानं प्रीतः साधुना त्वदभिगोपायत्सा-
धौ त्वद्विदधदिति तस्मात्सौर्य एककपालः पुरोडाशो भवति ॥८॥ तस्याश्वः श्वेतो
दक्षिणा । तदेतस्य रूपं क्रियते य एष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव
श्वेतः स्यात्तदेतस्य रूपं क्रियते य एष तपति ॥९॥ स यत्रैव साकमेधैर्यजते । त-
च्छुनासीर्येण यजेत यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति तस्माद्यदेव
कदा चैतेन यजेत ॥१०॥ तद्धैके । रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्य-
ददः पुरस्तात्फाल्गुन्यै पौर्णमास्याऽउदृष्टं तच्छुनासीर्येण यजेत ॥११॥ अथ दीक्षेत ।
तं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्पुनःप्रयोगरूप-इव ह स यदेन-
मनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्तस्मादेनं नानीजानं पुनः फाल्गुनी
पौर्णमास्यभिपर्येयादिति नूत्सृजमानस्य ॥१२॥ अथ पुनः प्रयुञ्जानस्य । पूर्वेद्युः फा-
ल्गुन्यै पौर्णमास्यै शुनासीर्येण यजेताथ प्रातर्वैश्वदेवेनाथ पौर्णमासेनैतदु पुनः प्र-

युञ्जानस्य ॥ १३ ॥ अथातः । परिवर्तनस्यैव सर्वतोमुखो वाऽअग्निरादित्य इव वा ऽइदꣳ सर्वं निर्धयति यदिदं किं च शुष्यति तेनैष सर्वतोमुखस्तेनान्नादः ॥ १४ ॥ सर्वतोमुखोऽयमग्निः । यतो ह्येव कुतश्चाग्निमभ्यादधाति तत एव प्रदहति तेनैष सर्वतोमुखस्तेनान्नादः ॥ १५ ॥ अथायमन्यतोमुखः पुरुषः । स इतः सर्वतोमुखो भवति यत्परिवर्तयते स एवमेवान्नादो भवति यथैवाग्निर्य एवं विद्वान्परिवर्तयते तस्माद्ध परिवर्तयेत ॥ १६ ॥ तदु होवाचासुरिः । किं नु तत्र मुखस्य यद्यपि सर्वाण्येव लोमानि वपेत यद्धि त्रिः संवत्सरस्य यजते तेनैव सर्वतोमुखस्तेनान्नादस्तस्मान्नाद्रियेत परिवर्तयितुमिति ॥ १७ ॥ ब्राह्मणम् ॥ ४ [६. ३.] ॥ ॥

तद्यदाहुः । साकमेधैर्वै देवा वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां विजितिस्तामिति सर्वैर्ह त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन्त्सर्वैर्वेव व्यजयन्त येयमेषां विजितिस्ताम् ॥ १ ॥ ते होचुः । केन राज्ञा केनानीकेन यास्याम इति स हाग्निरुवाच मया राज्ञा मयानीकेनेति तेऽग्निना राज्ञाग्निनानीकेन चतुरो मासः प्राजयंस्तान्ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन् ॥ २ ॥ ते होचुः । केनैव राज्ञा केनानीकेन यास्याम इति स ह वरुण उवाच मया राज्ञा मयानीकेनेति ते वरुणेनैव राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ३ ॥ ते होचुः । केनैव राज्ञा केनानीकेन यास्याम इति स हेन्द्र उवाच मया राज्ञा मयानीकेनेति तऽइन्द्रेणैव राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ४ ॥ स यद्वैश्वदेवेन यजते । अग्निनैव तद्राज्ञाग्निनानीकेन चतुरो मासः प्रजयति तच्छ्येनी शलली भवति लोहः क्षुरः सा या श्येनी शलली सा त्रय्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्म लोहित-इव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ५ ॥ अथ यद्वरुणप्रघासैर्यजते । वरुणेनैवैतद्रा-

ज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्रजयति तच्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥६॥ अथ यत्साकमेधैर्यजते । इन्द्रेणैवैतद्ब्रह्मणेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति तच्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥७॥ स यद्वैश्वदेवेन यजते । अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यꣳ सलोकतां जयत्यथ यद्वरुणप्रघासैर्यजते वरुण एव तर्हि भवति वरुणस्यैव सायुज्यꣳ सलोकतां जयत्यथ यत्साकमेधैर्यजतेऽइन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्यꣳ सलोकतां जयति ॥८॥ स यस्मिन्नृतावमुं लोकमेति । स एनमृतुः परस्माऽऋतवे प्रयच्छति पर उ परस्माऽऋतवे प्रयच्छति स परममेव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी तदाहुर्न चातुर्मास्ययाजिनमनुविन्दन्ति परमꣳ ह्येव खलु स स्थानं परमां गतिं गच्छतीति ॥९॥ ब्राह्मणम् ॥५[६.४.]॥ पञ्चमः प्रपाठकः ॥ कण्डिकासंख्या १०४ ॥ षष्ठोऽध्यायः [१५.] ॥ अस्मिन्काण्डे कण्डिकासंख्या ५४९ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे एकपादिकानाम द्वितीयं काण्डं समाप्तम् ॥२॥

## EXTRACTS MADE FROM THE COMMENTARY OF SÂYAṆÂCÂRYA.

आद्ये काण्डे प्रपञ्चेन पौर्णमासेष्टिरीरिता । सा सम्पूर्णोपदेशत्वादन्यासां प्रकृतिर्मता ॥ पवमानेष्ट्यादिकानां द्वितीये त्वग्निसिद्धये । आधानं पवमानेष्टिरग्निहोत्रमुपस्थितिः । चातुर्मास्यादिकः सर्वो हविर्यज्ञोऽत्र वर्ण्यते ॥ तत्र तावत्सर्वेष्टिप्रकृतित्वेन प्राक् प्रतिपादिताया दर्शपूर्णमासेष्टेर्विधास्यमानानामग्निहोत्रादिकर्मणां च त्रेताग्निसाध्यत्वात्तद्धेतुभूतमाधानं प्रतिपाद्यते । तत्र चोदकहिरण्यादिसम्भाराणां पञ्चानां सम्भरणं विधित्सुः सम्भारनामनिर्वचनं करोति स यद्वाऽइति । यस्मिन्यस्मिन्पदार्थेऽग्नेः सम्बन्धि तेजो न्यक्तं निलीनं भवति तस्मात्सर्वस्मादपि सम्भरणं कार्यमित्यर्थः ॥१॥ यस्मादाग्नेयं हिरण्यं तस्मादेनेन दत्तान्न (?? तस्माद्धैनं न दत्ता दत्तां Cod.) धावयेत् तथा यदन्यत्किमपि यात्यिहीतं (?) कर्म तदपि तेन न कुर्यात् ॥५॥ ऊषरमिति ऊषसुषिमुष्कमधो र इति [पा° ५. २. १०७.] मत्वर्थीयो रः । अमुतोऽमुष्माद्

मुलीकात् ॥६॥ आखुभिः खननेन बिलादुत्किरणीताः पांसवः आखुकरीषम् । पुरीषकरीषश-ब्दावत्र समानार्थावित्यर्थः अतः करीषसम्बन्धादग्निः श्रियं प्राप्नोति ॥७॥ मृत्तिकामिश्राः सूक्ष्मपाषाणाः शर्कराः । अलेलायत् चाञ्चल्यं प्राप्नोति ॥८॥ निर्भक्त्यांशा निर्भक्ताभागादितमान्क-र्याम ॥९॥ एवमिमां पृथिवीं शर्कराभिः पर्यवृंहन् एवं पतितः शर्कराभ्यावपनेन दृढीकरणम् ॥१०॥ तर्हि तथा सत्यृतुषट्के मिथुनत्रयमस्ति. षट्कं तु तन्मिथुनत्रयमेकेन न्यूनं भव-ति तथाप्रजननसाधनम् अत्र लोकप्रसिद्धिमाह न्यूनादिति स्त्रीपुंसयोर्योगस्य पञ्चत्वे (?) सति तस्मान्न्यूनान्मिथुनात्स्त्रीपुंसलक्षणान्यपत्यानि जायन्ते यस्मादेवं लोके तस्मादस्य सम्भा-रसम्भरणेन यन्मिथुनस्य न्यूनत्वं तच्छ्रेयसं अः परिश्रमं (°स Cod.) श्रेयसो तत्पुरुष् च-सोऽवसोयःश्रेयस इति [पा° ५. ४. ८०.] अच् समासान्तः तथा उभयत्र उभयो भागामिन्यभि वृद्धिः (आगामिनाभि° Cod.) तयोपेतमित्यर्थः । एवमृतुना षट्केऽपि सम्भाराणां पञ्चसंख्या-कत्वमुपपाद्याथापि न्यूनत्वं नाम कश्चिन्मन्येतेत्याशङ्क्य (? कश्चिमन्ये इति त्याश° Cod.) परिहरति यदिति षड्तुत्वं संवत्सरस्य सांख्यास्ति तदभिमता (? °ख्यासितदभिमतानां Cod.) सम्भाराणामाधीयमानोऽग्निरेव षष्ठः षट्संख्यापूरकः ॥११॥१॥१॥

कर्मणः कालसापेक्षत्वादाधानस्य नक्षत्राणि (°क्षत्राणि Cod.) विधत्ते । अग्नी गार्हपत्या-हवनीयौ । सलोम सदृशं योग्यम् ॥१॥ कृत्तिकास्तु षट्संख्याकाधिष्ठानसंयोगात् भूयिष्ठा अन्त-तराः ॥३॥ पुर ऋक्षा (पुरर्क्षा Cod.) इति प्रकृतिभावो ह्रस्वश्च । व्याध्यैव चिरात्सरिकाः अ-भवन् । व्युद्धिमिव देशभेदोदयेन स्पष्टयति अमो होति अमी खलु सप्तर्षयः उत्तराहि इत्य-देशे उत्तरदिग्भागे उद्यन्ति एतास्तु कृत्तिकाः पुरः पूर्वस्यां दिशि अत एवालोकमात्रेभिन्नदेशा-त्रस्थानेन पुरुषसम्भोगविरहान्मिथुनव्यृद्धिः तत्रामनोऽचोनमित्याह अशमिश्च ह्येतदिति ॥४॥ उपस्तब्धाः प्रतिबद्धज्ञात्यो (°ज्ञवा° Cod.) विनाशरहिताः पुत्रपौत्रादिवंशोक्रमाः अवि-च्छिन्नप्रवाहाः तस्थुः स्थितवन्तः ताश्च रोहिण्यः स्वर्गादिलोकारोहणसाधना इति स्थिताः ॥५॥ पुरा खलु प्रजापतिः कृष्णमृगरूपमास्थाय मृगीभूतां (तास्त Cod.) स्वदुहितरमंतोपगामत् (? °गामाबापगामत् Cod.) एतद्दाऽऽइति एतज्ज्ञात्वा प्रजापतेरकार्यकारिणः शिरश्छेत्तुं देवाः कं-चित्क्रोधमयं पुरुषं निर्माय प्रत्यतिष्ठिपन् स चेषुणा तस्य शिरश्छिन्दन् गतवान् (?) इषु[:] शि-रश्चेत्येतदुभयमन्तरिक्षमुत्प्लुत्य नक्षत्रात्मनावस्थितं संदृश्यते (सद° Cod.) तथा चैतरेयके [३. ३३.] प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ (मभ्यिधौ Cod.) इत्युपक्रम्य सोऽपनेष्टृष्विका-ण्डेत्यनेनायमर्थः (सोपनोविष्व त्रि° Cod.) प्रतिपादितः ईदृशी मुत्यन्तप्रसिद्धिरत्र शेशब्देन प्रोच्यते ॥८॥ यस्मिन्समये एनं प्रजापतिं कृष्णमृगरूपं तमेन स्वदुहितृगमनरूपेण दोषेण हेतुना देवा अविध्यन् तदानीं पत्रदारुशल्यरूपावयवत्रयोपेतेनेषुणा खलु तच्छिरश्छिन्नमि-त्यान्द्रर्ब्रह्मवादिनः (? तस्थिरः शिरश्छिनत्ति निस्पात्याज्ञ° Cod.) स च प्रजापतिस्तदानीमे-तच्छरीरं त्यक्तवान् । वास्तु शून्यस्थानम् शरीरं विशरणशालम् ॥९॥ अर्जुन इति इन्द्रस्य रहस्यं नाम अत एव खलु तत्पुत्रे पाण्डवमध्यमे प्रवृत्तिः । पुरस्तात्करोतीति पूर्वस्मिन्नागा-मिनि काले (स्मिन्नोगामितिनि कालि Cod.) अग्निष्टोमादिलक्षणः क्रतुः शीघ्रं सिध्यतीत्यर्थः ॥११॥ अनुष्ठ्या अनुष्ठानेन समीचीनम् ॥१२॥ आरुक्षा चक्रुरिति आरोढुमिच्छां कृतवन्त इ-त्यर्थः । अमुमित्यदस्शब्देन परोक्षेण यो लोको निर्दिष्टस्तं विशिनष्टि दिवमंवेति । ततो

ऽनन्तरमसुराः रौहिणमित्येतन्नामकं रोहणस्य साधनमग्निं चिक्ये व्यत्ययेनैकवचनं चिक्यिरे चितवन्तः ॥१३॥ स इन्द्रो ब्राह्मणो भूत्वा (!) असुरहितं ब्रुवाण एव (!) एकामिष्टकां प्रवध्य गृहीत्वा ॥१४॥ आववर्ह उद्यथाम तस्मात्स्थानादचालयत् वृह्न उद्यमने । सोऽग्निर्व्यवत्ससाद (!) विशीर्णो बभूव । व्यवसेदुः (!) व्यावत्सन्ना (!) शिथिला बभूवुः ॥१६॥ (उपेत्सेत्) स्वीकुर्यात् ॥१७॥ तस्मादेव कारणात्सूर्यात्मकऽएव तेजस्विनि नक्षत्रे आधानं स्यात् । अनपराद्धं तेजोवियोगलक्षणापराधरहितम् ॥१९॥२॥१॥

अथाधानस्य वसन्ताद्यृतुविध्यर्थं (°न्ताव्वृ° Cod.) ऋत्वादीनां देवपित्रात्मना द्वेधा विभागमाह वसन्त इति ॥१॥ य एवमृतूनां देवत्वं पितृत्वं च विद्वांस्तानृतून् देवाः पितर इति ह्वयति व्यवहरेत् अस्याह्वातुः देवह्वयं देवाह्वानं प्रति देवा आगच्छन्ति आगताश्च ते स्वसम्बद्धे कर्मणि एनमवन्ति ॥२॥ स सूर्यः ॥३॥ एवमयनविशेषमृतुविशेषं चाभिधाय पश्चात्तं वक्तुं सर्वेषामप्यृतूनां पापसम्बन्धराहित्यमाह ते वाऽइति । न श्वःश्वमुपासीत श्वः करवाणीत्येवं कालान्तरप्रतीक्षां न कुर्यात् ॥९॥३॥१॥

अग्न्याधेयात्पूर्वस्मिन्नुपवसथदिवसे कर्तव्यं व्रतमुपदिशति यदिति । see १, १, १, ७. ८. ॥१॥ उपवसथदिवसस्य रात्रौ गार्हपत्यागारे कस्यचिदजस्य बन्धनं कार्यमित्येकेषां मतम् । अग्निना सह प्रजापतिमुखजातत्वादज आग्नेयः । तथा च का° ४, ८, १. २. ॥३॥ चातुष्प्राश्यं चतुर्भिरध्वर्युब्रह्मादिभिर्ऋत्विग्भिः प्राशितव्यम् । स्यन्द[प्र]स्रवणे ॥४॥ सर्पिरासिच्यतेऽस्मिन्निति सर्पिरासेचनं घृतधारणार्थमोदनं (वृत° Cod.) निम्नं कुर्वित्यर्थः । समिच्छब्दयुक्ताभिर्घृतशब्दयुक्ताभिश्चेत्यर्थः ताश्च का° उदाजहार [४.८.५.] । शमीगर्भो योऽश्वत्थस्तत्रस्थो योऽग्निः तमेतेनाश्वत्थसमिदाधानेन प्राप्नुम इति ब्रुवाणाः । तस्मात् समिदाधानार्थ एवौदनो, न प्राशनार्थ इति तत् प्राशनं नादरणीयम् ॥५॥ तस्यां रात्रौ यजमानस्य जागरणं विधत्तेऽथ जाग्रतीति व्यत्ययेन बहुवचनं जागर्तीत्यर्थः । सदेवतरः अतिशयेन देवसहितः ॥६॥ ब्राह्मणः सम्बन्धि यद्ब्रह्म तेनाधानं कार्यम् ॥१०॥ भूर्भुव इति द्वाभ्यामेव व्याहृतिभ्यां गार्हपत्यमादध्यात् तिसृभिरपि व्याहृतिभिर्गार्हपत्याधाने आहवनीयाधानस्य मन्त्रो न स्यात् अतः सुवरिति द्वे अक्षरे परिशेषयेत् । आहवनीयाधाने तिसृणां व्याहृतीनां विनियोगमाह सर्वैरिति ॥१४॥ अग्निमन्थनसमये तस्य पुरस्तादश्वस्याधारणं विधित्सुरितिहासं दर्शयति देवानिति ॥१५॥ पूर्वे वयसि वहतीति पूर्ववाट् [पूर्ववयस्कः] ॥१७॥ आहवनीयदेशं प्रत्यग्नेर्हरणसमये ऽश्वस्यापि पुरस्तान्नयनं विधत्ते तमिति ॥१८॥ हरणे विशेषमाह तमिति यथैनं यजमानमेषोऽग्निः प्रत्यङ् उपाचरेत् अभिमुखमुपावर्तेत तमग्निं तथैव हरेयुः आहवनीयायतनस्य पूर्वभागं प्रापयेयुरित्यर्थः । सोऽग्निर्यस्माद्यजमानात्पराङ्मुखो भवति तर्ह्यस्माद्यज्ञोऽपि पराङ्मुख एव भवति　तत्र तथा सति यः कश्चिद्द्वेष्य एनं यजमानमनु व्याहरेत् किमिति यज्ञोऽस्मात्पराङ्भूदिति स यजमानस्तथैव भवितुमीश्वरः स्यात् ॥१९॥ एवमग्नेर्हरणप्रकारं प्रतिपाद्यानन्तरकर्तव्यतामाहाथेति आहवनीयायतने सम्भारान्निधाय दक्षिणपूर्वपादेनाश्वमाक्रमयति । आवर्तयति आवृत्य स्थापयति । see का° ४. ९. १४. ॥२३॥ आहृतस्याग्नेराधानं विधत्ते तमिति आहवनीयायतने यदश्वस्य पदं तस्मिंस्तमग्निं मन्त्रेण स्थापयति ॥२४॥ अग्रे प्रथममश्वस्य पदमग्निना तूष्णीमुपस्पृशति तमग्निमुद्यम्य पुनरप्युपस्पृशति एवं द्विरुपस्पृश्य तृतीयेनापस्पर्श-

नेन व्याहृतिभिस्तमग्निं तस्मिन्पदे स्थापयति । एतत्पत्न्या[illegible] विधानम् ॥[illegible]॥ यस्तु भूम्यां प्रतिष्ठाय भारमुत्क्षिपति स भारं वोढुं शक्नोति [illegible] ॥२६॥ आसुरिप्रभृतयस्त्रयो मुनयस्तदेतत् उपस्पृश्य[illegible] पश्चाद्भूतमिव दध्रिरे अधारयन् एतावता को दोष इति [illegible] व्यतिरिक्तं सर्वमायतनस्थं सम्भारादिकमियन्तितमियत्तया [illegible] भवति अतो ऽग्निमुखस्य प्रथमेनैवोद्यमनेन व्याहृतिभिराधानात् तथा [illegible] भवति उक्तानां पक्षाणामिच्छया विकल्पमाह यतमथेति [illegible] [का° ४. १. १६.] ॥२७॥ आहितस्याग्नेः पूर्वभागस्थमुल्मुकमन्वारभ्य [illegible] । आशीः फलप्रार्थनमेव ॥२८॥ सर्पणशीलानां प्राणिनां राज्ञी सर्पराज्ञी [illegible] भिर्ऋग्भिः । तत्सर्वमाप्यते सर्पराज्ञ्याः सर्वाधिष्ठानभूतत्वात् अत एव [illegible] म्नातम् इयं वै सर्पराज्ञी देवा वै सर्पाः तेषामियं राज्ञीति ॥[illegible]॥

आदित आरभ्यैतावत्पर्यन्तं तात्पर्यार्थाभिधानविनियोगादिप्रदर्शनपुरःसरं व्याख्यानं कृतम् तत्राध्यायगतानि (? तना° Cod.) यानि वाक्यानि तानि [illegible] (?) [illegible] योजयितुं शक्यानीति ग्रन्थविस्तरभयात्केवलं प्रकृतार्थकथनं [illegible] न क्रियते । एवं गार्हपत्याद्यग्निषु स्वरूपेण सिद्धेषु (°पाणा सतेषु Cod.) क्षुधितस्याग्नेः शमनाय पूर्णाहुतिं विधत्ते ऽउद्धृत्येति ॥१॥ शश्वत् ध्रुवम् ॥२॥ मनसेति तेन स्वाहाकारमात्रेण [illegible] ति यामिति पुरा खलु प्रजापतिः पश्वादिसर्वजगत्सर्जनहेतुभूतां (पुराश्वादि° Cod.) प्रथमामाहुतिं स्वाहाकारेणैवाजुहोत् एषापि पूर्णाहुतिः तथा क्रियमाणा (°णा Cod.) [निदानेन] निदानभूतेन कारणेन सो स्वित् सैव प्रजापतिना हुता प्रथमाहुतिः [illegible] ॥३॥ यद्वद्यः प्राणान्नवीर्यधारणं पूर्णाहुत्याग्नौ क्रियते एतत्परो ऽक्षमिव पवमानादिभिस्तत [illegible] प्रत्यक्षत एव क्रियते पवमानपावकशुचिशब्दैः प्राणान्नवीर्याणां प्रतिपादनात् [illegible] इष्टयो नियमेन कर्तव्याः ॥१॥ तदेतत्सर्वं पूर्णाहुतिपक्षे सत् [illegible] भवति अतो नासौ पक्षो युक्त इत्यर्थः न केवलमेतावदिष्टीनां (°ष्टं° Cod.) प्रयोजनं (°यो-जन Cod.) अपि तु मनुष्यैराधीयमानस्याग्नेः कार्त्स्न्यमप्याभिः (°प्याभिः Cod.) [illegible] त्याख्यायिकापुरःसरमाहाग्निरिति । अभ्युपावृतम् अभ्युपागमम् [illegible] ॥१३॥ अग्निर्हि मनुष्यान्प्रत्यागमनसमये पवमानपावकशुच्याख्यास्तिस्र आत्मीयास्तनूः पृथिव्यन्तरिक्षद्युलोकेषु यथाक्रमं निधाय न सर्वेण कृत्स्नेनैवात्मना [illegible] भिलक्ष्य (?° लक्ष्वा तु Cod.) उपावृतत् उपागमदितीममर्थमृषयो ऽबुध्यन्त तस्मात् [illegible] कार्त्स्न्यसम्पादनाय पवमानहवींषि निरवपन्नित्यर्थः ॥१४॥ [illegible] । अत एते उभे अप्येनां पृथिवीं प्रति उद्यामिनी स्तां बाधितुमुद्युक्ते भवेतां (भवेत । Cod.) अतः प्रथमं हविः पृथक्तन्त्रं कार्यमुत्तरे समानतन्त्रे कार्ये ॥१६॥ यामान्तरेष्टौ हि पुरो ऽनुवाक्या गायत्री याज्या त्रिष्टुप् अत्र तु पुरो ऽनुवाक्यायाज्याः सर्वा गायत्र्यः कर्तव्याः ॥१७॥ पृथिव्यन्तरिक्षद्युलोकात्मकानि पवमानहवींषि क्रमेण निर्वपंस्तद्द्वारा (°मेणाग्निर्व° Cod.) इमानेव पृथिव्यादिलोकान्सोपानक्रमेण सम्यगारोहन्नस्माल्लोकात्प्रच्यवते अतस्तत्परिहारायादित्येष्टिः कर्तव्येत्यर्थः ॥१८॥ विराजौ संयाज्ये ऽइति प्रेद्धो ऽअग्ने [१७. ७६.] इमा अग्न (?) ऽइत्येते स्विष्टकृतो या-

ऽयानुवाक्ये स्यातामित्यर्थः । विराजाविन्त्वेवेति तुशब्देन त्रिष्टुब्जगतीपक्षौ व्यावर्त्येते ॥२०॥ एतन्त्वेकमयनमिति पवमानेष्टिं यजतामेतदेकमनुष्ठानस्य विधानम् ॥२१॥ आग्नेयमेवेति न तु पवमानादिविशेषणमादरणीयमित्येवकारार्थः । पवमानादिविशेषणैर्विशेष्यमाणोऽग्निः तत्र वैशिष्ट्यद्वारा परोक्षत्वमापद्यते अतस्तत्परिहारेण अञ्जसा ऋजुनैव मार्गेण केवलाग्नये निर्वपन् तं प्रत्यक्षत एव स्वीकरोति ॥२२॥१॥२॥॥

षड्द्वादशादिदक्षिणा आधानस्य विधास्यन् तन्नामनिर्वक्तुं प्रस्तौति घ्नन्तीति ॥१॥ न दक्षे फलं जनयितुं न शशाक ॥२॥ एष मात्रेति एतद्दक्षिणानां परिमाणम् इतोऽधिकमपि यथाविभवमिच्छानुसारेण देयमिति विधत्ते दद्यात्त्वेवेति ॥५॥ सम्प्रापिप्रन् सम्यक् प्रापितवन्तः ॥७॥ आधानस्य भ्रातृव्यजयहेतुत्वं वक्तुमाख्यायिकामाह देवा इति । एषां देवानां मध्ये यमेवासुरा घ्नन्ति तत् तत्र स स्म (? मूर्व Cod.) हत एव भवति ॥८॥ नन्वग्निर्गार्हपत्यायातने (न वग्नि° Cod.) बहिराधीयते (? लार्हिवाधी° Cod.) कथं तस्यान्तर्धारणमिति तत्राह तदिति अभिप्राणितीति मन्थनाज्जातं तमग्निमभ्युपरि प्राणनं करोति स पुनरपानितीति अग्नेर्ह (? अग्नेहा Cod.) परिश्वासमुत्सृज्य तमेव श्वासं पुनरन्तरनयत् तेन सार्धमग्निरपि अन्तः प्रविशन् यजमानस्य हृदये आहितो भवति ॥१५॥ नियतस्य (? °तस्वा Cod.) बाह्यस्याग्नेरुद्दीपनं समिन्धनं विधत्ते तमिति उद्दीपनं काष्ठप्रक्षेपः समिन्धनं सम्यक् प्रज्वलनम् तदुभयमान्तराग्नौ दर्शयति इहेति इहास्मिन्बाह्येऽग्नौ यक्ष्ये यागं करिष्ये तत्फलं च सम्पादयिष्यामीति यौ मनोव्यापारौ संकल्पौ तेऽएवान्तराहितस्याग्नेरुद्दीपनसमिन्धने ॥१६॥ एवमन्तरग्निमादधानस्य (माब्दधानाथ Cod.) व्यवायादिदोषोऽपि नास्तीति प्रतिपादयत्यन्तरेणेति अग्नियजमानयोर्मध्ये देवदत्तादिरागतिनवव्यवायादिभिर्व्यवृतत् व्यावृत्तो विमुखो भूदिति यो दोषः सोऽप्यत्र नास्ति । एवं विदुषोऽन्यनुगमनशङ्कापि न कार्येत्याह तस्मादिति ॥१७॥ एतत्सत्यवदनस्याग्निसमिन्धनहेतुत्वमृषिवाक्यसम्बन्धेन द्रढयति तदिति । उपवेशो नाम कश्चित्तस्य पुत्रमरुणं तदीया ज्ञातय उक्तवन्तः हे अरुण स्थविरो वृद्धोऽसि अतः आमुष्मिकसिद्धये अग्न्याधानं कुर्विति ॥२०॥२॥२॥

अथ पुनराधेयं विधित्सुः स्वपक्षातिभूतमुक्तमग्न्याधेयं (स्वष° Cod.) प्रकृतिरूपार्थवादेन राज्ययशोहेतुत्वेन प्रशंसति वरुण इति ॥१॥ निधाने कारणानि वैकल्पिकानि त्रीण्युपन्यस्यति विजयं वेति । असुरानितुष (?) विजेतुमुपगमनसमये पूर्वसिद्धाग्न्याधानस्याथमग्निधानमित्येकः पक्षः (? पूर्वस्मिर्ज्रस्मधानस्याक्षमार्थानधा° Cod.) । कामचारस्य कामाय यथेष्टं (थक्के Cod.) क्रीडितुं संचरणस्य यः कामः तदर्थं वा तन्निधानमिति द्वितीयः । गृहऽएव स्थितानां नोऽस्माकं देवानां मध्ये अयमग्निर्गोपिष्ठो गोपायितृतमो रक्षणकुशलोऽस्मदीयं धनं गोपायत् रक्षितुं शक्नोतीत्यनेनाभिप्रायेण वा तन्निधानमिति तृतीयः पक्षः ॥२॥ ऋतून् न्यारादिः पर्वतमिव प्रविष्टवान् अन्तर्दधे । अप्यस्मदीयं स्थानं पुनरागच्छाम इत्यनेनाभिप्रायेण तं तिरोभूतमग्निमागच्छन् पूर्वं यस्मिन्स्थाने सोऽग्निः स्थितस्तत्र तमपश्यतां तेषां देवानां विहीनावस्थ्य प्राप ॥३॥ याबाङ्घा (!) यावत्प्रकारविशिष्टं (कावत्प्रकाराविं° Cod.) वाष्टं रूपमन्याः प्रजा उपतिष्ठन्ते तावत्यो जायन्तऽइत्यर्थः वीप्सा तु सर्वसंग्रहार्था ॥४॥ प्रथममाहितस्याग्नेर्विधानान्तरेण पुनस्तेष्वायतनेषु स्थापनं पुनराधेयम् । येयं ग्राम्यारण्योभयप्राप्तिः सा पु-

रमता परमवं सर्वोत्कृष्टता । किं च अग्नौ पुनराधेयं कर्तव्यं सर्वे रसाः स्पृहयन्ति प्राप्तिरूपं स्पृहेरीप्सितप्रमितिसम्प्रदानसंज्ञा (°तडमि° Cod.) । तथा ग्राममपि लोको लोकनीयमुत्कर्षं प्राप्य पुष्यति प्रवृद्धो भवति ॥५॥ यस्मै फलायादधीत एतत् उत्पादयितव्यं एतत् ॥६॥ यस्मादेवं वर्षऽर्तुः सर्वात्मकः तस्मात्समुदायात्मकं संवत्सरं वर्षशब्देन लोका व्यवहरन्तीति दर्शयति अथेति । ग्रीष्मशिशिरधर्मयोः प्रकाशशैत्ययोर्वर्षासु सद्भावात् पृथिव्याम (?) वर्षऽर्तोस्तावदुभयात्मकत्वम् ततः ग्रीष्मं वसन्तस्य वर्षासु शरदः शिशिरं हेमन्तस्य समानधर्मतयान्तर्भावात्सर्वऽर्तुरूपत्वं सिद्धम् ॥७॥ एवं प्रत्यक्षविषयं प्रकाशादिधर्मयोगेन सर्वर्तुत्वमभिधाय परोऽक्षधर्मवशादपि तत्प्रतिपादयति अथेति । इत्यादयो हि वसन्तादीनां परोऽक्षभूता धर्माः तेषां च वर्षासु सद्भावात्सर्वऽर्तुरूपतेत्यर्थः । यस्मादग्निः प्रागुक्तरीत्या ऋतुभ्यो निष्क्रम्यादित्ये वर्षास्वादधानस्तेभ्य एवऽर्तुभ्यः पुनरुत्पादयति ॥८॥ तत्र पुनराधानमहनि मध्यन्दिने कार्यमिति विधित्सुस्तदर्थमादित्यस्य सर्वऽर्तुरूपतामाह आदित्य इति ॥९॥ प्रकारान्तरेण तन्मध्यन्दिनाधानं प्रशंसति छाययेति । स च [पाप्मा] पुरुषरूपस्य पादयोरधस्तादिव दृश्यते प्रयौति इ गताविति धातुः (!) ॥१०॥ तस्य पुनराधित्सितस्याग्नेर्दर्भैरुद्धरणं कार्यं विधत्ते तमिति । आधानवत्पुनराधानेऽपि दारुभिरुद्धरणे दोषमाह दारुभिः पूर्वमिति उभयोरैक्यरूप्ये यातयामतादोषः स्यात् । आपो दर्भाः see १. १. ३. ५. ॥११॥ औदुम्बरयोर्गार्हपत्याहवनीयायतनयोर्निधानं विधत्तेऽर्कैति । अत एवार्का का° ४. ११. ६-८. ॥१२॥ पूर्वाभ्याम् पूर्वमाहितौ यौ गार्हपत्याहवनीयौ ताभ्याम् । रात्रिभिर्वेति अनुगतयो(:) रात्रिभिरिव व्यवधानात् नापूपव्यवधानेन प्रयोक्तव्यमित्यर्थः ॥१३॥ यदन्याधेय पवमानादिकार्यं (यवमानेविका° Cod.) तदाग्नेय एव [पञ्च]कपालः करोतीति न पृथक्ता कार्यमित्यभिप्रायः ॥१४॥ अस्यां पञ्चकपालेष्टौ आज्यभागादिः सर्वोऽपि यागोऽग्निदेवत्यः कार्यः ॥१५॥ अग्निष्कैवल्यम् इतरेभ्यो निष्कृष्य केवलं तदेकभागं कर्तुमिच्छति तेनाग्निं परोऽक्षमेव तत्प्रदीयते ॥१६॥ उत्तमं तृतीयम् ॥१७॥ प्रयाजादिषु सर्वाग्नेयकरणं (रूप° Cod.) प्रतिपादयति स इति । प्रथमप्रयाजे यत्समिधो यजेति प्राकृतं अन्धनं तदाग्नेयं रूपं समिन्धनप्रत्यभिज्ञानात् किं तु तत्परोऽक्षम् अतः समिध इत्येतस्य स्थाने अग्नीन्यजेत्येव ब्रूयात् ॥१८॥ प्रयाजयाज्यास्वपि क्रमेणाग्निविभक्तियोजनं प्रतिपादयति (? °जयत्सामिधायति Cod.) स इति । प्रकृतिषु याज्यासु आज्यशब्दात्पूर्वं यथाक्रममग्ने अग्निमग्निना अग्निरेतास्ताश्चो विभक्तीः सहिता (?) एताभिर्यजेदित्यर्थः । an explanation of वौकट् is not given: I conjecture it to be a transformation of वषट्, the अ being changed into औ (see १. ७. २. २१.), the ष into क, and the ट् (resp. त्) into ट (compare: साविषक instead of साविषत्) ॥१९॥ पञ्चमप्रयाजानुयाज्यायां विशेषमाहाग्नेति । प्रकृतिवत्प्रथमामाज्यभागदेवतां [सो]कोर्त्य द्वितीयाज्यभागदेवतायाः सोमस्य स्थानेऽग्निः पवमानोऽग्निरिन्दुमान्वा अध्वर्युप्रयोगानुसारेण विकल्पेन निर्देष्टव्य इत्यर्थः । स्वाहा देवा आज्यपानिति प्रयाजदेवतानिर्देशेऽपि (°प्रदेवतार्देवतानिदे° Cod.) स्वाहाग्नीनाज्यपानिति प्रयोक्तव्यम् ॥२०॥ प्रथमाज्यभागस्याग्निं स्तोमेन बोधयेति बुधिधातुयुक्तामनुवाक्यां (बुविधा° Cod.) दर्शयित्वा तस्याः पुनराधेयानुकल्पमाह स्वपितीति । समुदीर्ययति समुद्गमयति ॥२१॥ द्वितीयाज्यभागस्य प्रागुक्तपक्षादा-

हूर्याय (? °हूर्योय Cod.) याज्यानुवाक्ये दर्शयति अथेति । निगदसिद्धोऽर्थः ॥२२॥ एवमु सर्वमिति उक्तरीत्या प्रयाजानामाज्यभागयोः सोग्निसम्बन्धकरणात् (! °योश्वाग्नि° ?) तत्सर्वमाग्नेयं भवतीत्यर्थः ॥२३॥ अधुना स्विष्टकृतोऽप्यग्निसम्बन्ध इति (? °तो स्वग्निसंबंधस्वबंध इति Cod.) दर्शयति अथाहेति । प्रथमप्रयाजवत्प्रथमानुयाजेऽपि देवान्यजेत्यस्य स्थानेऽग्नीन्यजेत्यग्निविभक्तिः कार्या ॥२४॥ एवं प्रयाजानुयाजेषु प्रक्षिप्ताः (प्राक्षि° Cod.) सम्भूयानूद्य प्रशंसति ता वाऽइति ॥२६॥ तासां विभक्तीनामक्षरसंख्यामुपजीव्य प्रशंसति द्वादशेति । अग्नाउ इत्यत्रान्तिमाक्षरत्यागे सति द्वादशाक्षराणि भवन्ति तेन सह त्रयोदश भवन्तीत्यर्थः । न द्वे चनेति चनशब्दोऽप्यर्थे द्वेऽअपि वक्ष्यमाणे न सह प्रयुञ्जीत किमर्थम् अजामितायै जामितादोषराहित्याय व्यतिरेके तत्सद्भावमाह जामि हेति के पुनस्ते द्वेऽइति ते विभज्य दर्शयति व्यन्तु वेवित्यादिना ॥२७॥ वहेन स्कन्धेन see १. १. २. १. ॥२८॥३॥२॥

एवमाधानपुनराधाने विधाय तन्निष्पन्नानामग्नीनां फलवत्कर्मार्थत्वात्तत्साधनचतुष्टयजग्निहोत्राख्यं (°त्तत्साधंसानरतु° Cod.) कर्म विधित्सुस्तदर्थमाख्या[यिकामाह प्रजापतिरिति ॥१॥] काल्वालीकृतेति तर्हि तस्मिन्समये यदन्येव (?) पृथिवी बभूव ॥३॥ व्यात्तेन विवृतेन मुखेन । उदमृष्ट हस्ताभ्यां स्वाङ्गस्योन्मार्जनं कृतवान् । तस्मात् इदं चोभयमपि पाणितलमलोमकं रोमरहितं दृश्यते । उन्मार्जनेन तत्राज्ञतिं विवेद लेभे ॥४॥ तां चाज्ञतिं तस्मिन्नग्नौ व्यौक्षत् अत्यजत् इदमाज्ञतिद्रव्यमोषं पक्वं कृत्वा धय पिबेति एवमग्नौ प्रक्षिप्तात्तस्मादोषधयः पृथिव्यां समभवन् ॥५॥ एवमनयोरुत्पन्नयोः सतोः सोऽग्निरपि प्रजापतिसकाशात् भक्षणादुपरतः पराङ्मुखः सन्पर्यावृत्तो बभूव ॥६॥ अत्स्यतो भक्षणं करिष्यतः ॥७॥ होमद्रव्यस्य पयस उत्पत्तिं वक्ष्यन्गोरुत्पत्तिमाह तऽउ हेति । तस्य स्तोत्रदेशस्य यत्परिश्रयणं स समुद्रोऽभवत् यश्च स्ताव (!) स्तोत्रदेशः सा पृथिवी जातेत्यर्थः ॥११॥ पुनरागच्छाम इति स्तोत्रदेशात्प्रागुत्क्रम्य तस्मात्स्तोत्रात्सम्भूतां गां ते देवाः प्राप्नुवन् ॥१२॥ तासां गवां यज्ञस्य च साधारणमेकं नामोपदिश्य प्रशंसति तद्वाऽइति ॥१४॥ इमे यजमानाः नोऽस्माकं मध्ये कस्मै प्रथमाय होष्यन्ति ॥१६॥ अग्निर्हि अनुष्ठ्या अनुष्ठानेन प्रयत्नेन स्वकीयं रेतो गवि पयोरूपेण निवेर्तयन् (! वर्तयति ?) । हूयमानस्य च पयसो यद्व्यश्नुते विप्रुड्भिमेति ॥१७॥४॥२॥

सायंप्रातर्होमयोः कालविशेषं विधित्सुरग्निहोत्रं सूर्यात्मना प्रशंसति सूर्य इति ॥१॥ तासां गर्भसाम्यमाह ईलिता होति रात्रौ हि सर्वाः प्रजाः संजानानाः समानमेकविधं ज्ञानं प्राप्ता ईलिता (? प्राप्रहोलि° Cod.) स्तुताः हृष्टाः [शेरे] शेरते लोपस्त आत्मनेपदेष्विति तलोपः । पुनरपि गर्भसाम्यमाह अथ यदिति गर्भरूपेणाग्नावत्रस्थितं सूर्यं रात्रिस्तिर एव तिरोहितमाच्छादितं करोति यस्मादेवं तस्मादसौ गभः ॥३॥ यथार्थं यथाप्रयोजनं सर्वाः प्रजा विसृज्यन्ते प्रवर्तन्ते ॥६॥ सायमग्निहोत्रस्याहवनीयविहरणमस्तमयात्प्रागेव कर्तव्यम् । गार्हपत्यादाहवनीयं प्रणीयोद्धरन्ति । अनुद्धृतमाहवनीयमभिलक्ष्य सूर्योऽस्तमगादिति सर्वे निन्दन्ति ॥७॥ आवसत्यस्मिन्नित्यावसथमासनम् ॥८॥ यथा गते अतिथौ गृहादपगते सति शून्यं तदावासस्थानं प्रति पंतव्र्याणयात्रयादिकमाहरेत् (?) ॥९॥ एतावेवास्तमितानुदितहोमौ प्रकारान्तरेण प्रशंसति द्वयमिति ॥१०॥ मूल्यमूलोभयनिष्पन्नस्य सर्वप्राणिजीवनहेतोः शारात्मक-

स्य (?) रसस्य भागं प्रथमं देवेभ्यस्तत्स्वामिभ्यो जुहुयानि यथा मद्भ्यस्तुष्टिः सर्वं वयमु पजीवाम इत्यनेनाभिप्रायेण पयसाग्निहोत्रं जुहुयात् । अतो होमानन्तरं तस्मात् काले तदा शितं (यदशि°?) भवति (भवाति Cod.) तत्सर्वं [illegible] भवति [illegible]तीति निष्कृष्यावत्तो बलिर्देवभागो यस्मा[illegible] । एवमग्निहोत्रं जुह्वत्पुरुषः [illegible]मेव ग्रात्रावशिता भोक्ता भवति ॥१३॥ अनुपस्थितः [illegible] सर्वदा [illegible] ॥१३॥ मृतम-सत् पक्वं भवेत् । कियदवधिः (? वाक Cod.) पाक इत्याशङ्क्य तत्रैकं [illegible]यति तदाङ्गरिति । उदन्तं पाकवशादुद्गतानं जुहुयात् । [illegible] अप्रजननशीलं प्रजोत्पादनं न भवति ॥१४॥ कथं तर्हि [illegible] (°तव्य° Cod.) अधिश्रित्यैव अधिश्रयणानन्तरमेव जुहुयात् ॥१५॥ [illegible] (? दा° Cod.) मार्गेणावाङ्मुखं (? दमार्गे° Cod.) प्रकाशयतीत्यर्थः । [illegible] आसेक्तव्य इति ब्रूयात् ॥१६॥ चतुर्भ्यः स्तनेभ्यो दुग्धवाश्चतुर्थांशिकिरतम् । [illegible]वेति समिद्धेऽग्नौ होमार्थमुन्नीतपयस्काय । (? स्काया Cod.) [illegible] स्रुचि एकां समिध-मुपरि निधाय गार्हपत्यदेशादाहवनीयं प्रतिसृत्यैव (धृत्यैव Cod.) पूर्वामाहुतिं जुहुयात् । होष्यन्नुपसादयतीति यदुपसादनं तैत्तिरीयके आम्नातं तदनूद्य तस्यायुक्ततां (तस्य यु° Cod.) दृष्टान्तेनोपपादयति स यदिति । अन्तरा निदध्यादिति [illegible] पुरः स्थितं पात्रमप्राप्य मध्येमार्गादिसितमन्नादिकं (! मध्ये मार्गेऽशनमन्ना° ?) निदध्यात् एवं तत् ॥१७॥ देवाः सन्तीति अग्नौ प्रक्षिप्तेनाग्निहोत्रहविषोपचिता[व]यवाः [illegible] सर्वदा [illegible] ॥१९॥ मनुष्याननु मनुष्याधीनतया तिष्ठन्ति ॥२०॥ अस्याग्निहोत्रस्य याज्ञवल्क्याभिमतं [illegible]यति तद् इति । न खल्वग्निहोत्रहोमो दर्शपूर्णमासादियज्ञकं[illegible] मन्तव्यः अयं खलु पाकयज्ञ एव भवति । उत्सृप्य (उत्कृष्य Cod.) बहिर्निर्गत्य । पशव्यं पशुभ्यो हितं पशुप्राप्तिसाधनम् ॥२१॥ अमूं विप्रकृष्टां यामाहुतिं प्रजापतिः सृष्टिकाले प्रथममजुहोत् सैषा एकाग्निहोत्रस्य पूर्वाहुतिः अनन्तरं च यदतो (यदेतो Cod.) ऽग्निवायुसूर्याः पश्चादित्याधिपत्ये अवस्थिताः ॥२२॥ द्वितीया तु स्विष्टकृत्स्थानीयेत्याह अथ येति ॥२३॥ आशा गोचरं प्राप्तव्यम् ॥२४॥ अनद्धा अप्रत्यक्षम् ॥२५॥ यत्तु स्थाल्यामवशिष्यते तत् नाग्निहोत्रोच्छिष्टं (? तत्पुनरग्निहोत्रोच्छिष्टो Cod.) तत्र दृष्टान्तः यथा परिणाह (!) इति परितो नद्धं परिबीत (°बीत Cod.) धान्यपूर्णं शकटस्योपरि स्थानम् यथा तस्माद्धविषो (षे?) निर्वापयितुं तद्गतं धान्यं न शेषः किं तु पुनरपि यागान्तरयोग्यमेवमेव तत्स्थाल्यां (ततत् स्था° Cod.) पयः ॥२६॥१॥३॥

अथाग्न्युपस्थानं. विधित्सुस्तावदग्नीनां व (?) दैवतरूपतामाह एता इति । योऽस्ति यो यजमानो विद्यते नलो (!) नैषध (!) इति निषिधदेशाधिपतिर्नलः प्रसिद्धो राजा ॥१॥ अन्वाहार्यपचनोऽग्निः एष एव नलो (!) नैषिध इति निर्दिष्टः । निषिधराजस्य च नलस्य (!) दक्षिणाग्नेश्च साम्यमाह तद्यदिति अग्निहोत्रहोमकाले एतमन्वाहार्यपचनं यत् यस्माद्दक्षिणतः अहरह[राह]रन्ति तस्मादेव नैषदो (!) नलो (!) ऽपि यमस्य राज्ञो दक्षिणात उपगच्छतीति लोकप्रसिद्धिः ॥२॥ भस्मोद्धृत्येति गार्हपत्याहवनीयादिगतं भस्मोद्गृह्य यत्प्रातरावसथं परावपति ॥३॥ आहवनीयस्य समीपे यत्स्थानमासनं शयनं वा क्रियते तत्तस्योपस्थानम् । प्रतिपरेत्याहवनीयागारात्प्रतिनिवर्त्य ॥४॥ पल्ययेत परिगमनं करोति ॥५॥ उपवसथेऽहनि ॥७॥

का° ४. १३. ७-१०. ॥८॥ [धूप्यतऽइव] धूमा[यमा]न-इव भवति । अग्रज्येव वत् अग्रिये-णैव एकवारम् ॥९॥ बल्बलीति (वत्येलीवं Cod.) शब्दायते ॥११॥ काष्ठेषु दग्धेषु सं-शाम्यतोऽग्नेरर्चिः प्रतितरां निकृष्टतरामिव ऊर्ध्वाधोगमन[रहित-इव भवति?] ॥१२॥ सर्वासु ज्वालासु निदचासु (?) केवलमङ्गारा अत्यर्थं दीप्यन्ते ॥१३॥ एतेषां रुद्राद्यवस्थाविशेषाणां मध्ये एकं संवत्सरपर्यन्तं निरन्तरमनुतिष्ठेत् यदि यजमानः स्वयमेवाग्निहोत्रं जुह्वद्भवति अन्यो वाध्वर्युर्जुहुयात् उभयोरप्येष संवत्सरनियमः । अपोऽभिलक्ष्य वापीकूपादिकं खनन्नन्यद्व्री-हियवाद्यन्नं सम्पादयन् [वा] सामि अर्धकृते यथा निवर्तेत एवमेव तदन्यथाग्निहोत्रहवनम् (? थाहवनीयम् Cod.) । सार्धं सह नैरन्तर्येण ॥१४॥ अन्नाद्यमभितृणत्ति उत्पादयति ॥१५॥ भार्याः भर्तव्याः प्रजाः । यत्र खलु भोक्तॄणामल्पीयस्त्वं भोग्यसम्पत्तिर्भूयसी तत्खलु समृद्धम् ॥१८॥२॥३॥

अथैतयोर्गार्हपत्याहवनीययोरग्न्योरुपस्थानं विधित्सुः प्राग्विहिते आधानाग्निहोत्रे समु-च्चित्य क्रमेण स्तौति यत्रेति । दध्रे उद्युक्तो बभूव । इतोदं सर्वं जगद्व्याकुलमभूत् । अति-तिक्षमाणः प्रजाभिश्चिकीर्षितं पेषणमसहमानः ॥१॥ तितिक्षे सोढुं शक्नोमि ॥२॥ एवम-ग्न्याधानेन जनितस्याग्नेर्भरणं विधाय तस्य भरणात्प्रागुद्वासनं निषेधति तन्नेति । सामि मध्ये ऽप्ययष्याग्निमुद्वासयेत् (?) विसर्ज[ये]त् तर्ह्यस्मै यजमानाय सोऽग्निः सामि अर्धग्लानियुक्तो भवति। तस्मादामरणान्तमग्निर्धार्य इति नियमयति तस्मादिति ॥४॥ ऋषिणा मन्त्रेण [ऋक्स° १. ८९. ९.] । हे देवाः अन्ति अन्तिके मनुष्याणां समीपे आयुष्ट्वेन परिकल्पिताः शतसंख्याका एव श-रदः संवत्सराः खलु यत्र यस्मिन्नायुषि शतसंवत्सरे तनूनां शरीराणां जरसं जरां चक्रा कर्तार-स्था (?) यत्र च पुत्रासः सन्तोऽप्यपत्योत्पादनेन पितरो भवन्ति नोऽस्माकं तदायुर्गन्तोर्गमि-नात्पूर्वं मध्ये (!) मा रीरिषत हिंसत (हिसतं Cod.) प्राक्कमिति"(?) ॥६॥ अग्निहोत्रहोम-स्यामृतत्वप्राप्तिसाधनत्वं वक्तुं सूर्यस्य मृत्युरूपतां प्रतिपादयति । सूर्यस्य किरणैः प्राणेषु बद्धा इत्यर्थः । अश्मोऽभिधीयते बध्यतेऽनयेत्यश्माभिधाना तया अभीशवोऽन्या रज्जवस्ताभिर्वा । प्राणानभिलक्ष्य अवतायन्ते अवसार्यन्ते ॥७॥ यदा तु विद्वानुदीरितरीत्या सूर्यमतिक्रम्य वर्तते तदाहोरात्रे एवातोऽर्वाचीने भवतः तथा चाहोरात्रानाक्रान्तवाद्विदुषः सुकृतं न क्षीयते ॥११॥ रथोपस्थे रथस्योत्सङ्गे । पल्यङ्ग्यमाने पर्यावर्तमाने । अर्वाचीनोऽर्वाङ्मुखः ॥१२॥ आहवनी-यस्य पुरस्तात्परिक्रम्य गार्हपत्याहवनीययोर्मध्ये गच्छेत् । तथा च सूत्रितं का° ४. १३. १२-१३. ॥१३॥ यदेतद्दक्षिणेन वेति कात्यायनेन विकल्पेनोक्तं तद्दूषयति अथ य इति ॥१४॥ स्व-र्ग्यायाः स्वर्गप्राप्तिहेतुभूतायाः । नौमण्डे उभे पार्श्वे भित्ती । नावमजति क्षिपति प्रेरयतीति नावाजः ॥१५॥ आरुह्यतेऽनेनेत्यारोहणं प्रवेशद्वारम् ॥१६॥ अथैतदग्निहोत्रं चित्याग्निसम्पत्त्या स्तौति अथ यामिति ॥१७॥ अथ चित्यस्याग्नेः संवत्सररूपतां ब्रुवन् तावत्कालसाध्यस्याग्नि-होत्रहोमस्य तत्सम्पत्तिमुपपादयति प्रजापतिरिति । चित्योऽग्निः प्रजापतिना सृष्टत्वात्तदात्मकः प्रजापतिश्च संवत्सरकालात्मकः अतः संवत्सरपर्यन्तमनुष्ठितमग्निहोत्रं (? °न्तं उममितिष्ठतम-ग्नि° Cod.) चित्येनाग्निना समानं सत् संतिष्ठते समाप्तं भवति तथा च एकैकसंवत्सराग्नि-होत्रानुष्ठानेन चित्याग्न्यनुष्ठानं कृतं भवति ॥१८॥ अथैतदग्निहोत्रं महदुक्थसम्पादनेन स्तौ-ति सप्तेति । चित्योऽग्निर्महाव्रतं साम बृहतीसहस्रात्मकं बृहदुक्थं चैतानि त्रीणि सहचरा-

णि तत्र चित्याग्निसम्पत्तिरुक्ता महदुक्थमम्पत्तिस्त्वेवमवगन्तव्या तत्र हि गायत्रीतृचाशीतिरौष्णिही तृचाशीतिर्बार्हती तृचाशीतिरिति तिस्रस्तृचाशीतयो विहिताः । अतस्तेकस्मिन्संवत्सरे अस्य यजमानस्याग्निहोत्रं तृचाशीतित्रयात्मकमहदुक्थेन सम्पन्नं भवति ॥१॥२०॥१॥

अथ सायंकालीनमग्न्युपस्थानं विधित्सुस्तदर्थमाख्यायिकामाह अग्नाविति । एतच्च पुनराधानब्राह्मणे [२. १.] व्याख्यातम् तत्र अनुप्रवेशः (अनुप्र° Cod.) अत्र तु रात्रौ (? त्रि । Cod.) इत्येतावान्विशेषः ॥१॥ कामिति वाक्यप्रतिपूरणे (? °कमिति° Cod.) ॥१॥ अग्निरपि उपस्थानेन याच्यमानस्तिरो भवति याचितफलस्याप्रदानेन नैव यजमानं जिनमानि अत एव द्वेष्योऽपि न भवानि ॥४॥ वाचेन वदनीयेन स्तुतिशब्देन कर्मणा वा याचनालक्षणेन । यस्तु एवं निष्ठुरं भाषते स एनं ब्राह्मणादिं प्रभुं द्वेष्टोश्वरः विहृयणं कर्तुं समर्थः स्यात् तथा निर्वेदं मनस्तापं गमयीश्वरः स्यात् निष्ठुरभाषणप्रकारमाह किं स्विति हे देवदत्त यस्त्वं मह्यं न (त Cod.) ददासि स त्वं मम किं यासि न किंचिदपि भवसि त्वया किं प्रयोजनमित्यर्थः । तदुपस्थानं तु फलप्रार्थनरूपत्वेन निष्ठुरभाषणवदपराधहेतुरिति न कर्तव्यमित्याह एतदिति होमसमिन्धनाभ्यामग्निं प्राप्य पुनरुपस्थानेनैव याचते याचनं चायुक्तमित्यनुपस्थानपक्षो ज्यायान् ॥६॥ समस्तं सम्पूर्णम् ॥७॥ उपवत्या उपशब्दयुक्तया ऋचा । योऽयमुपेत्युपसर्गः इयं भूमिरेव सः । अनेन द्विप्रकारेणेयं भूमिरुपशब्दवाच्या । न्यृच्छति नितरामार्तिं प्राप्नोति । कर्तृद्विविधेन भूम्ना प्रतिपद्यते उपस्थानं प्रारभतऽइत्यर्थः ॥१॥ अग्न्युपस्थानमन्त्रान्विधित्सुस्तावदुपवतीमृचं विधाय प्रशंसति स आहेति ॥१०॥ अनुधावति अनुसरति प्रशंसतीति यावत् ॥११॥ सनीनां दानानाम् ॥१५॥ समाहार्यम् एकैकामृचं प्रदेशान्तरे पठितां समाहृत्य समुदायीकृतमेतत्षडृचं सूक्तम् । अदो द्युलोक एव प्रत्नम् तस्य प्रत्नशब्दनामधेयतामुपपादयति यावन्न इति । सनेति निपातः पुरेत्यस्यार्थे । इमे द्यावापृथिव्यावन्तरेण अग्निर्मूर्धेत्यादिमन्त्रप्रतिपाद्याः सर्वे कामा अवस्थिताः ॥१६॥ यता यज्ञास्त्रिवृत्प्रायणाः त्रिवृत्प्रारम्भाः निर्वापप्रोक्षणसामिधेन्यनुवचनादिषु त्रिरावृत्तिदर्शनात् ॥१७॥ ग्रहनक्षत्रादीनि चित्राणि ॥२२॥ एतेन चित्रावसोऽइति मन्त्रेण रात्रेः पारमवसानं स्वस्ति क्षेमेण (°मेन Cod.) समश्नुवते स्म ते सम्प्राप्नुवन् । एतावन्त्विति उपप्रयन्त इत्यारभ्य चित्रावसोऽइत्येतावत्पर्यन्तमाहवनीयसमीपे तिष्ठन्जपेत् ॥२३॥ अग्निहोत्रहोमार्थस्य पयसो दोग्ध्री या गौः तामन्ध स्थेति मन्त्रेणाभिमृशेत् अन्धःशब्दोऽन्नवाची तेन च तज्जनितं वीर्यं लक्ष्यतऽइति व्याचष्टे यानीति । भक्षीय सम्भजेय ॥२५॥ एवमाहवनीयस्य समन्त्रकमुपस्थानं सम्पन्नं (? °पचं Cod.) विधाय गार्हपत्ये तद्विधत्ते अथेति । अतिक्रमजनितापराधनिवृत्तये अस्मै गार्हपत्याय नमस्कारमेव करोति इतरथा हि प्रथममग्निं गार्हपत्यमतिक्रम्याहवनीयस्योपस्थानकरणात्स गार्हपत्यः क्रुद्धः सन् यजमानं न हिंस्यात् तथा नमस्कारः क्रियते ॥२८॥ अनेन सोमानमिति तृचस्य जपेन द्यावापृथिव्योर्मध्यवर्तिनोऽन्तरिक्षस्योपस्थानं कृतं भवति । नन्वेतत्तृचं ब्राह्मणस्पत्यम् कथं बार्हस्पत्यमिति नैष दोषः तयोर्भेदाभावात् अत एव दाशतय्यां गणानां त्वेत्यादिषु (ऋक्सं° म° २. २३. १.) ब्राह्मणस्पत्यसूक्तेषु (°क्त्येषु Cod.) तत्र बृहस्पतिः स्तूयते ॥३६॥ एतदपि सूक्तमनग्नौ तिष्ठन्जपेत् । अस्य तृचस्य प्रयोजनमाह तआहुतीति तत्र तस्मिंस्तृचे नाधृषु आरोधिमित्यस्ति तस्याभिप्रायो वर्ण्यतऽइति शेषः एते ह

वाऽइत्यादि ॥३७॥ स्तरीर्हिंसकः ॥३८॥ अनुसंतनवत् अनुक्रमेण संततनुयात् संततमनवच्छिन्नं कुर्यात् ॥४१॥४॥३॥

एवमग्निहोत्रहोमे महोपस्थानं विधाय लघूपस्थानमत्रापि दर्शयति अथेति । अग्निहो[त्रहो]मानन्तरं भूर्भुवः स्वः सुप्रजा इत्यनेनैव मन्त्रेणाहवनीयमुपतिष्ठेतेत्यर्थः । पूर्वोक्ताडुपस्थानमन्त्रगणादस्य (? स्वतातादस्य Cod.) मन्त्रस्यातिशयमाह तत्सत्येनेति सत्यरूपा एता व्याहृतयः त्रयीसारत्वात् एवं च व्याहृतिरूपेण सत्येनैव इमां मन्त्ररूपां वाचं समर्धयति तया च समृद्धया वाचा प्रागुक्तां सर्वामप्याशिषमाशास्ते प्रार्थयते । तदाशासनप्रकारं दर्शयति सुप्रजा इति ॥१॥ प्रागुक्तोपस्थानेनास्य समानकार्यकरणबाद्विकल्पमाह यद्वाऽइति । अदः पूर्वोक्तं दीर्घं बहुकर्तव्योपेतं बहुमन्त्रसाध्यं यदग्न्युपस्थानं सा आशीः फलप्रार्थनम् तथा भूर्भुवःस्वरिति मन्त्रसाध्यमुपस्थानमिति तादृगाशीर्युक्तम् अत एतावतैवोपस्थानेन तत् प्रागुक्तं सर्वं फलं प्राप्नोति ॥२॥ अथ प्रवासं करिष्यता यजमानेन कर्तव्यमुपस्थानं दर्शयति अथेति ॥३॥ वाहनसहितश्चेदश्वरथादीन्प्रधावयति प्रगमयति । स च गच्छन्यस्मिन्देशे वेलां स्वनिवासग्राममर्यादां मन्यते तत्स्थानप्राप्तिपर्यन्तं वाचंयमो गत्वा तदनन्तरं वाचं विसृजेत् । प्रोष्य प्रवासं कृत्वा पुनरागत्य । वाग्यतस्य यजमानस्याग्न्यागारस्य च मध्ये ॥६॥ समिदाधानं विधत्ते अथेति उपस्थानानन्तरमाहवनीयसमीपे उपविश्य तृणोपलक्षितानि समिदादीनि प्रच्छिद्य तस्मिन्नग्नौ प्रक्षिपेत् लुपु छेदने ॥८॥ इत्थं प्रवत्स्यदुपस्थानमागतोपस्थानं च समन्त्रकं विधाय तयोरमन्त्रकपक्षमप्याह स वाऽइति ॥१०॥ परिदां परिदानं रक्षणम् ॥११॥ एवं प्रवासादागतस्य यजमानस्याग्निविषयं कर्तव्यमुपदिश्य गृहविषयमपि (°मतिपद् Cod.) वक्तुं प्रतिजानीतेऽथात इति उपचरणमुपचारः । तस्य यजमानस्य कुलं वंशं विक्षोब्धोः विनष्टं कर्तुमीश्वरः व्यत्ययेनैकवचनं गृहाः समर्था भवन्ति ॥१४॥१॥५॥

अथामावास्यायां पिण्डपितृयज्ञस्य मासि-मासि कर्तव्यतां विधित्सुस्तदर्थमाख्यायिकामाह प्रजापतिमिति ॥१॥ स्वधाकारोऽपि वः । मनस-इव जवो मनोजवः सोऽपि युष्माकम् ॥२॥ प्रावृताः उत्तरवाससा संवृताः केवलवीतवाससो (° लवित Cod.) निवीतिन इत्यर्थः ॥३॥ शश्वद् बहुकृत्वः । परेषां दृष्ट्याच्छादकसामर्थ्यं (? दष्प्राद्धाद° Cod.) तमः अघटितघटनशक्तिर्माया ॥५॥ मेद्यति स्निह्यति पुष्यति । विह्वर्छति अधः पतति । यदपि किंचिद्वाचा व्याहरति भाषते तथैव यथार्थं (? प्रसार्थं Cod.) भवति . हि यस्मादसौ एतद्देवसत्यं देवेन प्रजापतिना कल्पितं सत्यं गोपायति रक्षति । एतस्य प्रजापतेरुच्चरितरूपं व्रतं चरितुं. यो यजमानः शक्नोति स देवसत्यं गोपायति ॥६॥ जीवतां हि मनुष्याणां सायंप्रातरशनं विहितम् मरणादूर्ध्वं वस्वादिरूपपितृभावं (!) प्राप्तेभ्यस्तेभ्यो मासि-मास्येव पितृयज्ञरूपमशनं दातव्यम् स च पितृयज्ञोऽमावास्यायामेव कर्तव्यः यस्मिन्नेव काले इन्दुः (इन्दूः Cod.) पूर्वस्यां दिशि पश्चिमायामपि न दृश्यते । कलहं कुर्यात् सोमस्य देवानामन्नत्वेन (? देवा अन्नत्वेन Cod.) भोक्तुं देवैरपि संनिधानात् दीयमान विविर्विषयः कलहो भवेत् ॥७॥ गार्हपत्यस्य पश्चिमदेशे व्रीहिपूर्णस्य निर्वापार्थस्य शकटस्य दक्षिणत आसीनः प्राचीनावीती एतं (एवं Cod.) पितृयज्ञार्थं हविर्गृह्णीयात् । ततस्तस्माद्धविर्ग्रहणस्थानात् । ऐष्टिकहविष (ऐष्टि° Cod.) इव फलीकरणस्य त्रित्वं प्रसक्तमपवदितुं सकृत्त्वं विधत्ते । हि यस्मात् सकृदेकवा-

रमेव पराञ्चः पराञ्चो गताः प्रेताः पितरोऽभवन् न तेषां पुनरावृत्तिरस्ति अतस्तेषां सकृत्त्व-
मसाधारणो धर्मः ॥९॥ सकृत्फलीकृतांस्तण्डुलान्स्थाल्यां प्रक्षिप्य तं चरुं दक्षिणाग्नौ श्रपयेदि-
त्यर्थः उद्वासनात्प्रागेव तस्मिंश्चरावभिघारणं विधत्ते तस्मिन्निति अधिश्रितं अभिघारयति स्थापिते
एतस्मिंश्चरौ पक्वे सत्याज्यं प्रत्यानयति प्रतिक्षिपति । देवेभ्यो यदाज्यं देयं तदभिघार्यैव दीयते
मनुष्येभ्यो देयं यत्तत्तेषां पुरस्ताद्भोजनपात्रेषूद्धरन्ति उद्धृत्य पुरतः स्थापयन्ति पितॄणां तु एव-
मधिश्रितावस्थायामेव चरौ आज्यमवनेयम् (चरो अज्य° Cod.) ॥१०॥ चरुमालोड्य येन का-
ष्ठेन गृहीत्वा हूयते तन्मेक्षणं तदभ्यादानं (? °दभा° Cod.) स्विष्टकृद्धोमनं अस्य होमस्य
स्विष्टकृत्स्थानीयम् । अथ पिण्डप्रदानाय स्थानविशेषं तत्संस्कारं विधाय प्रशंसति अथेति
दक्षिणाग्नेरदूरेण देशे स्फ्येन (स्यचेन Cod.) सकृदुल्लिखति एकयत्नेन दक्षिणाग्राचीं लेखां
कुर्यात् तदुल्लिखितं स्थलं वेदिभाजनं वेदिस्थानीयं तत्कार्यकरमित्यर्थः ॥१३॥ उल्लिखितदेश-
स्यान्तेऽग्नेर्निधानं विधत्तेऽथेति परस्तात् परस्मिन्विप्रकृष्टे पर्यन्ते । विमथ्नीरन् अपयन्तु ॥१४॥
अदःशब्दस्थाने सम्बुद्ध्यन्तं पित्रादीनां यथाक्रमं नाम निर्देष्टव्यम् हे यज्ञशर्मन् मम पितः
अवनेनिक्ष्व दास्यमानं पिण्डं भोक्तुमात्मीयौ पाणी शोधयेति । अशिष्यते भोक्ष्यमाणाय ॥१५॥
सकृदाच्छिन्नानि एकयत्नेन छिन्नानि (?) उपमूलं मूलसमीपे छिन्नानि खण्डितानि बर्हींषि पि-
तृयज्ञार्थानि भवन्ति एवंगुणविशिष्टानि बर्हींष्याहर्तव्यानीत्यर्थः ॥१७॥ दक्षिणा दक्षिणात उ-
ल्लिखितप्रदेशे तानि बर्हींष्युपस्तृणाति । तत्र तस्मिन्बर्हिषा स्तीर्णे देशे पिण्डान्दद्यात् तत्र
प्रकारविशेषमभिनयेन विधत्ते स वा इतीति इति अनेन प्रकारेण अङ्गुष्ठतर्जन्योर्मध्येन पि-
त्र्येण (? पात्र्येन Cod.) तीर्थेनेत्यर्थः देवमनुष्यसम्प्रदानकं दानं तद्विलक्षणमनेनोपपाद-
यति इतीव वा इति इतीव अनेन खलु प्रकारेण अङ्गुल्यग्रेण देवतीर्थेन (? दवार्थेन Cod.)
देवेभ्यो हवींषि जुह्वति मनुष्येभ्यस्तु (? स्त Cod.) यथायोगं भोक्तव्यमन्नमुद्धरन्ति उद्धृत्य पा-
त्रान्तरे स्थापयन्ति न तु तत्र देवपित्रादितीर्थविशेषोऽपेक्षितः ॥१८॥ शाखान्तराभिमतमन्त्रशेष-
निरासार्थं एवकारः । पित्रनन्तरभावेना यच्छब्दनिर्दिष्टाना तेषां स्वयं पिण्डदाता सहभावी
भवति । तथा च एव एषा (येषां?) स्वयं [सह]भावी तेभ्यः पिण्डदाने स्वात्मने पिण्डं
दत्तवान्भवति । तद्यदित इत्यादि अनेन हि क्रमेण पितृत्वं प्राप्ताः प्रथमं प्रपितामहः पश्चा-
त्पितामहस्ततः पितेति इमं क्रमं परित्यज्य पिण्डदाने इतः पितृत आरभ्य प्रपितामहान्तं प-
राक्त पराचीनं पिण्डान्दद्यात् यतस्ते पितरः सकृत्त्वपराक्त्वधर्मयुक्ताः ॥१९॥ पराङ्मुखः सन्पि-
ण्डाभिमुख्यं विहाय (?) पर्यावर्तेत । पर्यावर्तनकालस्य परिमाणं विधत्ते स वा इति याव-
त्तमनं ग्लानिर्भवति पक्षान्तरमाह स वा इति द्वादशप्राणात्मको यो मुहूर्तसंज्ञकः कालः ए-
वकारः पूर्वोक्तपक्षव्यवच्छेदार्थः ॥२१॥ उपपल्ययम्य पिण्डसमीपं परिप्राप्य ॥२२॥ नीविः परि-
धानीयस्य वाससो दशा तामुद्धृत्य विस्रंस्य । ऋतवः पितर इति वसन्तादृतुषु प्रमीतस्य त-
त्तदनुरूपत्वप्राप्तेस्तादात्म्यव्यपदेशः तथा चान्यत्र श्रूयते यस्मिन्नृतौ पुरुषः प्रमीयते सोऽस्यामु-
ष्मिंल्लोके भवति यदि वसन्ता(!) प्रमीयते वसन्तो भवतीत्यादिना । नमस्कारमन्त्रो निगद-
व्याख्यात इत्यभिप्रेत्य तच्छेषमुपादाय व्याचष्टे गृहान्न इति । पिण्डशेषस्याघ्राणं विधत्ते अ-
थेति अवघ्राणं पिण्डान्पात्रे प्रत्यवधाय प्रतिक्षिप्य कर्तव्यं तच्चावघ्राणं यजमानस्य स्वकीया

ऽशः । स्तीर्णस्य बर्हिषः प्रतिपत्तिं विधत्ते अग्नाविति अभ्यादधाति प्रक्षिपति । उल्मुकस्यापि संसर्जनं विधत्ते पुनरिति ॥२४॥२॥४॥

अथ विधित्सिताया आग्रयणेष्टेर्मतभेदेन प्रयोजनं दर्शयंस्तावत्कहोलस्य (!) मतमुपन्यस्यति तद्ध इति । अयं व्रीहियवाद्योषध्यात्मको रसः । अस्य रसस्य कर्मणि षष्ठी इमं रसं देवेभ्यः प्रथमं हुत्वा अथानन्तरं हुतशिष्टमिममश्नाम भुनजामहै ॥१॥ केवलमनाशनेन (!) ता इमाः सर्वाः प्रजाः पराबभूवुः पराभूता अभवन् । I do not know how to explain the नेत् : all the mss. of the text give it ॥२॥ यज्ञेनैवेति निश्चित्य एषां मनुष्यादीनां यत्काल्पं कल्पनीयं सम्पादयामास तत् [अ]कल्पयन् । न केवलं देवा एव ऋषयोऽप्येवमेवाकल्पयन् ॥३॥ आजिरभिगन्तव्यावधिभूतः पदार्थः तमजामहै धावाम ॥४॥ पुराणानां पुरातनानां व्रीहीणां सम्बन्धिनं तं वैश्वदेवं चरुं कुर्यात् । नेत् क्षत्रियजातेरुपरि वैश्यजातिं तत्समवेनारोहयाणि आक्रान्तां करवाणि ॥७॥ अथ तस्यामेवाग्रयणेष्टौ तृतीयं द्यावापृथिव्यं हविर्विधातुमाह तद्ध इति । नवधान्यरूपं हविरनयोर्द्यावापृथिव्योः रसः । तस्य इयं भूमिरेव कपालम् ॥८॥ सर्वेषु यागेषु स्विष्टकृद्यागोऽन्वाभक्तोऽनुप्राप्तोऽस्ति शेषात्स्विष्टकृतेऽवद्यतीतोष्टशिष्टप्रतिपत्तित्वेन तस्य विहितत्वात् अत्रैककपालं पुरोडाशं सर्वहुतमेव जुहोति हविरन्तरवन्नाग्ने (?) ऽग्नये ना[व]द्यति अतोऽस्यैककपालस्य स्विष्टकृद्यागाभावात्सैव परिचक्षा निन्दा । दोषान्तरमप्याह उतो हुत इति अपि च अग्नौ हुतः सन्नेककपालः पुरोडाशो यदि पर्यावर्तेत ॥९॥ तत्र विषये आहुर्ब्रह्मवादिनः कथयन्ति अयमेककपालः पर्यावृत्तोऽभूत् तेन पर्यावर्तनेन राष्ट्रमेव पर्यावृत्तं मोहिष्यति मूढं भविष्यतीति । आहवनीयो हि सर्वाहुतीनामाधारभूतः तत्प्राप्तेः पूर्वं पर्यावर्तने दोषः तदुत्तरकालं तु अपि दश कृत्वो दशवारं पर्यावर्तेत तत्रादरो नैव कर्तव्यः देवतोद्देशेन हविषश्चोदितद्वारे (? धारे Cod.) प्रक्षिप्तत्वात् । तस्मात्स्विष्टकृद्यागाभावकृतैव निन्दा परिशिष्यते तत्परिहाराय पक्षान्तरमाह यदीति यदि चान्ये शाखिनो वदन्ति को नाम तदुक्तदोषसंधानं कर्तुमुपेयादुपगच्छेत् अतो दोषसहित एककपालपक्षः परित्यज्यः किं तर्हि द्यावापृथिव्यस्य यागस्य द्रव्यम् तदाह तस्मादिति यदेतद्ध्रुवास्थमाज्यं (? ध्रुवाज्यस्थमाज्यं Cod.) सर्वयज्ञसाधारणं तस्यैव सकाशादादाय द्यावापृथिव्यौ यजेत । आज्यस्य द्रवरूपयोगात्प्रत्यक्षरसत्वम् व्रीहियवादेस्तु धान्यस्य काठिन्यपरोक्षत्वम् । मेधेनेति साररूपेणेत्यर्थः ॥१०॥ आलिशन्त अभक्षयन् लिश अल्पीभावे इत्ययं धातुरत्र तृणादेरल्पीभवनहेतौ भक्षणे वर्तते ॥११॥ किल्विषं रोगनिदानं पापम् ॥१२॥ अग्रियमिवेति अग्रे भवमग्रियम् अग्राद्घच्छौ चेति (अघाघ्रको वेति Cod.) । ईजानानीजानयोराग्रयणविषयां व्यवस्थां दर्शयति स यदिति यदि स यजमानः ईजानः सोमयागेनेष्टवान्स्यात् केवलं हविर्यज्ञयाजी सन्दर्शपूर्णमासाभ्यामेव यजेत अथानन्तरमेव एतेनाग्रयणेन यजेत न प्रागित्यर्थः [दर्शपूर्णमासायागपक्षे तु to add?] किं तर्हि तदा कुर्यादिति तदाह यद्यु इति यदि तु दर्शपूर्णमासादिभिरनीजानोऽनिष्टवान्स्यात् तदा स यजमानः चातुष्प्राश्यं चतुर्भिर्ब्राह्मणैः प्राशितव्यमोदनमन्नं दक्षिणाग्नौ पक्त्वा ब्राह्मणेभ्यो दद्यात् (दक्षा Cod.) ब्राह्मणाश्च तं भुञ्जीरन् ॥१३॥ ब्राह्मणभोजनस्यापि यागोत्पादकत्वमुपपादयति द्वया वा इति । तत्तथा सति यथा

वषट्कारेण देवेभ्यो दत्तं स्वाहाकारेण हुतं च भवति एवमेवाग्न्यागारेणान्नस्य यजमानस्य एतद्ब्राह्मणभोजनं भवति । यागऽइव भोजनेऽपि दक्षिणादानं विधत्ते तत्राऽइति । कचि-त्त्वाग्रयणेष्टावधिकृतस्यानीजानस्य नवधान्येनाग्निहोत्रहोमनिषेधः [illegible] (!) अत एव सूत्रितं कात्यायनेन (४. ६. ११.) नवैः सायं प्रातरग्निहोत्रहोम इति आपस्तम्बेनाप्युक्तम् अपि वा नवानां यवानां सायं प्रातर्जुहुयादिति तदत्र निराकरोति नाग्निहोत्रऽइति अग्निहोत्रकर्मणि भवं हविर्न जुहुयात् यदि जुहुयादिन्द्राग्न्यादीनामाग्रयणदेवतानामग्निहोत्रदेवतया (तया Cod.) सह समदं कलहं कुर्यात् ॥१४॥३॥४॥

आवृत्तिगुणविकृतौ दर्शपूर्णमासयाज्ञ[ग]प्रयोग एव दाक्षायणयज्ञः तं विधित्सुराख्यायिका-माह प्रजापतिरिति ॥१॥ एके शाखिनः । एष एव खलु प्रजापतिर्यदिन्द्रो नान्यः (!) सर्व-श्रेष्ठत्वात् ॥२॥ श्वैक्नः श्विक्नस्य पुत्रः । स एतामिति (!) एतं प्रतीदर्श स इति व्यत्यये-नैकवचनम् (!) ते तत्रत्या (?तत्त्र° Cod.) जनाः प्रत्यायुः केनचित्कारणेन प्रतिचिक्षिपुः तेन च दाक्षायणयज्ञेनेष्टे सति तेषां जनानां विवचनं विशिष्टवचनं पञ्चालवचनमेवास्म अ-स्मिन्बहुमानं कृतवन्तः ॥३॥ सृञ्जयपुत्रः सुप्ता नाम । तस्मात्कारणात् एतत् एतर्हीदानी-मपि निर्वचनं निरुत्तरवचनमस्ति व्यवहारलोके विद्यते ॥४॥ सुतर्वः पुत्रो देवभागो नाम ॥५॥ पर्वतो नाम कश्चित् तस्य पुत्रः पार्वतिः । असपत्नानुपबाधा शत्रुभिरबाधिता ॥६॥ तप्तं पयो दध्ना संस्कृतं सत्पयस्या भवति ॥१०॥ अस्य दाक्षायणयज्ञस्य सोमयागरूपतां प्र-तिपादयति अथेति । अमुमुपवसथऽइति सुत्यादिवसात्पूर्वमहरुपवसथः । प्रकरणाम्नातविहि-तत्वेन विप्रकर्षादमुमिति विप्रकृष्टवाचिना अदःशब्देनाग्नीषोमीयस्य पशोः परामर्शः ॥११॥ इत्थं दाक्षायणयज्ञस्य सोमयागसाम्यं सम्पाद्य तत एव हेतोः फलसाम्यमाह स पौर्णमासेन चेति ॥१४॥ प्राणापानरूपयोरग्नीषोमयोर्हविषा तृप्तयोर्निष्क्रमणात् वृत्रो मृतः तथा चाम्नायते तस्माज्जम्भ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वाऽएताविति ॥१५॥ अभिषुणोत्येवैन-मिति पूर्वेद्युः कर्तव्याभिषवस्थानीयोऽयमग्नीषोमीययाग इत्यर्थः । तीव्रीकरोति तीव्रमतिशये-न मदकरं करोति ॥१६॥ सांनाय्यभाजना सांनाय्ययागस्य स्थानभूता अमावास्या । एनं सो-मम् । स एष चन्द्रः प्रतिपदि पश्चाद्दृशे कलारूपेण दृश्यते ॥२०॥ तस्य वाजिनहोमस्य कालं विधातुं स्तौति स वाऽइति । यज्ञस्य पश्चाद्भागे प्रस्तरपरिधिप्रहरणोत्तरकाले वाजिन-होमः कर्तव्यः । अध्वर्युरग्रे प्रथमं प्रागेव प्रागपवर्गमल्पं वाजिनं जुहोति अग्ने वीहीति यदा होतानुवषट्करोति तदा स्विष्टकृत्स्थानीयं वाजिनशेषमुत्तरपूर्वस्यां दिशि जुहोति ॥२१॥ उ-तशिष्टेन वाजिनेन दिग्व्याघारणं विधत्तेऽथ दिश इति ॥२४॥ एवं च सति एतद्वाजिनमृ-त्विजः सोममेव सोमसदृशमेव कुर्वन्ति ॥२५॥४॥४॥

अथ चातुर्मास्यानि विधित्सुस्तत्र वैश्वदेवस्य प्रजासृष्टिहेतुत्वम् [illegible] प्रतिपादयति प्रजापतिरिति ॥१॥ यस्मादग्रे एवमासीत् तस्मात्कारणात् [illegible] मन्त्रेणाप्यनूक्तं प्रतिपादितम् [ऋक्सं° ८.१०.१४.] । अत्याममत्ययं विनाशम् । अर्कमर्चनीयमग्निम् ॥४॥ अ-थानन्तरमेव यज्जायते तदेव जायते अन्यदजायमानं (? °दाज° Cod.) विपद्यते ॥५॥ आदयन्ति भाजयन्ति ॥६॥ आयतनं स्थानम् । मारुतस्तु इति तुशब्दः पयस्यायागस्य न्यायप्राप्तं षष्ठ-स्थानत्वं व्यावर्तयति मारुतः सप्तकपाल एव षष्ठोऽनुष्ठेय इत्यर्थः । अनिषेधा (!) इव अ-

निषेधुकः (!) नियन्तृरहिता इव । विमथिष्यामः हिंसिष्यामः ॥१२॥ यदि तु स्वतवोभ्यः प्रतिपादिके याज्यानुवाक्ये न लभते तदा स एव प्रागुक्तः केवलमारुत एव यागो भवति ॥१४॥ दध्ना संस्कृतः पयोविकारः पयस्या असौ चामिक्षाशब्देनान्यत्राप्याम्नायते तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति ॥१५॥ अग्निमं हविर्विधत्ते अथेति ॥१७॥ तत्र यानि वैशिष्यकाण्यङ्गानि तानीदानीं विधातुं प्रतिजानीते अथात आवृदेवेति आवृच्छब्दः प्रकारवाची चोदकप्राप्तायामितिकर्तव्यतायां प्रकारविशेषः कथ्यते । अग्निमन्थनादेर्वैशिष्यकस्याङ्गस्य विधास्यमानत्वात्तत्सहवाचितमुत्तरवेद्यावपनमपि (? °त्सहवचि° Cod.) प्रसक्तं निषेधति नोपकिरतीति सत्यां ह्युत्तरवेदौ तत्रानुष्ठीयमानमेतत्कर्म तया निरुद्धगति स्यात् तदभावे तु तत्कृतनिरोधाभावात्क्रियमाणं कर्म विसृष्टं व्यापनशीलमसद्भवेत् अत एव परिच्छेदाभावात्सर्वं कृत्स्नं सम्पूर्णमसत् कात्स्न्र्याद्विश्वदेवसम्बन्धयोग्यमसत् न ह्यसर्वस्य सर्वदेवसम्बन्धो घटते अतो विसृष्टत्वादिसिद्ध्यै उत्तरवेदिर्न कार्येत्यभिप्रायः । बर्हिराहरणे विशेषं विधत्ते त्रेधेति त्रेधा त्रिविधं बर्हिः प्रथमं संनह्य तदेव पुनरेकधा एकविधं संनह्यति । तस्मिन्नेव बर्हिषि धर्मविशेषं विधत्ते प्रस्व इति प्रसुवते फलानीति प्रस्वः पुष्पिताङ्कुराः (°शः Cod.)। प्रसूतयुक्तानां कुशानां प्रस्तरत्वेन ग्रहणं विधत्ते तमिति तैः प्रसूभिः कुशैः प्रस्तराख्यं मुष्टिं सम्भरेत् ॥१८॥ प्रकृतितोऽप्राप्तकालविशिष्टमग्निमन्थनं (? °प्रचातकालाचिशि° Cod.) विधत्ते आसाद्येति प्रकृतिवद्धविरासादनान्तं कृत्वाग्निमन्थनं कुर्यात् ॥१९॥ चोदकप्राप्तानां प्रयाजानां संख्यान्तरमाह नवेति ॥२०॥ चोदकप्राप्तस्य समिष्टयजुषोऽपि संख्यान्तरमाह त्रीणीति । तद्धि प्रकृतेर्ज्यायो भवति प्रकृतौ (त्यै Cod.) प्रयाजानां पञ्चत्वादनुयाजानां त्रिवृत्त्वाच्च । यजमानस्य गोष्ठे प्रथमं जातः प्रथमजः ॥२१॥१॥५॥

विधित्सितस्य वरुणप्रघासाख्यस्य द्वितीयस्य पर्वणो वरुणपाशविमोचनहेतुत्वमाख्यायिकया प्रतिपादयंस्तद्विधिमुपनयति (धिमुन° Cod.) वैश्वदेवेनेति पुरा वैश्वदेवयागेन प्रजापतिना सृष्टाः प्रजाः वरुणसम्बन्धिनो यवान्जक्षुर्भक्षयामासुः तस्माद्वरुणसम्बन्धियवप्रघासनात्प्रजा वरुणप्रघासाः तत्पाशगृहीतानां तासां पाशविमोचनाय क्रियमाणा यागा अप्युपचारेण वरुणप्रघासाख्याः संजाताः ॥१॥ वैश्वदेवानन्तरं चतुर्थे मासि सम्पूर्णे सति ॥४॥ वैश्वदेवपर्वण्यादितो यान्याग्नेयादीनि पञ्च हवींषि तान्यत्रापि ॥७॥ अध्वर्युकर्तृकायामुत्तरस्यां वेद्यां प्रतिप्रस्थातृकर्तृकायां दक्षिणस्यां च द्वे पयस्ये हविषी भवतः ॥९॥ उभयोः पयस्ययोः करीराणि प्रक्षिपेत् मधुराः फलविशेषाः करीराणि तानि चोत्तरापथे प्रसिद्धानि । कं सुखम् ॥११॥ शमीपलाशानि शम्याः पर्णानि ॥१२॥ अतुषान् तुषरहितान् । करम्भपात्राणि पिष्टचूर्णाः (? प्रष्टचचू° Cod.) करम्भाः तन्मयानि पात्राणि ॥१४॥ यद्यनैलकोरिति (!) एलको (!) मेषः तत्सम्बन्धरहिता अनैलक्य ऊर्णाः कंबलोपादानभूतानि तज्जातीयरोममयाणि सूत्राणि । प्रणिज्य प्रक्षाल्य । कुशमया एवोर्णाः ॥१५॥ तावध्वर्युप्रतिप्रस्थातारौ उभौ ॥१९॥ प्रतिपरैति निवर्तते पत्नी यत्रास्ते तं देशं प्रति गच्छेत् । केन जारेण चरसि वर्तसे । अन्तःशल्पा शरीरमध्ये दुश्चरितजनितेन पापरूपेण शल्पेन युक्ता । प्रतिजानीत प्रतिब्रूयात् ॥२०॥ एतयैव मरुतः होष्यमाणं करम्भपात्रलक्षणं हविर्भोक्तुमाह्वयति ॥२१॥ जुह्वादिपात्रं विहाय शूर्पेणैव तानि जुहुयात् तेन हि शूर्पेण तुरापवनद्वारा (?) अन्नं क्रियते ॥२२॥ स्रुवाघारहोमादेः (?)

पूर्वभावित्वं करम्भपात्रहोमस्य विधत्ते पुरोति यत्ते वषट्कारप्रदाना यजतिचोदिता याज्यादिः आहुतयः स्वाहाकारप्रदानाः जुहोतिचोदिताः । अहुतं होमसंस्कारवर्जितमदन्ति भक्षयन्ति अहुतादः । मरुतां वैश्यजातित्वेन । विमेथिरे विलोलयन्ति स्म संश्लिष्टमभवन् । पाशविमोचनात्प्रागेव विमथ्नते संविश्लेषयन्ति (!) तस्माद्वरुणपाशविमोचनार्थयागाद्वारुणादिभ्यश्च पूर्वमेव करम्भपात्राणां होमेन मरुतां शमनं युक्तम् ॥२४॥ तेनेन्द्रेण निषिक्ताः निवारिता मरुतो भवेयुः ॥२६॥ हे इन्द्र अत्र एषु पृत्सु नोऽस्मदीयाः प्रजाः मो मा उ हिंसीः हे बलवन्निन्द्र देवैः मरुद्भिः सहितः ते तव अवयाः अवयजमानरूपकरम्भपात्रहोमोऽस्ति यद्वा यवमयैरंशैर्भिर्हविष्मतो यस्येन्द्रस्य मरुतो देवाः (!) अनुचराः (!) गीः स्तुतिरूपा वाक्च वन्दते स्तौति ॥२७॥ हे यजमानस्यामात्या ऋत्विजश्च यूयं यजमानस्य गृहान्पत्न्या सह भवन्तः प्रागहन अन्यस्माद्देशात्पत्न्यासनलक्षणात् ऊढ्वा (!) आहवनीयसमीपं प्रापितया पत्न्या सह त्वलिवदानीं वर्तन्ते । यज्ञस्यापरभागेऽवस्थितां तामेतर्हि प्राचीं प्रागगाहनी पूर्वभागसन्निधिनीं यज्ञं प्रासीषदत् प्रापिपत् प्रतिप्रस्थाता ॥२८॥ संमृजन्ति एकस्मिन्नप्यध्वर्यौ पूजार्थं बहुवचनम् । स्रुच आदायेति अध्वर्युप्रतिप्रस्थात्रोरुभयोरपि प्रत्येकं जुह्वादिप्रभृतौ स्तः तदभिप्रायेण स्रुच इति बहुवचनम् ॥३०॥ ध्रौवस्याज्यस्य चतुरवदाय ॥३१॥ उपास्ते उपविशति आ पयस्याप्रचरणकालात् ॥३५॥ कृत्स्नं मेषं स्रुचि अवद्धाति ॥३७॥ प्रधानयागानन्तरमनुष्ठेयं स्विष्टकृदादिप्रयोगजातं सर्वमनुक्रमति अध्वर्युरेवाह्वयेऽहत्यादिना अनुब्रूहीति स्विष्टकृद्यागस्य पुरोऽनुवाक्याप्रैषः अनुष्ठितं प्रधानयागं न्यूनातिरेकदोषपरिहारेण स्विष्टं शोभनयागं करोतीति स्विष्टकृत् ॥३९॥ इडां समवदाय सर्वेभ्यो हविर्भ्यः सम्भूयैकस्मिन्निडापात्रे अवद्धित्यर्थः (?) अतिप्रजिहोते उत्तरा वेदिमतिक्रमय्य (? °मेय्य Cod.) तदिडापात्रं प्रगमयेत् ॥४०॥ अथाध्वर्युरिति इडोपह्वानादिकं प्रकृतिवदेव कृत्वा अनुयाजार्थमभ्यनुज्ञापकमिमं प्रैषमध्वर्युरेव ब्रूयात् । पृषदाज्यं दधिमिश्रमाज्यम् पृषदाज्यधानीगतं पृषदाज्यं जुह्वामर्धमासिच्य शिष्टमाज्यमुपभृत्यानयेत् । देवान्यजेति प्रथमोऽनुयाजप्रैषः ॥४१॥ समुन्मुम्पतः समुच्छिन्नतः । अनुप्रहरतः स्वस्वप्रस्तरमग्नौ प्रक्षिपतः ॥४२॥ प्रतिपरेत्य आहवनीयदेशात्प्रतिनिवृत्य गार्हपत्यसमीपं गत्वा । उपास्ते तूष्णीमुपविशति ॥४५॥ यजमानयोर्यजमानपत्न्योः । क्षामकर्षमिश्रं क्षामोऽतिपाकेन दग्धः पात्रे संसक्तः (? सस° Cod.) कृषि विलिप्यत (?) इति कर्षः क्षामश्चासौ कर्षश्चेति क्षामकर्षः तेन मिश्रं हविरादाय अवभृथमुदकं प्रति यन्ति एतत् [हि] क्षामकर्षमिश्रं हविः वरुण्यम् । सौमिकावभृथवत्प्रसक्तसामगानं निषेधति तत्र न सामेति न खत्र वरुणप्रघासे साम्ना किमपि प्रयोजनं क्रियते । अवभृथसमीपमभ्यवेत्य हविरुपमारयति अप्सु प्रक्षिपति ॥४६॥ काममिति स्नानानन्तरमन्ये वाससी परिधापयेत् ॥४७॥ उप्त्वा वापयित्वा । वरुणप्रघासार्थं निमित्तायामुत्तरवेद्यां यदग्निहोत्रहवनं न तद्युज्यते यस्मादेवं तस्मात्कारणात् वरुणप्रघासस्थानादुदवसानं [निष्क्रमणं] कर्तव्यम् । दर्शपूर्णमासवच्चातुर्मास्यानामनुष्ठानबाहुल्याभावादुत्सन्नयज्ञत्वमतस्तेषामप्रतिष्ठितत्वेन तदनुष्ठाने यजमानस्याप्यप्रतिष्ठा सम्भाव्येत अतस्तस्य प्रतिष्ठायै स्वयंप्रतिष्ठितः पौर्णमासयागः सम्पद्यते ॥४८॥२॥५॥

अथ साकमेधाख्यस्य विधित्सितस्य तृतीयस्य पर्वणः पापरूपशत्रुजयहेतुत्वं वक्तुं वृत्तान्तं संकीर्तयति वरुणेति । अनचीनं नैरन्तर्येण वर्तमानमहरनूचीनाहम् ॥१॥ मेधः सारम् ।

चौरौदन इति पयसि तण्डुलान्प्रक्षिप्य श्रपणे सति चीरेण संस्कृत ओदनो निष्पद्यते । ब-लकारः सारांशो मेधशब्दार्थः ॥४॥ तस्य गृहमेधीययागस्य आवृत् क्रियाप्रयोगः क्रमोऽभिधी-यते । सांतपनोयेष्टौ (? °निष्टौ Cod.) या वेदिर्बर्हिषा स्तीर्णीभूत् गृहमेधीयस्यापि सैवोपकरो-ति । इध्मस्य स्थाने शकलानेव संमृज्य परिधिभिः सह तान्सादयेत् ॥५॥ पिशीलशब्दः श-रावबाची । एनं चरुं द्वेधा विभज्य तयोनिदध्यात् । पात्रस्थयोस्तयोरोदनयोर्मध्ये सर्पिःपूरणा-यावटौ कृत्वा ॥६॥ तत्तदानीमेव प्रतिवेशं (श Cod.) समाषनार्थं प्रतिनिधिवेन (? धेवेन Cod.) निवेशनस्थानं प्रतिवेशः तत्स्थानीयमाज्यं दक्षिणाग्रावाज्यस्थाल्यामधिश्रयेत् (? ता-स्तावाज्य° Cod.) । सोष्ममेवेति यस्यां स्थाल्यां चरुः श्रप्यते तत्सहितमेव ॥११॥ अनिरशि-तां शेषसहितां कुम्भीं पात्रान्तरेणापिधाय । हविषा पूर्णा यस्मिन्कर्मणि तत्पूर्णदर्वम् ॥१६॥ पूर्णदर्वाख्यस्य कर्मणः कालं विधत्ते अथेति प्रातरग्निहोत्रे हुते वाहुते वा कुम्भ्याः सका-शात् दर्व्या आधानेनोपहत्य गृह्णीयात् ॥१७॥ साकमेधेषु प्रधानभूताया महाहविराख्याया इ-ष्टेरारम्भं प्रतिजानीते अथात इति । वरुणप्रघासतन्त्रं तत्रातिदिशति तद्यथेति तस्य पूर्वोक्तस्य [महाहविषो] वरुणप्रघासस्य हविषो यथानुष्ठानं तथैव महाहविषो वक्ष्यमाणस्यापि ॥२०॥ ३॥५॥

अथ तस्य महाहविषः प्रयोगक्रमं विधित्सुः प्रागेतेन देवैर्विजितं (? प्रागेतैर्वैदिदेवा Cod.) प्रति[पादयति] महाहविषा हेत्यादिना ॥१॥ वरुणप्रघासवत् ॥२॥ ॥११॥४॥५॥

अथ पितृयज्ञं विधित्सुः पितृणामुत्पत्तिमाह महाहविषा हेति । यानेवासुरा अघ्नन् अ-मारयन् ॥१॥ अत्रास्मिन्कर्मणि अस्य यजमानस्यात्मनः स्वस्य अनुचरणेन (!) अनुगमनेन च यदेव प्राणिजातं हन्यते वा ताड्यते यद्वा मीयते मिद् हिंसायाम् ॥३॥ इत्येव एवमेव ॥५॥ तस्याः पयसि प्रक्षिप्ता मथिता धानाचूर्णाः एकशलाकया एकयैव शलाकया एकवार-मालोलिता हविर्भवति ॥६॥ पक्वेन पाकसंस्कृतेन चरुपुरोडाशादिहविषा देवेभ्यो दत्तेन केवलं हविर्यज्ञयागिन एव सन्तः ॥७॥ चतस्रः कोणा यस्याः सा चतुःस्रक्तिः ॥१०॥ पूर्वस्यां दिशि आहवनीयसमीपे प्रत्यङ्मुखाः सन्तो देवा मनुष्यानभि (°तृतो Cod.) यजमानानभि-लक्ष्य उपागता भवन्ति तस्मात्कारणात्तेभ्यो देवेभ्यः प्राङ्मुखस्तिष्ठन्नध्वर्युर्जुहोति ॥११॥ तत एव तस्या वेदेः सकाशादेव सोऽध्वर्युः प्राक् प्राच्यां दिशि स्तम्बयजुर्हरेत् । तस्या वेदेः प-रिग्रहमभिनयेन (प्रतिग्र° Cod.) दर्शयति अथेत्येवाग्रऽइति अग्रे प्रथममित्येवमेव पश्चाद्भागे दक्षिणापवर्गं रेखया परिगृह्णीयात् । हार्यं हरणीयम् ॥१२॥ यावद्बर्हिः प्रस्तरभाजनं प्रस्तरस्य योग्यं पर्याप्तं भवति तावत्परिशिनष्टि अवशेषयेत् । प्रसलवि प्रदक्षिणम् । अन्ववागात् अ-नुप्राप्नोत् । अपोदेति अपगच्छति ॥१५॥ इत्यादित्यभिनयदर्शनो (°ने ?) अनेन प्रकारेण ब्रह्मय-जमानौ आहवनीयस्य पुरतो गत्वा अप्रदक्षिणं पर्यापत्य (!) पितृयज्ञवेदेः पश्चाद्देशं परीतः परिक्रामतः ॥१८॥ परिवृते परिवेष्टिते स्थाने ॥२०॥ अपबर्हिषः बर्हिश्चतुर्थः प्रयाजः तद्वर्जं चतुरः प्रयाजान्यजेत ॥२३॥ व्यतिषङ्गं परस्परसंसृष्टं यथा भवति तथा ॥३२॥ प्राशनपक्षम-प्याह प्राशितव्यं वेवेति इडावदानं प्राशित्रावदानं च यज्ञान्तरवदत्रापि प्राशितव्यम् यस्येति इडां प्राश्नन्त ऋत्विजो यस्य कस्यचिदात्मनः सम्बन्धिन्यग्नौ वैश्वानरे तज्जुहुत्विति अतः प्रा-शने न शेष इत्यनेनाभिप्रायेण ॥३३॥ दास्यन् पिण्डदाता । अपसलवि अप्रदक्षिणम् ॥३४॥

स येमामिति इदंशब्देन उत्तरापरदिशमभिनयेन दर्शयति । उत्तानोऽयं निमृष्टे निमृज्नीत ॥३६॥ देवसम्बन्धिनोऽस्य यजमानस्य देवान्पत्नित्यस्य पत्न्यितुयज्ञाचरणे तेन देवानां मनसि क्रोधोऽभूत् पुनरावृत्याहवनीयोपस्थानेन तदीदानीमन्यज्ञानितमपराधं देवेभ्यो निह्नुते शमयति ॥३७॥ अपबर्हिषौ बर्हिः प्रथमोऽनुयाजः तद्वर्जितौ द्वावनुयाजौ यजति ॥४४॥ इतश्चतुःस्रक्त्यां वेद्यां स्तीर्णं बर्हिः परिधींश्चादाय युगपदग्नावनुप्रहरति प्रक्षिपति ॥४०॥१॥६॥

अथ विधित्सितानां त्रैयम्बकहविषां शल्यनिर्हरणहेतुत्वमितिहासेनोपपादयति मखावविषेति । तान्देवान् तस्माच्छल्यात् निरवदन् विषयात्त्रिनवः निर्हरणं प्रकारमाह तान्त्र्यम्बकेनेति वृक्ण उद्यमने शल्यप्रोतांस्तानस्माच्छल्यादुद्धतवान् ("वृत" ?) ॥१॥ अक्ताः आज्येनाभिघारिताः । अभिमानुक इति पशुप्रभवेनाज्येन यदि सेदान्पुरोडाशानध्यात् ततः स रुद्र आज्यसम्बन्धद्वारा (री Cod.) तत्कारणभूतान्पशूनभिमंनुकः (!) अभिमानु ग्रथितुं शक्तः स्यात् ॥६॥ ग्रथितं (ग्राथितं Cod.) शनैः परिकल्पितम् । अत इन्द्राकाभिर्युतोः अहं धनं धे श्रवणः चवरे चवरे शिव (शिप Cod.) इति ॥७॥ पलाशवृक्षस्य पर्णेन ॥९॥ उर्वारुकं कर्कटीफलम् (!) ॥१२॥ भगस्य सौभाग्यस्य ॥१३॥ एतान्पुरोडाशानुत्क्षिपति यथा गौः पृथिवीनामैतत् पृथिवी तान्नोदाप्नुयात् यथा भूमौ न पतन्ति तथानारोहि पुनरपनिना धारयेत् । निर्मिमते निर्हरन्ति । पुनर्ग्रहणाशक्तौ स्पर्शनं विधत्ते तानिच्छलिप्सन इति लब्धुमिच्छन्तो लिप्सन्तः तद्विपरीता विलिप्सन्तः लब्धुमशक्ताः सन्तः भूमौ पतितांस्तान्पुरोडाशान्स्वभावानुपस्पृशन्ति ॥१६॥ यत्र तृणमये आवपने धान्यं वध्यते तन्मूतम् मूतमेव मूतकम् । अंशुगर्ग्यो यस्यामुभयतः बद्धा (? वधा Cod.) यद्वा कूपे उभयतः शिक्याभ्यामाबध्य (? भ्यामा Cod.) अंशुनिर्मिता भाजनयुक्तो दारुविशेषो वा पर्यायः कूपः (!) तस्मिन्नुभयतः उभयपार्श्वस्थितभाजनयोः तानीदानावध्नी । मूजवान्नामोदीच्यः पर्वतः । अस्मात्स्थानादवध्याहीति अनुगानयति यस्मिन्यस्मिन्स्थाने अस्य देवस्य चरणं वर्तनमस्ति तत्स्थानमनुलक्ष्य । अस्य रुद्रस्य अत्रास्मिन्मूजवत्पर्वतसम्बन्धिनि परः परस्ताद्गते चरणं वर्तनं भवति । नितरां स्वापयत्येनम् कृत्तेर्मृडत्वेन सुखकरत्वात् ॥१७॥ अप्रतीक्षमप्रतीक्ष्य ॥१८॥२॥६॥

अथ शुनासीरीयं विधित्सुः तस्य शुनासीर्यस्य चतुर्थपर्वणः संवत्सरसलक्षणफलसाधनत्वं प्रतिपादयिष्यंस्तावदुपोद्घातत्वेन चातुर्मास्यानामक्षय्यफलसाधनत्वमाह अक्षय्यमिति । एतेन चातुर्मास्ययज्ञेन वसन्तादृत्वात्मक एव भूत्वा देवानप्येति चातुर्मास्ययाजी अपिगच्छति ॥१॥ तच्छुनम सुखनामैतत् सुखहेतुत्वाच्छुनमित्युच्यते । यो रस आसीत् सुखहेतुः सारभूतोंऽशोऽभवत् तत्सीरमित्युच्यते ॥२॥ उक्तं वाक्यशेषमत्राप्यतिदिशति स बन्धुरिति कृत्स्नस्य कर्मणः फलप्रतिपादनसमये पूर्वं यं वाक्यशेषं या वै देवानामित्यादिकमत्राचाम उक्तावन्तः स एव अन्यापि शुनासीर्यस्य हविषः स्तावकः उक्तविधयोरेव (°रेवा Cod.) वाक्यादित्यरूपेणावस्थितत्वादिति भावः ॥५॥ अभिलक्ष्य संजानते संज्ञानाना भवन्ति । अतः पयसः संमतिहेतुत्वात् विजिग्यानं साकमेधैर्विजितवन्तमेनं यजमानं श्रियै सर्वाः प्रजाः अभिसंजानाते अभिसंजानीरन् अनुमन्यन्तामिति अनेनाभिप्रायेण पयसः कारणम् ॥६॥ तत् तदानीं तदनन्तरकालमेव स यजमानः शुनासीर्येण यजेत ॥१०॥ सोमेन यक्ष्यमाणस्य पक्षान्तरमाह तदेक इति । तत्र खलु शुनासीर्यानुष्ठाने एके शाखिनो रात्रीरुपपयिषन्ति अनेन च (!) यागेन

कतिचिद्रात्रीरापुमिच्छन्ति । आगामिनीभ्यां फाल्गुनीभ्यां युक्ता पौर्णमासी फाल्गुनी षष्ठ्यर्थे चतुर्थी फाल्गुन्याः पौर्णमास्याः पुरस्तात् यत् अदो विप्रकृष्टे उत् ऊर्ध्वं चन्द्रमाः अस्मिन्दृश्यत ऽइत्युदृदृष्टं शुक्लपक्षः तत् तत्र प्रथमाद्यन्यतमस्यां तिथौ शुनासीर्येण यजेत ॥११॥ अथानन्तरमेव सोमयागार्थं दीक्षेत कालविलम्बो न कार्यः । दैवान्मानुषाद्वा विघ्नाद्विलम्बेऽपि तस्यावधिमाह तन्नेति तं तभो (तन्नतो?) नानोजानमपरा फाल्गुनो वर्पतयात् (!) । अयं च पक्षोऽधिकारिविशेषस्यैवेति निगमयति इति न्विति द्विविधौ हि चातुर्मास्ययाजिनौ सकृदनुष्ठायोत्सृजमानः पुनः प्रयुञ्जानश्च ॥१२॥ चातुर्मास्याङ्गभूतं वपनं मीमांस्यते अथात इति । परिवर्तनस्य परितः केशश्मश्र्वादीनां वर्तनस्य वपनस्य विकारे (विवारि Cod.) ऽधिक्रियते । निर्धयति रसं निष्कृष्य पिबति ॥१४॥ यत् यस्मात् परितः शिरो वर्तयते केशान्वापयति ॥१६॥३॥६॥

वैश्वदेवादिषु सर्वेषु परिवर्तनं सेतिकर्तव्यताकं विधित्सुस्तेषां त्रेषां वृत्रबधहेतुत्वं विजयहेतुत्वं च समानमिति प्रतिपादयति तदिति । तत् तत्रोक्तविषये साकमेधानामिव वृत्रबधहेतुत्वं जयहेतुत्वं चेति यदाङ्गः कथयन्ति तन्न तथा सर्वैरेव हि चातुर्मास्यैः वृत्रहननं विजयं च प्राप्तवन्तो देवाः ॥१॥ आषाढ्यादीन् ॥३॥ कार्त्तिक्यादीन् ॥४॥ त्र्येनीति त्रिषु स्थानेषु एतं (? एन Cod.) श्वेतं वर्णो यस्याः सा त्र्येनी वर्णादनुदात्तादिति [पा° ४.१.३९.] एतशब्दात् ङीप् तकारस्य च नकारादेशः । श्वाविन्नामकस्य मृगस्य लोम शलली उक्तलक्षणा सा वक्ष्यमाणपरिवर्तनहेतुत्वेन स्वीकार्या । लोहितवर्णः ताम्रमयः क्षुरः । शलल्या केशान्विभज्य क्षुरेण परितो वापयेत् (? वापेत् Cod.) ॥५॥ चातुर्मास्येनेष्टवन्तं यजमानमन्विष्यन्तो जनाः ब्रह्मलोकादर्वाचीनेषु लोकेषु न विन्दन्ति न लभन्ते ॥१॥४॥६॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीये काण्डे षष्ठो ऽध्यायः पञ्चमश्च प्रपाठकः ॥ ॥ समाप्तं द्वितीयं काण्डमेकपादिकानाम ॥ ॥

---

## READINGS.

*Adhyâya* १.२.४ पुरऽग्नता Sây. - १३ चिक्ये Sây. - १६ °वत्रर्क्°, °वृण° A., and व्यवत्समाद (!), व्यवसेडुः Sây. - १९ अनपराद्ध A. - ३.३ भवति दे° A - ५ विद्वि A. - ४.२ °त्तद्वपि A. - ३ तं ना° A.B.*) - ५ सर्पिरासे° A. - ७ स सदेव°

*) B (Chambers 39) is not accented. — The readings of M (Mill) are marked but occasionally.

A. - १६ प्रत्यङु A प्रत्यंङु B. - २० तं वे तथैव A. - २५ °तन्वेकं AB. - २१ पु-
रः A. —

*Adhyâya* २. १. १ ज्ञनयते यदग्नि A. - २ हृत्रीणि A. - ९ यैनतंयव A.
१५ तस्माङु A. - १६ प्रत्युग्यामिनी A: the printed accent under *pra* is an
addition, but I am not certain if I have been right to do so. - २० °ह्री°
A. - २१ °तन्वेकं° AB. - २. १ यन्वेव and हृत्रिर्गस्तं A. - ३ म म गाव्रानेव.
५ दृग्यान्वेव A. - ६ द्वेधा A. - ८ स्मैय A. स्मैयं B. हुर्यां Sây. - १२ श्रयेन त्रयं ने-
व A. - २० ऊचु । A., which might be indeed the correct reading. - २० न
वदं ज्ञातू A. - ३. ४ यावक्लो - यावत्त्कृ B. Sây. and second hand in M. I
am not certain if I have been right to print यावत्त्सां; it is indeed
maintained by A and M, but there are occurring here in A several in-
stances, where either *ts* is written instead of *ch* (*dutsundm*) and of ç
(*âditso, puroḍâtsasya*), or in the contrary where *ts* is given by *ch* (*ena-
chaha*) and by ç (*âsîçâkamedhair, tasmâçaurya*). - ४ उयानि° Sây. - ७
वर्षा ह्रि A. - २० ध्रियेर् स्वाह्रा A °रंस्वाहा B. and °ज्ययां नु° AB. - २२ डुत्सु°
A डुस्कु° B. - ४. ४ °त्मन्येवा° B. Sây. - ६ यांज्यं पवते तत A. - ८ तंदूपा A. -
११ स्तावः Sây.

*Adhyâya* ३. १. ३ The ल of ईलित is remarkable enough, as it is else
in the Mâdhyandinaçâkhâ regularly given by ड. - १४ °ज्ञाग्नि A. - १५ यन्वे-
वि A. - २४ °भेवानु A, and this is the correct reading. - २. ४ प्रातराह्° A. -
९ धूप्यत A. - ११ बल्बली° M. बल्वली AB. - ३. ६. संतस्य A. - ८ संम्रियते AB.,
and यदा यदेव A. (! instead of यदा-यदेव; the accent under the व is wan-

ting by a misprint). - ४.६ यदिंधि A. - ९ यन्पृह° A. - १२ एष तपति A. - २३ नाविन्दन् Sây. - २८ यथैनं न A. - ३१ the Samhitâ (३.२६) reads सूम्राय. - ३१ श्रुधि A. —

*Adhyâya* ४.१.६ and १२ तत्स्यवा AB. - २.४ अश्नीत Sây. - १३ सद्रूरुक्षोव A. - ३.१ कल्होल° Sây. - १० व्यदीवंने A यदीवन्ये B. - ११ देवा। A. - १२ तन्नाह्वावोवितस्य A. - १३ अग्रियं Sây. - १४ वषट्कृतб A (the correct reading is वषट्कृतб). - ४.३ स एतं Sây. स ये तं A prima manu. - ३ विवचनमेव Sây. - ४ निवचनं Sây. - १८ °वैनह्व A. - २४ आदित्सो A. —

*Adhyâya* ५.१.५ The *R*iksamhitâ reads बृह्ह्. - ५ °प्ययते Sây. - १२ °निषेधा AB. - १९ ज्ञग्निरे A. - २.३ and ७ प्रामुचत् A and this is the correct reading. - ८ नच्चयरत्पुण्यं (!) A. - १५ °नैलकीः Sây. - २४ शिश्यिरे A. - २७ निद्विह्वा अस° A. - २८ °वयाः। A. - २९ °ठ्या सह्व भवति AB. - ३८ °स्यातुर्वा A. - ४५ °ज्र्योदिन्याधर्युः A. - ४७ भवतः A. - ३.१ °तिर्व्येव A. - ११ हंमार्थ्यैतб सोषमेव A., and शक्लान्वामयते तावतो न्याद्धात्यथैतб सोषमेव A. - १२ चपुराज्यस्या° A. - १७ The Samhitâ (३.४९) reads परापत. - ४.९ विज्ञिग्यपान A. - १० एतत्कर्म कृतб A. —

*Adhyâya* ६.१.१ ज्ञघ्नб। तेनो A. - ३ त्वेवैष AB. - ३ °त्मनोऽचरणेन A.B.M. त्मनोऽनुचरणेन Sây. - ३ मीया A. मीयते B. मीयने Sây. - १८ इह्वाय° A. - २० चरंति A. - २२ देवां३ऽआज्यपां३ऽआ° A. - २८ पुरोडाह्व-स्य A. - ३३ तमग्नीदवैव A. - ३७ निक्कते Sây. - ३९ वशां३ऽअनु A. - २.४ न्वेवैष and न्वेवास्य A, which seems indeed the correct reading, see ६.१.३. - १७ तां द्वयो° AB (Final n standing before any dental is almost regularly

given by anusvâra, whereas final anusvâra in the same case is expressed by n). - १७ आनध्यो॰ A. - १७ ॰द्यश्वनृणां! A. - ३.२ श्रीरासीशाक्मे॰ A. - ४ ॰तैर्व्येव A. - ६ [illegible]मेवं Say. - ८ तस्माशोर्ग्य A. - १२ तन्नानी॰ and ॰स्मा[illegible]नी॰ A. - ४.१ ॰स्तैर्व्येव and ॰वैर्व्येव A. - ६ खलु A. —

ओम् । देवयजनं जोषयन्ते । स यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन्यदन्यद्भूमेर्नाभिशयीतातो वै देवा दिवमुपोदक्रामन्देवान्वाऽएष उपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीतावरतर-इव हेष्ट्वा स्यात्तस्माद्यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् ॥१॥ तद्वर्ष्म सत्समꣳ स्यात् । समꣳ सदविभ्रꣳशि स्यादविभ्रꣳशि सत्प्राक्प्रवणꣳ स्यात्प्राची हि देवानां दिगथोऽउदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक्पितृणाꣳ स यद्दक्षिणाप्रवणꣳ स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥२॥ न पुरस्ताद्देवयजनमात्रमतिरिच्येत । द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यतिरिच्यते कामꣳ ह दक्षिणतः स्यादेवमुत्तरत एतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात्परिशिष्यते क्षिप्रे हैवैनमुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥३॥ तदु होवाच याज्ञवल्क्यः । वार्ष्णाय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवीत्सर्वा वाऽइयं पृथिवी देवी देवयजनं यत्र वाऽअस्यै क्व च यजुषैव परिगृह्य याजयेदिति ॥४॥ ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना विद्वाꣳसो याजयन्ति सैवाह्वलैतन्नेदिष्ठमामिव मन्यामहऽइति ॥५॥ तच्छालां वा विमितं वा प्राचीनवꣳशं मिन्वन्ति । प्राची हि देवानां दिक्पुरस्ताद्धि देवाः प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ्तिष्ठञ्जुहोति ॥६॥ तस्मादु ह न प्रतीचीनशिराः शयीत । नेद्देवानभिप्रसार्य शयाऽइति या दक्षिणा दिक्सा पितृणां या प्रतीची सा सर्पाणां यतो देवा उच्च-

क्रमुः सैषाहीना योदीची दिक् सा मनुष्याणां तस्मान्मानुष ऽ उदीचीनवꣳशामेव शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवꣳशा नादीक्षितस्य ॥७॥ तां वा ऽ एतां परिश्रयन्ति । नेदभिवर्षादिति न्वेवात्र वर्षा देवान्वा ऽ एष ऽ उपावर्तते यो दीक्षते स देवतानामेको भवति तिर ऽ इव वै देवा मनुष्येभ्यस्तिर ऽ इवैतद्यत्परिश्रितं तस्मात्परिश्रयन्ति ॥८॥ तत्र सर्व ऽ इवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः ॥९॥ स वै न सर्वेणेव संवदेत । देवान्वा ऽ एष ऽ उपावर्तते यो दीक्षते स देवतानामेको भवति न वै देवाः सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते हि यज्ञियास्तस्माद्यद्येनꣳ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्येष ऽ उ तत्र दीक्षितस्योपचारः ॥१०॥ अथारणी पाणौ कृत्वा । शालामध्यवस्यति स पूर्वार्ध्यꣳ स्थूणाराजमभिपद्यैतदाहेदमगन्म देवयजनं पृथिव्या यत्र देवासो ऽ अजुषन्त विश्व ऽ इति तदस्य विश्वैर्देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवाꣳसो ऽनूचाना यद्धास्य ते ऽक्षिभ्यामीक्षन्ते ब्राह्मणाः शुश्रुवाꣳसस्तद्धास्य तैर्जुष्टं भवति ॥११॥ यद्वाह । यत्र देवासो ऽ अजुषन्त विश्व ऽ इति तदस्य विश्वैर्देवैर्जुष्टं भवत्यृक्सामाभ्याꣳ संतरन्तो यजुर्भिरित्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदेमेति भूमा वै रायस्पोषः श्रीर्वै भूमाशिषमेवैतदाशास्ते समिषा मदेमेति मदन्तीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥१२॥ ब्राह्मणम् ॥१॥ ॥

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयाद्यद्वा सम्पद्येत व्रतꣳ ह्येवास्यातो ऽशनं भवति यद्यु नाशिशिषेदपि कामं नाश्नीयात् ॥१॥ ॥ शतं १४०० ॥ ॥ अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधति तन्नापित उपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्तते ऽस्ति वै पुरुषस्यामेध्यं य-

त्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वाऽअस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षाऽइति ॥२॥ तद्धैके । सर्वऽएव वपन्ते सर्वऽएव मेध्या भूत्वा दीक्षिष्यामहऽइति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत ॥३॥ स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्यैवाग्रे सव्यस्य वाऽअग्रे मानुषेऽथैवं देवत्राङ्गुष्ठयोरेवाग्रे कनिष्ठिकयोर्वाऽअग्रे मानुषेऽथैवं देवत्रा ॥४॥ स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं वाऽअग्रे मानुषेऽथैवं देवत्रा ॥५॥ स दक्षिणमेवाग्रे गोदानमभ्युनत्ति । इमा आपः शमु मे सन्तु देवीरिति स यदाहेमा आपः शमु मे सन्तु देवीरिति वज्रो वाऽआपो वज्रो हि वाऽआपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्तदेतमेवैतद्वज्रꣳ शमयति तथो हैनमेष वज्रः शान्तो न हिनस्ति तस्मादाहेमा आपः शमु मे सन्तु देवीरिति ॥६॥ अथ दर्भतरुणकमन्तर्दधाति । ओषधे त्रायस्वेति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाभिनिदधाति स्वधिते मैनꣳ हिꣳसीरिति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥७॥ प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥८॥ अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥९॥ अथ स्नाति । अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वाऽआपो मेध्यो भूत्वा दीक्षाऽइति पवित्रं वाऽआपः पवित्रपूतो दीक्षाऽइति तस्माद्वै स्नाति ॥१०॥ स स्नाति । आपोऽअस्मान्मातरः शुन्धयन्त्वित्येतद्याह शुन्धयन्त्विति घृतेन नो घृतप्वः पुनन्त्विति तद्वै सपूतं यं घृतेनापुनंस्तस्मादाह घृतेन नो घृतप्वः पुनन्त्विति विश्वꣳ हि रिप्रं प्रवहन्ति देवीरिति यद्वै विश्वꣳ सर्वं तद्यदमेध्यꣳ रिप्रं तत्सर्वꣳ ह्यस्मादमेध्यं प्रव-

हन्ति तस्मादाह विश्वᳪ हि रिप्रं प्रवहन्ति देवीरिति ॥११॥ अथ प्राङिवोदङ्-ङुत्क्रामति । उदिदाभ्यः शुचिरा पूत एमीत्युदाभ्यः शुचिः पूत एति ॥१२॥ अथ वासः परिधत्ते । सर्वत्वायैव स्वामेवास्मिन्नेतत्त्वचं दधाति या ह वाऽइयं गोस्त्वक्पुरुषे हैषाग्रऽआस ॥१३॥ ते देवा अब्रुवन् । गौर्वाऽइदᳪ सर्वं बिभर्ति हन्त येयं पुरुषे त्वगगव्येतां दधाम तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यत ऽइति ॥१४॥ तेऽवछाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते ॥१५॥ अनच्छिद्रं हि वै पुरुषः । तस्मादस्य यत्रैव क्व च कुशो वा यद्वा विकृन्तति तत एव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास एव तस्मान्नान्यः पुरुषाद्वासो बिभर्त्येतᳪ ह्यस्मिंस्त्वचमदधुस्तस्मादु सुवासा एव बुभूषेत्स्वया त्वचा समृध्याऽइति तस्मादप्यश्लीलᳪ सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति ॥१६॥ नो हान्ते गोर्नग्नः स्यात् । वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं मऽआदास्यतऽइति तस्मादु गावः सुवाससमुपैव निश्रयन्ते ॥१७॥ तस्य वाऽएतस्य वाससः । अग्नेः पर्यासो भवति वायोरनुछादो नीविः पितृणाᳪ सर्पाणां प्रघातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेवᳪ हि वाऽएतत्सर्वे देवा अन्वायत्तास्तस्माद्दीक्षितवसनं भवति ॥१८॥ तद्वाऽअहतᳪ स्यात् । अयातयामतायै तद्वै निर्ण्यक्तᳪ ब्रूयाद्यद्वास्यात्रामेध्या कृणत्ति वा वयति वा तदस्य मेध्यमसदिति यद्युऽअहतᳪ स्यादद्भिरभ्युक्षेन्मेध्यमसदित्यथो यदिदᳪ स्नातवस्त्रं निक्तमपल्पूलनकृतं भवति तेनो हापि दीक्षेत ॥१९॥ तत्परिधत्ते । दीक्षातपसोस्तनूरसीत्यदीक्षितस्य वाऽअस्यैषाग्रे तनूर्भवत्यथात्र दीक्षातपसोस्तस्मादाह दीक्षातपसोस्तनूरसीति तां त्वा शिवाᳪ शग्मां परिदधऽइति तां त्वा शिवाᳪ साध्वीं परिदधऽइत्येवैतदाह भद्रं वर्णं पुष्यन्निति पाप वाऽएषोऽग्रे वर्णं पुष्यति यमसुपदीक्षितेऽथात्र भद्रं तस्मादाह भद्रं वर्णं पुष्य-

न्निति ॥२०॥ अथैन७ शालां प्रपादयति । स धेन्वै चानडुहश्च नाश्नीयाद्धेन्वनडुहौ वाऽइद७ सर्वं बिभृतस्ते देवा अब्रुवन्धेन्वनडुहौ वाऽइद७ सर्वं बिभृतो हन्त यदन्येषां वयसां वीर्यं तद्धेन्वनडुहयोर्दधामेति स यदन्येषां वयसां वीर्यमासीत्तद्धेन्वनडुहयोरदधुस्तस्माद्धेनुश्चैवानड्वांश्च भूयिष्ठं भुङ्क्तस्तद्धैतत्सर्वाश्यमिव यो धेन्वनडुहयोरश्नीयादन्तगतिरिव त७ हाद्भुतमभिजनितोर्जायायै गर्भं निरवधीदिति पापमकदिति पापी कीर्तिस्तस्माद्धेन्वनडुहयोर्नाश्नीयात्तदु होवाच याज्ञवल्क्योऽश्नाम्येवाहम७सलं चेद्भवतीति ॥२१॥ ब्राह्मणम् ॥२॥

अपः प्रणीय । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपत्यग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षाऽइति तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति ॥१॥ तद्धैके । आदित्येभ्यश्चरुं निर्वपन्ति तदस्ति पर्युदितमिवाष्टौ पुत्रासोऽअदितेर्ये जातास्तन्वस्परि । देवां२॥ऽउप प्रैत्सप्तभिः परा मार्ताण्डमास्यदिति ॥२॥ अष्टौ ह वै पुत्रा अदितेः । यांस्त्वेतद्देवा आदित्या इत्याचक्षते सप्त हैव तेऽविकृत७ हाष्टमं जनयां चकार मार्ताण्ड७ संदेघो हैवास यावानेवोर्ध्वस्तावांस्तिर्यङ् पुरुषसंमित इत्यु हैकऽआहुः ॥३॥ तऽउ हैतऽऊचुः । देवा आदित्या यदस्मानन्वजनिमा तदमुयेव भूद्धन्तेमं विकरवामेति तं विचक्रुर्यथायं पुरुषो विकृतस्तस्य यानि मा७सानि संकृत्य संन्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति यमु ह तद्विचक्रुः स विवस्वानादित्यस्तस्येमाः प्रजाः ॥४॥ स होवाच । राध्नवान्मे स प्रजायां य एतमादित्येभ्यश्चरुं निर्वपादिति राध्नोति हैव य एतमादित्येभ्यश्चरुं निर्वपत्ययं त्वेवाग्नावैष्णवः प्रज्ञातः ॥५॥ तस्य सप्तदश सामिधेन्यो भवन्ति । उपा७शु देवते यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः संयाजयन्ति पत्नीः सर्वत्वायैव समिष्टयजुरेव न

जुहोति नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य सꣳस्थाया अग्नौ जुहवानीत्यन्तो हि यज्ञस्य समिष्टयजुः ॥६॥ अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते । अत्वग्वै पुरुषोऽभिहितोऽन्तरेवैतद्भवति यदभ्यङ्क्ते गवि वै पुरुषस्य त्वग्गोर्वा एतन्नवनीतं भवति स्वयैवैनमेतत्त्वचा समर्धयति तस्माद्वा अभ्यङ्क्ते ॥७॥ तद्वै नवनीतं भवति । घृतं वै देवानां फाण्टं मनुष्याणामथैतन्नाहैव घृतं नो फाण्टꣳ स्यादेव घृतꣳ स्यात्फाण्ट-मयातयामतायै तदेनमयातयाम्नैवायातयामानं करोति ॥८॥ तेनाभ्यनक्ति । शीर्षतोऽग्रेऽग्रा पादाभ्यामनुलोमं महीनां पयोऽसीति पयो ह्येतासामेकं नाम यद्गवां तासां वा एतत्पयो भवति तस्मादाह महीनां पयोऽसीति वर्चोदा असि वर्चो मे देहीति नात्र तिरोहितमिवास्ति ॥९॥ अथाक्ष्यावानक्ति । अरुर्वै पुरुषस्याक्षि प्रशान्तमिति ह स्माह याज्ञवल्क्यो दुरक्ष इव हास पुरा ह्येवास्य दूषीका तेऽएवैतदनरुष्करोति यदक्ष्यावानक्ति ॥१०॥ यत्र वै देवाः । असुररक्षसानि जघ्नुस्तच्छुष्णो दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश स एष कनीनकः कुमारक इव परिभासते तस्मा एवैतद्यज्ञमुपप्रयन्त्सर्वतोऽश्मपुरां परिदधात्यश्मा ह्याञ्जनम् ॥११॥ त्रैककुदं भवति । यत्र वा इन्द्रो वृत्रमहꣳस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति चक्षुष्येवैतच्चक्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात्समानी ह्येवाञ्जनस्य बन्धुता ॥१२॥ शरेषीकयानक्ति । वज्रो वै शरो विरक्षस्तायै सतूला भवत्यमूलं वा इदमुभयतः परिच्छिन्नꣳ रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्यत्सतूला भवति विरक्षस्तायै ॥१३॥ स दक्षिणमेवाग्रेऽआनक्ति । सव्यं वा अग्रे मानुषेऽथैवं देवत्रा ॥१४॥ स आनक्ति । वृत्रस्यासि कनीनक इति वृत्रस्य ह्येष कनीनकश्चक्षुर्दा असि चक्षुर्मे देहीति नात्र तिरोहितमिवास्ति ॥१५॥ स दक्षिणꣳ सकृद्यजुषानक्ति । सकृत्तूष्णीमथोत्तरꣳ स-

कृष्यजुषानक्ति द्विस्तूष्णीं तदुत्तरमेवैतदुत्तरावत्करोति ॥१६॥ तद्यत्पञ्च कृत्व आनक्ति । संवत्सरसंमितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्व आनक्ति ॥१७॥ अथैनं दर्भपवित्रेण पावयति । अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वै दर्भा मेध्यो भूत्वा दीक्षाऽइति पवित्रं वै दर्भाः पवित्रपूतो दीक्षा इति तस्मादेनं दर्भपवित्रेण पावयति ॥१८॥ तद्वाऽएकꣳ स्यात् । एको ह्येवायं पवते तदेतस्यैव रूपेण तस्मादेकꣳ स्यात् ॥१९॥ अथोऽअपि त्रीणि स्युः । एको ह्येवायं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधाविहितः प्राण उदानो व्यान इति तदेतस्यैवानु मात्रां तस्मात्त्रीणि स्युः ॥२०॥ अथोऽअपि सप्त स्युः । सप्त वाऽइमे शीर्षन्प्राणास्तस्मात्सप्त स्युस्त्रिःसप्तान्येव स्युरेकविꣳशतिरेषैव संपत् ॥२१॥ तꣳ सप्तभिः-सप्तभिः पावयति । चित्पतिर्मा पुनात्विति प्रजापतिर्वै चित्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह वाक्पतिर्मा पुनात्विति प्रजापतिर्वै वाक्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह देवो मा सविता पुनात्विति तद्धि सुपूतं यं देवः सवितापुनात्तस्मादाह देवो मा सविता पुनात्वित्यच्छिद्रेण पवित्रेणेति यो वाऽअयं पवतऽएषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरित्येते वै पवितारो यत्सूर्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरिति ॥२२॥ तस्य ते पवित्रपतऽइति । पवित्रपतिर्हि भवति पवित्रपूतस्येति पवित्रपूतो हि भवति यत्कामः पुने तच्छकेयमिति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥२३॥ अथाशिषामारम्भं वाचयति । आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहऽइति तदस्मै स्वाः [illegible]त्विज आशिष आशासते ॥२४॥ अथाङ्गुलीर्न्यचति । स्वाहा यज्ञं मनसऽइति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा द्यावापृथिवीभ्यामिति द्वे स्वाहा वातादारभऽइति मुष्टीकरोति न वै यज्ञः प्रत्यक्षमिवारभे यथायं दण्डो वा वासो वा परोऽक्षं वै देवाः परोऽक्षं य-

ज्ञः ॥२५॥ स यदाह । स्वाहा यज्ञं मनसऽइति तन्मनस आरभते स्वाहोरोरन्तरिक्षादिति तदन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यामारभते ययोरिदꣳ सर्वमधि स्वाहा वातादारभऽइति वातो वै यज्ञस्तद्यज्ञं प्रत्यक्षमारभते ॥२६॥ अथ यत्स्वाहा-स्वाहेति करोति । यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रोऽएव वाचं यच्छति वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते ॥२७॥ अथैनꣳ शालां प्रपादयति । स जघनेनाहवनीयमन्वग्रेण गार्हपत्यꣳ सोऽस्य संचरो भवत्या सुत्यायै तद्यदस्यैष संचरो भवत्या सुत्यायाऽअग्निर्वै योनिर्यज्ञस्य गर्भो दीक्षितोऽन्तरेण वै योनिं गर्भः संचरति स यत्स तत्रेङ्गति यत्परि वर्तते तस्मादिमे गर्भा एजन्ति यत्परि वर्तन्ते तस्मादस्यैष संचरो भवत्या सुत्यायै ॥२८॥ ब्राह्मणम् ॥३॥

सर्वाणि ह वै दीक्षाया यजूꣳष्यौद्ग्रभणानि । उद्गृभ्णीते वाऽएषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षतऽएतैरेव तद्यजुर्भिरुद्गृभ्णीते तस्मादाहुः सर्वाणि दीक्षाया यजूꣳष्यौद्ग्रभणानीति तत एतान्यवान्तरामाचक्षतऽऔद्ग्रभणानीत्याहुतयो ह्येता आहुतिर्हि यज्ञः पराऽक्षं वै यजुरुपत्यक्षं प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि ॥१॥ ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजूꣳषीत्याचक्षते सम्पदऽएव कामाय चतुर्थꣳ ह्रयतेऽथ यत्पञ्चमꣳ स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तज्जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥२॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥३॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथायं यज्ञः सम्भृत एवं वाऽएष यज्ञꣳ सम्भरति यदेतानि जुहोति ॥४॥ तानि वै पञ्च जुहोति । संवत्सरसंमितो

वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति ॥५॥ अथातो होमस्यैव । आकूत्यै प्रयुजेऽग्नये स्वाहेत्या वाऽअग्रे कुर्वते यजेयेति तद्यदेवात्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥६॥ मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाभिगछति यजेयेति तद्यदेवात्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥७॥ दीक्षायै तपसेऽग्नये स्वाहेति । अन्वेवैतदुच्यते नेत्तु हूयते ॥८॥ सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती वाग्यज्ञः पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तद्यदेवात्र यज्ञस्य तदेवैतत्सम्भृत्यात्मन्कुरुते ॥९॥ तदाहुः । अनद्धेवैता आकूतयो हूयन्तेऽप्रतिष्ठिता अदेवकास्तत्र नेन्द्रो न सोमो नाग्निरिति ॥१०॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । नात एकं चनाग्निर्वाऽअद्धेवाग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता अद्धेव तेन प्रतिष्ठितास्तस्माद्दु सर्वास्वेवाग्नये स्वाहेति जुहोति तत एतान्याधीतयजूंषीत्याचक्षते ॥११॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । आत्मना वाऽअग्रऽआकुर्वते यजेयेति तमात्मनऽएव प्रयुङ्क्ते यत्तनुते तेऽअस्यैतेऽआत्मन्देवतेऽआधीते भवत आकूतिश्च प्रयुक्च ॥१२॥ मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाभिगछति यजेयेति तेऽअस्यैतेऽआत्मन्देवतेऽआधीते भवतो मेधा च मनश्च ॥१३॥ सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती वाग्यज्ञः सास्यैषात्मन्देवताधीता भवति वाक्पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तेऽस्यैतऽआत्मन्पशव आधीता भवन्ति तद्यदस्यैता आत्मन्देवता आधीता भवन्ति तस्मादाधीतयजूंषि नाम ॥१४॥ अथ चतुर्थीं जुहोति । आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवीऽउरोऽअन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहेत्येषा ह नेदीयो यज्ञस्यापां हि कीर्तयत्यापो हि यज्ञो द्यावापृथिवीऽउरोऽअन्तरिक्षेति लोकानां हि कीर्तयति बृहस्पतये हविषा विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ एतेनो हैषा नेदीयो यज्ञस्य ॥१५॥

अथ यां पञ्चमीᳪ स्रुचा जुहोति । सा हैव प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥१६॥ अथ यदभ्रुवायामाज्यं परिशिष्टं भवति । तत्स्रुच्यानयति त्रिः स्रुवेणाज्यविलापन्याऽअधि गृह्णाति यत्तृतीयं गृह्णाति तत्स्रुवमभिपूरयति ॥१७॥ स जुहोति । विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति ॥१८॥ सैषा देवताभिः पङ्क्तिर्भवति । विश्वो देवस्येति वैश्वदेवं नेतुरिति सावित्रं मर्तो वुरीतेति मैत्रं द्युम्नं वृणीतेति बार्हस्पत्यं द्युम्नᳪ हि बृहस्पतिः पुष्यसऽइति पौष्णᳪ ॥१९॥ सैषा देवताभिः पङ्क्तिर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्यैतां यज्ञस्यैतमाप्नोति यद्देवताभिः पङ्क्तिर्भवति ॥२०॥ तां वाऽअनुष्टुभा जुहोति । वाग्वाऽअनुष्टुब्वाग्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति ॥२१॥ तदाहुः । एतामेवैकां जुहुयाद्यस्मै कामायेतरा हूयन्तऽएतयैव तं काममाप्नोतीति तां वै यद्येकां जुहुयात्पूर्णां जुहुयात्सर्वं वै पूर्णᳪ सर्वमेवैनयैतदाप्नोत्यथ यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति तां पूर्णां जुहोत्यन्वेवैतदुच्यते सर्वास्त्वेव हूयन्ते ॥२२॥ तां वाऽअनुष्टुभा जुहोति । सैषानुष्टुप्सत्येकत्रिᳪशदक्षरा भवति दश पाण्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिᳪशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसंमितो यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैनयैतदाप्नोति यदनुष्टुभैकत्रिᳪशदक्षरया जुहोति ॥२३॥ ब्राह्मणं ॥४॥ अध्यायः ॥१[१६.]॥ ॥

दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिनेऽउपस्तृणाति । तयोरेनमधि दीक्षयति यदि द्वे भवतस्तदनयोर्लोकयो रूपं तदेनमनयोर्लोकयोरधि दीक्षयति ॥१॥ संबद्धान्ते भवतः । संबद्धान्ताविव हीमौ लोकौ तन्मसमुते पश्चाद्भवतस्तादिमावेव लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति ॥२॥ यद्युऽएकं भवति । तदेषां लोकानाᳪ रूपं तदेनमेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं या-

नि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शु-
क्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि तान्यन्तरिक्षस्य रूपं तदेनमेषु लोके-
ष्वधि दीक्षयति ॥३॥ अन्तकमु तर्हि पश्चात्प्रत्यस्येत् । तदिमानेव लोकान्मिथुनी-
कृत्य तेष्वेनमधि दीक्षयति ॥४॥ अथ जघनेन कृष्णाजिने पश्चात् प्राङ् जान्वाक्न
उपविशति स यत्र शुक्लानां च कृष्णानां च संधिर्भवति तदेवमभिमृश्य जपत्यृक्सा-
मयोः शिल्पे स्थऽइति यद्वै प्रतिरूपं तच्छिल्पमृचां च साम्नां च प्रतिरूपे स्थ इत्ये-
वैतदाह ॥५॥ ते वामारभऽइति । गर्भो वाऽएष भवति यो दीक्षते स छन्दाꣳ-
सि प्रविशति तस्मान्न्यक्नाङ्गुलिरिव भवति न्यक्नाङ्गुलय-इव हि गर्भाः ॥६॥ स
यदाह । ते वामारभऽइति ते वां प्रविशामीत्येवैतदाह ते मा पातमास्य यज्ञ-
स्योदृच इति ते मा गोपायतमास्य यज्ञस्य सꣳस्थाया इत्येवैतदाह ॥७॥ अथ द-
क्षिणेन जानुनारोहति । शर्मासि शर्म मे यच्छेति चर्म वाऽएतत्कृष्णस्य तदस्य त-
न्मानुषꣳ शर्म देवत्रा तस्मादाह शर्मासि शर्म मे यच्छेति नमस्तेऽअस्तु मा मा हिꣳ-
सीरिति श्रेयाꣳसं वाऽएष उपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्माऽए-
वैतन्निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्तेऽअस्तु मा
मा हिꣳसीरिति ॥८॥ स वै जघनार्धऽइवैवाग्रऽआसीत । अथ यदग्रऽएव मध्य
ऽउपविशेद्य एनं तत्रानुव्याहरेद्द्रूस्यति वा प्र वा पतिष्यतीति तथा हैव स्या-
त्तस्माज्जघनार्धऽइवैवाग्रऽआसीत ॥९॥ अथ मेखलां परिहरते । अङ्गिरसो ह वै
दीक्षितानबल्यमविन्दत्ते नान्यद्व्रतादशनमवाकल्पयंस्तऽएतामूर्जमपश्यन्त्समाप्तिं तां
मध्यत आत्मन ऊर्जमदधत समाप्तिं तया समाप्नुवंस्तथोऽएवैष एतां मध्यत आ-
त्मन ऊर्जं धत्ते समाप्तिं तया समाप्नोति ॥१०॥ सा वै शाणी भवति । मृदुसदिति
न्वेव शाणी यत्र वै प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्बमा-
सीत्ते शणास्तस्मात्ते पूतयो वान्ति यदस्य जरायुासीत्तद्दीक्षितवसनमन्तरं वाऽउ-

ल्बं जरायुणी भवति तस्मादेषान्तरा वाससो भवति स यथैवातः प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्माद्यज्ञात् ॥११॥ सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥१२॥ मुञ्जवल्शेनान्वस्ता भवति । वज्रो वै शरो विरक्षस्तायै स्तुकासर्गꣳ सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्या रज्जवो मानुषी स्याद्यदपसलवि सृष्टा स्यात्पितृदेवत्या स्यात्तस्मात्स्तुकासर्गꣳ सृष्टा भवति ॥१३॥ तां परिहरते । ऊर्गस्याङ्गिरसीत्यङ्गिरसो ह्येतामूर्जमपश्यन्नूर्णम्रदा ऊर्जं मयि धेहीति नात्र तिरोहितमिवास्ति ॥१४॥ अथ नीविमुद्गूहते । सोमस्य नीविरसीत्यदीक्षितस्य वाऽअस्यैषाग्रे नीविर्भवत्यथात्र दीक्षितस्य सोमस्य तस्मादाह सोमस्य नीविरसीति ॥१५॥ अथ प्रोर्णुते । गर्भो वाऽएष भवति यो दीक्षते प्रावृता वै गर्भा उल्बेनेव जरायुणेव तस्माद्धि प्रोर्णुते ॥१६॥ स प्रोर्णुते । विष्णोः शर्मासि शर्म यजमानस्येत्युभयं वाऽएषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्मासि शर्म यजमानस्येति ॥१७॥ अथ कृष्णविषाणाꣳ सिचि बध्नीते । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्मन एव देवा उपायन्वाचमसुरा यज्ञमेव तद्देवा उपायन्वाचमसुरा अमूमेव देवा उपायन्निमामसुराः ॥१८॥ ते देवा यज्ञमब्रुवन् । योषा वाऽइयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वाऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपामन्त्रयत सा हास्माऽआरकादिवैवाग्रऽआसूयत्तस्मादु स्त्री पुꣳसोपमन्त्रितारकादिवैवाग्रऽआसूयति स होवाचारकादिव वै मऽआसूयीदिति ॥१९॥ ते होचुः । उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपामन्त्रयत सा हास्मै निपलाशमिवोवाद तस्मादु स्त्री पुꣳसोपमन्त्रिता निपलाशमिवैव वदति स होवाच निपलाशमिव वै मेऽवादीदिति ॥२०॥ ते होचुः ।

उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै वेति तामुपामन्त्रयत सा हैनं जुजुषे तस्मादु स्त्री पुमाꣳसꣳ ह्वयतऽएवोत्तमꣳ स होवाचाह्वत वै मेति ॥२१॥ ते देवा ईक्षां चक्रिरे । योषा वाऽइयं वाग्यदेनं न युवितेह्येव मा तिष्ठन्तमभ्येहीति ब्रूहि तां तु न आगतां प्रतिप्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमभ्येयाय तस्मादु स्त्री पुमाꣳसꣳ सꣳस्कृते तिष्ठन्तमभ्यैति ताꣳ हैभ्य आगतां प्रतिप्रोवाचेयं वाऽआगादिति ॥२२॥ तां देवाः । असुरेभ्योऽन्तरायंस्ताꣳ स्वीकृत्याग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानाꣳ स यामेवामूमनुष्टुभाजुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्तः पराबभूवुः ॥२३॥ तत्रैतामपि वाचमूदुः । उपजिज्ञास्याꣳ स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा वा नैवैष द्विषताꣳ सपत्नानामादत्ते वाचं तेऽस्यात्तवचसः पराभवन्ति य एवमेतद्वेद ॥२४॥ सोऽयं यज्ञो वाचमभिदध्यौ । मिथुन्येनया स्यामिति ताꣳ संबभूव ॥२५॥ इन्द्रो ह वाऽईक्षां चक्रे । महद्वाऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाभिभवेदिति स इन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश ॥२६॥ स ह संवत्सरे जायमान ईक्षां चक्रे । महावीर्या वाऽइयं योनिर्या मामदीधरत यद्वै मेतो महदेवाभ्वं नानुप्रजायेत यन्मा तन्नाभिभवेदिति ॥२७॥ तां प्रतिपरामृश्यावेष्ट्याच्छिनत् । तां यज्ञस्य शीर्षन्प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं यो सा योनिः सा कृष्णविषाणाथ यदेनामिन्द्र आवेष्ट्याच्छिनत्तस्मादावेष्टितेव स यथैवात इन्द्रोऽजायत गर्भो भूत्वैतस्मान्मिथुनादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथुनात् ॥२८॥ तां वाऽउत्तानामिव बध्नाति । उत्तानेव वै योनिर्गर्भं बिभर्त्यथ दक्षिणां भ्रुवमुपर्युपरि ललाटमुपस्पृशतीन्द्रस्य योनिरसीतीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन्प्रविशत्यतो वा जायमानो जायते तस्मादाहेन्द्रस्य योनिरसीति ॥२९॥ ॥ शतम् १५०० ॥ ॥ अथोल्लिखति । सुसस्याः कृषीस्कृधीति यज्ञमेवै-

तज्ज्ञनयति यदा वै सुषमं भवत्यथान्नं यज्ञाय भवति यदा दुःषमं भवति न त-र्ह्यात्मने चनालं भवति तद्यज्ञमेवैतज्जनयति ॥३०॥ अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वाऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदपास्यन्मित्यपेत्ततो दीक्षितः पामना भविनोर्दीक्षितं वाऽअ-नु रेताᳪसि ततो रेताᳪसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्ये-षा वाऽएतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति त-स्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः ॥३१॥ अथास्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै ॥३२॥ औदुम्बरो भवति । अन्नं वा ऽऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरो भवति ॥३३॥ मुखसंमितो भ-वति । एतावद्धि वीर्यᳪ स यावदेव वीर्यं तावांस्तद्भवति यन्मुखसंमितः ॥३४॥ तमुच्छ्रयति । उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा पाह्यᳪहस आस्य यज्ञस्योदृच इत्यूर्ध्वो मा गोपायास्य यज्ञस्य सᳪस्थाया इत्येवैतदाह ॥३५॥ अत्र हैके । ङ्गुलीर्न्य-चन्ति वाचं च यच्छन्तो हि किं च न जपिष्यन्भवतीति वदन्तस्तदु तथा न कु-र्याद्यथा पराञ्चं धावन्तमनुलिप्सेत तं नानुलभेतैवᳪ ह स यज्ञं नानुलभते तस्मा-दन्वेवाङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥३६॥ अथ [illegible] । ऋचं वा यजुर्वा सा-म वाभिव्याहरत्य[illegible]भिस्थिरमेवैतद्यज्ञमारभते तस्मादमुत्रै[illegible]ङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥३७॥ अथ यद्वाचं यच्छति । वाग्वै यज्ञो यज्ञमेवैतद्[illegible]यच्छत्यथ य-द्वाचंयमो व्याहरति तस्मादु हैष विसृष्टो यज्ञः पराङावर्तते तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥३८॥ अथै-क उद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमे-तत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गो-पायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि यज्ञः ॥३९॥ अथ यद्ब्राह्मण इत्याह ।

अनद्धेव वाऽअस्यातः पुरा जातं भवतीदᳪ ह्यास्य रेताᳪसि योषितमनुसंचरन्ते तद्गत
रेताᳪस्येव रेत आदधतीत्यथात्राद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्माद-
पि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद्ब्रह्मणो हि जायते यो यज्ञाज्जायते
तस्मादाहुर्न सवनकृतᳪ हन्यादेनस्वी हैव सवनकृतेति ॥४०॥ ब्राह्मणम् ॥५
[२.१]॥ ॥ प्रथमः प्रपाठकः ॥ कण्डिकासंख्या १२४ ॥ ॥

वाचं यच्छति । स वाचंयम आस्तऽआस्तमयात्तद्यद्वाचं यच्छति ॥१॥ यज्ञेन वै
देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारो-
ह्यᳪ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपे-
न योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥२॥ तद्वाऽऋषीणा-
मनुश्रुतमास । ते यज्ञᳪ समभरन्यथायं यज्ञः सम्भृत एवं वाऽएष यज्ञᳪ सम्भरति
यो दीक्षते वाग्वै यज्ञः ॥३॥ तामस्तमिते वाचं विसृजते । संवत्सरो वै प्रजाप-
तिः प्रजापतिर्यज्ञोऽहोरात्रे वै संवत्सर एते ह्येनं परिप्लवमाने कुरुतः सोऽहन्न-
दीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा वाचं
विसृजते ॥४॥ तद्धैके । नक्षत्रं दृष्ट्वा वाचं विसर्जयन्त्यत्रानुष्यास्तमितो भवतीति
वदन्तस्तदु तथा न कुर्यात्क्व ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवानुष्यास्तमितं मन्येत
तदेव वाचं विसर्जयेत् ॥५॥ अनेनो हैके वाचं विसर्जयन्ति । भूर्भुवः स्वरिति
यज्ञमाप्याययामो यज्ञᳪ संदध्म इति वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याय-
यति न संदधाति य एतेन वाचं विसर्जयति ॥६॥ अनेनैव वाचं विसर्जयेत् ।
व्रतं कृणुत व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञिय इत्येष ह्यस्यात्र यज्ञो भ-
वत्येतद्धविर्यथा पुराग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञᳪ सम्भृत्य यज्ञे यज्ञं प्रतिष्ठापयति य-
ज्ञेन यज्ञᳪ संतनोति संततᳪ ह्येवास्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्व आह त्रिवृ-
द्धि यज्ञः ॥७॥ अथाग्निमभ्यावृत्य वाचं विसृजते । न ह स यज्ञमाप्याययति न सं-

दधाति योऽतोऽन्येन वाचं विसृजते स प्रथमं व्याहरन्मत्यां वाचाऽभिव्याहरति ॥८॥ अग्निर्ब्रह्मेति । अग्निर्ह्येव ब्रह्माग्निर्यज्ञ इत्यग्निर्ह्येव यज्ञो वनस्पतिर्यज्ञिय इति वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञिय इति ॥९॥ अथास्मै व्रतं प्रयच्छति । देवान्वाऽएष उपावर्तते यो दीक्षते स देवतानामेको भवति शृतं वै देवानां हविर्नाशृतं तस्माच्छ्रपयन्ति तदेष एव व्रतयति नाग्नौ जुहोति तद्यदेष एव व्रतयति नाग्नौ जुहोति ॥१०॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥११॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञं समभरन्यथायं यज्ञः सम्भृत एवं वाऽअत्र यज्ञो भवति यो दीक्षतऽएष ह्येनं तनुतऽएष एनं जनयति तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यदेष एव व्रतयति नाग्नौ जुहोति न ह्याप्यायेयद्धग्नौ जुहुयाज्जुहुयादु हैव मन्येत नातुह्वत ॥१२॥ इमे वै प्राणाः । मनोजाता मनोयुजो दक्षक्रतवो वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा एतासु हैवास्यैतद्देवतासु हुतं भवति ॥१३॥ तद्धैके । प्रथमे व्रतऽउभौ व्रीहियवावावपन्त्युभाभ्यां रसाभ्यां यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तत्पुनराप्याययाम इति वदन्तो यद्यु व्रतदुघा न दुह्वीत यस्यैवातः कामयेत तस्य व्रतं कुर्यादितदु ह्येवास्यैताऽउभौ व्रीहियवावन्वारब्धौ भवत इति तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न संदधाति य उभौ व्रीहियवावावपति तस्मादन्यतरमेवावपेद्व्रीहिं वाऽअस्यैताऽउभौ व्रीहियवौ भवतः स यदेवास्यैतौ हविर्भवतस्तदेवास्यैतावन्वारब्धौ भवतो यद्यु व्रतदुघा न दुह्वीत यस्यैवातः कामयेत तस्य व्रतं कुर्यात् ॥१४॥ तद्धैके । प्रथमे व्रते सर्वौषधं सर्वसरभ्यावपन्ति यदि दीक्षितमार्ति-

विन्देद्येनैवातः कामयेत तेन भिषज्येद्यथा व्रतेन भिषज्येदिति तदु तथा न कुर्या-
न्मानुषᳫं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति
यदि दीक्षितमार्त्तिर्विन्देद्येनैवातः कामयेत तेन भिषज्येत्समाप्तिर्ह्येव पुण्या ॥१५॥
अथास्मै व्रतं प्रयच्छति । अतिनीय मानुषं कालᳫं सायंदुग्धमपररात्रे प्रातर्दुग्धमप-
राह्णे व्याकृत्याऽएव दैवं चैवैतन्मानुषं च व्याकरोति ॥१६॥ अथास्मै व्रतं प्रदा-
स्यन्नप उपस्पर्शयति । दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसᳫं
सुतीर्था नोऽअसद्वशऽइति मानुषाय वाऽएष पुराशनायावनेनिक्तेऽथात्र दैव्यै धि-
ये तस्मादाह दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसᳫं सुतीर्था
नोऽअसद्वशऽइति स यावत्कियच्च व्रतं व्रतयिष्यन्नप उपस्पृशेदेतेनैवोपस्पृशेत् ॥१७॥
अथ व्रतं व्रतयति । ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः
पान्तु तेभ्यः स्वाहेति तद्यथा वषट्कृतᳫं हुतमेवमस्यैतद्भवति ॥१८॥ अथ व्रतं
व्रतयित्वा नाभिमुपस्पृशति । श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सु-
शेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृध इ-
ति देवान्वाऽएष उपावर्तते यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै दे-
वानाᳫं हविरथैतद्व्रतप्रदो मिथ्या करोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो है-
षा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह
श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अ-
नमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृध इति स यावत्कियच्च व्रतं व्रतयि-
त्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् ॥१९॥ अथ
यत्र मेक्ष्यन्भवति । तत्कृष्णविषाणया लोष्टं वा किंचिद्वोपहन्तीयं ते यज्ञिया त-
नूरितीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या एतदुद्धृत्यै-
व यज्ञियां तनूमथायज्ञियᳫं शरीरमभिमिहत्यपो मुञ्चामि न प्रजामित्युभयं वाऽअत

एत्यापश्च रेतश्च स एतदप एव मुञ्चति न प्रजामꣳहोमुचः स्वाहाकृता इत्यꣳहस इव ह्येता मुञ्चन्ति यदुदरे गुष्टितं भवति तस्मादाहाꣳहोमुच इति स्वाहाकृताः पृथिवीमाविशतेत्याहुतयो भूत्वा शान्ताः पृथिवीमाविशतेत्येवैतदाह ॥२०॥ अथ पुनर्लोष्टं न्यस्यति । पृथिव्या सम्भवेतीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिव्द्या तस्या एतद्धृत्येव यज्ञियां तनूमयायज्ञियꣳ शरीरमभ्यमिज्ञत्तामेवा-स्या एतत्पुनर्यज्ञियां तनूं दधाति तस्मादाह पृथिव्या सम्भवेति ॥२१॥ अथाग्नये प-रिदाय स्वपिति । देवान्वाऽएष उपावर्तते यो दीक्षते स देवतानामेको भवति न वै देवाः स्वपन्त्यनवरुद्धो वाऽएतस्यास्वप्नो भवत्यग्निर्वै देवानां व्रतपतिस्त-स्माऽएवैतत्परिदाय स्वपित्यग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीत्यग्ने त्वं जा-गृहि वयꣳ स्वप्स्याम इत्येवैतदाह रक्षा णोऽअप्रयुछन्निति गोपाय नोऽप्रमत्त इ-त्येवैतदाह प्रबुधे नः पुनस्कृधीति यथेतः सुप्ता स्वस्ति प्रबुध्यामहाऽएवं नः कु-र्वित्येवैतदाह ॥२२॥ अथ यत्र सुप्त्वा पुनर्नावद्रास्यन्भवति । तद्वाचयति पुनर्मनः पुनरायुर्मऽआगन्पुनः प्राणाः पुनरात्मा मऽआगन्पुनश्चक्षुः पुनः श्रोत्रं मऽआगन्नि-ति सर्वे ह वाऽएते स्वपतोऽपक्रामन्ति प्राण एव न तेऽएवैतत्सुप्त्वा पुनः संगछते तस्मादाह पुनर्मनः पुनरायुर्मऽआगन्पुनः प्राणाः पुनरात्मा मऽआगन्पुनश्चक्षुः पुनः श्रोत्रं मऽआगन् । वैश्वानरोऽअदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति त-द्यद्देवाः स्वप्नेन वा येन वा मिथ्याकर्म तस्मान्नः सर्वस्मादग्निर्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति ॥२३॥ अथ यद्दीक्षितः । अव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्याकरोति व्रतं प्रमीणात्य-क्रोधो ह्येव दीक्षितस्याग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति त्वमग्ने व्रतपा अ-सि देवऽआ मर्त्येष्वा । त्वं यज्ञेष्वीड्यऽइति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपा असि देवऽआ म-

त्विषा । त्वं यज्ञश्रीश्च इति ॥२४॥ अथ यद्दीक्षितायाभिह्नरन्ति । तस्मिन्वाचयति रास्वेयत्सोमा भूयो भरेति सोमो ह वाऽअस्माऽएतच्छुते यद्दीक्षितायाभिह्नरन्ति स यदाह रास्वेयत्सोमेति रास्व न इयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह देवो नः सविता वसोर्दाता वस्वदादिति-तथो हास्माऽएतत्सवितृप्रसूतमेव दानाय भवति ॥२५॥ पुरास्तमयादाह । दीक्षित वाचं यच्छेति तामस्तमिते वाचं विसृजते पुरोदयादाह दीक्षित वाचं यच्छेति तामुदिते वाचं विसृजते संतत्याऽएवाहरेवैतद्रात्र्या संतनोत्यह्ना रात्रिम् ॥२६॥ नैनमन्यत्र चरन्तमभ्यस्तमियात् । न स्वपन्तमभ्युदियात्स यदेनमन्यत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदियादह्न एनं तदन्तरियान्नात्र प्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मात् न पुरावभृथादपोऽभ्यवेयान्नैनमभिवर्षेदनवक्लृप्तꣳ ह तद्यत्पुरावभृथादपोऽभ्यवेयाद्यद्वैनमभिवर्षेदथ परिह्वालं वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् ॥२७॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥२८॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथायं यज्ञः सम्भृत एवं वाऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यत्परिह्वालं वाचं वदति न मानुषी प्रसृतां न ह्याप्याययेद्यत्प्रसृतां मानुषीं वाचं वदेत्तस्मात्परिह्वालं वाचं वदति न मानुषीं प्रसृताꣳ ॥२९॥ स वै धीक्षते । वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि वाग्धीक्षितो ह वै नामैतद्यद्दीक्षित इति ॥३०॥ ब्राह्मणम् ॥१ [२.२]॥ ॥

आदित्यं चरुं प्रायणीयं निर्वपति । देवा ह वाऽअस्यां यज्ञ तन्वाना इमां य-

ज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयां चकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तद्ध ह यज्ञं न प्रजज्ञुः ॥ १ ॥ ते होचुः । यज्ञ्यामेव यज्ञमतऽस्महि कथं नु नोऽमुहत्कथं न प्रजानीम इति ॥ २ ॥ ते होचुः । अस्यामेव यज्ञं तन्वाना इमां यज्ञादन्तरगाम सा न इयमेव यज्ञममूमुहदिमामेवोपधावामेति ॥ ३ ॥ ते होचुः । यन्नु त्वय्येव यज्ञमतऽस्महि कथं नु नोऽमुहत्कथं न प्रजानीम इति ॥ ४ ॥ सा होवाच । मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात सा वोऽहमेव यज्ञममूमुहं भागं नु मे कल्पयताथ यज्ञं द्रक्ष्यथाथ प्रज्ञास्यथेति ॥ ५ ॥ तथेति देवा अब्रुवन् । तवैव प्रायणीयस्तवोदयनीय इति तस्मादेष आदित्य एव प्रायणीयो भवत्यादित्य उदयनीय इयऽह्येवादितिस्ततो यज्ञमपश्यंस्तमतन्वत ॥ ६ ॥ स यदादित्यं चरुं प्रायणीयं निर्वपति । यज्ञस्यैव दृष्ट्यै यज्ञं दृष्ट्वा क्षीणानि तं तनवाऽइति तस्मादादित्यं चरुं प्रायणीयं निर्वपति तद्धि निरुप्तऽहविरासीदनिष्टा देवता ॥ ७ ॥ अथैभ्यः पथ्या स्वस्तिः प्रारोचत । तामयजन्वाग्वै पथ्या स्वस्तिर्वाग्यज्ञस्तद्यज्ञमपश्यंस्तमतन्वत ॥ ८ ॥ अथैभ्योऽग्निः प्रारोचत । तमयजन्त्स यदाग्नेयं यज्ञस्यासीत्तदपश्यन्यद्धि शुष्कं यज्ञस्य तदाग्नेयं तदपश्यंस्तदतन्वत ॥ ९ ॥ अथैभ्यः सोमः प्रारोचत । तमयजन्त्स यत्सौम्यं यज्ञस्यासीत्तदपश्यन्यद्ध्याऽआर्द्रं यज्ञस्य तत्सौम्यं तदपश्यंस्तदतन्वत ॥ १० ॥ अथैभ्यः सविता प्रारोचत । तमयजन्पशवो वै सविता पशवो यज्ञस्तद्यज्ञमपश्यंस्तमतन्वत ॥ यस्यै देवतायै हविर्निरुप्तमासीत्तामयजन् ॥ ११ ॥ ता वाऽएताः । पञ्च देवता यजति यो वै स यज्ञो मुग्ध आसीत्पाङ्क्तो वै स आसीत्तमेताभिः पञ्चभिर्देवताभिः प्राजानन् ॥ १२ ॥ ऋतवो मुग्धा आसन्पञ्च । तानेताभिरेव पञ्चभिर्देवताभिः प्राजानन् ॥ १३ ॥ दिशो मुग्धा आसन्पञ्च । ता एताभिरेव पञ्चभिर्देवताभिः प्राजानन् ॥ १४ ॥ उदीचीमेव दिशम् । पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तराहि वाग्वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीची ह्ये-

शुमालेभिरे तं त्वष्टा शीर्षतोऽग्रेऽभ्युवामोतीवं चिन्नालभेरन्निति त्वद्वर्हि पशवः स एष शीर्षन्मस्तिष्कोऽनूक्यश्च मज्जा तस्मात्स वान्त इव त्वष्टा ह्येतमभ्यवमत्तस्मात्तं नाश्नीयात्त्वष्टुर्ह्येतदभिवान्तम् ॥ ११ ॥ तस्यावाङ् मेधः पपात । स एष वनस्पतिरजायत तं देवाः प्रापश्यंस्तस्मात्प्लक्षः प्रख्यो ह वै नामैतद्यत्प्लक्ष इति तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखा उत्तरबर्हिर्भवन्ति ॥ १२ ॥

ऽथाज्यमुपस्तृणीते । जुह्वां चोपभृति च वसाहोमहवन्यां च समवत्तधान्यामथ हिरण्यशकलाववदधाति जुह्वां चोपभृति च ॥ १३ ॥ अथ मनोतायै हविषोऽनुवाच आह । तद्यन्मनोतायै हविषोऽनुवाच आह सर्वा ह वै देवताः पशुमालभ्यमानमुपसंगच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति सर्वासां हि देवतानां हविः पशुस्तासां सर्वासां देवतानां पशौ मनांस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो हामोघाय देवतानां मनांस्युपसंगतानि भवन्ति तस्मान्मनोतायै हविषोऽनुवाच आह ॥ १४ ॥ स हृदयस्यैवाग्रेऽवद्यति । तद्यन्मध्यतः सतो हृदयस्याग्रेऽवद्यति प्राणो वै हृदयमतो ह्ययमूर्ध्वः प्राणः संचरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यः शेते ॥ १५ ॥ हृदयमु वै पशुः । तदस्यात्मन एवाग्रेऽवद्यति तस्माद्यदि किंचिदवदानं हीयेत न तदाद्रियेत सर्वस्य हैवास्य तत्पशोरवत्तं भवति यद्धृदयस्याग्रेऽवद्यति तस्मान्मध्यतः सतो हृदयस्यैवाग्रेऽवद्यत्यथ यथापूर्वम् ॥ १६ ॥

अथ जिह्वायै । सा हीयं पूर्वार्धात्प्रतिष्ठत्यथ वक्षसस्तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्नोऽथ वृक्क्योः ॥ १७ ॥ गुदं त्रेधा करोति । स्थविमोऽपगृह्णीत मध्यं जुह्वां द्वेधा कृत्वावद्यत्यणिम त्र्यङ्गाणामेकचराणां श्रोणेरेतावन्नु जुह्वामवद्यति ॥ १८ ॥ अथोपभृति । त्र्यङ्ग्यस्य दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्ग्याणां श्रोणेरथ हिरण्यशकलाववदधात्यथोपरिष्टादाज्येनाभिघारयति ॥ १९ ॥ अथ वसाहोमं गृ-

ह्णाति । ऐडसीति लेलयेव हि यूस्तस्मादाह ऐडसीत्यग्निष्ट्वा श्रीणात्वित्यग्निर्ह्येतं-
छ्रपयति तस्मादाहाग्निष्ट्वा श्रीणात्वित्यापस्त्वा समरिणन्नित्यापो ह्येतमङ्गेभ्यो रसꣳ
सम्भरन्ति तस्मादाहापस्त्वा समरिणन्निति ॥२०॥ वातस्य त्वा ध्राज्याऽइति । अन्त-
रिक्षं वाऽअयमनुपवते योऽयं पवतेऽन्तरिक्षाय वै गृह्णाति तस्मादाह वातस्य त्वा
ध्राज्याऽइति ॥२१॥ पूष्णो रꣳह्याऽइति । एष वै पूष्णो रꣳहिरेतस्माऽउ हि गृ-
ह्णाति तस्मादाह पूष्णो रꣳह्याऽइति ॥२२॥ ऊष्मणो व्यथिषदिति । एष वाऽऊ-
ष्मैतस्माऽउ हि गृह्णाति तस्मादाहोष्मणो व्यथिषदित्यथोपरिष्टाद्घृताज्यस्याभिघा-
रयति ॥२३॥ ॥ शतम् २१०० ॥ ॥ अथ पार्श्वेन वासिना वा प्रयौति । प्रयुतं द्वे-
ष इति तन्नाष्ट्रा एवैतद्रक्षाꣳस्यतोऽपहन्ति ॥२४॥ अथ यच्चूष्परिशिष्यते । तत्स-
मवत्तधान्यामानयति तद्धृदयं प्रास्यति जिह्वां वक्षस्तनिम मतस्ने वनिष्ठुमथोपरि-
ष्टाद्घृताज्यस्याभिघारयति ॥२५॥ तद्यद्धिरण्यशकलावभितो भवतः । घ्नन्ति वाऽए-
तत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृतऽआयुषि प्रतितिष्ठति तथात उदेति
तथा संजीवति तस्माद्धिरण्यशकलावभितो भवतः ॥२६॥ अथ यद्दक्षिणायावद्यति ।
सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मा-
दयं पशुर्दक्षिणाया पदो हरत्यथ यत्सम्यगवद्येत्समीचो हैवायं पशुः पदो हरेत्तस्मा-
द्दक्षिणायावद्यत्यथ यन्न शीर्ष्णोऽवद्यति नाꣳसयोर्नानूकस्य नापरसक्थयोः ॥२७॥
असुरा ह वाऽअग्रे पशुमालेभिरे । तद्देवा भीषा नोपावेयुस्तान्हेयं पृथिव्युवाच
मैतदादृढ्वमहं व एतस्याध्यक्षा भविष्यामि यथा-यथैतऽएतेन चरिष्यन्तीति ॥२८॥
सा होवाच । अन्यतरामेवाकृतिमहौषुरन्यतरां पर्यशिषन्निति स यां पर्यशिꣳषं-
स्तानीमान्यवदानानि ततो देवाः स्विष्टकृते त्र्यङ्गाण्यभजंस्तस्मात्त्र्यङ्गाण्यथासुरा
अ[illegible]र्ष्णोऽꣳसयोरनूकस्यापरसक्थयोस्तस्मात्तेषां नावद्येयुन्नेव त्वष्टानूकमभ्य-
वमत्तस्मादनूकस्य नावद्येदथाहाग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहीत्याश्राव्या-

ह्याग्नीषोमाभ्यां ह्यागस्य ह्विः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति ॥२९॥ अन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति । एतो वाऽअग्रमूर्ध्वो मेध उत्थितो यमस्या इमं रसं प्रजा उपजीवन्त्यर्वाचीनं दिवो रसो वै वसाहोमो रसो मेधो रसेनैवैतद्रसं तीव्रीकरोति तस्मादयं रसोऽश्नमानो न क्षीयते ॥३०॥ यद्वन्तरेण । अर्धर्चौ याज्यायै वसाहोमं जुहोतीयं वाऽअर्धर्चोऽसौ द्यौरर्धर्चोऽन्तरा वै द्यावापृथिवीऽअन्तरिक्षमन्तरिक्षाय वै जुहोति तस्मादन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति ॥३१॥ स जुहोति । घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य ह्विरसि स्वाहेत्येतेन वैश्वदेवेन यजुषा जुहोति वैश्वदेवं वाऽअन्तरिक्षं तद्यदेनेनेमाः प्रजाः प्राणत्यश्चोदानत्यश्चान्तरिक्षमनुचरन्ति तेन वैश्वदेवं वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्ति ॥३२॥ अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह । वनस्पतयेऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृते जुहोति तद्यद्वनस्पतये जुहोत्येतमेवैतद्यूपं भागिनं करोति सोमो वै वनस्पतिः पशुमेवैतत्सोमं करोति तद्यदन्तरेणोभेऽआहुती जुहोति तयोभयं व्याप्नोति तस्मादन्तरेणोभेऽआहुती जुहोति ॥३३॥ अथ यान्युपभृत्यवदानानि भवन्ति । तानि समानयमान आहाग्नये स्विष्टकृतेऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोति ॥३४॥ अथ यद्वसाहोमस्य परिशिष्यते । तेन दिशो व्याघारयति दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहेति रसो वै वसाहोमः सर्वास्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशि-दिशि रसोऽभिगम्यते ॥३५॥ अथ पशुं संमृशति । एतर्हि संमर्शनस्य कालोऽथ यत्पुरा समृशति यदिदं मऽउपतिष्ठन्ते ते विमथिष्यन्ऽइति शङ्कमानो यद्यु [illegible] संमृशेत् ॥३६॥ ऐन्द्रः प्राणः । अङ्गेऽअङ्गे निदीध्यदैन्द्र उदानोऽअङ्गेऽअङ्गे निधीत इति यदङ्गशो विकृत्तो भवति तत्प्राणोदानाभ्यां संदधाति देव त्वष्टर्भूरि ते सं

समेतु सलक्ष्मा यद्विषुरूपं भवातीति कृत्स्नवृतमेवैतत्करोति देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरौ मदन्त्विति तद्यत्रैनमह्नौषीत्तदेनं कृत्स्नं कृत्वानुसमस्यति सोऽस्य कृत्स्नोऽमुष्मिंल्लोकऽआत्मा भवति ॥३७॥ ब्राह्मणम् ॥४ [८.३]॥ ॥

त्रीणि ह वै पशोरेकादशानि । एकादश प्रयाजा एकादशानुयाजा एकादशोपयजो दश पाण्या अङ्गुलयो दश पाद्या दश प्राणाः प्राण उदानो व्यान इत्येतावान्वै पुरुषो यः परार्ध्यः पशूनां यत्र सर्वेऽनु पशवः ॥१॥ तदाहुः । किं तद्यज्ञे क्रियते येन प्राणाः सर्वेभ्योऽङ्गेभ्यः शिव इति ॥२॥ यदेव गुदं त्रेधा करोति । प्राणो वै गुदः सोऽयं प्राङ्ततस्तमयं प्राणोऽनुसंचरति ॥३॥ स यदेव गुदं त्रेधा करोति । तृतीयमुपयड्भ्यस्तृतीयं जुह्वां तृतीयमुपभृति तेन प्राणाः सर्वेभ्योऽङ्गेभ्यः शिवः ॥४॥ स ह त्वेव पशुमालभेत । य एनं मेधमुपनयेद्यदि कृशः स्याद्यद्गुदर्यस्य मेदसः परिशिष्यत तद्गुदे न्यृषेत्प्राणो वै गुदः सोऽयं प्राङ्ततस्तमयं प्राणोऽनुसंचरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यः शेते ॥५॥ गुदो वै पशुः । मेदो वै मेधस्तदेनं मेधमुपनयति यद्युऽअत्सलो भवति स्वयमुपेत एव तर्हि मेधं भवति ॥६॥ अथ पृषदाज्यं गृह्णाति । द्वयं वाऽइदत्र सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥७॥ तेनानुयाजेषु चरति । पशवो वाऽअनुयाजाः पयः पृषदाज्यं तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं प्राणो हि पृषदाज्यमन्नत्र हि पृषदाज्यमन्नत्र हि प्राणः ॥८॥ तेन पुरस्तादनुयाजेषु चरति । स योऽयं पुरस्तात्प्राणस्तमेवैतद्दधाति तेन पश्चाडुपयजति स योऽयं पश्चात्प्राणस्तमेवैतद्दधाति ताविमाऽउभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात् ॥९॥ तद्वाऽएतदेको द्वाभ्यां वषट्करोति । अध्वर्युश्च यश्चैष उपयजत्यथ यद्यजन्तमुपयजति तस्माडुपयजो नामाथ यडुपयजति प्रैवैतज्जनयति पश्चाद्युपयज-

ति पश्चाद्धि योषायै प्रजाः प्रजायन्ते ॥१०॥ स उपयजति । समुद्रं गच्छ स्वाहेत्या-
पो वै समुद्र आपो रेतो रेत एवैतत्सिञ्चति ॥११॥ अन्तरिक्षं गच्छ स्वाहेति ।
अन्तरिक्षं वाऽअनु प्रजाः प्रजायन्तेऽन्तरिक्षमेवैतदनु प्रजनयति ॥१२॥ देवꣳ सवि-
तारं गच्छ स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैतत्प्रजनयति
॥१३॥ मित्रावरुणौ गच्छ स्वाहेति । प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवै-
तत्प्रजासु दधाति ॥१४॥ अहोरात्रे गच्छ स्वाहेति । अहोरात्रे वाऽअनु प्रजाः प्र-
जायन्तेऽहोरात्रेऽएवैतदनु प्रजनयति ॥१५॥ छन्दाꣳसि गच्छ स्वाहेति । सप्त वै
छन्दाꣳसि सप्त ग्राम्याः पशवः सप्तारण्यास्तानेवैतदुभयान्प्रजनयति ॥१६॥ द्यावा-
पृथिवी गच्छ स्वाहेति । प्रजापतिर्वै प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ता
इमा द्यावापृथिवीभ्यां परिगृहीतास्तथोऽएवैष एतत्प्रजाः सृष्ट्वा ता द्यावापृथिवी-
भ्यां परिगृह्णाति ॥१७॥ अथात्युपयजति । स यन्नात्युपयजेत्यावत्यो हैवाग्रे प्रजाः
सृष्टास्तावत्यो हैव स्युर्न प्रजायेरन्नथ यदत्युपयजति प्रैवैनज्जनयति तस्मादिमाः
प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥१८॥ ब्राह्मणम् ॥५ [८. ४]॥ ॥ पञ्चमः प्रपाठकः ॥
कण्डिकासंख्या ११२ ॥ ॥

सोऽत्युपयजति । यज्ञं गच्छ स्वाहेत्यापो वै यज्ञ आपो रेतो रेत एवैतत्सि-
ञ्चति ॥१॥ सोमं गच्छ स्वाहेति । रेतो वै सोमो रेत एवैतत्सिञ्चति ॥२॥ दिव्यं
नभो गच्छ स्वाहेति । आपो वै दिव्यं नभ आपो रेतो रेत एवैतत्सिञ्चति ॥३॥
अग्निं वैश्वानरं गच्छ स्वाहेति । इयं वै पृथिव्यग्निर्वैश्वानरः सेयं प्रतिष्ठेमामेवैतत्प्र-
तिष्ठामभिप्रजनयति ॥४॥ अथ मुखं विमृष्टे । मनो मे हार्दि यच्छेति तथो होप-
पष्टात्मानं नानुप्रवृणक्ति ॥५॥ अथ जाघन्या पत्नीः संयाजयन्ति । जघनार्धो वै
जाघनी जघनार्धाद्धि योषायै प्रजाः प्रजायन्ते तत्प्रैवैतज्जनयति यज्जाघन्या पत्नीः सं-
याजयन्ति ॥६॥ अन्तरतो देवानां पत्नीभ्योऽवद्यति । अन्तरतो वै योषायै प्रजाः

प्रजायन्तऽउपरिष्टादग्नये गृहपतयऽउपरिष्टाद्धि वृषा योषामधिद्रवति ॥७॥ अथ हृदयशूलेनावभृथं यन्ति । पशोर्ह वाऽआलभ्यमानस्य हृदयꣳ शुक्समभ्यवैति हृदयाद्धृदयशूलमथ यच्छृतस्य परितृन्दन्ति तदलंशुषं तस्माद्ध परितृद्येव शूलाकुर्यात्तन्निःप्रच्युते पशौ हृदयं प्रवृह्योत्तमं प्रत्यवदधाति ॥८॥ अथ हृदयशूलं प्रयच्छति । तन्न पृथिव्यां परास्येन्नाप्सु स यत्पृथिव्यां परास्येदोषधीश्च वनस्पतींश्चैषा शुक्प्रविशेद्यदप्सु परास्येदप एषा शुक्प्रविशेत्तस्मान्न पृथिव्यां नाप्सु ॥९॥ अप एवाभ्यवेत्य । यत्र शुष्कस्य चार्द्रस्य च संधिः स्यात्तदुपगूहेद्यद्युऽअभ्यवायनाय ग्लायेदग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च संधिर्भवति तदुपगूहति मापो मौषधीर्हिꣳसीरिति तथा नापो नौषधीर्हिनस्ति धाम्नो-धाम्नो राजंस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्चेति तदेनꣳ सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥१०॥ अथाभिमन्त्रयते । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति यत्र वाऽएतेन प्रचरन्त्यापश्च ह वाऽअस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति तद्ध ताभिर्मित्रधेयं कुरुते तथो हैनं ताः पुनः प्रविशन्त्येषो तत्र प्रायश्चित्तिः क्रियते स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य वशायाऽएवानूबन्ध्यायै ताꣳ हि सर्वोऽनु यज्ञः संतिष्ठतऽएतद्ध ह्यस्याग्नीषोमीयस्य च पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद्वशायाश्चरन्ति ॥११॥ ब्राह्मणम् ॥१ [८.५.]॥ अष्टमोऽध्यायः [२३.] ॥ ॥

प्रजापतिर्वै प्रजाः ससृजानो रिरिचान-इवामन्यत । तस्मात्पराच्यः प्रजा आसुर्नास्य प्रजाः श्रियेऽन्नाद्याय तस्थिरे ॥१॥ स ऐक्षतारिच्यहम् । अस्माऽउ कामायासृक्षि न मे स कामः समार्धि पराच्यो मत्प्रजा अभूवन्न मे प्रजाः श्रियेऽन्नाद्यायास्थिषतेति ॥२॥ स ऐक्षत प्रजापतिः । कथं नु पुनरात्मानमाप्याययेयोप मा

प्रजाः समावर्तेरंस्तिष्ठेरन्मे प्रजाः श्रियै ऽन्नाद्यायेति ॥३॥ सोऽर्चञ्छ्राम्यंश्चचार प्र-
जाकामः । स एतामेकादशिनीमपश्यत्स एकादशिन्येष्ट्वा प्रजापतिः पुनरात्मानमा-
प्याययतोपैनं प्रजाः समावर्तन्तातिष्ठन्तास्य प्रजाः श्रियै ऽन्नाद्याय स श्रेयानेवेष्ट्वा-
भवत् ॥४॥ तस्मै कमेकादशिन्या यजेत । एवᳪ हैव प्रजया पशुभिराप्यायत उ-
पैनं प्रजाः समावर्तन्ते तिष्ठन्तेऽस्य प्रजाः श्रियै ऽन्नाद्याय स श्रेयानेवेष्ट्वा भवत्ये-
तस्मै कमेकादशिन्या यजते ॥५॥ स आग्नेयं प्रथमं पशुमालभते । अग्निर्वै देवता-
नां मुखं प्रजनयिता स प्रजापतिः स उ एव यजमानस्तस्मादाग्नेयो भवति ॥६॥
अथ सारस्वतम् । वाग्वै सरस्वती वाचैव तत्प्रजापतिः पुनरात्मानमाप्याययत
वागेनमुपसमावर्तत वाचमनुकामात्मनोऽकुरुत वाचो ह्येवैष एतदाप्यायते वागे-
नमुपसमावर्तते वाचमनुकामात्मनः कुरुते ॥७॥ अथ सौम्यम् । अन्नं वै सोमो
ऽन्नेनैव तत्प्रजापतिः पुनरात्मानमाप्याययतान्नमेनमुपसमावर्ततान्नमनुकमात्मनो
ऽकुरुतान्नेनो ह्येवैष एतदाप्यायतेऽन्नमेनमुपसमावर्ततेऽन्नमनुकमात्मनः कुरुते ॥८॥
तद्यत्सारस्वतमनु भवति । वाग्वै सरस्वत्यन्नᳪ सोमस्तस्माद्यो वाचा प्रसाम्यन्ना-
दो हैव भवति ॥९॥ अथ पौष्णम् । पशवो वै पूषा पशुभिरेव तत्प्रजापतिः पु-
नरात्मानमाप्याययत पशव एनमुपसमावर्तन्त पशूननुकामात्मनोऽकुरुत पशुभि-
र्ह्येवैष एतदाप्यायते पशव एनमुपसमावर्तन्ते पशूननुकामात्मनः कुरुते ॥१०॥
अथ बार्हस्पत्यम् । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तत्प्रजापतिः पुनरात्मानमाप्याययत
ब्रह्मैनमुपसमावर्तत ब्रह्मानुकमात्मनोऽकुरुत ब्रह्मणो ह्येवैष एतदाप्यायते ब्रह्मै-
नमुपसमावर्तते ब्रह्मानुकमात्मनः कुरुते ॥११॥ तद्यत्पौष्णमनु भवति । पशवो
वै पूषा ब्रह्म बृहस्पतिस्तस्माद्ब्राह्मणाः पशूनभिधृष्णुतमाः पुराहिता ह्यस्य भवन्ति
मुखऽआहितास्तस्माद्ध तत्सर्वं दृढाभिनिवारी चरति ॥१२॥ अथ वैश्वदेवᳪ । सर्वं
वै विश्वे देवाः सर्वेणैव तत्प्रजापतिः पुनरात्मानमाप्याययत सर्वमेनमुपसमावर्त-

त सर्वमनुक्रमात्मनोऽकुरुत सर्वेणोऽएवैष एतदाप्यायते सर्वमेनमुपसमावर्तते सर्वमनुक्रमात्मनः कुरुते ॥१३॥ तद्यद्बार्हस्पत्यमनु भवति । ब्रह्म वै बृहस्पतिः सर्वमिदं विश्वे देवा अस्यैवैतत्सर्वस्य ब्रह्म मुखं करोति तस्मादस्य सर्वस्य ब्राह्मणो मुखम् ॥१४॥ अथैन्द्रम् । इन्द्रियं वै वीर्यमिन्द्र इन्द्रियेणैव तद्वीर्येण प्रजापतिः पुनरात्मानमाप्याययतेन्द्रियमेनं वीर्यमुपसमावर्ततेन्द्रियं वीर्यमनुक्रमात्मनोऽकुरुतेन्द्रियेणोऽएवैष एतद्वीर्येणाप्यायतऽइन्द्रियमेनं वीर्यमुपसमावर्ततऽइन्द्रियं वीर्यमनुक्रमात्मनः कुरुते ॥१५॥ तद्यद्वैश्वदेवमनु भवति । क्षत्रं वाऽइन्द्रो विशो विश्वे देवा अन्नाद्यमेवास्माऽएतत्पुरस्तात्करोति ॥१६॥ अथ मारुतम् । विशो वै मरुतो भूमो वै विड्भूमैव तत्प्रजापतिः पुनरात्मानमाप्याययत भूमैनमुपसमावर्तत भूमानमनुक्रमात्मनोऽकुरुत भूम्नोऽएवैष एतदाप्यायते भूमैनमुपसमावर्तते भूमानमनुक्रमात्मनः कुरुते ॥१७॥ तद्यदैन्द्रमनु भवति । क्षत्रं वाऽइन्द्रो विशो विश्वे देवा विशो वै मरुतो विशैवैतत्क्षत्रं परिबृंहति तदिदं क्षत्रमुभयतो विशा परिबृंहम् ॥१८॥ अथैन्द्राग्नम् । तेजो वाऽअग्निरिन्द्रियं वीर्यमिन्द्र उभाभ्यामेव तद्वीर्याभ्यां प्रजापतिः पुनरात्मानमाप्याययतोभेऽएनं वीर्येऽउपसमावर्तेतामुभे वीर्येऽअनुक्रेऽआत्मनोऽकुरुतोभाभ्यामेवैष एतद्वीर्याभ्यामाप्यायतऽउभेऽएनं वीर्येऽउपसमावर्तेतेऽउभे वीर्येऽअनुक्रेऽआत्मनः कुरुते ॥१९॥ अथ सावित्रं । सविता वै देवानां प्रसविता तथो ह्यस्माऽएते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते ॥२०॥ अथ वारुणमन्तत आलभते । तदेनं सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥२१॥ तस्माद्यदि यूपैकादशिनी स्यात् । आग्नेयमेवाग्निष्ठे नियुञ्ज्यादथेतरान्व्युपनयेयुर्यथापूर्वम् ॥२२॥ यद्यु एकादशिनी स्यात् । आग्नेयमेव यूपऽआलभेरन्नथेतरान्यथापूर्वम् ॥२३॥ तान्यत्रोदीचो नयन्ति । आग्नेयमेव प्रथमं नयन्त्यथेतरान्यथापूर्वम् ॥२४॥ तान्यत्र निविध्यन्ति । आग्नेयमेव प्रथमं दक्षिणार्ध्ये

निविध्यत्यथेतरानुदीचोऽनिनीय यथापूर्वम् ॥२५॥ तेषां यत्र वपाभिः प्रचरन्ति। आग्नेयस्यैव प्रथमस्य वपया प्रचरन्त्यथेतरेषां यथापूर्वम् ॥२६॥ तेषां यत्र प्रचरन्ति। आग्नेयेनैव प्रथमेन प्रचरन्त्यथेतरैर्यथापूर्वम् ॥२७॥ ब्राह्मणम् ॥२[१.१.]॥ ॥

यत्र वै यज्ञस्य शिरोऽच्छिद्यत। तस्य रसो द्रुत्वापः प्रविवेश तेनैवैतद्रसेनापः स्यन्दन्ते तमेवैतद्रसꣳ स्यन्दमानं मन्यन्ते ॥१॥ स यद्वसतीवरीर्गृह्णाति। तमेवैतद्र-समाहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद्वसतीवरीर्गृह्णाति ॥२॥ ता वै सर्वेषु सवनेषु विभजति। सर्वेष्वेवैतत्सवनेषु रसं दधाति सर्वाणि सवनानि रसवन्ति करोति तस्मात्सर्वेषु सवनेषु विभजति ॥३॥ ता वै स्यन्दमानानां गृह्णीयात्। ऐद्धि स यज्ञस्य रसस्तस्मात्स्यन्दमानानां गृह्णीयात् ॥४॥ गोपीथाय वा एता गृह्यन्ते। सर्वं वा इदमन्यदिलयति यदिदं किं चापि योऽयं पवतेऽथैता एव नेलयन्ति तस्मात्स्यन्दमानानां गृह्णीयात् ॥५॥ दिवा गृह्णीयात्। पश्यन्न्वस्य रसं गृह्णानीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्माद्दिवा गृह्णीयाद्दिवेव वा एष तस्माद्वेव दिवा गृह्णीयात् ॥६॥ एतद्ध वै विश्वे देवाः। यजमानस्य गृहानागच्छन्ति स यः पुरादित्यस्यास्तमयाद्वसतीवरीर्गृह्णाति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्त एतद्धविः प्रविशन्ति त एतासु वसतीवरीषूपवसन्ति स उपवसथः ॥७॥ स यद्यगृहीता अभ्यस्तमियात्। तत्र प्रायश्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति यद्यु अनीजानः स्याद्य एनमीजानः उपावसितो वा पर्यवसितो वा स्यात्तस्य निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥८॥ यद्यु एतदुभयं न विन्देत्। उल्कुषीमेवादायोपर्युपरि धारयन्गृह्णीयाद्धिरण्यं वोपर्युपरि धारयन्गृह्णीयात्तदेतस्य रूपं क्रियते य एष तपति ॥९॥ अथातो गृह्णात्येव। हृ-

विष्मतीरिमा आप इति यज्ञस्य ह्यासु रसः प्राविशत्तस्मादाह हविष्मतीरिमा
आप इति हविष्माꣳ॥ऽआविवासतीति हविष्मान्ह्येना यजमान आविवासति
तस्मादाह हविष्माꣳ॥ऽआविवासतीति ॥१०॥ हविष्मान्देवोऽअध्वर इति । अ-
ध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तꣳ हविष्मन्तं करोति तस्मादाह हविष्मा-
न्देवोऽअध्वर इति ॥११॥ हविष्माꣳ॥ऽअस्तु सूर्य इति । एतस्मै वै गृह्णाति य
एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह
हविष्माꣳ॥ऽअस्तु सूर्य इति ॥१२॥ ता आहृत्य जघनेन गार्हपत्यꣳ सादयति ।
अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीत्यग्नेर्वोऽनार्तगृहस्य सदसि सादयामीत्येवैत-
दाहाथ यदाग्नीषोमीयः पशुः संतिष्ठतेऽथ परिहरति व्युत्क्रामतेत्याहाग्रेण हवि-
र्धाने यजमान आस्ते ता आदत्ते ॥१३॥ स दक्षिणेन निष्क्रामति । ता दक्षिणा-
याꣳ श्रोणौ सादयतीन्द्राग्न्योर्भागधेयी स्थेति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाती-
न्द्राग्नी हि विश्वे देवास्ताः पुनराहृत्याग्रेण पत्नीꣳ सादयति स जघनेन पत्नीं पर्ये-
त्य ता आदत्ते ॥१४॥ स उत्तरेण निष्क्रामति । ता उत्तरायाꣳ श्रोणौ सादयति
मित्रावरुणयोर्भागधेयी स्थेति नैवꣳ सादयेदतिरिक्तमेतन्नैवꣳ सम्पत्सम्पद्यतऽइन्द्रा-
ग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवानतिरिक्तं तथा सम्पत्सम्पद्यते ॥१५॥ गुप्त्यै वा
ऽएताः परिह्रियन्ते । अग्निः पुरस्तादथैताः समन्तं पल्यङ्गयन्ते नाष्ट्रा रक्षाꣳस्यपघ्न-
न्त्यस्ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति तदासु विश्वान्देवान्त्सं-
वेशयन्त्येते वै वसतां वरं तस्माद्वसतीवर्यो नाम वसताꣳ ह वै वरं भवति य
एवमेतद्वेद ॥१६॥ तानि वाऽएतानि सप्त यजूꣳषि भवन्ति । चतुर्भिर्गृह्णात्येकेन
जघनेन गार्हपत्यꣳ सादयत्येकेन परिहरत्येकेनाग्नीध्रे तानि सप्त यत्र वै वाचः
प्रजातानि छन्दाꣳसि सप्तपदा वै तेषां परार्ध्या शक्वर्येतामभिसम्पदं तस्मात्सप्त य-
जूꣳषि भवन्ति ॥१७॥ ब्राह्मणम् ॥३ [१.२.]॥ ॥

तान्त्सम्प्रबोधयन्ति । तेऽस्य उपसृष्टायोधमुपसमायन्ति तऽआदयानि गृह्णते गृहीत्वाद्यान्यायन्त्यासाद्यान्यानि ॥१॥ अथ राजानमुपावहरति । इयं वै प्रतिष्ठा जनूरासां प्रजानामिमामेवैतत्प्रतिष्ठामभ्युपावहरति तमस्यै तनुते तमस्यै जनयति ॥२॥ अन्तरेणेषेऽउपावहरति । यज्ञो वाऽअनस्तस्येव यज्ञान्न बहिर्धा करोति ग्रावसु संमुखेष्वधिनिदधाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमेवैतद्विश्यध्यूहति तद्यत्संमुखा भवन्ति विशमेवैतत्संमुखीं क्षत्रियमभ्यविवादिनीं करोति तस्मात्संमुखा भवन्ति ॥३॥ स उपावहरति । हृदे त्वा मनसे त्वेति यजमानस्यैतत्कामायाह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्या यजते तस्मादाह हृदे त्वा मनसे त्वेति ॥४॥ दिवे त्वा सूर्याय त्वेति । देवलोकाय त्वेत्येवैतदाह यदाह दिवे त्वेति सूर्याय त्वेति देवेभ्यस्त्वेत्येवैतदा[illegible] दिवि देवेषु होत्रा यच्छेत्यधरो वै यज्ञ ऊर्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥५॥ सोम राजन्विश्वास्त्वं प्रजा उपावरोहेति । तदेनम[illegible] प्रजानामाधिपत्याय राज्यायोपावहरति ॥६॥ अथानुसृज्योपतिष्ठते । विश्वास्त्वां प्रजा उपावरोहन्त्वित्ययथायथमिव वाऽएतत्करोति यदाह विश्वास्त्वं प्रजा उपावरोहेति क्षत्रं वै सोमस्तत्पापवस्यसं करोति तद्धेदमनु पापवस्यसं क्रियतेऽथात्र यथायथं करोति यथापूर्वं यदाह विश्वास्त्वां प्रजा उपावरोहन्त्विति तदेनमाभिः प्रजाभिः प्रत्यवरोहयति तस्मादु क्षत्रियमायन्तमिमाः प्रजा विशः प्रत्यवरोहन्ति तम[illegible]ऽउपस[illegible] होता प्रातरनुवाकमनुवदन्भवति ॥७॥ अथ समिधमभ्यादधदाह । देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति छन्दाꣳसि वै देवाः प्रातर्यावाणश्छन्दाꣳस्यनुयाज्या देवेभ्यः प्रेष्य देवान्यजेति वाऽअनुयाजेष्वाहन्ति ॥८॥ तदु हैकऽआहुः । देवेभ्योऽनुब्रूहीति तदु तथा न ब्रूयाच्छन्दाꣳसि वै देवाः प्रातर्यावाणश्छन्दाꣳस्यनुयाज्या देवेभ्यः प्रेष्य दे-

अथ यत्समिधमभ्यादधाति । छन्दाᳬस्येवैतत्समिन्द्धेऽथ यद्धोता प्रातरनुवाकमन्वाह छन्दाᳬस्येवैतत्पुनराप्याययत्ययातयामानि करोति यातयामानि वै देवैश्छन्दाᳬसि छन्दोभिर्हि देवाः स्वर्गं लोकᳬ समाश्नुवत न वाऽअत्र स्तुवते न शᳬसन्ति तच्छन्दाᳬस्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते तस्माद्धोता प्रातरनुवाकमन्वाह ॥१०॥ तदाहुः । कः प्रातरनुवाकस्य प्रतिगर इति जाग्रद्धैवाध्वर्युरुपासीत स यन्निमिषति स हैवास्य प्रतिगरस्तदु तथा न कुर्याद्यदि निद्रायादपि कामᳬ स्वप्यात्स यत्र होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति ॥११॥ यत्र वै यज्ञस्य शिरोऽछिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तमदः पूर्वैर्युर्वसतीवरीभिराहरत्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्तमेवैतदाहेति ॥१२॥ यद्वेवैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीति तमारुन्द्धे याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसᳬ संनमन्ति ॥१३॥ ॥ शतम् २२०० ॥ ॥ स जुहोति । शृणोत्वग्निः समिधा हवं मऽइति शृणोतु मऽइदमग्निरनु मे जानात्वित्येवैतदाह शृण्वन्त्वापो धिषणाश्च देवीरिति शृण्वन्तु मऽइदमापोऽनु मे जानन्त्वित्येवैतदाह श्रोता ग्रावाणो विदुषो न यज्ञमिति शृण्वन्तु मऽइदं ग्रावाणोऽनु मे जानन्त्वित्येवैतदाह विदुषो न यज्ञमिति विद्वाᳬसो हि ग्रावाणः शृणोतु देवः सविता हवं मे स्वाहेति शृणोतु मऽइदं देवः सवितानु मे जानात्वित्येवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्यज्ञस्य रसमाहेति ॥१४॥ अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । उदङ् प्रपद्याहाप इष्य होतरित्यप इष होतरित्येवैतदाह तद्यदतो होतान्वाहैतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्द्धऽएतानु चैवैतदनुतिष्ठते नेदेनानन्तरा नाष्ट्रा रक्षाᳬसि हिनसन्निति ॥१५॥ अथ सम्प्रेष्यति । मैत्रावरुणस्य चमसाध्वर्यवेहि ने-

ष्टः पत्नीरुदानयेत्यथैतेन एताभ्यो ह्यात्ते वसतीवरीभिः पत्न्युपनिष्ठामि ह्यानु चम-
सेन चेति सम्भ्रेव एवैषः ॥१६॥ तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रे-
णाग्नीध्रं स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्य-
त्सह पत्नीभिर्यन्ति ॥१७॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्र-
विवेश तमेते गन्धर्वाः सोमरक्षा जुगुपुः ॥१८॥ ते ह देवा ऊचुः । इयमु न्वेवे-
ह नाष्ट्रा यदिमे गन्धर्वाः कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रसमाहरेमेति ॥१९॥ ते
होचुः । योषित्कामा वै गन्धर्वाः सह पत्नीभिरयाम ते पत्नीष्वेव गन्धर्वा गर्धि-
ष्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्याम इति ॥२०॥ ते सह पत्नीभिरीयुः ।
ते पत्नीष्वेव गन्धर्वा जगृधुरथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाजह्रुः ॥२१॥ तथोऽए-
वैष एतत् । यदेव पत्नीभिरेति ते पत्नीष्वेव गन्धर्वा गृध्यन्त्यथैतमभयेऽनाष्ट्रे य-
ज्ञस्य रसमाहरति ॥२२॥ सोऽपोऽभिजुहोति । एतां ह वाऽआहुतिं हुतामेष
यज्ञस्य रस उपसमेति तां प्रत्युत्तिष्ठति तमेवैतदाविष्कृत्य गृह्णाति ॥२३॥ यद्वेवै-
तामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणाति तमारुन्द्धे तमपो याचति
याभ्य उ चैवैता देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः
प्रीता एतं यज्ञस्य रसं संनमन्ति ॥२४॥ स जुहोति । देवीरापोऽअपां नपादिति
देव्यो ह्यापस्तस्मादाह देवीरापोऽअपां नपादिति यो व ऊर्मिर्हविष्य इति यो
व ऊर्मिर्यज्ञिय इत्येवैतदाहेन्द्रियावान्मदिन्तम इति वीर्यवानित्येवैतदाह यदाहे-
न्द्रियावानिति मदिन्तम इति स्वादिष्ठ इत्येवैतदाह तं देवेभ्यो देवत्रा दत्तेत्येतदे-
ना अयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति शुक्रपेभ्य इति सत्यं वै शुक्रं स-
त्यपेभ्य इत्येवैतदाह येषां भाग स्थ स्वाहेति तेषामु ह्येष भागः ॥२५॥ अथ मै-
त्रावरुणचमसेनैतामाहुतिमपप्लावयति । कार्षिरसीति यथा वाऽअङ्गारोऽग्निना
ध्मातः स्यादेवमेषाहुतिरेतया देवतया ध्माता भवति राजानं वाऽएताभिरद्भिरुप-

स्वद्यन्भवति या एता मैत्रावरुणचमसे वज्रो वाऽआज्यꣳ रेतः सोमो नेद्वज्रेणा-
ज्येन रेतः सोमꣳ हिनसानीति तस्माद्वाऽअपप्लावयति ॥२६॥ अथ गृह्णाति । स-
मुद्रस्य त्वाक्षित्याऽउन्नयामीत्यापो वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति तस्मादाप ए-
तावति भोगे भुज्यमाने न क्षीयन्ते तदन्वेकधनानुन्नयन्ति तदनु पान्नेजनान् ॥२७॥
तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाक्रामत्तं तद्देवाः प्रैषै-
रेव प्रैषमैच्छन्पुरोरुग्भिः प्रारोचयन्निविद्भिर्न्यवेदयंस्तस्मान्मैत्रावरुणचमसेन गृह्णाति
॥२८॥ तऽआयन्ति । प्रत्युपतिष्ठतेऽग्नीच्चात्वाले वसतीवरीभिश्च होतृचमसेन च
स उपर्युपरि चात्वालꣳ सꣳस्पर्शयति वसतीवरीश्च मैत्रावरुणचमसं च समापो
ऽअद्भिरग्मत समोषधीभिरोषधीरिति यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्या-
हृतस्तमेवैतदुभयꣳ सꣳसृजति ॥२९॥ तद्धैके । एव मैत्रावरुणचमसे वसतीवरी-
र्नयन्त्या मैत्रवरुणचमसाद्वसतीवरीषु यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्या-
हृतस्तमेवैतदुभयꣳ सꣳसृजाम इति वदन्तस्तदु तथा न कुर्याद्यद्वाऽआधवनीये स-
मवनयति तदेवैष उभयो यज्ञस्य रसः सꣳसृज्यतेऽथ होतृचमसे वसतीवरीर्गृह्णा-
ति निग्राभ्याभ्यस्तद्युपर्युपरि चात्वालꣳ सꣳस्पर्शयत्यतो वै देवा दिवमुपोदक्राम-
स्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनुसंख्यापयति ॥३०॥ तऽआयन्ति । तꣳ होता
पृच्छत्यध्वर्योऽवेरपा३ऽइत्यविदोऽपा३ऽइत्येवैतदाह तं प्रत्याहोतेव नंनमुरित्यवि-
दमथो मेऽनꣳसतेत्येवैतदाह ॥३१॥ स यद्यग्निष्टोमः स्यात् । यदि प्रचरण्याꣳ सꣳ-
स्रवः परिशिष्टोऽलꣳ होमाय स्यात्तं जुहुयाद्यद्यु नालꣳ होमाय स्यादपरं चतुर्गृ-
हीतमाज्यं गृहीत्वा जुहोति यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता श-
श्वतीरिषः स्वाहेत्याग्नेय्या जुहोत्यग्निर्वाऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति
मर्तवत्या पुरुषसंमितो वाऽअग्निष्टोम एवं जुहुयाद्यद्यग्निष्टोमः स्यात् ॥३२॥ य-
द्युक्थ्यः स्यात् । मध्यमं परिधिमुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतैरु हि तर्हि य-

ज्ञः प्रतितिष्ठति यद्यु ऽअतिरात्रो वा षोडशी वा स्यान्नैव तदुपयान्न मध्यमं परिधि मुपस्पृशेत्समुच्येव तूष्णीमेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून्व्यावर्तयति ॥ ३३ ॥ अयु-ज्ञा-अयुज्ञा एकधना भवन्ति । त्रयो वा पञ्च वा पञ्च वा सप्त वा सप्त वा नव वा नव वैकादश वैकादश वा त्रयोदश वा त्रयोदश वा पञ्चदश वा द्वन्द्वम् मिथुनं प्रजननमथ य एष एको ऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते स वा ऽएषाᳯ सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषाᳯ सधनं तस्मादेक-धना नाम ॥ ३४ ॥ ब्राह्मणम् ॥ ४ [१. ३] ॥ ॥

अथाधिषवणे पर्युपविशन्ति । अथास्याᳯ हिरण्यं बध्नीते द्वयं वा ऽइदं न तृ-तीयमस्ति सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्यᳯ सत्येनाᳯशू नुपस्पृशानि सत्येन सोमं पराह्णानीति तस्माद्वा ऽअस्याᳯ हिरण्यं ब-ध्नीते ॥ १ ॥ अथ ग्रावाणामादत्ते । ते वा ऽएते ऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्त-च्छरीरेणैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा ऽएनमे-तद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात उदेति तथा संजीवति तस्मादश्ममया ग्रा-वाणो भवन्ति ॥ २ ॥ तमादत्ते । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे रावासीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैनमे-तदादत्ते ऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्यां पू-ष्णो हस्ताभ्यामिति पूषा भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वा ऽएष तस्य न मनुष्यो भर्ता तमेताभिर्देवताभिरादत्ते ॥ ३ ॥ आददे रावासीति । यदा वा ऽएनमेतेनाभिषुण्वन्त्यथाहुतिर्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्ये-तद्धेष द्वयᳯ रासतऽआहुतीश्च दक्षिणाश्च तस्मादाह रावासीति ॥ ४ ॥ गभीरमि-ममध्वरं कृधीति । अध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदाहेन्द्राय सुषूतम-

मितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतममिति सुसुतममित्येवैतदा-
होत्तमेन पवित्रेणेत्येष वाऽउत्तमः पवित्रं यत्सोमस्तस्मादाहोत्तमेन पवित्रेणेत्यूर्जस्वन्तं
मधुमन्तं पयस्वन्तमिति रसवन्तमित्येवैतदाह यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमिति
॥५॥ अथ वाचं यच्छति । देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य आसङ्गाद्बिभ-
यां चक्रुस्ते होचुरुपांशु यजाम वाचं यच्छामेति तऽउपांश्वयजन्वाचमयच्छन् ॥६॥
अथ निग्राभ्या आहरति । तास्वेनं वाचयति निग्राभ्या स्थ देवश्रुतस्तर्पयत मा
मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पय-
तात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा
वितृषन्निति रसो वाऽआपस्तास्वेवैतामाशिषमाशास्ते सर्वं च मऽआत्मानं तर्प-
यत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्निति स
य एष उपांशुसवनः स विवस्वानादित्यो निदानेन सोऽस्यैष व्यानः ॥७॥ त-
मभिमिमीते । घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात उदेति तथा
संजीवति यद्वेव मिमीते तस्मान्मात्रा मनुष्येषु मात्रा यो चाप्यन्या मात्रा ॥८॥
स मिमीते । इन्द्राय त्वा वसुमते रुद्रवतऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहे-
न्द्राय त्वेति वसुमते रुद्रवतऽइति तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजतीन्द्राय त्वादि-
त्यवतऽइति तदिन्द्रमेवान्वादित्यानाभजतीन्द्राय त्वाभिमातिघ्नऽइति सपत्नो वा
ऽअभिमातिरिन्द्राय त्वा सपत्नघ्नऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठ स्योद्धार ए-
वमस्यैषऽइतरे देवेभ्यः ॥९॥ श्येनाय त्वा सोमभृतऽइति । तद्गायत्र्यै मिमीतेऽग्नये
त्वा रायस्पोषदऽइत्यग्निर्वै गायत्री तद्गायत्र्यै मिमीते स यद्गायत्री श्येनो भूत्वा दि-
वः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवास्या एतद्वीर्येण द्वितीयं मिमीते ॥१०॥
अथ यत्पञ्च कृत्वो मिमीते । संवत्सरसंमितो वै यज्ञः पञ्च वाऽऋतवः संवत्सर-
स्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो मिमीते ॥११॥ तमभिमृशति । यत्ते सोम

दिवि ज्योतिर्यत्पृथिव्यां यद्वान्तरिक्षे । तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोच इति यत्र वाऽएषोऽग्रे देवानाꣳ हविर्बभूव तदेनां चक्रमेव सर्वेणेवा-त्मना देवानाꣳ हविर्भूतमिति स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त ॥१२॥ तद्ध देवा अस्पृण्वत । तऽस्यैतेनैवैतास्तनूराप्नुवन्त्स कृत्स्न एव देवानाꣳ हविर-भवत्तथोऽएवास्यैष एतेनैवैतास्तनूराप्नोति स कृत्स्न एव देवानाꣳ हविर्भवति तस्मादेवमभिमृशति ॥१३॥ अथ निग्राभ्याभिरुपसृजति । आपो ह वै वृत्रं जघ्नु-स्तेनैवैतद्वीर्येणापः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किं चन प्रतिधारयति ता ह स्वमेव वशं चेरुः कस्मै नु वयं तिष्ठेमहि याभिरस्माभिर्वृत्रो हत इति सर्वं वाऽइदमिन्द्राय तस्थानमास यदिदं किं चापि योऽयं पवते ॥१४॥ स इन्द्रोऽब्र-वीत् । सर्वं वै मऽइदं तस्थानं यदिदं किं च तिष्ठध्वमेव मऽइति ता होचुः किं नस्ततः स्यादिति प्रथमभक्ष एव वः सोमस्य राज्ञ इति तथेति ता अस्माऽअति-ष्ठन्त तास्तस्थाना उरसि न्यगृह्णीत तद्यदेना उरसि न्यगृह्णीत तस्मान्निग्राभ्या ना-म तथैवैता एतद्यजमान उरसि निगृह्णीते स आसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्राभ्याभिरुपसृजति ॥१५॥ स उपसृजति । श्वात्रा स्थ वृत्रतुर इति शिवा ह्या-पस्तस्मादाह श्वात्रा स्थेति वृत्रतुर इति वृत्रꣳ ह्येता अघ्नन्राधोगूर्ता अमृतस्य प-त्नीरित्यमृता ह्यापस्ता देवीर्देवत्रेमं यज्ञं नयतेति नात्र तिरोहितमिवास्त्युपहूताः सोमस्य पिबतेति तदुपहूता एव प्रथमभक्षꣳ सोमस्य राज्ञो भक्षयन्ति ॥१६॥ अ-थ प्रहरिष्यन् । यं द्विष्यात्तं मनसा ध्यायेदमुष्माऽअहं प्रहरामि न तुभ्यमिति यो न्वेवेमं मानुषं ब्राह्मणꣳ हन्ति तं न्वेव परिचक्षतेऽथ किं य एतं देवो हि सोमो घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात उदेति तथा संजीवति त-थानेनास्तं भवति यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्तथोऽअनेनास्तं भवति ॥१७॥ स प्रहरति । मा भेर्मा संविक्था इति मा त्वं भैषीर्मा संविक्था अमुष्मा

ऽग्रहं प्रहरामि न तुभ्यमित्येवैतदाहोर्जं धत्स्वेति रसं धत्स्वेत्येवैतदाह धिषणे वीड्वी सती वीडयेथामूर्जं दधाथामितीमे ऽएवैतत्फलकेऽग्राहुरित्यु हैकऽग्राहुः किं नु तत्र योऽप्येते फलके भिन्द्यादिमे ह वै द्यावापृथिवीऽएतस्माद्वज्राद्दुद्यतात्सᳪ-रेजेते तदाभ्यामेवैनमेतद्द्यावापृथिवीभ्याᳪ शमयति तथेमे शान्तो न हिनस्त्यूर्जं दधाथामिति रसं दधाथामित्येवैतदाह पाप्मा हतो न सोम इति तदस्य सर्वं पाप्मानᳪ हन्ति ॥१८॥ स वै त्रिरभिषुणोति । त्रिः सम्भरति चतुर्निग्राभमुपैति तद्दश दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दश कृत्वः सम्पादयति ॥१९॥ अथ यन्निग्राभमुपैति । यत्र वाऽएषोऽग्रे देवानाᳪ हविर्बभूव तद्धेमा दिशोऽभिदध्यावाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सᳪस्पृशेयेति तमेतद्देवा आभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना समस्पर्शयन्यन्निग्राभमुपायंस्तथोऽएवैनमेष एतदाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सᳪस्पर्शयति यन्निग्राभमुपैति ॥२०॥ स उपैति । प्रागपागुदगधराक्सर्वतस्त्वा दिश आधावन्त्विति तदेनमाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सᳪस्पर्शयत्यम्ब निष्पर समरीर्विदामिति योषा वाऽअम्बा योषा दिशस्तस्मादाहाम्ब निष्परेति समरीर्विदामिति प्रजा वाऽअरीः सं प्रजा जानतामित्येवैतदाह तस्माद्या अपि विदूरमिव प्रजा भवन्ति समेव ता जानते तस्मादाह समरीर्विदामिति ॥२१॥ अथ यस्मात्सोमो नाम । यत्र वाऽएषोऽग्रे देवानाᳪ हविर्बभूव तद्धेक्षां चक्रे मैव सर्वेणेवात्मना देवानाᳪ हविर्भूवमिति तस्य या जुष्टतमा तनूरास तामपनिदधे तद्धि देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न एतया हविरेधीति तां दूरऽइवोपप्रावृहत स्वा वै मऽएषेति तस्मात्सोमो नाम ॥२२॥ अथ यस्माद्यज्ञो नाम । घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यन्जायते तस्माद्यज्ञो यज्ञो हवै नामैतद्यद्यज्ञ इति ॥२३॥ तदिदमपि वाचऽउवाद । त्वमङ्ग प्रशᳪसिषो देवः शविष्ठ मर्त्यम् ।

न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच इति मर्त्या [illegible] नदचन्नुवाच त्वमेवेतो जनयितासि नान्यस्त्वदिति ॥२४॥ अथ निग्राभ्याभ्यां ग्रहान्विगृह्णते । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते स्यन्दमानानां वै वसतीवरीर्गृह्णाति वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यां ग्र[illegible]ह्णते तेनैवैतद्वीर्येण ग्रहान्विगृह्णते होतृचमसाद्ध्येषा वा ऽअग्रेऽधीना योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषाया ऽऋचो होतुः प्रजनयति [illegible]चमसात् ॥२५॥ ब्राह्मणम् ॥५[१.४]॥ सप्तमः प्रपाठकः ॥ कण्डिकासंख्या ११४ ॥ नवमोऽध्यायः [२४.] ॥ ॥ अस्मिन्काण्डे कण्डिकासंख्या ८५१ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे अध्वरनाम तृतीयं काण्डं समाप्तम् ॥३॥ ॥

## EXTRACTS MADE FROM THE COMMENTARY OF SĀYANĀCĀRYA.

आधानपुनराधानेऽग्निहोत्रं ततः परम् । चातुर्मास्यानि च यजुर्द्वितीयकाण्डेऽर्हितम् ॥ अथ तृतीयचतुर्थाभ्यामेकाहाहीनसत्त्रलक्षणामकलसोमयागप्रकृतिभूतोऽग्निष्टोमोऽभिधीयते । तत्र तृतीयकाण्डस्य प्रथमाध्याये शालानिर्माणप्रभृति दीक्षाङ्गतिपर्यन्तं प्रतिपाद्यते । तत्रादौ शालानिर्माणार्थं देवयजनपरिग्रहं विधत्ते देवयजनमिति । प्राचीनवंशसदोहविर्धानादिनिर्माणपर्याप्तं देवयजनस्थानम् तज्जोषयन्ते सेवन्ते स्वार्थिको णिच् परिगृह्णीयुर्यजमानपुरुषाः । स इति प्रसिद्धौ यच्छब्दविशेषणमेतत् प्रसिद्धं यद्देवयजनं तद्वर्षिष्ठमतिशयेन वृद्धमुच्छ्रितं जोषयितव्यम् । यद्यस्य (स्या Cod.) उपरि गृहीताया भूमेः अन्यत् परितःस्थलं नातिशयीत अतिशयितमुच्छ्रितं न स्यात् (न च Cod.) । निम्ने देवयजने इष्टा [illegible] नीच एव स्यात् । see कात्या° ७. १. १०. ॥१॥ वर्ष्मोन्नतम् ॥२॥ देवयजनप्राग्देशे देवयजनान्तरपरिमितप्रदेशस्याधिक्यं निषेधति न पुरस्तादिवेति । स देशातिरेको यजमानभ्रातृव्यातिरेकाय भवति । दक्षिणोत्तरयोरतिरेकः स्वैच्छिकः । पश्चाद्भागे पुनरन्यस्य देवयजनस्य पर्याप्तप्रदेशोपेतं देवयजनं समृद्धिकरम् ॥३॥ वार्ष्णमृषिं याज्ञवल्क्य उवाच यदा वयं देवयजनपरिग्रहाय गतास्तदानीं सात्ययज्ञ आह । अतो यत्र क्व च मन्त्रेण परिग्रहे सति तदुक्तलक्षणमेव भवेदित्यर्थः ॥४॥ याज्ञवल्क्यस्तु वक्ष्यमाणलक्षणैर्ऋत्विग्भिः परिग्रह ए[illegible]यजनपरिग्रह इत्याह ऋत्विज इति ॥५॥ शाला दीर्घचतुरस्रं गृहम् विमितं सर्वतः समपरिमाणम् । यस्मात्प्राग्दिग्गतानृत्विग्यजमानान्प्रति (? प्रात्यक्दिग्गतान्दवि[illegible]° Cod.) पुरोदेशाज्जविभोजनाः प्रत्यङ्मुखोपावृत्ताः (? प्रात्यक्मुखायावृत्ताः Cod.) ॥६॥ सा प्राच्यहीना समृद्धा ।

मानुषे मनुष्यार्हकर्मणि ॥७॥ वृष्ट्यादिपरिहाराय सर्वतः परिश्रयणं कर्तव्यम् दीक्षितस्येतरेभ्यो व्यवधानाय च ॥८॥ तत्रात्रैवर्णिकानां शूद्रादीनामभिप्राप्तिं निषेधति ॥९॥ इति एवम् मयेदानीमुक्तप्रकारेण ॥१०॥ समन्त्रकं शालाप्रवेशं विधत्ते अथेति । अध्यवस्यति शालां प्रविश्य मन्त्रेणैतद्देवयजनमिति निश्चिनुयात् । स्थूणाराजो मध्ये स्थित (? दित Cod.) उन्नतस्तम्भः तस्य पूर्वार्धमभिपद्य गृहीत्वा ॥११॥ मदति मोदते ॥१२॥१॥१॥

अथ दीक्षान्तकालं विधत्तेऽपराह्णऽइति ॥१॥ शालाया उत्तरभागे क्षौरार्थं परिश्रयणं विधत्ते अथेति ॥२॥ सर्वऽएव सर्वस्मिन्नपि देहे ॥३॥ गोदानं नाम कर्णस्योपरि प्रदेशः । वितारयति विभजेत् ॥५॥ परितस्तिर्यगस्यतऽइति पर्यासस्तिर्यक्कं च संदर्भः । अनु·अनुलोममाक्षायतऽइति पर्यासस्तिर्यक्कं तु संदर्भः (! repetition) तानः । नीविराद्यन्तप्रदेशः । प्रघातः सर्वहननस्थानं (? सवहस° Cod.) निविडीभूतप्रदेशः । आरोका मध्ये छिद्राणि ॥१८॥ अयातयामतायै अशिथिलत्वाय । निष्पेष्टवै क्षालयितुम् । अस्य वस्त्रस्य यदमेध्यमाकृणत्ति आश्लिष्टं करोति निर्माणकाले सहैव वयति च । पक्षान्तरमाह अथो यदिति स्नातेन पुरुषेणाक्षाद्यं धार्यमपल्पूलनकृतं क्षारद्रव्यसहितेनाधौतम् (? °तेनध्येतं Cod.) प्रतिदिनं प्रक्षाल्य यदेव धार्यते तदित्यर्थः तेन वा दीक्षेत ॥१९॥ स धेन्वै चेति धेनोः क्षीरादिकम् अनडुहः सम्बन्धि कर्षणसाध्यम् । अनयोः सर्वोपकारकत्वं विज्ञाय देवैर्वयसामन्येषां पशूनां वीर्यसारमादाय धेन्वनडुहयोः स्थापितत्वात्तदश्नतः (? त्वादश्नंत Cod.) सर्वाशनं भवति तस्य च जायायां (? तस्य वयां Cod.) गर्भसम्भवे सति तत्सर्वाशनं तं (त Cod.) रेतोरूपेण परिणतं गर्भं (गभी Cod.) हिंस्यात् तत्पापकीर्तिः स्यात्तदुभयोरन्नं नाश्नीयात् । यस्मादुभयाशने शरीरमंसलं भवति तस्मात्तयोरन्नमश्नीयाम् । एकहायनप्रभृत्यापञ्चहायना गावो वयांसि ॥२१॥२॥१॥

अपः (!) प्रणयनानन्तरं दीक्षाङ्गभूताया आग्नावैष्णवेष्टेः प्रयोगं विधत्ते अप इति । अग्निरपरार्ध्यः अपरार्धे पूर्वार्धे भव आदिमः ॥१॥ आदित्येभ्योऽदितेः पुत्रेभ्यो धात्रर्यमादिभ्यः सप्तभ्यः । तं परिवादं मन्त्रोदाहरणेन प्रदर्शयति (see ऋक्संहि° १०. ७२. ८.) अष्टौ पुत्रा धात्रादिविवस्वदन्ताः तेषु मध्ये सप्तभिः पुत्रैः सह देवानुपागात् (?°याणात् Cod.) मार्ताण्डं मृताण्डसम्बन्धिनमष्टममास्यत् परितत्याज ॥२॥ सप्त हैव विवस्वद्व्यतिरिक्ता अविकृतं कारचरणादि विकार इति तद्रहितं (? कृतचरणादि तिकार इति कार इति ह तं Cod.) मार्ताण्ड जनयामासुः व्यत्ययेनैकवचनम् संदेहः सम्यगुपचितः सासमः (del.!) सर्वतः सम एवासीत् केचित्पुरुषवदूर्ध्वत्वमात्रविशिष्टोऽभूदित्याहुः ॥३॥ पुरुषाजानः पुरुषप्रकृतिकः ॥४॥ मे मम प्रजायां प्रजासु मध्ये यः कश्चिदादित्येभ्यश्चरुं निर्वपेत् स राध्नुयात् (!) । प्रज्ञानः सर्वैः प्रसिद्धः ॥५॥ देवते प्रधानसम्बन्धिन्यौ अग्नाविष्णू ॥६॥ शालायाः पुरोदेशे (? पुरो Cod.) तिष्ठन्सर्वाङ्गे नवनीताभ्यञ्जनं कुर्यात् । अरुर्व्रणात्मकः ॥७॥ यस्मान्नवनीतं फाण्टघृतयोरन्तरालवर्ति तस्मादन्यदनन्यच्च भवति ॥८॥ इतरावयववत्संस्पर्शासहिष्णुत्वादक्ष्यरुर्व्रणी भवति । मम प्रशान् प्रशाम्येत् । इषीका (!) नेत्रयोर्मलं सास्य पुरुषस्याक्ष्णः भूय (!) एव अर्त्ते (!) दुःखत्वमेव ततोऽञ्जनेन नाशयति ॥१०॥ तस्य यज्ञमुपगच्छन्दीक्षितोऽश्मपुरीं रक्षार्थं कृतवान्भवति ॥११॥ शरस्तृणविशेषः तस्य शलाका इषीका ॥१३॥ उत्तरावत् उत्कर्षवत् ॥१६॥

तदस्माऽइति तन्त्रेनाशिषामारम्भवाचनेन सर्वासामाशिषामागामिर्थ यजमानेन परिगृहीतत्वात्स्वकीया एव सतीः ता एवाशिषः सर्वे ऋत्विजः (॰ऋत्विजः Cod.) तन्मन्त्रेण यजमानार्थमाशासते ॥२४॥ एकैकेन मन्त्रेण हस्तद्वयेऽपि कनिष्ठिकादिक्रमेण द्वे द्वे अङ्गुली संकोचयति । यज्ञस्य वायोर्दण्डादिवद्धस्ते धारयितुमशक्यत्वात् अत एव तेषां मन्त्रेण मुष्टिबन्धनमेव प्रत्यक्षधारणमित्यर्थः ॥२५॥ वातेन प्राणेन व्याप्रियमाणवागादीना यज्ञः । अंशब्देन वाताद्यज्ञः प्रयुज्यतामित्यादिमन्त्रप्रसिद्धिर्द्योत्यते ॥२६॥ दीक्षाहुत्यर्थं शालाप्रवेशनम् ॥२८॥३॥१॥

अथ दीक्षाहुतीर्विधातुमाह सर्वाणीति ॥१॥ सम्पन्नतऽइति सम्पत् काम्यते कामः सम्पाद्याय स्वर्गफलाय । यथा लोके किंचित्फलं सिसाधयिषुः आदौ तदध्यात्वा पश्चात्कामयित्वा तत्साधनमनुष्ठायान्ते तल्लभते एवं त्रिभिः स्वर्गफलमाध्याय चतुर्थेन तत्साधनमनुष्ठाय पञ्चमेन तदुद्गृहीतवान्भवति ॥२॥ अथ पुरातनवृत्तान्तप्रदर्शनमुखेनैतेषां स्वर्गादिप्रयुक्तां साधनतामुपपादयति यज्ञेनेति । see १. ५. २. १. ॥३॥ यथायमिति येन प्रकारेण देवानुष्ठितप्रकारं ज्ञानद्भिर्ऋषिभिरयं यज्ञः औदग्रभणहोमेन सम्भृतः एवमेतेषामनुष्ठानेनैष यजमानोऽपि यज्ञं सम्भृतवान्भवति ॥४॥ अथातो होमस्यैवेति मन्त्रा व्याख्यायन्तऽइति शेषः । अग्रे यागानुष्ठानात्पूर्वमाकूवते (॰कूर्वते Cod.) खलु क्रतुशब्देन तत्प्रभावो मनोव्यापारो लक्ष्यते यजेयेति (॰तेति Cod.) संकल्पयतीत्यर्थः ॥५॥ अनूच्यतऽएवेति एवकारव्यावर्त्यमाह (॰ ॰याव॰ Cod.) न वितीति (व्रितिति Cod.) ॥८॥ अनवेव नप्रत्यक्षमिव । अतोऽस्मात् आकूत्याऽइत्येवमादिकाद्वाक्यात् (कात् कात् वाक्या Cod.) एकमपीन्द्रादिकं देवं नोपलभामहे इति वदन्तः ॥११॥ आधीते आध्यानेन विषयीकृते ॥१२॥ दीक्षणीयेष्टेः सम्बन्धि यदाज्यं ध्रुवायामवशिष्टं तत्पञ्चमाहुत्यर्थं जुह्वामानयेत् एतदेकमवत्तम् अथाज्यस्थाल्याः सकाशात्स्रुवेण जुह्वामुपरि त्रिरानयति (त्रिपाशनयति Cod.) एवं चतुरवत्तं भवति ॥१०॥ विश्वो देवस्येति विश्वदेवशब्दश्रवणात् इदं मन्त्रवाक्यं वैश्वदेवम् । नयनस्य सवितृव्यापारत्वात् नेतृशब्दश्रवणात्सावित्रः । मर्तो वृणीतेत्येनेन मनुष्यैर्वरणीयत्वाभिधानात् मित्रस्य वरणीयत्वं प्रसिद्धम् ॥१९॥४॥१॥

दीक्षाहुतीर्विधायाथ कृष्णाजिनदीक्षामाह दर्भेणेति ॥१॥ तर्कसमुते इति यथाभयोमीसप्रदेशयोः सम्बन्धो भवति यथा च तर्दनप्रदेशेषु पश्चाद्भागे उते परस्परं स्यूते भवतः तथैकस्योपर्यपरमास्तृणुयात् ॥२॥ तर्हि तस्मिन्नेककृष्णाजिनपक्षे अन्तकमु अन्तप्रदेशमेव पश्चाद्भागे प्रत्यस्येत् संकोचयेत् संधिप्रदेशेन द्विगुणीकुर्यात् (णो Cod.) ॥४॥ जान्वाक्न उपविशेत् जानुकऽआरुह्योपविशेत् (॰रुह्यो॰ Cod.) दक्षिणं जान्वाच्य ॥५॥ दूष्यति दृप्तः कुत्सितगातर्भविष्यति (कुसित॰ Cod.) ॥९॥ परिहरति (!) मध्ये परितो वेष्टयेत् । बल्यं बलार्हं बलकरं वसु नाविन्दन् (!) । व्रतात् तत्साधनात्पयसः ॥१०॥ शाणी शणमयी । पूतयो वाति दुर्गन्धा भवन्ति ॥११॥ तस्याः मुञ्जशाखाभिः मिश्रितत्वं विधत्ते मुञ्जेति । स्तुका केशवेणी सा यथा सृज्यते तथा सृष्टा निर्मिता भवेत् ॥१३॥ वस्त्रस्य समन्त्रकमुद्गूहनमाह अथेति । अग्रे सोमयागात्पूर्वम् ॥१५॥ वाससा आच्छादनं विधत्ते अथेति । शिरः प्रोर्णुते ॥१६॥ सिगवन्तः । कृष्णविषाणोत्पत्त्यर्थमाख्यायिकामाह देवाश्च वाऽइति ॥१८॥ निपलाशमिव निपतितपर्णं वृक्षादिकमिव तथथा केवलं कम्पते एवं शिरश्चलते नोवाच ॥२०॥ सत् यस्मा-

देनं यज्ञं न युविता न मिलितवती (मितितावती Cod.) अतो न विश्वसितव्यम् ॥२२॥ अथ तेऽसुराः आत्तवचसो देवैः स्वीकृतवचसो हे अरयो हे अरय इत्युच्चारयितुमशक्ता हे अलवो हे अलव इति वदन्तः पराभूताः ॥२३॥ प्रसङ्गात्किंचिद्वाग्विषयं नियममाह तत्रेति । उपजिज्ञास्यां ज्ञातव्यां संदिग्धां वाचमूदुरुक्तवन्तोऽसुराः । स म्लेच्छः संदिग्धार्थस्यापभ्रंशरूपस्य वचसो भाषणं यत् म्लेच्छनमित्यर्थः यद्वा य ईदृशीं वाचं वदति स म्लेच्छः तस्मान्न म्लेच्छेत् म्लेच्छो न भवेत् ॥२४॥ अभ्वमपत्यम् (सं Cod.) ॥२६॥ यज्ञो हि कृष्ण इति हिशब्देन यज्ञो देवेभ्यो निलायत कृष्णो रूपं (!) कृत्वेत्यादिश्रुतिप्रसिद्धिरभिधीयते ॥२८॥ तया भूमेरुपरि समन्त्रकं लेखनं विधत्ते अथेति ॥३०॥ तदा स गर्भोऽपमाक्रन्मृतिं प्राप्नुयात् । पामा विचर्चिका मत्वर्थीयो नः तद्वान्भवितुं समर्थो भवति । न केवलं दीक्षितः स्वयमेव पामनो भवति किंतु तदुत्पन्नाः पुत्रा अपि तादृशा भवन्तीत्याह दीक्षितं वाऽअन्विति ॥३१॥ अथ दण्डेन दीक्षां विधत्ते अथेति ॥३२॥ मुखपर्यन्तं प्रत्यङ्गे वीर्यसम्भवात्ततोऽधःकण्ठादिसंमितं न कुर्यात् ॥३४॥ अतो हि अस्माद्दण्डग्रहणकालादूर्ध्वकाले किंचिदपि न ज्ञपिष्यन्भवति । अमुत्रैव प्रागुक्ते [१, ३, २५. २७] काले दर्भपावनानन्तरमेव ॥३६॥ उद्वदति उच्चैरावेदयति । अयं ब्राह्मणो दीक्षणीयेष्टिकृष्णाजिनादिदीक्षासंस्कारेण संस्कृतः ॥३१॥ सवनकृता निमित्तेन तद्वधेनेत्यर्थः ॥४०॥१॥२॥

गृहीतस्य वचसो विसर्गकालविधानाय पुनरनुवदति वाचमिति ॥१॥ स उक्तलक्षणः प्रजापतिः पुरा स्वयज्ञसमये अहन् अहनि अदीक्षिष्ट लुङ् दीक्षितवान् कृतदीक्षः प्रजापतिः रात्रिं प्राप्तवान् दीक्षितोपलक्षितां वाचं रात्रिपर्यन्तमन्ववर्तयत् अतस्तावत्पर्यन्तं वाग्यमनं कुर्वन्दीक्षितो यावान्यज्ञः संवत्सरप्रजापत्यात्मकोऽस्ति अस्य च यावती मात्रा परिमितिरस्ति तावन्तं सकलमप्येतदेतेन नियमेनाप्त्वा वाचं विसृष्टवान्भवति ॥४॥ अनुष्ठ्या सम्यक् ॥५॥ व्याकृतिर्व्याकरणं दैवमानुषयोर्विभागः ॥१६॥ प्रकरणात्पयोव्रतऽएव हस्तप्रक्षालनेऽयं मन्त्र इति प्राप्तौ सर्वव्रतावनेजनसाधारणतामाह स यावदिति ॥१७॥ सर्वत्रकर्तव्यत्वे कारणमाह कस्तद्वेदेति ॥११॥ उपहन्ति उपाददीत ॥२०॥ प्राण एव न अपक्रामतीति शेषः ॥२३॥ अभिहरन्ति धनं प्रयच्छन्ति ॥२५॥ दैवीमेव वाचं वदेत् अर्थपरिस्खलनपरिणीतां (?अथपरिस्खलनंप° Cod.) संस्कृताम् । प्रसृता सर्वत्र व्याप्ता ॥२७॥ प्रसङ्गाद्दीक्षितशब्दं निर्वक्ति ॥३०॥२॥२॥

एवं वाग्यमनादयो दीक्षितधर्मा उक्ताः अवसितासु दीक्षास्वनुष्ठेयां (दीक्षितास्वनुष्ठेयी Cod.) प्रायणीयेष्टिं संविधत्ते आदित्यमिति । अदितिर्देवता अस्येत्यादित्यः न त्वादित्या देवता अस्येति ॥१॥ एवं प्रायणीयेष्टौ चरुसाध्यमादित्ययागं विधायान्यांश्चतुरो यागान्विधित्सुस्तेषां कालमाह तद्वै निरुप्तमिति निरुप्तमिति हविःसंस्कारोपलक्षणम् आदित्यस्य हविषो निर्वापप्रोक्षणाद्यासादनान्ताः संस्काराः कृता भवेयुः प्रधानदेवता च अनिष्टा (अतिकृष्टा Cod.) अकृतयागा भवति तस्मिन्काले वक्ष्यमाणाश्चतस्रो देवता यष्टव्या इत्यर्थः ॥७॥ अथ तान्यागान्पूर्ववदाख्यायिकया विधित्सुस्तत्र प्रथमयागस्य विधिमर्थवादेनोन्नयति अथेति । पथोऽनपेता पथ्या धर्मपथ्यर्थन्यायादनपेता । स्वस्तिः शोभनरूपा ॥८॥ एवमाज्यहविष्कांश्चतुरः प्रधानयागान्कृत्वा प्रथमनिरुप्तेन हविषादितिर्यष्टव्येत्याह अथ यस्याऽइति यस्मादेवं देवाः पञ्चमीमदितिमयजन् तस्मादिदानींतनोऽपि यजमानो यागसमये अदितियागं पञ्चमं कुर्यात्

॥११॥ पञ्चसंख्यामनूद्य प्रशंसति ता वा इति । धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वमिति तैत्तिरीयकम् ॥१२॥ तस्मादत्राग्निमन्तो कुरुपञ्चालाख्येषु जनपदेषु उत्तरा उन्नततरा वाग्वदति भृशं शब्दायते अत्युन्नतभाषणस्य (अत्युन्नेत° Cod.) तत्रोपलम्भात् । देवमनुष्येत्यादौ [पा° ५.४.५६.] परिगणनाभावेऽपि बहुल ग्रहणात्कुरुपञ्चालशब्दादपि त्राप्रत्ययः ॥१४॥ तस्मात्पश्चाद्धाम्यितममिमाहवनीयरूपेण । अनुद्रुत्योपासते अग्निहोत्रहोमादिरूपमुपासनं कुर्वन्ति ॥१६॥ आतिथ्यायाः प्राच्य प्रायणीयं (प्राच्य यणीयं Cod.) कर्तव्यमित्यभिधातुं प्रायणीयोदयनीययोर्यज्ञरूपतामातिथ्यायाः शिरोरूपतां चाह शिर इति°। एते हविषी एतौ यागावित्यर्थः यागस्य हविःप्रधानत्वात् ॥२०॥ स्थालीमेक्षणयोरप्युदयनीयार्थमवस्थानमाह तां स्थालीमिति या प्रायणीयचरुस्थाली तां मक्षाममकर्षाम् अग्निसंयोगेनात्तरोषदग्धश्चरुः (? °दाधश्चरुः Cod.) क्षामः तस्य कर्षो लोपः तत्सहिताम् क्षायो म इति [पा° ८.२.५३.] निष्ठातकारस्य मत्वम् मेक्षणं चरुनिष्पादनसाधनं काष्ठम् तत्प्रमृज्य चरुणा लेपयित्वा स्थाल्या सह निदध्यात् ॥२१॥ एवं मेक्षणमिति अर्थिर्वदतौ प्रहरादित्यर्थः । विप्रेताः विविधदेशं प्राप्ताः ॥२२॥ इत्थात् इत्थमनेनेदानीं पदिद्रयमानेन प्रकारेण पञ्चाङ्गुलयो लभ्यन्ते हस्तद्वयमभिनीय प्रदर्शयितुं द्विरभिधानम् । प्रकृतिभूतदर्शपूर्णमासेष्टिवत्साकल्येनानुष्ठानप्रसक्तौ तत्प्रतिषेधति तदभ्यक्तमिति ॥२३॥१॥२॥

सोमक्रयं विधातुमाख्यायिकामाह दिवीति । पराव्यामोहनकारी शक्तिर्माया । गन्धर्वाणां व्यामोहाय सृष्टवन्तः । होतृमैत्रावरुणादीनां शंसनप्रदेशेषु पुरतः स्थापिता अग्नयो धिष्ण्याः होत्रीयादयः ते खलु पुरा दिवि सोमरक्षकाः पश्चात्सोमे आहृते सति तेन सह भूमावागत्य देवेभ्यो लब्धवराः सन्तोऽत्रापि सोमरक्षणा[°णाय?] धिष्ण्यतां प्राप्ताः । AGG ६.२.२-२०. ॥१॥ तेभ्यो देवेभ्योऽर्थाय [र्थाव Cod.] सुपर्णी निर्मिता गायत्री छन्दोदेवता पक्षिरूपेण दिवि स्थितं सोममच्छाभिमुखमगमत् । आहरन्त्यै आहरन्त्यास्तस्याः स्वभूतं सोममपजहार । परस्तात् द्युलोकात् ॥२॥ अभिषहनमभीषट् अभिभवः तेन बलात्कारेण मा नैष्ट मा पलायिष्ट । विह्वयामहै यूयं वयं च वाचं विविधमाकारयाम ॥३॥ निमिश्लतमा (!) इव विश्लेषेणैकीभूता अत्यन्तमनुरक्ताः ॥६॥ सिद्धार्थमनूद्य सोमक्रयं विदधाति तद्वा इति ॥७॥ सोमक्रयात्प्राक्कर्तव्यं च कंचिद्धोमं विदधाति अथेति प्रायणीयार्थमुपयुज्य यद्घृतं ध्रुवायामवशिष्टं (?यद्वृतायामव° Cod.) तदङ्गुल्या चतुर्वारं गृहीत्वा दर्भेण हिरण्यं प्रबध्य तदङ्गुल्यामवधाय जुहुयात् ॥८॥ अलग्नमिव (!) वक्तव्यपदार्थेन सहासंसृष्टमिव ॥११॥ हिरण्ये बद्धं तृणं विमुच्य बर्हिष्यपिसृज्य पुनः सूत्रेण बध्नीयात् ॥१४॥ अध्वर्योरनुस्पर्शोऽन्वारम्भः । शालायै शालाया अर्वाग्वर्ति द्वाराणीति शेषः । द्वारे आहवनीयात्प्राक्तने । सोमक्रयणी गौः ॥१५॥ अनूक्तेन अनुवचनेन वेदाध्ययनेन प्रकामोद्यमिच्छया लौकिकभाषणम् गाथा गद्यपद्यात्मिका [illegible] । स वक्ता यत् यस्मादेनया अदित्या उभयशिरस्कया निमित्तभूतया समानमेकमेव सद्वाक्यं विपर्यासं व्यत्यासेन वदति तथा हि भुङ्क्ष्व देवदत्त तिष्ठ विष्णुमित्रेत्यादौ यदेवापरं वचनं देवदत्त[विष्णुमित्रेत्यादिकं तत्पूर्वं देवदत्त भुङ्क्ष्वे]त्येवमादिरूपेण पूर्वं करोति उतावैपरीत्येन यत्पूर्वं भुङ्क्ष्व-तिष्ठेत्यादिकं तदपरं देवदत्त भुङ्क्ष्वेत्याद[िरू]पेणापरं च करोति त-

स्माद्वाग्रूपां सोमक्रयणीमुभयतःशीर्ष्ण्यदितिरसीत्याह मन्त्रः ॥१६॥ द्वारदक्षिणदेशस्थायाः सोमक्रयण्या उदक्प्रायणं सार्थवादं विधत्ते तामुदीचोमिति ॥२२॥४॥२॥

तृतीयाध्याये सोमक्रयण्यनुगमाद्युपसदन्तः प्रयोगो निरूप्यते तत्र सोमक्रयण्या अनुक्रमणं विधत्ते सप्तेति । केवलोऽपि वृत्तिराङ्पूर्वो द्रष्टव्यः आवर्तितवान्भवति । परार्धे उपरिभागे भवा परार्ध्या । पदादिक्रमेण परस्तादवस्थितां गायत्र्याद्यन्तर्भावेन सर्वच्छन्दोरूपां शक्करीं स्वाभिमुखमावर्तितवान्भवति (?°वर्तित° Cod.) ॥१॥ स्पृणुते हिनस्ति पदप्रदेशस्थां मृदमित्यर्थः ॥३॥ पदे समन्त्रकं होमं विधत्ते स इति ॥४॥ पदस्य परिलेखनं सार्थवादं विधत्ते अथेति ॥५॥ सप्तमपदपांसोः स्थाल्यां स्थापनं समन्त्रकं विधत्ते अथेति ॥६॥ परिलिखितप्रदेशे अपां निनयनं विधाय प्रशंसति यत्रेति ॥७॥ पदं स्थालीस्थं पदपांसुम् ॥८॥ प्रतिपराहरन्ति प्रयच्छेयुः ॥१०॥ तोत इति तोकसमानार्थः (समामात्यः Cod.) रायो धनानि तोतः पुत्रः स्वीकरोत्वित्यर्थः यद्वा तोतः त्वत्तः त्वयि रायः सन्त्विति शेषः ॥११॥ त्रेधा बभ्रवरुणरोहिणीरूपेण त्रिविधाम् ॥१३॥ परकीयाद्वाष्ट्राद्यां रोहिणीं वशीकुरुते (वशकु° Cod.) स्वीकरोति सा वार्त्रघ्नी । श्येताक्षी कृष्णलोचना ॥१४॥ अरुणा अव्यक्तरागा ॥१५॥ अप्रवीता अगृहीतगर्भा । चण्डा (!) आवर्षिष्णुः (!आवयिष्णुः?) अचण्डा (!) तद्विपरीता । एवमुत्तरत्रापि । कूटा एकशृङ्गी काणा एकाक्षी कर्णा छिन्नकर्णा लक्षिता तप्तायःशलाकया विहिता सप्तशफा एकस्मिन्पदे एकेन शफेन हीना । उक्तदोषवर्जितत्वमेवैकरूप्यम् सम्पूर्णावयवेत्यर्थः ॥१६॥१॥३॥

प्रासङ्गिकमभिधायेदानीमध्वर्योः पात्रे पांसुप्रक्षेपणानन्तरं हस्तप्रक्षालनं विधत्ते पदमिति ॥१॥ अस्यामिति अनामिकाङ्गुल्याम् अभिनयेन प्रदर्शनम् ॥२॥ सोम उपनह्यते येन तत्सोमोपनहनं सोमबन्धनवस्त्रम् सोमपर्याणहनं शकटेन सह सोमस्य परितो बन्धनवासः उष्णीषं सोमोपनहने स्थापितस्य सोमस्य बन्धनार्थं वासः । यत्किंचिद्वासोमात्रमानयेति ब्रुवन्स्वयं यत्किंचिद्भवति लोकैरविदितप्रभासो (?°त आभासो Cod.) भवति ॥३॥ उष्णीषभाजनमुष्णीषस्थाने भवति ॥४॥ अग्रेण प्राचीनवंशस्य पुरोदेशे उपरवप्रदेशे (नुपर° Cod.) । विचिन्वन्ति साधयन्ति अनुपादेयांशमपनयन्ति । तत् तत्र क्रयप्रदेशे निहितोदकुम्भसमीपे ब्राह्मणः सोमविक्रयी निवसेत् तत्स्थानं प्रत्यभिगच्छन्ति प्राञ्चः सोमक्रयप्रदेशाभिमुखाः ॥५॥ ऋत्विग्यजमानेषु क्रयदेशं समागच्छत्सु अध्वर्युर्यजमानमेष इत्यमुं वाचयेत् । इत्येवंरूपं सोमस्तुत्यात्मकमेव वचनं मे सोमाय वा (!) अध्वर्यो ब्रूहि । छन्दोमाश्चतुर्विंशश्चतुश्चत्वारिंशाः (!) तेषां छन्दोमानां (!गानां Cod.) साम्राज्यं गच्छ स्तोमगतचतुर्विंशत्यादिसंख्यासाम्याद्गायत्र्यादयः छन्दोमाः (!) । एष क्रीयमाणः क्रयेण सम्पाद्यमानः सोम एकं वै एकं खलु त्रयाणनमभिलक्ष्य विक्रियते (!) अभिषवादिता (!दिना?) च सात्मना (!) संस्क्रियते ॥६॥ विचितः विचयनस्य शोधनस्य कर्तारः ॥७॥ ग्रसितं ग्रस्तं भुजितमनुहाय गृहीत्वा आच्छिद्य पृथक्कृत्य परास्यत बहिः प्रक्षिपेत् । यस्मात्सोमान्तर्गतं तृणादिकं सोमस्यान्नं तस्मात्स्वयमविवेचयन्यजमानोऽभ्यवमर्शनमेव कुर्यात् शोधनार्थं तु विचिन्वस्वेति पठेत् ॥८॥ तत् तत्र वाससि । तस्मात्सोमोन्मानाद्धेतोः मनुष्येषु मात्रा षण्मात्र्यङ्गुल्यादिरूपा (?षण्णव°?) इदानीं वर्तत इत्यर्थः । पात्रो (!) यै (!) एवात्र सोमे सा मनुष्येषु सोमस्याखिलजगत्कार-

णावात् न केवलं मनुष्यगतैव अपि तु गो चापि गैव त्वन्यत्या पशिमाग्रशृणादिगता साषि सोममात्रात्मिकैव ॥९॥ एतया अभि त्यं देवमित्यनयैव सर्वाभिरङ्गुलीभिः पञ्चभिर्मिमीते। एवं दशवारमुन्मायानन्तरं पाणिद्वयं समस्याञ्जलिं कृत्वा तेनैकवारमभि मितस्य सोमस्योपरि आवपति शिष्टं सर्वं प्रक्षिपेत् ॥११॥ अथः प्रमादितस्य वस्त्रस्य पर्यन्तप्रदेशानेकत्राथं संगृह्य उष्णीषेण ग्रन्थिं कुर्यात्। शिरस अनयोश्चान्तरालप्रदेशा यथा विलग्ना इव वर्तते एवं ग्रन्थिकरणेन कृतवान्भवति ॥१८॥ ग्रन्थिमध्ये सुषिरं समन्त्रकं विधत्ते अर्थाति ॥१२॥२॥३॥

सोमक्रयार्थं व्यवहारं विधत्ते स इति। कलया गेहिकर्तव्येन ॥१॥ प्रतिधुक्स सद्यो दुग्धम् शृतं पक्वं पयः शरः पक्वक्षीरस्योपरि सारभूतम् घनीभूतं वस्तु दधि दधिभवं सारभूतमुदकं मस्तु (the explanation of नवनीत and घृत is wanting) आतञ्चनं दधिभावकारणम् आमिक्षा तप्ते पयसि दध्यानयने सति यद्घनीभूतं वस्तु जायते सामिक्षा द्रवात्मकं वाजिनम् ॥२॥ अथ वयांसि प्रब्रूवीति सोमविक्रयी ब्रूयात् ॥३॥ अर्वाक् सम्पादनात्प्राक् । महितो महत्त्वोपेतः ॥४॥ एकहायन्या सह देयेषु हिरण्यवस्त्राजादिद्रशसु द्रव्येषु मध्ये हिरण्ये दीयमाने सति यजमानं वाचयति शुक्रं वेति मन्त्रम् ॥५॥ अभिप्रकम्पयति हिरण्येन प्रलोभयति। ऋत्विग्भिः सह गच्छति तत्तत्कर्मस्थिति सर्गमा यजमानः। तदभिप्रकम्पनसाधनं हिरण्यं यजमानं प्रत्यानीयास्मै तदिति मन्त्रेण स्थापयेत् हिरण्यस्य वीर्यरूपत्वात्तत्स्वीकारिणात्मनि वीर्यधारणम् ॥७॥ क्रयाय दत्तामजां प्रतीचीनमुखीं कृत्वा ॥८॥ सव्येनाजां प्रयच्छन्दक्षिणेन सोममादत्ते। यस्मादेतयाजया सोममनतो (!) आजदाभिमुख्येनागच्छत् (!) ॥९॥ तत्रात्तर्धीयकं वासः प्रत्युह्य प्रसार्य ॥१०॥ सोमक्रयणान्क्रयसाधनपदार्थान्। भाजयतीति भाजनं स्थानम् तेन तत्स्थानेनोपाधिना एते स्वानादयो धिष्ण्यानां सम्बन्धिनः ॥११॥ see २.१.१६. ॥१२॥ एनं यजमानमेष सोमो राजा। अस्यागमनात्प्रागेवोत्थानेन भवितव्यम् अत्र तद्वैपरीत्यान्मिथ्याकरणं तथ व्रतं कर्म प्रमोणाति प्रतिहन्ति ॥१३॥ आरोहन्त्यत्रेति आरोहणं शकटम् ॥१५॥ हरतीति हरणप्रकारोऽभिनीयते इति अनेन प्रकारेण शिरसा धृत्वेत्यर्थः। हरन्ति प्रथमं क्रयात्प्राक् पर्वतात् पश्चात् अनसा परिवहन्ति। तस्मादिदानीमपि आवापसमये कृष्टक्षेत्रं प्रति बीजं शिरसा हरन्ति पश्चात्फलितानामानयनसमये अनसैवादावहन्ति ॥१७॥ धेन्वामाशिरस्य क्षीरादेः सम्भवात्तया क्रये सति सोमः साशिरो भवति ॥१८॥३॥३॥

शकटमध्ये सोमस्थापनाय कृष्णाजिनास्तरणं समन्त्रकं विधत्ते नीड इति उन्नतप्रयुगफलकद्वयोपेतस्यानसो नीडे परितः प्रावृतः शकटमध्यदेशो नीडं तस्मिन्। एनं सोमम् ॥१॥ एनं सोममभिपद्यालभ्य ॥२॥ आस्पृणोति सर्वतो बलिनः (वलितः Cod.) कारयति। आस्पृता वलितः (!) कृताः ॥३॥ दीक्षायां यदि द्वे कृष्णाजिने स्वीकृते तयोरेकं प्रतिनाहभाजनं (!) भवति नजस्य (?) पुरोदेशप्रसारितो ध्वजः प्रतिनाहः तद्भाजनं तत्स्थानीयं भवति ॥८॥ प्रयुगसम्बन्धिफलके (?°संधिफ° Cod.) उन्नते प्रयुगादप्युन्नते चुबुकप्रमाणे भवतः तत्तयोः फलकयोरन्तरेण मध्ये सुब्रह्मण्यः (!) भूमिष्ठ एव सन्प्राजति प्रेरयत्यनड्वाहौ ॥९॥ यदेव सोमस्याङ्गं न्यक्तमवाक्पतितमासीत्तदङ्गमिहापि अस्मिन्सोम एवासद्भवेत्। see १.७.१.१ ॥१०॥ ऐषमः अस्मिन्संवत्सरे ॥११॥ अपकृष्यालंब्यत इति अपालम्बः शकटस्य पश्चाद्भागः

॥१३॥ हे सोम त्वं भद्रोऽसि ॥१४॥ वय एवैनमेतद्भूतं प्रपादयतीति (!) एतेन पाठेन पक्षि-रूपमेव संत्त (!) प्रापितवान्भवति ॥१५॥ यदि प्रमादात्सोमं (प्रमान्सेमं Cod.) रक्षआदिर्ह-न्यात् (?रक्षआ° Cod.) तदानीं श्येनो भूत्वेति मन्त्रसामर्थ्येन श्येनीभावादुपादेयस्य सारांश-स्याबध्यभावात्रक्षा शरीरमेवानुगत्य हन्ति नात्मानम् ॥१६॥ ब्रह्म देवानामाह्वानसाधनो म-न्त्रः शोभनं ब्रह्म सुब्रह्म तदर्हतीति सुब्रह्मण्या काचन देवता तां सुब्रह्मण्योमित्यादिनिग-देनाह्वयेत् ॥१७॥ the explanation of क° १९. is wanting ॥१९॥ शालायाः पुरोदेशे अ-ग्नीषोमीयं पशुमादाय गच्छतः सोमस्याभिमुखं स्थापयेत् । अन्तर्जम्भे (अंतदंति Cod.) खादन-स्थानं जम्भः दन्तपङ्क्त्योरन्तरालः ॥२१॥ सारंगः शबलवर्णः । सारंगवर्णस्य सोमयोग्यत्वम् । लोहितस्याग्निवर्णसाम्यम् ॥२३॥ तस्मिन्नन्ते आगतऽइति शेषः ॥२४॥ उपस्तभ्यते प्रतिबध्यत ऽइत्युपस्तम्भनं शकटाग्राधारकाष्ठं तेनोपस्तभ्नाति शकटाग्रम् । वरुणस्योपनद्धस्य स्थापितस्य सोमस्योत्तम्भनमसि शकटस्योत्तम्भकत्वात्तद्द्वारा वरुणस्याप्युत्तम्भकत्वम् ॥२५॥ नाभिप्रमाणा भवेत् (पा° ५.२.३७) । अत्रेति नाभिदेशस्याभिनयः ॥२८॥ प्राग्वंशस्य पुरोदेशे आसन्द्यां स्था-पितं सोममासन्द्या सह प्राचीनवंशं गमयेत् । अध्वर्योः प्राधान्यात्तदपेक्षया प्रपादयतीत्येकव-चनं वस्तु[°तस्तु] चत्वारः प्रपादयन्ति ॥३०॥४॥३॥

आतिथ्यस्य प्रायणीयानन्तर्यं विधत्ते शिर इति ॥१॥ यत्र वाऽअर्हन्तमागतं नापचायन्तेति (!) अर्हन्तं पूज्यं गृहमागतमात्रं नापचायन्त चायतेर्लङि (!) अडभावः छान्दसः (!) पूजां न कुर्युः स तत्र तस्मिन्नपचितिविषये क्रुध्यति । तथा ह तथा सति सोमप्रवेशात्प्रागेव हवि-र्ग्रहणे सति ॥३॥ अभितः साचयानि पुरः पश्चाच्च सहागन्तारः (सहानंतारः Cod.) प्रधानपु-रुषाः । राजकृतः राजत्वसम्पादकाः पटभिषेकस्य (!) कर्तारः ॥७॥ कार्ष्मर्यो भद्रपर्णी प्रकृतौ पलाशवैकङ्कतादीनामैच्छिकत्वादत्र नियमविधिः ॥१६॥ सार्धं संन्यासुः एकीकृत्य सम्यग्भूमौ प्रचिक्षिपुः ॥१७॥ बर्हिःप्रस्तरयोरन्तराले तिर्यक् प्रसार्यमाणौ दर्भौ विधृती ते अत्र इक्षुपत्र-रूपे स्याताम् सलुन्याते (!) पञ्चमलकार अकारः संलोभनमाकुलीभावो मिश्रणम् तद्वयादेक्ष-व्यौ कर्तव्ये ॥१८॥ यूपतक्षणोत्पन्न अधरारण्या अधः स्थाप्यमानः शकलोऽग्निमन्थनशकलो यस्योपरि मथ्यते ॥२०॥ दर्भतरुणके कोमलौ परस्परसदृशौ दर्भौ । स्त्रियै स्त्रियाः सकाशात्स-होत्पन्नौ याविमौ परस्परसदृशौ पुत्रौ एतौ दर्भौ एतावेव युगलौ पुत्रावेव (°त्रानेव Cod.) रूपकोपन्यासेनात्यन्तसादृश्यमभिमतमिति द्रष्टव्यम् ॥२१॥ आज्यं विलाप्यते यस्यां सा आ-ज्यविलापनी स्थाली ॥२२॥ एषमयोऽन्वायत्ता इति शेषः । प्रह्रियमाणाय आहवनीये प्रक्षि-प्यमाणाय अनुब्रूहीत्यनुषज्यते ॥२३॥ हे आहवनीयनिर्मन्थ्यौ उभावग्नी ॥२४॥ अप्रैषीत्तर्पि-तवान्भवति ॥२५॥ प्रकृतदर्शपूर्णमासेष्टिवत्समापनप्रसक्तावाह तदिति ॥२६॥१॥४॥

अथ तानूनप्त्रं विधातुमाख्यायिकामाह आतिथ्येनेति । अन्योन्यस्य श्रियै ज्योतिष्टोमफ-लरूपायै श्रियै त्वात्मन (!) अभिप्रायमप्रकाशयन्तः तामसहमानाः प्रकाशनेति (पा° १.३.२३) तिष्ठतेरात्मनेपदं श्लाघेति (पा° १.४.३४.) श्रिया ज्ञापयितुमिष्टत्वात् । शाखान्तरप्रसिद्धं पञ्चमं गणमुदाहृत्य सोपपत्तिकं पराचष्टे बृहस्पतिरिति ॥१॥ ऋध्यामः ऋध्यतिर्वशगमकर्मा वशं प्रा-प्ताः ॥२॥ यः शत्रुरेषां विश्लिष्टानां परस्तरामिव अत्यन्तं दूरदेशस्थो भवति स एनाननुप्र-विशति ॥३॥ यथा न इदमैकमत्यं कर्म आप्रदिवमेव द्युलोकावस्थित्यवसानमजर्यमविना-

श्यसद्भवेत् ॥४॥ सार्धमेकत्र समवददिरे विभज्य स्थापितवन्तः । एतेन स्थापितेन शरीरेण नोऽस्माकं मध्ये स समयातिक्रमकारी नानासत् विना भवेत् एतदेव व्याचष्टे एतेन वि-ष्वङ् सर्वतो भवेत् विशीर्णो भवत्वित्यर्थः । उपद्रष्टा साक्षी । तस्यै देवस्य न पातयिता र-क्षको देवस्तनूनप्ता अथवा सर्वतनूरात्मा प्रजापतिः तस्याकाशः पुत्रः तत्पुत्रो वायुरिति त-नूनप्ता स च शाक्वरः शक्तः सर्वं कर्तुम् ॥५॥ सर्वेणा अद्रुह्यानेन सह समयमिति शपथपूर्व-कं समयं न कुर्यात् । [नेत्] सर्वैः साकं समभ्यवायान् संगता न भवेयुः । सतनूनप्त्रेण सम्भूय शपथकारिणो ॥६॥ गृहीतस्याज्यस्य सर्वैरवमर्शनं विधत्ते अथेति । स्पर्शकाले देवैः कृतमन्य-संकेतं दर्शयति एतदिति एतद्वक्ष्यमाणं भूयः समासिंः पूर्वोक्तसंगतमन्तरेण पुनः संगता अभ-वन् अम गत्यादिषु । स इत्थं देवभूत एव सन् अमुया अन्यथा प्रकारेणासत् देवभावादि-नश्येदित्यर्थः ॥१३॥ अत्युत्सिच्य उपरि तदाज्यमासिच्य । इन्द्रभाजनमिन्द्रस्थानीयः । दक्षि-णावता दक्षिणायुक्तेनैकाहादिना सोमयागेन ॥१५॥ तदयन्ने सार्धं [मे]शस्त्र तदाज्येन साकं प्र-क्षिप्तं शरीरकदम्बकं संहतमेकमभूत् ॥१६॥२॥४॥

अवान्तरदीक्षां विधातुमाह आतिथ्येनेति । एतस्य तानूनप्त्रस्य शपथात्मकस्य परिहारा-य । पापमवदन्निति सत्यं वदामि मिदमतिक्रामिष्यमित्येवंरूपम् ॥१॥ अग्निमेव वचं विविधं परि परितः आङ्क्यन्त अवेष्टयन् अग्निमेव वचमकुर्वन् । मंत्रमाक्षन्त अतिशयेन संश्लिष्टा अङ्-गुलीरकुर्वन् तथा मेखलामपि पूर्वं शिथिलाबद्धां (वद्धां Cod.) पुनः संनद्धामकुर्वन् ॥२॥ अवान्तरदीक्षां प्रजासाधनत्वेन प्रशंसति प्रजामु हैवेति ॥३॥ समिधं हरतीति समिद्धारः । स्वा-ध्यायं वा विसृजते उच्चारयति । तं ह सामिदाहर्तारं वा अविद्वं मन्त्राध्येतारं वा उपलक्षण-मेतत् ऋत्विजां मध्ये यं कंचिन्न व्यापृतम् (व्यापृतं Cod.) । समिदाहर्तृरूपेण समिदाहर्ता-रम् । तथा सति देवाः इति खलु मां वमचिकीर्षोः कर्तुमैच्छः इति जिघांसोः हन्तुमैच्छः इति पापं वदन्तः उपसमेयुरन्योऽन्यं प्राप्नुवन्ति ॥६॥ अस्यैव रूपमस्मामित्यादि स्पष्टम् । यद्यपि मेखलाकृष्णाजिनधारणादिकमपि दीक्षाङ्गं तथाप्यवान्तरदीक्षायां समिदाधानस्य मुख्यत्वात्समिध-मेवेत्युक्तम् (मुखत्वात्समि° Cod.) ॥८॥ एनं सोमं यजमानं वा । तप्ता आपो मदन्त्यः ॥१०॥ मदन्त्युपस्पर्शनपूर्वकं राजाप्यायनं विधत्ते अथेति ॥११॥ यस्मै सोमायैतदातिथ्यं क्रियते तमे-वाग्रे आप्यायनादिभिः सत्कर्तुं युक्तम् । सोमसम्बन्धाभिप्रायेण चायऽउज्जाविते यागसम्बन्धे-न परिहरति यज्ञस्येति एवंप्रकारक्रमविशिष्टं कर्मजातं यज्ञस्य खलु क्रियते । अत्र खलु ए-नान्कलहः प्राप्नोत् ते च देवाः पूर्वं संशममेवोपायन् कलहोपशमनरूपं तानूनप्त्रं कृतवन्तः शपथदोषपरिहारायानन्तरमेवावान्तरदीक्षा कार्या अतः परिशेषादाप्यायनस्यान्ते निवेशः ॥१२॥ तस्येन्द्रेण हतस्य वृत्रस्य शरीरं गिरयोऽश्मानश्चाभवन् सोमाख्यं वस्त्वेव सोमशरीरभूतेषु गि-र्यादि[षु] वर्तते दूषानाख्या (! उशानाख्या) ओषधिर्जायते इत्येवं श्वेतकेतुराह अतस्तामेव गिरावुत्पन्नामेवा (°मेतत् !) इदानींतना यजमाना अभिषुण्वन्ति न साक्षात्सोमम् अतस्तामोष-धिं दीक्षादिभिः संस्कारैः साक्षात्सोमं कुर्वन्ति ॥१३॥ सरघसारघमधुकल्पनया (!) प्रशंसति मधु सारघमिति (!) वाऽआङ्करित्यादिना ॥१४॥ एतदेवाप्यायनं गतसारत्वपरिहारात्मना प्रशंसति यज्ञेनेति ॥१५॥ एक एव सोमादिरूपो हविःपदार्थ एकं (एवं Cod.) धनं येषां ते देव एकधनाः तान्विन्दति यज्ञे सोमपानाय लभते इतीन्द्रः एकधनवित् तस्मादेकैक एवांशु

शतशो दशशो वा एकधनान्देवानाप्यायते वर्धयति शरीरोपचयं करोति अत उक्तप्रकारेण सोमाख्यैकधनेन देवानामेकधनवान्मन्त्र इन्द्रायैकधनविद इत्याह ।· सुत्यां सोमाभिषवम् । तदुपरिभाविनी ऋगृदृक् तया समाप्तिर्लक्ष्यते ॥१८॥ प्रस्तरस्योपरि पाणी सम्पुटीकृत्य । नि-ह्नवोऽपलापे प्रसिद्धो लोके इहापि देवानां नमस्कारादिना सान्त्वनं विहितम् निह्नवं सो-माप्यायनकाले सम्भावितस्याऽन्यतिक्रमस्य परिहाररूपेण प्रशंसति उत्तरतउपचारो वै यज्ञ इति ॥१९॥ अक्तस्याविलम्बेनाग्नौ प्रहरणादनक्त एव प्रस्तरे कर्तव्यम् ॥२०॥ तं प्रस्तरमग्नि-मुपर्युपरि अग्नेरूर्ध्वोर्ध्वभावे अतिहरति न प्रहरेत् । एतेन आतिथ्यार्थप्रस्तरेण । तमध्वर्युणा दत्तं प्रस्तरमाग्नीध्रः सुरक्षिते देशे स्थापयेत् ॥२२॥३॥४॥

इत्थमातिथ्यमभिधायाथोपसदस्तत्कालं चाह ग्रीवा इति । न प्रथमयज्ञे प्रवृञ्ज्यादिति निषेधसम्भवाद्यदि प्रवर्ग्यवानित्युक्तम् ॥१॥ अतिभारं (!) मुखप्रदेशभारयुक्तं करोति ॥८॥ स-मानत्र एकस्मिन्नेवाहवनीयदक्षिणदेशे । यथेतं (!) प्रचरन् यथा दर्शपूर्णमासेष्ट्यां यथेतं (!) येन मार्गेण गतस्तेनैव पुनरपि हविरवदानाय गच्छति तथात्र न कर्तव्यम् तथाविध एक-त्रैव होम अभिजित्यै भवति । अनीकं वज्रस्य मुखप्रदेशः कल्पं (!) ततः पूर्वो भागः कु-ल्मलं तत्पुच्छभागः ॥१४॥ यामूपसत्सु यजमानो व्रतयति पयस्ता व्रतोपसदः । उपयुपरि ए-कद्व्यादिस्तनवृद्ध्या व्रतवृद्धिर्यास्वस्ति ताः परउर्वोरुपसदः ताः केचनानुष्ठातारोऽनुतिष्ठन्ति । उक्तवैपरीत्ययुक्ताः परोऽह्व्यः उपर्युपरि ह्रसीयस्यः ताः केचनोपतिष्ठन्ति । तद्द्विविधानामप्यु-पसदां स्वरूपतो विचार्यमाणे पर्यवसानस्यैकरूप्यान्न भेदोऽस्ति ॥२६॥ परोऽह्लीषु उपर्युपरि स्तनह्रासेन पयोह्रासात्तपोवृद्धिरुपर्युपरि भवति । प्रथमेषु चतुर्षु दिनेषु प्रतिदिनं त्रींस्त्री-न्स्तनान्दोहयेत् द्वितीये चतुरहे द्वौ द्वौ तृतीये चैकैकम् ॥२७॥४॥४॥

आतिथ्या तानूनप्त्रं च सोमाप्यायननिह्नवौ । उपसच्चेति पञ्चार्थाः चतुर्थेऽध्याये निरू-पिताः ॥ अथ पञ्चमे सौमिकवेदिकरणादिकं निरूप्यते । य एष प्राचीनवंशस्य पूर्वभागे आ-हवनीयपुरोदेशे वर्तमानः पृथुस्तम्भोऽस्ति । सोऽन्तःपातः ऐष्टिकवेदेर्महावेदेश्चान्तरालसंचरः ॥१॥ सार्थवादमुत्तरवेदिनिर्माणं विधत्ते नासिकेति ॥१२॥ उत्तरवेदिव्याघारणविध्यर्थमाख्या-यिकामाह द्वय्य इति । श्वःसुत्यां परेद्युः क्रियमाणमभिषवम् । वमप्यनेन सोमयागेनास्मान्या-जयेति (!) ॥१३॥ धियामहै (!) अवस्थापयिष्यामः ॥१५॥ दीक्षासोमक्रयादीनां सद्य एव क्रि-यमाणत्वात्सद्यःक्रीरिति नाम ॥१७॥ न व्यमुच्यत विमुक्तं नासीत् सम्पूर्णं नाभवत् ॥१८॥ तस्य पुरोदेशे रुक्मो हिरण्यफलको वर्तुलाकारः ॥२०॥ आददाना जिन्वमाना (? जिन्वत्स-षा Cod.) समीपस्थं सर्वं स्वीकुर्वती ॥२१॥ इदानीमुत्तरवेदिव्याघारणं विधत्ते स यदिति । अग्नौ उत्तरवेदेरुपरि धार्यमाणे सति ॥२३॥ युगशम्येन युगेन शम्यया च ॥२४॥ अन्येन परि-त्यक्तां दक्षिणामभा सह स्वात्मनि न कुर्वीत । अस्य यजमानस्य समानबन्धुरेकविधिनिब-न्धनः एकविषयः ॥२५॥ सौमिकवेदेरुत्तरांसस्य शङ्कुः । सा चात्वालस्य मात्रा यैवोत्तरवेदे-रुक्ता सैवेत्यर्थः चात्वालखननोत्पन्नयैव मृदोत्तरवादेकरणात् ॥२६॥ चात्वालस्य सर्वतः परिले-खनप्रकारं तन्मन्त्रांश्च दर्शयति स इति । दक्षिणश्रोणिरूपवेद्यन्तात् । स परिलिखति शम्या-नुगुण्येन लेखनं कुर्यात् अनेनैव पश्चादवधिनिर्देशः कृतो भवति । हे भूमे । तप्तः पुरुषः दारिद्र्येण दुःखितः सन्धनादिसाधनेच्छया ॥२७॥ विविदानः धनादिकं लब्धवान् ॥२८॥ अ-

नेन चात्वालस्य दक्षिणसीमोच्यते । यत्र नाभ्यग्रोधनादिकम् (?) ॥२९॥ चात्वालस्योत्तरावधि-परिलिखने ॥३०॥ तत्रोत्तरवेदिदेशोऽद्यप्रदेशनि । see १. ५. ३. १. । निदानेन मूलकारणेन ॥३१॥ स मृदो हर्ता अध्वर्युः स्फ्येन प्रहरति यतेत । तदग्रकादिनि (!) समीरयति उत्तरवेदिं प्रति सम्यगीरयति । आनीताया मृदो वेद्याकारेण स्थापनं समन्तकं चिधिं करोति ॥३२॥ अनुक्रमेण व्यूहनं मृत्प्रमाणं (मारणं Cod.) कुर्यात् ॥३३॥ षडशीत्यङ्गुलपरिमिता युगमात्री । अल्पा नाभिर्नाभिका । एकत्र स्थिवा सर्वत्रोत्तरवेद्या व्याघारणाम्याशक्यत्वात्तत्सिद्धये मध्ये नाभिकरणम् ॥३४॥ हिन्वतिः प्रीणनकर्मा ॥३५॥ यज्ञियवृक्षशाखया प्रच्छादयति ॥३६॥१॥५॥

उत्तरवेदिनिर्माणमभिधायाथोत्तरवेद्यामग्निप्रणयनप्रयोग (°याग्नाप° Cod.) इत्युच्यते इध्ममिति । आहवनीयेऽग्नौ प्रणीयमानानामङ्गाराणां संपादनाय काष्ठमयुगं स्थापयेयुः । उप अग्नेरधस्ताद्यम्यतऽइत्युपयमन्यः सिकताः । व्याघारणार्थमाज्यमग्नावधिश्रयति विलापयेत् । आज्यमुत्पूतं कृत्वा स्रुवेण स्रुचि पञ्चवारं गृह्णीयात् ॥१॥ इध्मे प्रदीप्ते सत्यथ अनन्तरमेवेध्ममङ्गारतो प्राञ्चमूर्ध्वं धारयेत् इध्मपात्रस्याध उपयमनीरूपयच्छेत् अग्नये प्रक्रियमाणाय उत्तरवेदिं प्रति नीयमानाय तदनुकूलं सूक्तं पठेति होतारं ब्रूयात् एकस्फ्यया एक स्फ्यो यस्यां रेखायां सा तथोक्ता तया मामनुगाः (मागनु Cod.) स्फ्येन रेखां कुर्वन्ननुगच्छेति प्रतिप्रस्थातारं ब्रूयात् । यतः प्रणयति स गार्हपत्य इति न्यायादाहवनीयादुत्तरवेदिं प्रति प्रणयनस्योक्तत्वादाहवनीय एव गार्हपत्य इत्युच्यते रेखाकर्षणेनात्मपात्यन्तरो व्यवच्छेदः परिहृतो भवति ॥२॥ रेखानुगतिविषये केषांचित्पक्षमुपन्यस्य व्यवच्छेदपरिहाराय प्रयोजनाभावाभिप्रायेण निराचष्टे तदिति ॥३॥ अध्वर्योः प्रोक्षणयादानविधानादग्निप्रणेतारोऽदिव्य ॥४॥ ताः प्रोक्षणीर्न्यत्रेन अत्यन्तासदेशेन ॥८॥ उत्तरवेदिनाभिदेशे गुग्गुलुसुगन्धितेजनादिसम्भाराणां (°भावारं Cod.) प्रक्षेपं समन्तकं विधत्ते अग्नेः पुरीषमिति ॥१४॥ अस्य अग्नेः । पीतुदारूदुम्बरविशेषः ॥१५॥ सुगन्धितेजनाख्यौषधिविशेषे अग्नेर्गन्धः संक्रान्तः ॥१७॥ वृष्णिर्मेषस्तस्य स्तुका रोम ॥१८॥२॥५॥

उत्तरत्र सदोहविर्धानादिकं विधास्यति तदुपोद्घातत्वेन तेषां पुरुषाकारसंनिवेशतामाह पुरुष इति । अत्र यज्ञशब्देन तदाधारभूतसदोहविर्धानादिक (°भूताम° Cod.) उच्यते ॥१॥ हविर्धानस्य यज्ञशिरस्त्वे द्वारमाह वैष्णवमिति विष्णुदेवताकैर्मन्त्रैर्निर्मितत्वाद्वैष्णवत्वम् विष्णोः सर्वदेवतानामुत्तरत्वाच्छिरसोऽप्यङ्गानामुत्तमत्वायुक्तं हविर्धानस्य शिरस्त्वम् ॥२॥ स्तुपः केशनिचयः । हविर्धानस्योत्तरस्यामाग्नीध्रीयः दक्षिणस्यां मार्जालीयः ॥४॥ नैमिकात्त्वेदः पश्चाद्भागे अग्नी आहवनीयगार्हपत्यौ ॥६॥ अन्तपर्यन्तं सुषिरवान्भवति ॥७॥ छदिः तृणमयं कटम् । रराट्यां हविर्धानयोर्मुखप्रदेशे उच्छ्रायोभ्यां तोरणकाष्ठाभ्यामन्तराले (?°काष्ट्याभ्यां° and in an repetition काष्ठाभ्यां° Cod.) परिश्रये पश्चात्पृष्ठभागेऽपि छदिरधिनिदध्यात् ॥९॥ व्याघारणायाज्यं ग्रहीतुं पूर्वमाहवनीयं प्रति गतवात् पुनः प्रपद्येत्युच्यते ॥१०॥ see २. ४. १६. ॥११॥ हविर्धानशकटस्य दक्षिणचक्ररेखायाम् । संतप्यते चक्राद्यभ्यामिति संतापः चक्रवलयसंस्पर्शप्रदेशः ॥१३॥ गच्छन्त्यिवाच्छेदिति निर्याणो मार्गः ॥१५॥ उत्तरवेदेः पश्चात्संचराय विक्रमत्रयं परित्यज्य ॥१६॥ यथा नाभ्याधारफलके भूमिष्ठे भवतस्तथा कुर्यात् उत्तरत्र प्रदेशस्य भूस्पर्शे भ्रंशः कदाचिद्भवेत् ॥२०॥ उपस्तभ्नाति यथाधो न पतेत् । मेथीं स्तम्भम् ॥२१॥ रराट्यां रराटीम् । इनक्ते

सृक्विणी ओष्ठे संधौ ॥२४॥ लस्पूजनी नाम सीवनसाधनः सूच्यादिः तत्र सम्बद्धया रज्ज्वा । द्वारशाखां दर्भैरावेष्ट्य रज्ज्वा विष्णोः स्यूरिति मन्त्रेण सीव्येत् । तं ग्रन्थिं प्रकृते कर्मन् कर्मणि प्रकर्षेण कृते परिसमाप्ते विष्यति विमुञ्चेत् । ग्राहो गृह्णाति विश्लेषे सति स न भवति । निष्ठितं सीवनेन सुनिष्पन्नम् ॥२५॥३॥५॥

सोमाभिषवायोपरवाणां खननं विवक्षुः खननस्योभयार्थतामाह द्वयमिति । कर्णच्छिद्रे द्वे नासिकाच्छिद्रे द्वे ॥१॥ द्वेष्यबधार्थं भूमौ स्थापिताः कृत्याविशेषा वलगाः ॥२॥ अस्पृणवत हिंसितवन्तः ॥३॥ मध्ये-मध्ये प्रादेशमात्रान्तरालं विहाय समचतुरस्रे खननप्रदेशे चतुरोऽवटान्प्रादेशमात्रान्परिलिखेत् ॥५॥ खननमपि परिलेखनक्रमेण कर्तव्यम् ॥८॥ खाताया मृद उद्वपनेऽपि खननक्रम एव ॥१॥ अङ्गुलिप्रादेशाद्यपेक्षया बाहुप्रमाणस्यान्तत्वान्ततोऽधिकात्प्रदेशान्मृद्धुद्धर[ण]स्याशक्यत्वाद् बाहुमात्रस्यान्तत्वम् (°त्रव्यांत Cod.) । तानक्ष्णया संतृन्दन्ति पूर्वयोर्दक्षिणस्यापरयोरुत्तरस्य चान्तरालदेशम् ॥१३॥ अन्तःप्रदेशनिम्नत्वपरिहाराय संमृशेत् ॥१४॥ संमृशेते परस्परं हस्तसंस्पर्शं कुर्याताम् ॥१५॥ संविद्रे संविद्रुते सगता भवन्ति लोपस्त इति (पा° ७. १. ४१.) तलोपः वेत्तेर्विभाषेति (पा° ७. १. ७.) रुट् ॥१७॥ अधि उपरि सूयते सोमोऽनयोरित्यधिषवणे । पर्यूहति परिंहति परितो मृदा (मृज्ञा Cod.) दृढीकुर्यात् ॥२२॥ अधिषवणचर्मणि अभिषवसाधनान्पाषाणान्पश्चाहरन्ति ॥२४॥४॥५॥

यज्ञशिरस्त्वं हविर्धानस्योक्ता तत्समर्थ्येदानीं सदसो यज्ञोदरत्वं प्रतिपादयितुं पूर्वोक्तमनुवदति उदरमिति ॥१॥ खातं मृन्निचयं (°तांमृ° Cod.) प्राञ्चमवटस्य समीपे प्राग्देशे उत्किरति । यजमानप्रमाणां कृत्वा परिवासयति अवशिष्टमंशं छिनत्ति । औदुम्बरीप्रमाणानि बर्हींषि औदुम्बर्या उपरि निदधाति आच्छादयेत् ॥६॥ अस्पृणवत सर्वा ओषधीर्वधितवन्तः (!) । अयुवत अमिश्रयन् ॥१॥ वनेऽनिखाता दृढमूला स्वभावेनोत्पन्ना । यथा ओषधिषु सहोत्पन्नेषु तृणगुल्मादिषु मध्ये मिता भवति सबर्हिष्के गर्ते मिता शाखाप्येवं भवति ॥१४॥ उच्छ्रयति ऊर्ध्वं स्थापयेत् ॥१५॥ मिनोतु अवटे प्रक्षिपतु ॥१६॥ पर्यषति परितः संघट्टयेत् । भूमिसाम्ये सति अगर्ते मिता भवति मिनोतेः कर्मणि क्विप् ॥१८॥ अभिपद्य शाखामालम्भ्य ॥२०॥ विष्टपं विशाखमभि विष्टपस्यायभागस्याभिगर्भतः (??) यथा शाखाया अग्रमूलभागौ मध्यदेशश्चाक्ता भवन्ति एवमाज्यं जुहोति ॥२१॥ स्तोत्रशस्त्रपाठाश्रयत्वाद्दैवं भक्षणसम्भवान्मानुषं चेति मिश्रे ॥२३॥ आग्नीध्रमाग्नीध्रीयं मं[ड]पं कुर्यात् ॥२६॥ द्वितीयं प्रकारमाह देवा इति । सदोनिविष्टान्देवान्सदसो निष्काशितवन्तः न केवलं तान्देवानपि (ता च देव अपि Cod.) तु अन्तःसदसं सदोमध्येऽवस्थितान्धिष्ण्यानग्नीन् ॥२७॥ सदसो निष्काशिता आग्नीध्रप्रविष्टाः तत्राप्यसुरैः संरुद्धाः ते देवा आग्नीध्रधिष्ण्यगतस्याग्नेर्ध्र (°धोष्म° Cod.) समीपं प्राप्य तानसुरान्निजग्मुः ॥२८॥ तानुद्धातितान्धिष्ण्यान्पुनरदीपयन् यथा प्रत्यवस्येत् प्रतितिष्ठेत् यद्वा प्रत्यवसानं भोजनं यथा आहुत्याधारो भवेत् ॥२९॥१॥६॥

धिष्ण्योपधानपदार्थविधानार्थमाख्यायिकामाह (धिष्णोपदार्थ° Cod.) विजामान इति । भ्रातरो बान्धवाः । समङ्काः समानचिह्नाः । एते खलु अस्य यज्ञस्यात्यारः (°त्मानः?!) ॥१॥ न्यषक्ति स्थाणौ निषक्तमभूत् ॥४॥ see २.४.१. ॥७॥ कुश्योरायुधयोः । क्षुरपवी क्षुरधारे तीक्ष्णाग्रे । निमेषं-निमेषं सर्वदा । ते के इमे सदसि वर्तमाना धिष्ण्याः इमे (!) होत्रकाः

(°त्राकाः Cod.!) होतृमैत्रावरुणादयः ॥१॥ स्वदिव्यानिमारभ्यार्भं साधनं कृत्वा सोमं भक्षितवती । अच्छावाकस्य गोपनायाम् होत्रकाणामित्र सोमरक्षकगन्धर्वं त्वपवादकाच्छावाकाख्यो होत्रको यदा सोमरक्षकेषु मध्ये रक्षितवान् तदा । अतोऽच्छावाको होता निकृष्टोऽभूत् ॥१०॥ अत एवेतरहोत्रकवत्प्रथमत एव सदःप्रवेशमपि [न] समालभत तमिन्द्राग्नी ऐन्द्राग्नशस्त्रपाठेन संतुष्टौ अनुसमतनुतां संतानमनुप्रवेशमकुरुताम् ॥१३॥ यथायाऽऽत्या शालार्थैस्तृणसमूहैर्विष्कृतान्धिष्ण्यान्घृतेन व्याघारयति ॥१९॥ अभिमानी ऽभिमुखो । शालायां प्राग्वंशे ॥२०॥ द्युलोकं सर्वथा परित्यज्य भूमौ कृतनिवासानां पुनः स्वर्गमनं मति दिप्सता स्यात् मर्त्यपां केवलमनुदेशने भूलोके प्रत्यक्षता न स्यात् ॥२२॥ सन्ति आत्मानं लभन्ते इदानीमप्यपराभूता अपरिनष्टा वर्तन्ते । हविर्धानशकटस्य दक्षिणभागे चमसेषु (चामा° Cod.) ये सोमास्तावच्छिष्टा (°तावशि° Cod.) भक्षिता (!) पुनराप्यायितास्ते (°राप्यापि° Cod.) वर्तन्ते ते नाराशंसाः ॥२५॥ सम्पा सहपीतिः । प्रथमं देवैरग्निमुखैस्त पानं पश्चान्मनुष्यैः सदसि शेषपानम् पश्चान्नाराशंसेन (°सन) पितॄणामिति ॥२६॥२॥६॥

वैसर्जनीयानि विधातुमाह सर्वमिति ॥१॥ अपिव्रतः व्रतं भोजनं यजमानेन सह प्राप्तभोजनः बन्धुवर्गः ॥२॥ इत्थं वैसर्जिनानि विधाय तद्धोमकालं मन्त्रं च विधास्यन्नन्तरालवर्तिनमग्नीषोमीयप्रयोगमाह स इति । तस्मिन्दिने एकस्यानव्रतार्थस्य (?) प्रातर्व्रतार्थमुपयुक्तावादर्धव्रतं प्रदायेत्युक्तम् । स[illegible]म् see ६.१.६-१०. । प्राचीनवंशगतस्याहवनीयस्य पश्चाद्भागे प्रक्षिपेत् ॥४॥ पद्पांसु चतुर्धा विभज्य ॥५॥ इदानीं समन्त्रकमाहवनीये वैसर्जिनहोमं विधत्ते अथेति ॥७॥ अंशुः सूक्ष्मरूपः सोमः । कनीयःशब्दार्थमाह स्तोकमेवेति ॥८॥ द्रोणकलशः सोमाधारः प्रभूतः पात्रविशेषः । वायव्यानि ग्रहाः । परिष्ठ्याया: पक्षार्थाः ॥१०॥ तम् प्रणीतमग्निम् ॥११॥ इतरमिध्मबर्हिरादिकमग्नीषोमीयार्थम् ॥१२॥ समिदाधानपर्यन्तं पश्वर्थमङ्गजातं कृत्वा पश्चाद्वैसर्जनीयं होमं तुरीयं जुहोति उर्विति ॥१५॥ एष सोमः पूर्वं य एव यादृग्यज्ञरूपः तं तादृग्रूपं करोति ॥१६॥ सोमं हविर्धानं प्रवेशयति ॥१७॥ अनुसृज्य विसृज्य ॥१९॥ हविर्धानात् ॥२०॥३॥६॥

अथ यूपप्रयोग उच्यते यूपमिति । व्रक्ष्यन् छेत्स्यन् ॥१॥ रातमनाः दत्तचित्तः कर्मार्थमङ्गीकृतमनस्कः ॥७॥ न विद्यतेऽक्षस्य शकटाङ्गस्य स्तम्भो यस्मिन्व्रश्चनकर्मणि तदनक्षस्तम्भम् अक्षसंस्पर्शो यथा न स्यादेवं सर्वं वृश्चेत् ॥११॥ परिवासयति आछिनत्ति ॥१७॥ ४॥६॥

यूपस्यानाष्ठो (!°तष्टो?) मूलभाग उपरः । एतावन्मात्राणि मुष्टिपरिमितानि । see ६.१.४-१४. ॥१-७॥ गर्ते प्रास्यति । एष हि यजुषा स्वधिते मैनमिति मन्त्रेण निष्पादितः अत एव मेध्यः ॥८॥ चषालो यूपस्योपरि प्रतिमोक्तव्याष्टाश्रिमाष्टसन्नातो (°श्रिर्मध्ये संगृहीता?) वलयो (°लभी?) । प्रतिमुञ्चति उपरि बध्नाति । यदेवेदं सम्बन्धनं सम्यक् बन्धनसाधनं त्रृत्तं (वृत्तं Cod.) फलं चान्तरा वृत्तफलयोर्मध्ये उपेनितमिव उप[illegible] (?°मल्पप°?) ॥१२॥ अग्निष्ठा अग्नेरभिमुखाश्रिः । परिव्ययणं रशनावेष्टनप्रदेशः तं प्रतिसमन्तमास्येन परिमृशेत् ॥१३॥ अग्नेः सकाशात् ॥१६॥ अत्रैव नाभिप्रदेशे ॥१९॥ रशनायास्त्रैगुण्यमाह त्रिवृतेति ॥२०॥ यूपशकलं स्वरुम् ॥२२॥ अभिपद्य गृहीत्वा ॥२६॥ यूपे निगूढस्य स्वरोरग्र-

त्र प्रतिपत्तिकर्मत्वेन यूपप्रतिनिध्यात्मना होममभिधातुमाह तमिति ॥२१॥ तत् तेनैव खल्वेष यज्ञः स्वगाकृतः स्वं स्थानं प्राप्तः कृतप्रतिपत्तिक आसीत् ॥३१॥१॥७॥

अग्नीषोमीययूपप्रसङ्गाद्यूपैकादशिनीं विधातुमुपोद्घातयति यावतोति । यूपानां समीपे शेतऽइत्युपशयः । वितष्टः विशेषेणोपरप्रदेशेऽपि तष्टः ॥१॥ श्वः परेद्युः क्रियमाणायाः सुत्यायाः पूर्वस्मिन्दिने अग्निष्ठप्रमुखान्सर्वान्यूपान्निखनन्ति । the explanation of प्रक्रुव्रतायै to the end of the ka*nd*ikâ is wanting: the immediately following words are: तं पत्तं निराचष्टे तदु तथेति । तस्मिन्काले अग्निष्ठमेकमेव उत्तरवेदेः पुरोदेशस्थमेवाग्नीषोमीयपश्वर्थमुच्छ्रयेत् इतरेषामपि पूर्वेद्युरुच्छ्रयणे दोषमाह इदं वाऽइत्यादिना इदं वक्ष्यमाणं भवतीत्यर्थः । नान्वर्गाति नैव हस्तस्पर्शं परित्यजेत् । प्रातः परेद्युः ॥४॥ प्रसङ्गात्पात्नीवतपशुप्रयोजनमाह अथेति ॥८॥२॥७॥

पशुनियोजनाय सर्वथा यूपेनैव भवितव्यमित्यमुमर्थमाख्यानेनोपपादयति पशुरिति अविनाभूतावित्यर्थः (?°नाधूता° Cod.) ॥१॥ प्राघ्नीयन्त (!) प्रकर्षेण घ्नीना अवनता अभवन् ॥२॥ प्रासङ्गिकं यूपैकादशिनीपत्तं परिसमाप्य प्रकृतमग्नीषोमीयपशुप्रयोगमाह अथेति । नोपावेयुः नोपगताः ॥३॥ यानं (!) प्रायम् । अभ्यवैष्यन्ति अवगतिं प्राप्स्यन्ति ॥४॥ पशोर्निरोधं करवाणि । असहायस्य व्यापारात्तमवात् ॥८॥ परस्तात्परोदेशे ॥१३॥३॥७॥

समन्त्रकं बन्धनमाह पाशमिति ॥१॥ उपगृह्णाति प्रोक्षणोशेषं पानार्थं मुखसमीपे धारयेत् ॥६॥ तयोरग्नियजमानयोः ॥११॥४॥७॥

होत्रादिप्रवरणानन्तरभाविनं प्रयोगमाह तदिति । होतृषदनं वेदेरुत्तरा श्रोणिः ॥१॥ समित्तनूनपादित्याद्येकादश प्रयाजा आप्रियः ॥२॥ पर्यग्निं पशोः परितोऽग्निं करोति । तलस्थानमभिलक्ष्येनमुल्मुकं (!) पाकार्थमाहरेत् ॥६॥ तेषां शामित्रं प्रति गमनम् ॥९॥ तस्मिन्समये प्रतिप्रस्थाता वपाश्रपणीभ्यां पशुमन्वारभते ॥१०॥ अमुया अमुत्रान्तरिक्षे अनभिमतप्रदेशे न भवति न विनश्यति ॥१४॥ कूटेन शृङ्गेण शृङ्गं गृहीत्वा । नैवं कर्णस्य पश्चाद्भागमग्रभागं गृहीत्वा । वेष्कं मुखवेष्टनं वा शब्दाभावाय कुर्यात् । हे शमितः संज्ञपयासौ तु अन्वगन् अनुगतोऽभूत् ॥१५॥१॥८॥

संज्ञपनानन्तरप्रयोगमाह यदेति ॥१॥ विशसनप्रयोगमाह अथोत्तानमिति ॥१२॥ आछ्यन्ति आछिनन्ति । तत् तृणम् ॥१४॥ समया सांमुख्येनैव सामीप्येन ॥२०॥ इतःप्रदाना वै वृष्टिः अस्माल्लोकात्प्रज्ञाता । ते अग्निना भक्षिता एते [घृतस्तोकाः] पुनरुदकात्मना परिणताः पृथिव्यां वर्षन्ति ॥२२॥ चरकशास्त्रोक्ताध्वर्यवप्रयोगकर्तारः चरकाध्वर्यवः । दधिमिश्रमाज्यं पृषदाज्यम् ॥२४॥ एतावान्कालो वपाप्रथमाभिघारणेनैव गतः अथापि प्राणश्च न निर्गत इत्यर्थः ॥२५॥ समीच्यौ परस्पराभिमुखे ॥२८॥२॥८॥

अनुनिर्वाप्यपुरोडाशं तद्देवतां च विधत्ते यद्देवत्य इति ॥१॥ पशुपुराडाशस्य पशुच्छिद्रपूर्तिरूपप्रयोजनं सर्वेषु पशुष्वतिदिशति एष इति ॥२॥ शमिता । तदा शमितुरेवमनुशासनं कुर्यात् हे शमितः त्रिः प्रच्यावयतात् प्रधानस्विष्टकृद्वाभेदेन (?) त्रिविधमङ्गानि त्रिविधचिह्नानि यथा स्युः तथा प्रच्यावय त्रिःप्रच्युतस्य पशोः हृदयमवयवं सर्वं (!) उत्तममुपरिभावं कुरु ॥३॥ मस्तिष्कः कपालः अनूक्यश्च तन्मांसम् मज्जा तदाश्रितः सारः ॥११॥ ए-

कचरस्य दोष्णः सव्यात् । तनिम्ना यकृतः । वृक्कयोः वृक्या (?वृक्ये?) कक्ष्युभयपार्श्वस्थं (कुक्षूभ° Cod.) ग्रामकारमांसद्वयम् (?°कार°?) ॥१७॥ गुदाङ्गेषु गदांगमूलम् । त्र्यङ्गेषु मध्ये ऽवद्येत् । एकचरायै श्रोणेर्दक्षिणायाः ॥१८॥ स्विष्टकृदर्थमाह अथेति । त्रीण्यङ्गानि यस्येति त्र्यङ्गं सौविष्टकृतं हविः तान्यवाह दोष्ण इति सव्यस्य प्रधानार्थमभिहितत्वाद्दक्षिणस्य दोष्णः सकाशादित्यर्थः । त्र्यङ्ग्यायै श्रोणेः स्विष्टकृदर्थायाः श्रोणेः सकाशात् सव्यायाः श्रोणेरित्यर्थः ॥१९॥ लेलयेवेति द्रवद्रव्यत्वादितस्ततश्चलनं विवक्षितत्वा[द्] व्याख्यातम् ॥२०॥ पार्श्वेन पार्श्वास्थिना ॥२४॥ मतस्ने वृक्कौ ॥२५॥ अक्ष्णया पादप्रमाणमन्तर्गत्यागमेन । अंसौ बाह्वोरुपरिप्रदेशौ । अनूका वङ्क्र्याधारः आयतः पृष्ठ्यास्थिविशेषः । ऊर्ध्वोरुपरिभूतौ उक्तितावयवौ सक्थ्यौ (°कथ्यो Cod.) ॥२७॥ इतः पृथिव्याः सकाशात् ॥३०॥ ये च तत्ततः से (!) नदोर्ग यज्ञमुपतिष्ठन्ते प्राप्नुवन्ति ते पशुं विमथिष्यन्ते ॥३५॥३॥८॥

प्राणस्य श्रेष्ठत्वकरणाभिधानमुखेन गुदस्य प्रधानस्विष्टकृदुपयाडर्थार्थ (°गद्दार्थ Cod.) त्रेधा विभज्य विनियोगं प्रशंसन्प्रयाजादीनामितराङ्गत्वमाह त्रीणीति । अनुयाजानन्तरं यष्टव्या एकादशोपयज उपरिष्टादाम्नास्यन्ते ॥१॥ शिश्नः अन्तः ॥२॥ यो यजमान एनं मेध मेधाई प्रवृजमुपनयेत् उपगच्छेत्प्राप्नुयात् ॥५॥ अंसलः प्रवृद्धांसः पुष्टाङ्गः ॥६॥ एषा जाता । अध्वर्यवे उपयष्ट्रे प्रतिप्रस्थात्रे च ॥१०॥ अत्युपयड्होमकाश्चत्वार उपयागमसत्कानामनन्तरमाधिक्येन यष्टव्याः ॥१८॥४॥८॥

अत्युपयाजमन्त्रान्विधाय पुनः मृष्याभिवृद्धिस्तुतया (मृष्याभि° Cod.) प्रशंसति स इति ॥१॥ जाघनी वालदण्डः ॥५॥ तस्मोथाय भक्षणायालं पर्याप्तं भवति मुग्धत्वात्सत्वाच्च यागार्हं स्यादित्यर्थः तस्मात्पाकात्पूर्वं मूल (!) परितृप्य पाकं कुर्यात् मूलात्पाक इति (पा° ५.४.६५.) डाजन्तः (डाच अंतः Cod.) पाकात्पूर्वं मूलेन परितर्दनाकुम्भद्वयमूलं प्राप्नोतीत्यर्थः । पाकोत्तरकालं हृदयं मूलात्प्रवृह्य इतरावयवानामुपरि स्थापयेत् ॥८॥ मूलोपगूहनं (हनो Cod.) विषयविशेषं निषेधति स वै नेति ॥११॥५॥८॥

अथ पश्वेकादशिनीं विधातुमाख्यायिकामाह प्रजापतिरिति । रिरिचान इवामन्यत आत्मानं रिक्तमिव अबुध्यत ॥१॥ अरिचि अतिरिक्तोऽभूवम् असृक्षि प्रजासृष्टिमकार्षम् ॥२॥ तस्माद्यः पुमान्प्रस्वामि (!) अनल्पः (?अतल्पः Cod.) सोऽश्वादो भवति ॥१॥ यस्माद्ब्राह्मणस्य पशुषु स्वामित्वमस्ति तस्मादेव कारणात्सर्व ब्राह्मणेभ्यो दत्त्वा अजिनमादाय संचरति ॥३२॥१॥१॥

अथ सोमाभिषवार्थं वसतीवरीग्रहणं विधातुमाह यत्रेति ॥१॥ ऐत् अस्रवत् ॥४॥ इलयति इतस्ततश्चलति । नेलयन्ति न प्रति विवर्तन्ते ॥५॥ निनाहचात् स्वगृहस्थितप्रभूतघटादेः सकाशात् । उपावसिते (!) समीपे गृहेऽवस्थितः पर्यवसितो वा दूरगृहस्थितो वा ॥८॥ संतिष्ठते पत्नीसंयाजान्तः समाप्तो भवति । अथ तदा परिहरति वसतीवरीर्वेदेः परितो नयेत् ॥१३॥ दक्षिणेन द्वारेण प्राग्वंशान्निष्क्रम्योत्तरवेद्या दक्षिणश्रोणौ सादयति ॥१४॥ उत्तरवेद्युत्तरश्रोणौ सादनं कंचिन्मन्त्रं निर्दिश्य तस्य वक्ष्यमाणसम्पदतिरेकेण प्रातिकूल्यमभिधाय दक्षिणवेदिश्रोणिसादनमन्त्रमेव सम्पदनुकूलत्वात्सिद्धान्तयति मित्रावरुणयोरित्यादिना यस्माद्यं मन्त्रोऽतिरिक्तोऽधिकः अतो वक्ष्यमाणा सप्तपदोपेतशक्वरीछन्दःप्राप्तिलक्षणा सम्पन्न स-

म्पद्यते इन्द्राग्न्योरित्यनेनैव चेदनतिरेकात्सम्पद्यते (?वेदन° Cod.) ॥१५॥ परितोऽङ्ग्यन्ते ह्रियन्ते (ह्रि° Cod.) ॥१६॥ पराध्यां परार्धे भवा श्रेष्ठा ॥१७॥२॥१॥

अथ सुत्यादिवसप्रातःकालीनं सवनीयपश्वर्थप्रयोगमाह तानिति । ऋत्विजः ॥१॥ अधिषवणचर्मोपरिप्रदेशं प्रत्यधो नयति । जनूर्जन्मभूमिः ॥२॥ ईषे आयतौ (त्यै Cod.) शकटदण्डौ ॥३॥ अनुसृज्य वेष्टितं वस्त्रं विसृज्य । पापवस्यसं पापं च वसीयश्च पापवस्यसं साधुसाधुमिश्रणम् ॥७॥ स निमेषव्यापार एव प्रतिगरस्थानीयः । निद्राभङ्गं निमेषं च न कुर्यात् । प्रचरत्यनया स्रुक्प्रभृतीर्व्यापारदशायामिति प्रचरणी सा स्रुग्भवति तया चतुर्गृहीतमाज्यं जुहुयात् ॥११॥ अपः प्रति इष्य इक् अपः प्रतिगमनोचितं प्र देवत्रेत्यापोनप्त्रीयमनुब्रूहि (देवत्रेत्या°?) । एताद्र (!) उ चैवैतदिति उशब्दोऽप्यर्थे अपि च एता (!) एकधनाख्या अप उद्दिश्य एतदनुतिष्ठते । नेदेना (!) इति । एता (!) अपो नाष्ट्रा नाशकानि रक्षांसि हिनसन् हिंस्युः ॥१५॥ दश चमसाध्वर्यवश्चमसप्रयोक्तारः तेषु यो मैत्रावरुणस्य चमसाध्वर्युः स सम्बोध्यते एहि उदकानयनार्थमागच्छ । एकधना उदकानि तेषां धारकाः कुम्भा वा प्रत्यगेकधनानयुग्मानित्यासादनाभिधानात्तेषां ग्रहीतार एकधनिनः एत आगच्छत । चात्वालदेशे यावदागमनं प्रत्युपतिष्ठ ॥१६॥ तेषां जलानयनार्थं निर्गमनमार्गमाह तऽइति ॥१७॥ प्सातो भक्षितः । उपस्रक्ष्यन् अभिषवकाले सोमस्य संसर्गं करिष्यन् ॥२६॥ एतेन मैत्रावरुणाख्येन ऋत्विजा प्रैषैस्तत्कृति(°तैः?)गमनसाधनैराह्वानवाक्यैः प्रैषं यज्ञस्य गमनमैच्छन् । निविद्भिर्निवेदनसाधनैरग्निर्देव इत्यादिभिर्वाक्यैर्न्यवेदयन् परस्परं निवेदितवन्तः । पुरो याज्यानुवाक्याभ्यां पुरस्ताद्रुचिमिच्छां जनयन्ति देवताया इति पुरोरुचः पापराथेगा (?) इत्याद्याः ताभिः प्रारोचयन् प्ररोचनामजनयन् । अतो मैत्रावरुणस्य प्रैषादिसाधनवात्तदीयश्चमसः प्रशस्तः ॥२८॥ अप्सम्भरणानन्तरमनुष्ठेयं विधत्ते तऽइति पुनर्देवयजनं प्रति आगच्छेयुः । आपः मैत्रावरुणचमसगता अद्भिः होतृचमसस्थाभिर्वसतीवरीभिः ॥२९॥ एव नयन्तीति सम्बन्धः आनयन्त्येवेत्यर्थः । आ मैत्रावरुणचमसाद्वसतीवरीषु उपसर्गवशान्नयन्तीत्यनुषज्यते । आग्नीध्रहस्तस्थं होतृचमसमध्वर्युरादाय पूर्वेद्युराहृता वसतीवरीरध्वर्युः गृह्णाति कस्माऽउपयोगाय निग्राभ्यार्थः होतृचमसे निगृह्यमाणत्वान्निग्राभ्या इति संज्ञा ॥३०॥ अवेः लब्धवानसि । नंनमुः अत्यर्थमानता अभवन् ॥३१॥ स वर्तमानः क्रतुरग्निष्टोमसंस्थश्चेत् । मन्त्रे यन्मर्तलिङ्गकत्वं तत्प्रशंसति मर्तवत्येति ॥३२॥ अग्निष्टोमादुपर्युक्थ्यसंस्थे क्रतौ । समुद्यैव यमग्ने पृत्स्विति मन्त्रमुक्त्वैव तूष्णीमेत्य देवयजनं प्रपद्येत । यज्ञक्रतूनग्निष्टोमादिकान्परस्परव्यावृत्तान्करोति ॥३३॥ इदानीमेकधनघटानामयुग्मसंख्याविकल्पमाह (°धनमघटा° Cod.) अयुजा इति । सधनं समानमेकमेव धनम् । तस्मादयुग्मसंख्याका उदकविशेषा एकधननामकाः सम्पन्नाः ॥३४॥३॥१॥

इत्थमभिषवसाधनानामपां ग्रहणमभिधायाथ सोमाभिषवप्रयोगं वक्तुमुपक्रमते अथेति । अधिषवणे दारुमये फलके । अस्यामनामिकाङ्गुल्याम् ॥१॥ रासते ददाति ॥४॥ तासु आगतासु एनं यजमानम् । उपांशुग्रहार्थः सोमोऽभिषूयते येन स उपांशुसवनः पाषाणः स निदानेन मूलकारणविचारेण विवस्वत्संज्ञक आदित्य एव तस्यैवैतदात्मनावस्थानात् ॥७॥ तमुपांशुसवनमभि तस्योपरि सोमं मिमीते क्रयकालीनमानेन सोमं संस्कुर्यात् । मानं प्रशंस-

ति यद्देवेति उशब्दोऽप्यर्थे यापि मात्रा नाम कृता तस्मात्तामस्य मितवान् (त् त Cod.) मनुष्येषु व्यवहारार्थं प्रस्थकुडवाढककद्राणादिमात्रा सम्पन्ना या चापि उकारप्रश्लेषः अपि च या चान्या मात्रा एकद्वि-इत्यादिसंख्याप्रयुक्ता मापि मानप्रमाणप्रयुक्ता ॥ ८ ॥ न किंचन वस्तु लोष्टकाष्ठपाषाणादिकं प्रतिधारयते (!) प्रतिबध्नाति । तस्मात् निरतः कानचि त्रयम् ॥ १४ ॥ अनेनस्यं न विद्यते एनः पापं यस्य स अनेनास्तस्य भावः ॥ १२ ॥ अतो यत्परम्परया आकृतिभावं गच्छन् जायते पुनः सम्भवति अतो यत् जायतऽइति यन्ताः अतो वस्तुतो यज्ञ इति तस्य नाम तद्यज्ञ इति परोऽक्षेण व्यवहरति ॥ २३ ॥ अस्य मन्त्रस्य तात्पर्यमाह मर्त्यो हैवैतद्भगवन्नुवाच (!) वमेवेत्यादिना स्पष्टोऽर्थः ॥ २४ ॥ तस्य ग्रहणं होतृचमसप्रकाशाद्भवति होतृचमसं दशापवित्रस्योपरि धारयित्वा तत्र सोमरसमासिच्य धारां सम्पाद्य ग्रहणात् ॥ २५ ॥ ४ ॥ १ ॥

इति सायणाचार्यविरचिते माधवीयवेदार्थप्रकाशे माध्यन्दिनीयशतपथभाष्ये तृतीये काण्डे नवमोऽध्यायः सप्तमश्च प्रपाठकः ॥ ॥ समाप्तं चेदमध्वरनाम तृतीयं काण्डम् ॥ ३ ॥ ॥

---

## VARIOUS READINGS.

---

*Adhyâya* १.१.१ नातिशयीत Sây. - ४ Read: याजयेदिति. - ५ Read: °न्ने-दिष्ठतमामिव. - ६ Read: तक्षालां वा. - २.११ यं घृतेन पुनस्तस्मादाह A. - १९ अमेध्यमाकृ[illegible] Sây. - Read: मेध्यमसदिति. - २१ निरवधीदिति A. - ३.१ यज्ञस्यापराध्यों Sây. - ३ संदेक्षो Sây. - ५ राध्नुवात् Sây. - ७ यदभ्यङ्क्ते A. यदभ्यङ्क्ते B. - १० यदुत्याव° AB. - ४.१ उद्गृह्णीते Sây. —

*Adhyâya* २.१.१० दीक्षिता न बल्यमविन्दन् Sây. but see also ४,२,१.३,१. and ६,१,२१. - २२ संस्कृते AB. - ३१ °दुपास्यं मित्त्ये° AB. - २.२७ प्रतिगुह्य° Sây. - २१ सम्भवति AB. - ३.१५ उत्तरा वाक् Sây. - २१ निदधति ताः A. - २३ संस्करोति AB. - ४.११ अलग्नमिव Sây. —

*Adhyâya* ३.१.१५ आशान्निया AB. - २.४ वा त्र्यङ्गुलं B. - ६ छन्दोमा-

नां Sây. - ८ विवा AB. भिवा Sây. - ९ पात्रे A pr. m. पात्रो A sec. m. B. Sây. - १२ कविं । AB. The last word of a quoted *ric* is generally left unaccented. - १४ °र्मिमीत A. - ३.१ राजा३इति AB. - ९ आजत् Sây. - ११ तान्मा दभन् Sây. - ४.२ अथैनमभिपद्य Sây. against the accent. - ८ प्रतिनाह्ठ° Sây. - ९ °ब्रह्मण्यः Sây. °ब्रह्मण्या AB. which reading I now prefer, see ४, ३,४,२२. - १३ अपालव° A अपालंब° B. - १५ प्रपायतयति B the first time. प्रपाद्यति Sây. - १६ संस्कृत° AB. - १९ °नोपह्नातं AB. °तेत्यह्रे AB. —

*Adhyâya* ४.१.३ नापचायन्त Sây. - १८ संल्कुम्यंते B सलुन्याति Sây. - २६ संस्करो° AB. - ३.६ विसृज्यते AB विसृजंते Sây. - ८ समाश्नवत AB. - ९ व्रयास्वे व्रतया A. - १२ तमेवाग्रे Sây. तमेवाय A. तमेवाग्र B. - २२ °द्त्यापा३ इति AB, see ३.३.१. - ४.८ अतिभारं Sây. - १४ यथेदं B. यथेतं Sây. - २२.२३.२४ गह्वरेष्ठा । AB. —

*Adhyâya* ५.१.२३ याजयेति Sây. - १५ धियाम° Sây. ध्रियाम° AB. - २.८ तां न्यक्तेन A. ता न्यक्तेन the schol. at Kâtyây.५.४.१२. - १६ गुग्गुलु Sây. - ३.९ Read: भित्तिं प्रत्या°. - १४ दशस्या । AB. - क्षेतत्त्विदापत्यन्यानि AB. - २५ तं निष्ठित° AB. - The fifth adhyâya is reckoned by Sâya*n*a as containing five brâhma*n*as and accordingly the sixth as having three only. —

*Adhyâya* ६.१.२५.२६ तं निष्ठि° AB. - २७ तां दृन्नि° AB. तां धिष्ण्या° AB. - २८ °त्वमयाजय° AB. - २९ This passage shows clearly, (what is manifest too from the Padapâ*t*ha, wherever the words occur,) that आर्ति (आऽऋति in the Pada) and आर्त are not be derived from अर्द्, but from ऋ + आ: see also १,४,३,११-२२.५,१,२.६,१,१६. - २.१ आत्मानः Sây. (?) - ८ निष्क्रिणीथेति

AB. - १ इमे क्रोत्रकाः Sây. - २२ जिह्मा A. - ३. १० Read: त्रिधृती. - ११ विद्वान्। AB. - १९ °मत्तर्जभ A. - ४. ५ अगान्ना° A. - ११ Read: तथान्नो. - १६ °वल्लूशो, °वल्लूशा A. —

*Adhyâya* ७. १. ८ आम्रशकल° Sây. - १६ Read: सम्प्रत्य°. - २. ३ प्रकुब्ध्र° A pr. m. प्रकुब्ध्र° A sec. m. प्रकुत्र° B: this line is omitted in the commentary. - ८ सर्वत्वाय त्वेव B. and Sây. तन्न सञ्स्था° AB. - ३. २ प्राप्नोयन्त Sây. - ४ यानं विदु° Sây. - ४. २ स यदेव AB. —

*Adhyâya* ८. २. ६ सञ्कृत्य A. - ११ °त्राणयसन्नि° A. °त्राणयेसन्नि° B. - ३. २ °शेन प्रचरति मध्य° AB. - १५ प्राणाः संभवति Sây. - नर्थ्या A pr. m. मर्थ्या: B. - ३२ Are we to read: प्राणात्यश्नोदनात्यश्ना°? see २. ५, २, २. ४. १, २, १५. - ३६ ये म ऽउपति° Sây. - ब्राह्मणं ॥५॥ संलग्ननाम B. —

*Adhyâya* ९. १. ८ प्रस्वामि (?) Sây. - २. १० and १२ कृविष्मांऽ३ऽ A. - ३. १५ एता ऽ and नेदेना अन्तरा Sây. - ३० °मुपोदका° AB. - ३४ Read सधनं यो. - ४. १४ प्रतिधारयते Sây. - १७ तन्नेव AB. - २३ यन्नायते तस्मायन्नो यन्नो रू AB. - २४ °द्भगवन्नुवाच Sây.

ओम् । प्राणो ह वाऽअस्योपाꣳशुः । व्यान उपाꣳशुसवन उदान एवान्तर्यामः ॥१॥ अथ यस्मादुपाꣳशुर्नाम । अꣳशुर्वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणस्तद्यदस्यैष प्राणस्तस्मादुपाꣳशुर्नाम ॥२॥ तं बर्हिष्पवित्राद्गृह्णाति । पराञ्चमेवास्मिन्नेतत्प्राणं दधाति सोऽस्यायं पराङेव प्राणो निर्दति तमꣳशुभिः पावयति पूतोऽसदिति षड्भिः पावयति षड्वाऽऋतव ऋतुभिरेवैनमेतत्पावयति ॥३॥ तदाहुः । यदꣳशुभिरुपाꣳशुं पुनाति सर्वे सोमाः पवित्रपूता अथ केनास्याꣳशवः पूता भवन्तीति ॥४॥ तानुपनिवपति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति तदस्य स्वाहाकारेणैवाꣳशवः पूता भवन्ति सर्वं वाऽएष ग्रहः सर्वेषाꣳ हि सवनानाꣳ रूपम् ॥५॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयां चक्रुस्ते होचुः सꣳस्थापयाम यज्ञं यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थित एव नो यज्ञः स्यादिति ॥६॥ ते प्रातःसवनऽएव । सर्वं यज्ञꣳ समस्थापयन्नेतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्रऽऋक्तस्तेन सꣳस्थितेनैवात ऊर्ध्वं यज्ञेनाचरंस्त एषोऽप्येतर्हि तथैव यज्ञः संतिष्ठतऽएतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्रऽऋक्तस्तेन सꣳस्थितेनैवात ऊर्ध्वं यज्ञेन चरति ॥७॥ स वाऽअष्टौ कृत्वोऽभिषुणोति । अष्टाक्षरा वै गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेवैतत्क्रियते ॥८॥ स गृह्णाति । वाचस्पतये पवस्वेति प्राणो वै वाचस्पतिः प्राण एष ग्रहस्तस्मादाह वाचस्पतये पवस्वेति वृष्णोऽअꣳशुभ्यां गभस्तिपूत इति सोमाꣳशुभ्याꣳ ह्येनं पावयति तस्मादाह वृष्णोऽअꣳशुभ्यामिति

गभस्तिपूत इति पाणी वै गभस्ती पाणिभ्याꣳ ह्येनं पावयति ॥ ९ ॥ अथैकादश कृत्वोऽभिषुणोति । एकादशाक्षरा वै त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिनमेवैतत्सवनं क्रियते ॥ १० ॥ स गृह्णाति । देवो देवेभ्यः पवस्वेति देवो ह्येष देवेभ्यः पवते येषां भागोऽसीति तेषाꣳ ह्येष भागः ॥ ११ ॥ अथ द्वादश कृत्वोऽभिषुणोति । द्वादशाक्षरा वै जगती जागतं तृतीयसवनं तृतीयसवनमेवैतत्क्रियते ॥ १२ ॥ स गृह्णाति । मधुमतीर्न इषस्कृधीति रसमेवास्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्माद्धुतो न पूयत्यथ यज्जुहोति सꣳस्थापयत्येवैनमेतत् ॥ १३ ॥ अष्टावष्टौ कृत्वः । ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुरष्टाक्षरा वै गायत्री ब्रह्म गायत्री ब्रह्मवर्चसी हैव भवति ॥ १४ ॥ तच्चतुर्विꣳशतिं कृत्वोऽभिषुतं भवति । चतुर्विꣳशतिर्वै संवत्सरस्यार्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति ॥ १५ ॥ पञ्च पञ्च कृत्वः । पशुकामस्याभिषुणुयादित्याहुः पाङ्क्ताः पशवः पशून्हैवावरुन्द्धे पञ्च वा ऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति सोऽष्टा मीमाꣳसैवैतर्हि त्वेव क्रियते ॥ १६ ॥ तं गृहीत्वा परिमार्ष्टि । नेद्यवश्चोतदिति तं न सादयति प्राणो ह्यस्यैष तस्मादयमसन्नः प्राणः संचरति यदीबभिचरेद्यैनꣳ सादयेदमुष्य त्वा प्राणꣳ सादयामीति तथाह तस्मिन्न पुनरस्ति यत्रानुसृजति तेनोऽअध्वर्युश्च यजमानश्च ज्योग्जीवतः ॥ १७ ॥ अथोऽअप्येवैनं दध्यात् । अमुष्य त्वा प्राणमपिदधामीति तथाह तस्मिन्न पुनरस्ति यत्र सादयति तेनो प्राणान्न लोभयति ॥ १८ ॥ स वाऽअन्तरेव स्वाहाकृतिं करोति । देवा ह वै बिभयां चक्रुर्यद्वै नः पुरेवास्य ग्रहस्य होमादसुररक्षसानीमं ग्रहं न हन्युरिति तमन्तरेव सन्तः स्वाहाकारेणाजुहवुस्तꣳ हुतमेव सन्तमग्नावजुहवुस्तथोऽएवैनमेष एतदन्तरेव सन्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्तमग्नौ जुहो-

ति ॥१९॥ अथोपनिष्क्रामति । उर्वन्तरिक्षमन्वेमीत्यन्तरिक्षं वाऽअनु रक्षश्चरत्य-
मूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरत्येतद्धि
यजुर्ब्रह्म रक्षोहा स एतेन ब्रह्मणान्तरिक्षमभयमनाष्ट्रं कुरुते ॥२०॥ अथ वरं वृ-
णीते । बलवद्ध वै देवा एतस्य ग्रहस्य होमं प्रेप्सन्ति तेऽस्माऽएतं वरꣳ समर्ध-
यन्ति क्षिप्रे न इमं ग्रहं जुहवदिति तस्माद्वरं वृणीते ॥२१॥ स जुहोति । स्वां-
कृतोऽसीति प्राणो वाऽअस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातस्तस्मादाह स्वां-
कृतोऽसीति विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति सर्वाभ्यो ह्येष प्रजा-
भ्यः स्वयं जातो मनस्त्वाष्टिति प्रजापतिर्वै मनः प्रजापतिष्ट्वाश्नुतामित्येवैतदाह स्वा-
हा त्वा सुभव सूर्यायेति तदवरꣳ स्वाहाकारꣳ करोति परां देवताम् ॥२२॥ अमु-
ष्मिन्वाऽएतमहौषीत् । य एष तपति सर्वं वाऽएष तदेनꣳ सर्वस्यैव परार्ध्यं क-
रोत्यथ यदवरां देवतां कुर्यात्परꣳ स्वाहाकारꣳ स्याद्ध हैवामुष्मादादित्यात्परं त-
स्मादवरꣳ स्वाहाकारं करोति परां देवताम् ॥२३॥ अथ जुह्वोर्ध्वं ग्रहमुन्मार्ष्टि ।
पराञ्चमेवास्मिन्नेतत्प्राणं दधात्यथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि प-
राञ्चमेवास्मिन्नेतत्प्राणं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति ॥२४॥ अमुष्मिन्वा
ऽएतं मण्डलेऽहौषीत् । य एष तपति तस्य ये रश्मयस्ते देवा मरीचिपास्ताने-
वैतत्प्रीणाति तऽएनं देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥२५॥ तस्य वाऽए-
तस्य ग्रहस्य । नानुवाक्यास्ति न याज्या तं मन्त्रेण जुहोत्येतेनो हास्यैषोऽनुवा-
क्यवान्भवत्येतेन याज्यवानथ यद्यभिचरेद्योऽस्याꣳशुराश्लिष्टः स्याद्वाह्वोर्वीरणि वा
वाससि वा तं जुहुयाद्दिवाꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फ-
डिति यथा ह वै हन्यमानानामपधाविदेवमेषोऽभिषूयमाणानाꣳ स्कन्दति तथा
ह तस्य नैव धावन्नापधावत्परिशिष्यते यस्माऽएवं करोति तꣳ सादयति प्राणाय
त्वेति प्राणो ह्यस्यैषः ॥२६॥ दक्षिणार्धे हैके सादयन्ति । एताꣳ ह्येष दिशमनु

यद्युपांशुᳫं सादयेत् । अथैनᳫं सादयेद्यद्युपांशुं न सादयेन्नैनᳫं सादयेद्यद्युपांशु-मपिदध्यादप्येनं दध्याद्यद्युपांशुं नापिदध्यान्नैनमपिदध्याद्यथोपांशोः कर्म तथैतस्य समानᳫं ह्येतद्यदुपांश्वन्तर्यामौ प्राणोदानौ हि ॥१८॥ ताᳫंऽउ ह चरकाः । ना-नैव मन्त्राभ्यां जुह्वति प्राणोदानौ वाऽअस्यैतौ नानावीर्यौ प्राणोदानौ कुर्म इति वदन्तस्तदु तथा न कुर्यान्मोहयन्ति ह ते यजमानस्य प्राणोदानावपीद्धाऽएनं तू-ष्णीं जुहुयात् ॥१९॥ स यद्वाऽउपांशुं मन्त्रेण जुहोति । तदेवास्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानᳫं ह्येतद्यदुपांश्वन्तर्यामौ प्राणोदानौ हि ॥२०॥ स येनैवोपांशुं मन्त्रेण जुहोति । तेनैवैतं मन्त्रेण जुहोति स्वांकृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा सुभव सूर्यायेत्युक्तो यजुषो बन्धुः ॥२१॥ अथ हुत्वावाञ्चं ग्रहमवमार्ष्टि । इदं वाऽउपांशुᳫं हुत्वोर्ध्व-मुन्मार्ष्ट्यथात्रावाञ्चमवमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति ॥२२॥ अथ नीचा पाणिना । मध्यमे परिधौ प्रत्यगुपमार्ष्टीदं वा उपांशुᳫं हुत्वोत्तानेन पाणिना म-ध्यमे परिधौ प्रागुपमार्ष्ट्यथात्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि प्रत्य-ञ्चमेवास्मिन्नेतदुदानं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति सोऽसावेव बन्धुः ॥२३॥ तं प्रत्याक्रम्य सादयति । उदानाय त्वेत्युदानो ह्यस्यैष तानि वै सᳫंस्पृष्टानि सा-दयति प्राणोदानावेवैतत्सᳫंस्पर्शयति प्राणोदानौ दधाति ॥२४॥ तानि वाऽअ-निरुह्यमानानि शेरे । आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुन-स्तृतीयसवने प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते तेऽनिशिताश्चराचरा य-ज्ञस्यैवैतद्विधामनु वय-इव ह वै यज्ञो विधीयते तस्योपांश्वन्तर्यामाविव पक्षावा-त्मोपांशुसवनः ॥२५॥ तानि वाऽअनिरुह्यमानानि शेरे । आ तृतीयसवनात्ता-यते यज्ञ एति वै तद्यत्तायते तस्मादिमानि वयाᳫंसि विगृह्य पक्षावनायुवानानि पतन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमानि वयाᳫंसि समासं पक्षावा-

युवानानि पतन्ति यज्ञस्यैवैतद्विधामनु ॥२६॥ ॥ शतम् २३०० ॥ ॥ इयꣳ ह वा ऽउपाꣳशुः । प्राणो ह्युपाꣳशुरिमाꣳ ह्येव प्राणन्नभिप्राणित्यसावेवान्तर्याम उदानो ह्यन्तर्यामोऽमुꣳ ह्येव लोकमुदनन्नभ्युदनित्यन्तरिक्षमेवोपाꣳशुसवनो व्यानो ह्युपाꣳशुसवनोऽन्तरिक्षꣳ ह्येव व्यनन्नभिव्यनिति ॥२७॥ ब्राह्मणम् ॥२॥ ॥

वाग्घ वाऽअस्यैन्द्रवायवः । एतन्न्वध्यात्ममिन्द्रो ह यत्र वृत्राय वज्रं प्रजहार सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्निलयां चक्रे तद्देवापि देवा अपन्यलयन्त ॥१॥ ते ह देवा ऊचुः । न वै हतं वृत्रं विद्म न जीवꣳ हन्त न एको वेत्तु यदि हतो वा वृत्रो जीवति वेति ॥२॥ ते वायुमब्रुवन् । अयं वै वायुर्यो ऽयं पवते वायो त्वमिदं विद्धि यदि हतो वा वृत्रो जीवति वा त्वं वै न आशिष्ठोऽसि यदि जीविष्यति त्वमेव क्षिप्रं पुनरागमिष्यसीति ॥३॥ स होवाच । किं मे ततः स्यादिति प्रथमवषट्कार एव ते सोमस्य राज्ञ इति तथेत्येयाय वायुरैद्धतं वृत्रꣳ स होवाच हतो वृत्रो यद्धते कुर्यात तत्कुरुतेति ॥४॥ ते देवा अभ्यसृज्यन्त । यथा वित्तिं वेत्स्यमाना एवꣳ स यमेकोऽलभत स एकदेवत्योऽभवद्यं द्वौ स द्विदेवत्यो यं बहवः स बहुदेवत्यस्तद्यदेनं पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम ॥५॥ स एषामापूयत् । स एनांकुक्तः पूतिरभिववौ स नालमाहुत्याऽआस नालं भक्षाय ॥६॥ ते देवा वायुमब्रुवन् । वायविमं नो विवाहीमं नः स्वदयेति स होवाच किं मे ततः स्यादिति त्वय्यैवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्युपवातेति ॥७॥ तस्य देवाः । यावन्मात्रमिव गन्धस्यापजघ्नुस्तं पशुषदधुः स एष पशुषु कुणपगन्धस्तस्मात्कुणपगन्धान्नापिगृह्णीत सोमस्य ह्येष राज्ञो गन्धः ॥८॥ नोऽएव निष्ठीवेत् । त[illegible]क-इव मन्येताभिवातं परीयाच्छ्रीर्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान्प्रत्यवरोहेदेवꣳ हास्माद्यक्ष्मः प्रत्यवरोहति ॥९॥ अथैतरं वायुर्व्यवात् । तदस्वदयन्ततोऽलमाहुत्या

ऽआसालं भक्षाय तस्मादेतानि नानादेवत्यानि सन्ति वायव्यानीत्याचक्षते सो ऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञ एतान्यु ऽएनेन पात्राण्याचक्षते ॥१०॥ इन्द्रो ह वा ऽईक्षां चक्रे । वायुर्वै नो ऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्रथमवषट्कारश्च सोमस्य राज्ञ एतान्यु ऽएनेन पात्राण्याचक्षते हन्तास्मिन्नपिवमिक्षा ऽइति ॥११॥ स होवाच । वायवा मास्मिन्ग्रहे भजेति किं ततः स्यादिति निरुक्तमेव वाग्वदेदिति निरुक्तं चेद्वाग्वदेदा त्वा भजामीति तत एष ऐन्द्रवायवो ग्रहो ऽभवद्वायव्यो हैव ततः पुरा ॥१२॥ स इन्द्रो ऽब्रवीत् । अर्धं मे ऽस्य ग्रहस्येति तुरीयमेव त ऽइति वायुरर्धमेव म ऽइतीन्द्रस्तुरीयमेव त ऽइति वायुः ॥१३॥ तौ प्रजापतिं प्रतिप्रश्नमेयतुः । स प्रजापतिर्ग्रहं द्वेधा चकार स होवाचेदं वायोरित्यथ पुनरर्धं द्वेधा चकार स होवाचेदं वायोरितीदं तवेतीन्द्रं तुरीयमेव भाजयां चकार यद्वै चतुर्थं तत्तुरीयं तत एष ऐन्द्रतुरीयो ग्रहो ऽभवत् ॥१४॥ तस्य वा ऽएतस्य ग्रहस्य । द्वे पुरोरुचौ वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वे ऽअनुवाक्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वौ प्रैषौ वायव्य एव पूर्व ऐन्द्रवायव उत्तरो द्वे याज्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरैवमेनं तुरीयं-तुरीयमेव भाजयां चकार ॥१५॥ स होवाच । तुरीयं-तुरीयं चेन्मामभ्रीभजुस्तुरीयमेव तर्हि वाङ्निरुक्तं वदिष्यतीति तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचो ऽनिरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचो ऽनिरुक्तं यद्वया ऽसि वदन्त्यथैतत्तुरीयं वाचो ऽनिरुक्तं यदिदं क्षुद्र ऽ सरीसृपं वदति ॥१६॥ तस्मादेतदृषिणाभ्यनूक्तम् । चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति ॥१७॥ अथातो गृह्णात्येव । आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते ऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वेति ॥१८॥ अथापगृह्य पुनरानयति । इन्द्र॰ ।यू ऽइमे सुता उप प्रयोभिरागतम् । इन्दवो वामु-

शन्ति हि । उपयामगृहीतोऽसि वायवऽइन्द्रवायुभ्यां वैष ते योनिः सजोषोभ्यां त्वेति सादयति स यदाह सजोषोभ्यां त्वेति यो वै वायुः स इन्द्रो य इन्द्रः स वायुस्तस्मादाहैष ते योनिः सजोषोभ्यां त्वेति ॥ ११ ॥ ब्राह्मणम् ॥ ३ ॥ ॥

क्रतूदक्षौ ह वाऽअस्य मित्रावरुणौ । एतन्न्वध्यात्मꣳ स यदेव मनसा कामयतऽइदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्षो मित्र एव क्रतुर्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं वरुणोऽभिगन्तैव ब्रह्म कर्ता क्षत्रियः ॥ १ ॥ ते हैतेऽअग्रे नानेवासतुः । ब्रह्म च क्षत्रं च ततः शशाकैव ब्रह्म मित्र ऋते क्षत्राद्वरुणात्स्थातुम् ॥ २ ॥ न क्षत्रं वरुणः । ऋते ब्रह्मणो मित्राद्यद्ध किं च वरुणः कर्म चक्रेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समानृधे ॥ ३ ॥ स क्षत्रं वरुणः । ब्रह्म मित्रमुपमन्त्रयां चक्रऽउप मावर्तस्व सꣳसृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म करवाऽइति तथेति तौ समसृजेतां तत एष मैत्रावरुणो ग्रहोऽभवत् ॥ ४ ॥ सोऽएव पुरोधा । तस्मान्न ब्राह्मणः सर्वस्यैव क्षत्रियस्य पुरोधां कामयेत सꣳ ह्येतौ सृजेते सुकृतं च दुष्कृतं च नोऽएव क्षत्रियः सर्वमिव ब्राह्मणं पुरोदधीत सꣳ ह्येवैतौ सृजेते सुकृतं च दुष्कृतं च स यत्ततो वरुणः कर्म चक्रे प्रसूतं ब्रह्मणा मित्रेण सꣳ हैवास्मै तदानृधे ॥ ५ ॥ तत्तदवक्लृप्तमेव । यद्ब्राह्मणोऽराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवानवक्लृप्तं यत्क्षत्रियोऽब्राह्मणो भवति यद्ध किं च कर्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समृध्यते तस्मादु क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः सꣳ हैवास्मै तद्ब्रह्मप्रसूतं कर्मऽर्ध्यते ॥ ६ ॥ अथातो गृह्णात्येव । अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति ॥ ७ ॥ तं पयसा श्रीणाति । तद्यत्पयसा श्रीणाति वृत्रो वै सोम आसीत्तं यत्र देवा अघ्नंस्तं मित्रमब्रुवंस्त्वमपि हꣳसीति स न चकमे सर्वस्य वाऽअहं मि-

त्रमस्मि न मित्रꣳ सन्नमित्रो भविष्यामीति तं वै वा यन्नादत्तरेष्याम इत्यहमपि हन्मीति होवाच तस्मात्पशवोऽपाक्रामन्मित्रꣳ सन्नमित्रोऽभूदिति स पशुभिर्व्यार्ध्यत तमेतद्देवाः पशुभिः समार्धयन्यत्पयसाश्रीणंस्तथोऽएवैनमेष एतत्पशुभिः समर्धयति यत्पयसा श्रीणाति ॥ ८ ॥ तदाहुः । शश्वद्ध नैव चकमे हन्तुमिति तस्यदेवात्र पयस्तन्मित्रस्य सोम एव वरुणस्य तस्मात्पयसा श्रीणाति ॥ ९ ॥ स श्रीणाति । राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यां त्वेति सादयति स यदाहऽर्तायुभ्यां त्वेति ब्रह्म वाऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण एवायुः संवत्सरो हि वरुणः संवत्सर आयुस्तस्मादाहैष ते योनिर्ऋतायुभ्यां त्वेति ॥ १० ॥ ब्राह्मणम् ॥ ४ ॥ ॥

श्रोत्रꣳ ह वाऽअस्याश्विनः । तस्मात्सर्वतः परिहारं भक्षयति सर्वतो ह्यनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोकꣳ समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे ॥ १ ॥ शर्यातो ह वाऽइदं मानवो ग्रामेण चचार । स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः ॥ २ ॥ स शार्यातेभ्यश्चक्रोध । तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥ ३ ॥ शर्यातो ह वाऽईक्षां चक्रे । यत्किमकरं तस्मादिदमापदीति स गोपालांश्चाविपालांश्च सꣳह्वयितवाऽउवाच ॥ ४ ॥ स होवाच । को वोऽद्येह किंचिददर्शदिति ते होचुः पुरुष एवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदां चकार स वै च्यवन इति ॥ ५ ॥ स रथं युक्त्वा । सुकन्याꣳ शार्यातीमुपाधाय प्रसिष्यन्द स आजगाम यत्रऽर्षिरास तत् ॥ ६ ॥ स होवाच । ऋषे नमस्ते यन्नावेदिषं तेनाहिꣳसिषमियꣳ सुकन्या तया तेऽपह्नुवे संजानीतां मे

ग्राम इति तस्य ह तत एव ग्रामः संजज्ञे स ह तत एव शर्यातो मानव उत्थु-युज्ञे नेदपरꣳ हिनसानीति ॥७॥ अश्विनौ ह वाऽइदं भिषज्यन्तौ चेरतुः । तौ सु-कन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥८॥ तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेषेऽआवामनुप्रेहीति सा होवाच यस्मै मां पितादान्नेवाहं तं जीवन्तꣳ हास्यामीति तद्धायमृषिराजज्ञौ ॥९॥ स होवाच । सुकन्ये किं त्वैत-द्वोचतामिति तस्माऽएतद्व्याचचक्षे स ह व्याख्यात उवाच यदि त्वैतत्पुनर्ब्रुवतः सा त्वं ब्रूतान्न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ यदि त्वा ब्रवतः केनावमसर्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पु-नर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्ताꣳ हैतदेवोचतुः ॥१०॥ सा होवाच । न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ होचतुः केनावमसर्वौ स्वः केनासमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति ॥११॥ तौ होचतुः । एतꣳ ह्रदमभ्यवहर स येन व-यसा कमिष्यते तेनोदैष्यतीति तꣳ ह्रदमभ्यवजहार स येन वयसा चकमे तेनो-देयाय ॥१२॥ तौ होचतुः । सुकन्ये केनावमसर्वौ स्वः केनासमृद्धाविति तौ हऽ र्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनासर्वौ स्थस्तेनासमृद्धाविति तौ ह तत एवाश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वाना-न्त्स्तुते बहिष्पवमाने ॥१३॥ तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवा ऊ-चुर्न वामुपह्वयिष्यामहे बहु मनुष्येषु सꣳसृष्टमचारिष्टं भिषज्यन्ताविति ॥१४॥ तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्वऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो वक्ष्याव इति तथेति ताऽउपाह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णंस्तावध्वर्यू य-ज्ञस्याभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्या-ख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृ-

क्षति स्तुति हि बहिष्पवमानऽआगछताम् ॥ १५ ॥ तौ होचतुः । मुख्यौ वाऽआवां यज्ञस्य स्वो यावधर्यूऽइह नाविमं पुरस्ताद्ग्रहं पर्याहरताभि द्विदेवत्यानिति ताभ्यामेतं पुरस्ताद्ग्रहं पर्याजह्रुरभि द्विदेवत्यांस्तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियतेऽथ यदश्विनाविति । इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदꣳ सर्वमाश्नुवातां पुष्करस्रजावित्यग्निरेवास्यै पुष्करमादित्योऽमुष्यै ॥ १६ ॥ अथातो गृह्णात्येव । या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वेति सादयत्ति तं वै मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति तद्यन्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥ १७ ॥ दध्यङ् ह वाऽआभ्यामाथर्वणः । मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगछात तस्मान्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥ १८ ॥ तानि वाऽएतानि । स्रक्त्यानि पात्राणि भवन्ति शस्त्रावमैन्द्रवायवपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद्द्विदेवत्यमस्रकाव मैत्रावरुणपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद्द्विदेवत्यमौष्ठमाश्विनपात्रं तत्तस्य द्वितीयं रूपं तेन तद्द्विदेवत्यमथ यदश्विनाविति मुख्यौ वाऽअश्विनावौष्ठमिव वाऽइदं मुखं तस्मादौष्ठमाश्विनपात्रं भवति ॥ १९ ॥ ब्राह्मणम् ॥ ५ ॥ प्रथमोऽध्यायः [२५.] ॥ ॥

चक्षुषी ह वाऽअस्य शुक्रामन्थिनौ । तद्वाऽएष एव शुक्रो य एष तपति तद्यदेष एतत्तपति तेनैष शुक्रश्चन्द्रमा एव मन्थी ॥ १ ॥ तꣳ सक्तुभिः श्रीणाति । तदेनं मन्थं करोति तेनोऽएष मन्थ्येतौ ह वाऽआसां प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्जानीयुः ॥ २ ॥ तयोरत्तैवान्यतरः । आद्योऽन्यतरोऽत्तैव शुक्र आद्यो मन्थी ॥ ३ ॥ तयोरत्तैवान्यतरमनु । आद्योऽन्यतरमन्वत्तैव शुक्रमन्वाद्यो मन्थिनमनु तौ वाऽअन्यस्मै गृह्येतेऽअन्यस्मै हूयेते शण्डामर्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यत्तथा ॥ ४ ॥ यत्र वै

योनिः प्रजाः पाहीति सादयत्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाहैष ते योनिः प्रजाः पाहीति ॥१२॥ द्वौ प्रोक्षितौ यूपशकलौ भवतः । द्वावप्रोक्षितौ प्रोक्षितं चैवाध्वर्युरादत्तेऽप्रोक्षितं चैवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च शुक्रमेवाध्वर्युरादत्ते मन्थिनं प्रतिप्रस्थाता ॥१३॥ सोऽध्वर्युः । अप्रोक्षितेन यूपशकलेनापमार्ष्ट्यपमृष्टः शण्ड इत्येवमेव प्रतिप्रस्थातापमृष्टो मर्क इति तदाददानाविवासुररक्षसेऽअपघ्नतो देवास्त्वा शुक्रपाः प्रणयन्त्वित्येवाध्वर्युर्निष्क्रामति देवास्त्वा मन्थिपाः प्रणयन्त्विति प्रतिप्रस्थाता तदेतौ देवताभ्य एव प्रणयतः ॥१४॥ तौ जघनेनाहवनीयमरत्नी संधत्तः । ताऽउत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थातानुसृजन्ताविवानाधृष्टासीति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्येष्यन्तौ वाऽएतावग्निं भवतोऽत्येष्यन्तौ तस्माऽएवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न हिनस्ति ॥१५॥ सोऽध्वर्युः पर्येति । सुवीरो वीरान्प्रजनयन्परीहीत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाह सुवीरो वीरान्प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति ॥१६॥ अथ प्रतिप्रस्थाता पर्येति । सुप्रजाः प्रजाः प्रजनयन्परीहीत्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाह सुप्रजाः प्रजाः प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति ॥१७॥ तावपिधाय निष्क्रामतः । तिर एवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्यापोर्णुतः पुरस्तात्तिष्ठन्तौ जुहुत आविरेवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्व एव पश्यति तस्मात्पराग्रेतः सिच्यमानं न कश्चन पश्यति तदु पश्चात्प्रजायमानꣳ सर्व एव पश्यति ॥१८॥ तौ जघनेन यूपमरत्नी संधत्तः । यद्यग्निर्नोद्बाधेत यद्युऽअग्निरुद्बाधेताप्यग्रेणैव यूपमरत्नी संदध्याताꣳ संज-

ग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषेत्येवाध्वर्युः संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषेति प्रतिप्रस्थाता चक्षुषोरेवैते आरम्भणे कुरुतश्चक्षुषी एवैतत्संधत्तस्तस्मादिमे अभितोऽस्थिनी चक्षुषी संहिते ॥१९॥ सोऽध्वर्युः । अप्रोक्षितं यूपशकलं निरस्यति निरस्तः शण्ड इत्येवमेव प्रतिप्रस्थाता निरस्तो मर्क इति तत्पुराक्रतिभ्योऽसुररक्षसे अपहतः ॥२०॥ अथाध्वर्युः । प्रोक्षितं यूपशकलमाहवनीये प्रास्यति शुक्रस्याधिष्ठानमसीत्येवमेव प्रतिप्रस्थाता मन्थिनोऽधिष्ठानमसीति चक्षुषोरेवैते समिधौ चक्षुषी एवैतत्समिन्द्धे तस्मादिमे समिद्धे चक्षुषी ॥२१॥ तत्र जपति । अछिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामेत्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते ॥२२॥ अथाश्राव्याह । प्रातः-प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृतेऽध्वर्युर्जुहोति तदनु प्रतिप्रस्थाता तदनु चमसाध्वर्यवः ॥२३॥ तौ वै पुरस्तात्तिर्यञ्चौ जुहुतः । चक्षुषी वा एतौ तत्पुरस्तादेवैतच्चक्षुषी धत्तस्तस्मादिमे पुरस्ताच्चक्षुषी ॥२४॥ अभितो यूपं तिर्यञ्चौ जुहुतः । यथा वै नासिकैवं यूपस्तस्मादिमे अभितो नासिकां चक्षुषी ॥२५॥ तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयेते । एतेनो हैतौ तदुदश्नुवाते यदेनौ सर्वं सवनमनुहूयते यद्वेवैतौ सर्वं सवनमनुहूयत एतौ वै प्रजापतेः प्रत्यक्षतमां चक्षुषी ह्येतौ सत्यं वै चक्षुः सत्यं हि प्रजापतिस्तस्मादेनौ सर्वं सवनमनुहूयते ॥२६॥ स जुहोति । सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहेति ॥२७॥ स यज्जुहोति । सा प्रथमा स प्रथम इति शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी एव प्रथमे सम्भवतस्तस्माज्जुहोति सा प्रथमा स प्रथम इति ॥२८॥ अथ सम्प्रेष्यति । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानां होत्राणां चमसाध्वर्यव उपावर्तध्वं शुक्रस्याभ्युन्नयध्वमिति सम्प्रैष एवैष

पुरोडाशम् ॥२९॥ स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्रसूत एवैतद्भिषज्यति तस्मात्सावित्रो भवति ॥३०॥ अथ यद्वारुणो भवति । वरुणो वाऽआर्पयिता तस्य एवार्पयिता तेनैवैतद्भिषज्यति तस्माद्वारुणो भवति ॥३१॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति ॥३२॥ स यदि हैतयापि सोमातिपूतं भिषज्येत् । इष्टा अनुयाजा भवन्त्यव्यूढे स्रुचावथैतैर्हविर्भिः प्रचरति पश्चाद्धि सोमोऽतिपवते पश्चादेवैनमेतेन मेधेनापिदधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेदथ यदा वपाभिः प्रचरत्यथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ॥३३॥ तदु तथा न कुर्यात् । ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवैतेषां पशूनां वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्वपेत् ॥३४॥ तस्य नपुंसको गौर्दक्षिणा । न वाऽएष स्त्री न पुमान्यन्नपुंसको गौर्यदह पुमांस्तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मान्नपुंसको गौर्दक्षिणाश्वा वा रथवाही सा हि न स्त्री न पुमान्यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥३५॥ ब्राह्मणम् ॥ ६ [५. ४.] ॥ ॥

ऐन्द्रवैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तस्यदेतया यजते वृत्रे ह वाऽइदमग्रे सर्वमास यदृचो यद्यजूंषि यत्सामानि तस्माऽइन्द्रो वज्रं प्राजिहीर्षत् ॥१॥ स ह विष्णुमुवाच । वृत्राय वै वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्माऽइन्द्रो वज्रमुद्ययाम स उद्यताद्वज्राद्वृत्रो बिभयां चकार ॥२॥ स होवाच । अस्ति वाऽइदं वीर्यं तन्नु ते प्रयच्छानि मा तु मे प्रहार्षीरिति तस्मै यजूंषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम ॥३॥ स होवाच । अस्ति वाऽइदं वीर्यं तन्नु ते प्रयच्छानि मा तु मे प्रहार्षीरिति तस्माऽऋ-

चः प्रायछत्तस्मै तृतीयमुच्चयाम ॥४॥ अस्ति वाऽइदं वीर्यं तन्नु ते प्रयछानि मा तु मे प्रह्वार्षीरिति तस्मै सामानि प्रायछत्तस्मादप्येतर्ह्येवमेवैतैर्वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रेऽथऽर्ग्भिरथ सामभिरेवᳲ ह्यस्माऽएतत्प्रायछत् ॥५॥ तस्य यो योनिराशय आस । तमनुपरामृश्य संलुप्याछिनत्सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये त्रिधातुरिवैषा विद्याशेत तस्मात्त्रैधातवी नाम ॥६॥ अथ यदैन्द्रावैष्णवᳲ हविर्भवति । इन्द्रो हि वज्रमुदयछद्विष्णुरन्वतिष्ठत ॥७॥ अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरसंमितैषेष्टिस्तस्माद्द्वादशकपालो भवति ॥८॥ तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाᳲ रूपमथ यवमयं तदृचाᳲ रूपमथ व्रीहिमयं तत्साम्नाᳲ रूप तदेतत्त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥९॥ सर्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे । सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सोऽस्मात्पराङिव भवत्येतावान्वै सर्वो यज्ञो यावानेष त्रयो वेदस्तस्यैतद्रूपं क्रियतऽएष योनिराशयस्तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ् भवति ॥१०॥ सर्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे । सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्यत्त्रैधातव्यनया मेऽपीष्टमसदनयापि सूयाऽइति तस्माद्वाऽएषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥११॥ अथो यः सहस्रं वा भूयो वा दद्यात् । तस्य हाप्युदवसानीया स्याद्रिरिचान इव वाऽएष भवति यः सहस्रं वा भूयो वा ददात्येतद्वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदस्तत्सहस्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्याप्युदवसानीया स्यात् ॥१२॥ अथो ये दीर्घसत्त्रमासीरन् । संवत्सरं वा भूयो वा तेषाᳲ हाप्युदवसानीया स्यात्सर्वं वै तेषामाप्तं भवति सर्वं जितं ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्वमेषा तस्मादु ह तेषामप्युदवसानीया

स्यात् ॥१३॥ अथो हैनयाप्यभिचरेत् । एतया वै भद्रसेनमाजातशत्रवमारुणिरभि-
चचार क्षिप्रं किल स्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वाऽएनयेन्द्रो वृत्र-
स्यास्थानमछिनदपि ह वाऽएनयास्थानं छिनत्ति य एनयाभिचरति तस्मादु हैन-
याप्यभिचरेत् ॥१४॥ अथो हैनयापि भिषज्येत् । यं न्वेवैकयर्चा भिषज्येदेकेन
यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्किमु यं त्रयेण वेदेन तस्मादु हैनयापि भि-
षज्येत् ॥१५॥ तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददा-
ति न वै ब्रह्मा प्रचरति न स्तुते न शंसत्यथ स यशो न वै हिरण्येन किं चन
कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥१६॥ तिस्रो धेनूर्होत्रे
। भूमा वै तिस्रो धनेवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥१७॥ त्रीणि वा-
सांस्यध्वर्यवे । तनुते वाऽअध्वर्युर्यज्ञं तन्वते वासांसि तस्मात्त्रीणि वासांस्यध्व-
र्यवे गामग्नीधे ॥१८॥ ता वाऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति
द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसंमितैषेष्टिस्तस्माद्द्वादश
वा त्रयोदश वा दक्षिणा भवन्ति ॥१९॥ ब्राह्मणम् ॥ ७ [५. ५.] ॥ चतुर्थः प्रपा-
ठकः ॥ कण्डिकासंख्या१३१ ॥ पञ्चमोऽध्यायः [३५.] ॥ ॥ अस्मिन्काण्डे कण्डिका-
संख्या ४७१ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे सवनाम पञ्चमं काण्डं समाप्तम् ॥५॥ ॥

## EXTRACTS FROM THE COMMENTARY OF SÂYANÂCÂRYA.

काश्चित्संस्थाः समुदितास्तुर्येऽग्निष्टोमपूर्विकाः । काण्डे तु पञ्चमे वाजपेयः प्रस्तूयते त-
तः ॥ राजसूयः सम्पन्न(श्च) मन्त्राम्नानक्रमेण तु । [illegible]नुदिष्टत्वादङ्गतास्य नो वचः ॥ वै-
शेषिकास्तु वक्ष्यन्ते यज्ञद्वयगता गुणाः । व्याख्यायते तन्निपुणं ब्राह्मणं तद्विधायकम् ॥ तत्र
वाजपेयं विधातुं प्रस्तौति देवाश्च वाऽइति ॥१॥ आजिमाजन्त अधावन् अज गतिक्षेपणयोः
आजिर्नाम धावनप्रदेशस्यावधिर्भूमिविशेषः ॥३॥ यद्वाऽउत्तरत्र यूपारोहणं स्वो रोहावेति म-

न्त्रलिङ्गात्स्वर्गारोहणप्रतिनिधित्वेन वक्ष्यते ततः स्वर्गाद्भूपाद्यूपादवरोहणं जानश्रुतेयपूर्वकमित्यर्थः प्रत्यवरोहलिङ्गादनुमीयतऽइत्याह तद्धे हेति । अथवा वाजपेययाजिनोऽग्नेष्ठा (? °नो सम्ना Cod.) साम्राज्येनाभिषिञ्चामीत्याद्यैर्मन्त्रलिङ्गैरग्न्यादिसाम्राज्येऽभिषिक्तत्वादेव [°देव च देव Cod.] सोऽपि मनुष्यं प्रति गजादिवाहनान्न प्रत्यवरोहेदिति प्रत्यवरोहणनिषेधो विहितस्तैत्तिरीयके तस्माद्वाजपेययाजी न कं चन प्रत्यवरोहतीति न च प्रत्यवरोहणं विहितम् आपस्तम्बेन तु तन्निषेधस्तदुपायश्च दर्शितः यावज्जीवं न कं चन प्रत्यवरोहेद्बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेतेति तस्मादुभयत्रानुग्राहकमिदं ब्राह्मणमित्याह । जानश्रुतेः पुत्रेण औपाविनाम्नैकेन राजर्षिणा प्रत्यवरूढं प्रत्यवरोहः कृतः भावे निष्ठा इतश्चानिञ इति (पा° ४. १. १२२) जनश्रुतेः प्रत्ययः ॥५॥ तस्मादस्य यजमानस्य प्रजा पापीयसी अतिशयेन दारिद्र्यवती भवितोर्भवितुमीश्वरा समर्थेत्यतो हेतोर्वाजपेयो न कर्तव्यः ॥९॥ तत्र विदुष एव यष्टृत्वं विदुषामेव याजयितृत्वमित्युभयमुपपादयति य एवमेतमिति यः पुमानेतं वाजपेययज्ञमृगादिवेदत्रयेण क्लृप्तं सेतिकर्तव्यत्वेन विहित इति विद्यात् जानीयात् ये च प्रजज्ञयः प्रज्ञातवन्तः साङ्गोपाङ्गकर्मज्ञानवन्तः ऋत्विजः तऽएनमन्वादिष्टं विद्वांसं यष्टारं याजयेयुः । अतः साधारणैर्वाजपेययागो न कर्तव्य इत्यभिप्रायेण न वाजपेयेन यजेतेत्युक्तम् ॥१०॥ संवृङ्क्ते संवर्जयति वशीकरोति ॥१४॥ आङ् मर्यादायाम् श्वःसुत्यायाः सुत्यादिनात्पूर्वं नोत्तरत्रेत्यर्थः ॥१६॥१॥१॥

एवं विहिते वाजपेये ग्रहविशेषा द्वितीयब्राह्मणेऽभिधीयन्ते प्राकृतास्त्वतिदिश्यन्ते तत्र तावदंशुग्रहं विधत्ते अंशुमिति अंशुं सोमग्रहं सोमद्रव्येण गृह्णीयात् अंश्वदाभ्ययोरप्राकृतत्वेन चोदकादप्राप्तयोरिह विधानं युक्तम् अत एवापस्तम्बः भ्रातृव्यवतादाभ्यो ग्रहीतव्यो बुभूषतांशुस्तौ न सर्वत्र ग्रहीतव्यौ वाजपेये राजसूये सत्रे सह (?) इति । अथ प्रकृतिगतानुपांश्वन्तर्यामादीनतिदिशति अथैतानिति प्रज्ञातान्प्रसिद्धानाग्निष्टोमिकानग्निष्टोमे विहितान्ग्रहानाग्रयणपर्यन्तान्गृह्णीयात् उपांश्वन्तर्यामौ ऐन्द्रवायवमैत्रावरुणाश्विनान् शुक्रामन्थिनौ आग्रयणं च ॥१॥ पृष्ठ्यान् अतिग्राह्यान् ते हि पृष्ठस्तोत्रसम्बन्धात्पृष्ठ्या इत्यर्थः पृष्ठ्ये (ष्ठ्य Cod.) षडहे प्रतिदिवसमेकैकस्य विश्वजिति सर्वपृष्ठे चैकाहे ग्रहणात्पृष्ठ्यसंज्ञा see ४, ४, ५, २-१३. ॥२॥ उपयामगृहीतोऽसि पृथिव्यात्मकेन पात्रेण गृहीतोऽसि ते तव एष खरप्रदेशो योनिः स्थानम् ॥४॥ अन्धसी अन्ने ॥१०॥ प्राकृतं सोमक्रयणविधिमनूद्य परिस्रुत्क्रयणं विधत्ते अथ यत्रेति यत्र प्रदेशे राजानं सोमलतां क्रीणीयात् तस्य दक्षिणे प्रतिवेशे स्थाने केशवात्पुरुषात्सीसद्रव्येण परिस्रुतं क्रीणीयात् लोके हि सुरा तत्साधनभूतैः (? सुतरांत्सा° Cod.) परिपक्वद्रव्यैः क्रियते अत्र तु (रु Cod.) सुरासाधनाय (°याः Cod.) पर्याप्तपरिपाकैः शष्पैर्निष्पन्नो (°कैः शष्पो नि° Cod.) रसः परिस्रुदित्युच्यते । पुमान् पुंलक्षणवान् श्मश्रुयुक्तः । केशबाहुल्यवत्त्वेन पुमांश्च न भवति केशबाहुल्यं तु स्त्रीलक्षणम् अतः केशवः क्लीवः पुरुषः स्त्रिया अधिकः पुरुषान्न्यूनः । सीसमप्ययसोऽधिकं हिरण्यात्तु न्यूनम् ॥१४॥ पुरोऽक्षं शकटस्याधस्तादक्षस्य पुरोभागे एकम् पश्चादक्षमक्षस्य पश्चाद्भागे अपरम् ॥१५॥ नेष्टा नाम ऋत्विगध्वर्युवर्गे तृतीयः । प्रपादयन्ति [हविर्धानं] प्रवेशयेत् । हविर्धानस्य दक्षिणातो द्वारं कृत्वा तेन सोमग्रहपात्राणि सुराग्रहपात्राणि च प्रवेशयन्ति । व्यत्यासं व्यत्यस्य व्यत्यस्य ॥१६॥ अक्षस्य

पश्चाद्भागं प्रति सोमग्रहमध्वर्युर्नातिक्रामयेत् एवं नेष्टापि सुराग्रहं शकटाक्षस्य पुरोदेशं नाति-
हरेत् ॥१७॥ उपर्युपर्येवाक्षमक्षस्य संनिकृष्टोपरिभागऽएव see पा° ८. १. ७. । यथा मुञ्जतृणा-
दिषीकां मध्यवर्ति तृणं विवृहेत्पृथक्कुर्यात् ॥१८॥ अथ प्राकृतावुक्थ्यध्रुवग्रहौ दर्शयति अ-
थोक्थ्यमिति । द्विविधग्रहाणां होमकालं भक्षणं च विधत्ते अथैतानिति तान्प्रातःसवने गृ-
हीतान्सोमग्रहानुत्तमे स्तोत्रे तृतीयसवने बृहत्स्तोत्रे वाजपेयसंस्थापननिमित्ते स्तुते सति
ऋत्विक्चमसेष्ववनयनं कृत्वा जुहुयुः भक्षयेयुश्च   तत्प्रसङ्गात्सुराग्रहाणां मधुग्रहस्य (च) मा-
ध्यन्दिनसवनमध्ये विनियोगो भविष्यतीत्याह अथ माध्यन्दिनऽइति उद्यतऽइति वद व्य-
क्तायां वाचि कर्मणि यकि सम्प्रसारणम् एतेषां होमस्तावत्तद्विनियोगप्रकारोऽस्मिन्नेवाध्याये
(५. २८.) वक्ष्यतऽइत्यर्थः । अतः सोमग्रहहोमभक्षणप्रतिपादनानन्तरं तस्याम्नातस्य सुराग्रह-
विनियोगप्रतिपादकवाक्यस्य पाठानुसंधानं कार्यम् ॥१९॥२॥१॥

तृतीये पशुतन्त्रमभिधीयते तत्र तावद्वाजपेयस्याग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थालक्षणस-
द्भावेन सर्वक्रत्ववरोधकत्वमस्तीति वैदिकत्वप्रसिद्धिः तत्तत्क्रतुसाधारणपशुसद्भावे सत्युपपद्यते
नान्यथा   अतस्तानग्निष्टोमादिगतानाग्नेयादिसवनीयपशून्विधत्ते आग्नेयमिति । तत्राग्निष्टो-
मस्य द्वादश स्तोत्रशस्त्राणि   उक्थ्यस्य (उक्थ Cod.) उक्थत्रयेण पञ्चदश   षोड-
शिनः षोडशिस्तोत्रेण सह षोडश   वाजपेयस्य बृहत्स्तोत्रेण सह सप्तदश   अतिरात्र-
पर्यायत्रयेण सह षोडशिपक्षे एकोनत्रिंशत् अन्यदा अष्टाविंशतिः पशूनाम्   तत्तत्क्रतुसा-
धारण्यं द्योतयितुमग्निष्टोमादिपदाभिधानम् अग्निः स्तूयतेऽस्मिन्नित्यग्निष्टोमो नाम साम तस्मि-
न्विषयभूते आग्नेयमालभते एतेन पशुनास्मिन्वाजपेये अग्निष्टोमसंस्थं क्रतुमेवानुष्ठितवान्भव-
तीत्यर्थः एवमुत्तरत्रापि योज्यम् । उक्थेभ्यः (उक्थ्ये° Cod.) तृतीयसवने स्तूयमानेभ्यो
ऽन्येभ्यस्त्रिभ्य उक्थ्यस्तोत्रेभ्यः । षोडशिस्तोत्राय ॥१॥ सप्तदशसंख्यापूरकाय बृहत्स्तोत्राय
अन्तिममिदं बृहत्स्तोत्रं वाजपेयस्यासाधारणं लिङ्गम् । कथं वाजपेयेऽतिरात्रान्तर्भाव इत्याशङ्-
क्यानेन सारस्वतालम्भनेनातिरात्रस्यान्तर्भावं दर्शयति तदेतदिति ॥२॥ अथास्य यज्ञस्यासा-
धारणं पशुं विधत्ते अथ मरुद्य इति । दुर्वेदि लब्धुमशक्ये ॥३॥ आवृत् तन्त्रम् अनुशंसति
अनुशंसितवान्भवतीति भूतार्थपरत्वेन व्याख्येयम् एष वै इन्द्रस्यासाधारणो ग्रहः ग्रहणमन्त्रे
केवलेन्द्रस्यैव देवतात्वेन प्रतिपादनात् निःशेषेण केवलमिन्द्रस्यैवायमिति निष्केवल्यो ग्रहः
माध्यन्दिने सवने हि माहेन्द्रग्रहग्रहणम् तच्च सवनमिन्द्रस्येति नियतम् ॥४॥ पश्ववदा-
नानामथैकध्येन श्रपणं सिद्धान्तयितुं द्वैध्यं (द्वैविध्यं Cod.) पूर्वपक्षयति द्वेधावदानानि श्र-
पयन्तीति कात्यायनस्तु उक्तं वपाप्रचरणमवदानानां द्वेधा श्रपणं च विकल्पेन सूत्रयामास
(का° १४, २, १६, २१-२३.) । हृदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यो (°त्या Cod.) दोरुभे
पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि दक्षिणो (°णं Cod.) दोः सव्या श्रोणिः गुद-
तृतीयमिति सौविष्टकृतानीत्येतानि सर्वाण्यवदानानि द्विधा (!) पृथक् श्रपयन्ति पक्वानि
कुर्युः दैवतानां हृदयादीनां सौविष्टकृतानां त्र्यङ्गानां च पृथक् श्रपणमित्यर्थः । हविषामव-
दानप्रकारमाह ततोऽर्धानामिति अथ जु[illegible] कृत्वा अर्धानां प्रधानहविषां हृद-
यादीनां मध्ये [illegible]द्विर्द्विरवद्येत् एवमेकादशावदानान्यवदाय पुनराज्येनैकवारमभि-
घारणं कुर्यात् एवमुपस्तरणाद्विरवदानपुनरभिघारणैर्हविषां चतुरवत्तत्वं सम्पादितम् अनन्तरं

स्विष्टकृदर्थान्यवदानानि घृतेन प्रत्यञ्ज्यात् अथोपभृतीति वाक्यं स्पष्टार्थम् अत्र उपस्तरणावदाने सकृत्सकृद्भिरभिघारणमिति चतुरवदानसम्पत्तिः अपात्रस्थितानि अवत्तशेषाणि न प्रत्यञ्ज्याउत्तरत्र विनियोगाभावात् अर्धानां हृदयादीनां प्रत्येकं देवतार्थं स्विष्टकृदर्थं च द्विरवद्यतीति यत् तेन द्विरवदानेन सा वशा कृत्स्ना सम्पूर्णा भवति यथेतरः पशुस्तथेत्यर्थः । अथार्धानीति यागार्थार्धहविषः पृथक्पन्नानि त्र्यङ्गानि मनुष्यसम्बन्धिन्यै प्रजायै ददाति ॥५॥ तदिदं माहेन्द्रान्ते वपाचरणं हविषां द्विधा (!) श्रपणं च दूषयति तदु तथेति । अथ प्राकृतपशुवपाप्रचरणाकाले [=प्रातःसवने] मारुतीवपाप्रचरणं हविषामैकध्येन श्रपणं च विधत्ते तस्माद्यत्रैवेत्यादिना ॥६॥ पश्वन्तराणि विधत्ते अथ सप्तदशेति । तूपरा अविषाणाः । श्यामाः शुक्लकृष्णावर्णाः । मुष्कराः मुष्कवृद्धिः सर्वाङ्गवृद्धिमन्तरेण न घटतऽइति पुष्टाङ्गाः ॥७॥ न हि प्रजापतेः परमुत्कृष्टं पूर्वभावि किंचिदप्यस्ति यदर्थं पशुरालभ्यते यद्यस्ति वागेवास्ति तस्या अव्यक्तशब्दब्रह्मत्वेन पूर्वमवस्थानादिति भावः ॥११॥ उक्तानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्यागस्य च प्राकृतपशुवपाहविर्भिः सह होमकालं विधास्यति तत्र तावत्पूर्वपक्षमाह तेषामावृद्यत्रेति । वामदेव्यं सामानुशंसति अनुशंसितवान्भवति ॥१२॥ तृतीयसवने अनुयाजयागानन्तरं शुक्लप्रभृतीर्व्यूहनादर्वागेषां प्राजापत्यानां हविर्यागः कर्तव्यः स एव कालोऽन्तः सवनीये कर्तव्यानां यागानामवधिः प्रजापतेः सर्वान्तमत्वादन्तत्वम् (सर्वोत्तम° Cod.) तस्मादन्तरूपे तस्मिन्काले क्रियमाणेन हविर्होमेन प्रजापतिमेवोज्जितवान्भवति । यत् यदि उक्तकालात्पुरा प्राकृतऽएव काले वपाहविर्भिः प्रचरेत् तर्हि मध्य (बाध्य Cod.) ऽएव प्रजापतिप्राप्तेरुत्तरकर्मकलापकरणमयुक्तमितीममर्थं प्रदर्शयितुं दृष्टान्तः यथायमिति यथा लोके पुरुषो यं मार्गं गमिष्यन्भवेत्तं लक्ष्यं देशं प्राप्य क्व कुत्र गच्छति लक्ष्यप्राप्तेः सिद्धत्वात् (?सन्नत्वात् Cod.) एवमेतत्काले होमकरणफलरूपप्रजापतिप्राप्तेः (°पा°तिप्राप्तेः Cod.) सिद्धत्वाउपरितनकर्मानुष्ठानं निःफलं स्यात् तस्मादनुयाजान्ते स्रुग्व्यूहनात्प्राक्पशुहविर्होम इति केषांचिन्मतम् ॥१३॥ तद्दूषयन्सिद्धान्तयति तदु तथेति । एतेषां पशूनां सप्तदशयागात्मकत्वात्प्रतियागं याज्यापुरोऽनुवाक्याभेदमाशङ्क्य देवतैक्यात्सह प्रदानमिति मन्वानो याज्यापुरोऽनुवाक्ययोरैक्यमाह एकानुवाक्येति । अनुवाक्यापाठात्प्रागध्वर्युणा कर्तव्ये ऽनुवचनप्रैषे विशेषं विधत्ते प्रजापतयऽइति । हे मैत्रावरुण प्रजापतये देवतायै छागानां पशूनां हविषोऽवदीयमानस्यार्थाय अनुवचनं कुरु । आश्रावणानन्तरकर्तव्यप्रैषेऽपि विशेषं विधत्ते प्रजापतयऽइति अत्रापि मैत्रावरुणः सम्बोध्यः । अथ होतुः कर्तव्यं दर्शयति वषट्कृतमिति होत्रा याज्यान्ते वषट्कारे कृते सति जुहोति अध्वर्युरिति शेषः ॥१४॥३॥१॥ ॥

अथ माध्यंदिनसवने कर्तव्यः प्रयोगोऽभिधीयते तत्र यजमानाभिषेकमाजिधावनं(च) प्राधान्येन विधत्ते तं वाऽइति ॥१॥ माहेन्द्रग्रहात्पूर्वम् ॥२॥ पूर्वं रथवाहने काष्ठविशेषे स्थापितमाजिधावनाय सज्जीकर्तुं तस्य रथस्य तस्मात्काष्ठादवहरणं समन्त्रकं विधत्ते अथ रथमिति ॥३॥ धूरित्यश्वबन्धनस्थानं युगम् । अन्तर्वेदि सौमिकवेदिमध्ये प्रादक्षिण्येनानयेत् ॥४॥ उदच्य उद्यम्य ॥५॥ ककुद्मान् (!) ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते तत्समानेरुन्नतावयवैस्तद्वा- । सेत् सिनुयात्साधयतु वेति ॥६॥ दक्षिणा दक्षिणातो युग्यं युगस्य वोढारम् । सव्यायुग्यं सव्यभागयोजनीयः- दीर्घश्छान्दसः ॥७॥ गन्धर्वाः नक्षत्राणीत्यर्थः

॥८॥ इन्द्रस्याश्व-इव दक्षिणः प्रवृजः पुष्टाङ्गः श्रिया शोभया युक्त एधि भव । प्रष्टिर्नाम पादत्रयोपेतो भोजनपात्रादिकाधारः (°दिवाधारः Cod.) तद्वदश्वैस्त्रिभिर्युक्तं रथं कुर्यात् अत्र पूर्वमश्वद्वयस्य युक्तत्वात्तृतीयस्य प्रष्टित्वमुक्तम् ॥९॥ चतुर्थस्याश्वस्यानुगमनं विधत्ते अधिप्रष्टीति तृतीयस्याश्वस्य युगप्रदेशे अधिः सप्तम्यर्थो वृत्रादीमत्रेणायुक्तः (ग्रीवादिबध्रेणायुक्तः?) सन्नेवानुगच्छेत् । यदैष यजुर्युक्तो रथोऽध्वर्यवे दीयते तस्मिन्प्रदानसमये चतुर्थस्य रथयोजनं दर्शयति तं यत्रेति ॥१२॥४॥१॥

विहितमाजिधावनमनूद्य प्रशंसति तद्यदाजिमिति । नाभिदघ्ने नाभिमात्रे उच्छ्रिते उन्नते ॥१॥ सप्तदशदुन्दुभीननुवेद्यन्तं वेदिसमीपे प्रतीचः आग्नीध्रीयपश्चिमप्रदेशे स्थितान्संमिन्वन्ति वादयितुमाबध्नन्ति (वेद° Cod.) ॥६॥ संवाक् समुदिता वाक् ॥११॥ प्रव्याधान् प्रकर्षेण बलाधिक्येन विमुक्तो वाणो (षानाणो Cod.) यावति देशे लक्ष्यं विध्यति ता[वा]नेकः प्रव्याधः । तिर्यङ् स्थौल्येन विस्तारवान् अन्वङ् आयामवान् ॥१३॥ राजन्योऽपि निय इत्यक्षरविश्लेषाच्चतुरक्षरः ॥१४॥ अदः अमुष्मिन्विप्रकृष्टे काले ॥१६॥ अथ यजमानस्य रथारोहणानन्तरमध्वर्युशिष्यो वा अन्यो ब्रह्मचारी वा एतत् वक्ष्यमाणं मन्त्रमधीयात्स्मरेत् स तमेव रथमन्वास्थाय तूष्णीमारुह्य वाजिन इति मन्त्रं वाचयति यजमानमिति शेषः । काष्ठामाजिधावनस्यावधिभूतां सप्तदशप्रव्याधान्ते निर्मितामौदुम्बरीं शाखां लक्ष्यभूतस्वर्गात्मिकां स्वर्गो वै लोकः काष्ठेति श्रुतेः वेगेन गच्छत ॥१७॥ प्रत्युपतिष्ठते आजिधावनं कृत्वा तीर्थदेशं प्रत्यागच्छतोऽश्वान्प्रति नैवारचरुणा सह गच्छेत् ॥२५॥ सुराग्रहाणां मधुग्रहस्य च विनियोगप्रकारो माध्यन्दिने सवने वक्ष्यतऽइति द्वितीयब्राह्मणे (२.११.) प्रतिज्ञातम् तमिदानीमवसरप्राप्तं दर्शयितुमाह अथैतेषामिति । आजिं प्रति सरिष्यतां रथानां यजमानरथव्यतिरिक्तानामेकस्मिन्रथे वैश्यराजन्ययोरन्यतरः सुराग्रहान्प्रतिग्रहीतुमासीनो भवति स रथादवरुह्योत्तरस्यां श्रोणावुपविशेत् । हविर्धानस्य पूर्वद्वारेण । शालां जघनेन पत्नीशालायाः पश्चिमप्रदेशादागत्योत्तरस्यां वेदिश्रोणावुपविश्य उक्तयोरन्यतरस्य पाणावेकं सुराग्रहं प्रयच्छन् । इमं मधुग्रहम् । सुराग्रहप्रतिग्रहीतारं वैश्यं विध्यति बाधते । प्रतिगृहीतानां तु सुराग्रहाणामैहिकव्यवहारं दर्शयति तैः स यं भोगमिति । ब्रह्मप्रतिगृहीतस्य मधुग्रहस्य च स यमिति ॥२८॥५॥१॥

अथ यूपारोहणमुच्यते । तत्र प्रथममाप्तिहोमं विधित्सुराह अथ स्रुवमिति आज्यं विलाप्यते अस्यामित्याज्यविलापनी स्थाली स्रुववचनं जुह्वपभृन्निवृत्त्यर्थम् । आपये स्वाहेत्याप्तिलिङ्गसमवायात् प्राणभृत उपदधातीतिवदाप्त्यनाप्तिसमुदाये आप्तिशब्दः ॥१॥ संवत्सरस्य यज्ञात्मप्रजापतेरेतानि नामानि ॥२॥ क्लृपिधातुनिष्पन्नशब्दयुक्तमन्त्रकरणिका आहुतीः ॥३॥ वेष्टितः यथा यूपो न दृश्यते तदाच्छादनं वा कार्यम् विग्रथितः यूपस्यैकत्र प्रदेशे वाससां ग्रन्थनं वा कार्यम् ॥५॥ दारुमयत्वापवादाय गौधूममिति गोधूमपिष्टमयम् । त्वक् अश्वत्थादिवृक्ष-इव बाह्यत्वग्रहितः ॥६॥ यूपस्याग्रे निम्नप्रदेशः कार्यः । गर्तवान् अनो नुडिति (पा° ८.२.१६.) अन्नन्तात्परस्य मतुपो नुडागमो विहितः व्यत्ययेनाकारान्तादपि भवति । अतीक्ष्णाग्रः अतनूकृताग्रः स्थूलाग्रप्रदेशः । चतुर्विंशत्यङ्गुलपरिमितोऽरत्निः ॥७॥ उदानेष्यन् शालातो निर्गमयिष्यन् । कौशं कुशमयं दर्भमयं वासः अत्रापस्तम्बः क्षत्रस्य योनिरसीति दर्भमयं पत्नीमिति श्रुतिश्च भवति दर्भमयं परिधापयतीति  यद्वा क्रिमिकोशविकारभूतं वा-

सः तेन परित आच्छादयेत् । यद्वा कौशं कुशमयं (? यद्वा कौशमयं Cod.) चण्डातकं च-लनमुच्यते एवं ह्यभियुक्तोपदेशः अर्धोरुकं विलासिन्या वासश्चण्डातकं स्मृतमिति नृत्तोपा-यिकत्वेनाच्छादनीयमूरुकञ्चुकमर्धोरुकं (नृत्तोपयिक° Cod.) वासः (see अमर° २. ६. ११६.) । वसनस्य प्रदेशं विधत्ते अन्तरमिति दीक्षाकाले यद्वस्त्रं परिहितं तस्माद्बहिःप्रदेशे इत्यर्थः अन्तरशब्दो बहिर्योगे वर्तते । दर्भैरेव वासः कर्तव्यमित्यत्रोपपत्तिं दर्शयति जघनार्ध इत्या-दिना पूर्वदेशस्थाहवनीयसाध्ययाग्यज्ञः प्राच्यां दिश्यवस्थितः तस्य यज्ञस्य पश्चिमभागे पत्नी यज्ञस्य जघनार्ध इति निरूप्यते तां पत्नीमेतर्हि प्राचीं प्राङ्मुखां पूर्वदिगवस्थितं यज्ञं प्राप-यिष्यन्भवति तदुपायत्वेन दर्भमयवासःपरिधापनस्य मेध्यत्वापादकत्वमाह अस्ति वाऽइति ॥८॥ अथ निश्रेणीमिति निश्रेणी (!) यूपारोहणार्थं सोपानसदृशः काष्ठनिर्मितपदार्थः । निश्रयति यूपे निदध्यात् । तुशब्दः पक्षान्तरव्यावृत्त्यर्थः तथा हि एवं कृते सति उदग्भवति कर्मणि उद-गपवर्गता सिध्यति ॥९॥ शिरसा यूपमत्युज्जिहीते अतिक्रम्योद्गमयति यूपं शिरसा स्पृशन् तमतिक्रम्य स्वशिर उन्नमयेत् ॥१४॥ ऊषपुटैः ऊषक्षेत्रपांसव ऊषाः तानश्वत्थपत्रैः पुटीकृत्य तैः पुटैः यूपेऽवस्थितं यजमानमभिलक्ष्योदस्यन्ति ऊर्ध्वान्प्रतिदिशं प्रक्षिपेयुः । अतः पशुद्वारा ऊषाणामन्नत्वादूषपुटहननेन यजमानेऽन्नमेव निहितवान्भवति ॥१६॥ उपनद्धाः सम्बद्धाः । अश्वत्थेऽवस्थितान्मरुतः ॥१७॥ अवदृणीयादवदारयेत् अवधून्वीत विचालयेत् ॥१८॥ हिरण्य-मभिलक्ष्य यूपादवरोहेत् ॥२०॥ यो यूप[illegible]तरिक्षसध्यमाकाशे उपवेशनं जयति ॥२२॥ हविर्धाने इति द्वितीयाद्विवचनान्तं पदम् ते अग्रेण तयोरग्रप्रदेशम् ॥२३॥ आसन्द्या अजाजि-नेनाच्छादनं विधत्ते अथेति । विजायमानाः सुवानाः ॥२४॥१॥२॥ ॥

नैवारचरुप्रचारं विधत्ते बार्हस्पत्येनेति । प्रध[illegible]नैवाराज्यतेरनन्तरं कर्तव्यं वाजप्रसवीय-होमं विधातुं कालं विधत्ते तस्यानिष्ट इति तस्य नैवारस्य स्विष्टकृदनिष्टः अकृतो (°ष्टं अ-कृतो Cod.) भवति प्रधानयागादूर्ध्वं स्विष्टकृतः प्रागित्यर्थः । होमार्थमन्नसम्भरणं विधत्ते अ-थास्माऽइति अस्मै यजमानाय तदभिषेकार्थमन्नं सम्भरेत ॥१॥ [illegible]ति-क्रम्य यानि तदा स्मृतिपथमवतरन्ति तानि । तत्र ग्राम्यारण्यभेदेन चतुर्दशान्नान्यापस्तम्बेन सूत्रितानि तान्यपि यथोपस्मारपदेन ग्राह्याणि तिलमाषा व्रीहियवाः प्रियङ्गवणवो गोधूमा वेणुः श्यामाकनीवाराः जर्तिलाश्च (लश्च Cod.) गवीधुका आरणाजा (?) मर्कटका विज्ञेया गार्मुतसप्तमा (?) कुलत्थसप्तमा वेति बुद्धिस्थानि यानि वा तानि सम्भरेत् यथोपस्मारम-न्नानि सम्बिभृयादित्यत्र संख्याया अनुक्तेर्यावन्ति स्मर्यमाणानि तावन्ति सम्भ[illegible] भवति ॥२॥ संख्याविशेषं पूर्वपक्षयति तद्वैकऽइति । बुद्धिस्थानामपि सर्वेषां सम्भरणे प्राप्ते एकस्य निषेधति एकमन्नमिति ॥३॥ यदन्न न सम्भरेत्तस्य उद्ब्रुवीत (°वी Cod.) न सम्भृतमि-त्युच्चैस्तन्नाम ब्रूयात् । मिलितस्य सर्वस्यान्नाद्यस्यैकदेशं [illegible] गृहीत्वा वाजप्रसवशब्दयुक्तमन्त्रकरणकहोमान्कुर्यात् ॥४॥ यन्त्र्ये (!) नियमे अभ्यनुज्ञायाम् ॥१३॥ अत्र तु सरस्वत्यै वाच इत्यस्य स्थाने सरस्वत्यै वा वाच इति युष्मच्छब्दं प्रक्षिप्य प्रयोक्तव्य-मिति विधातुं पूर्वपक्षं सोपपत्तिकमुद्भावयति तदु हैकऽइति ॥१४॥ उज्ज[illegible]-णीका आहुतय उज्जितयः ॥१६॥ अत्राग्निरेकाक्षरेणेति प्रजापतिः स[illegible]क्षरेणेत्याद्यन्तयोर्ग्रह-णेन सर्वेऽपि [सप्तदश मन्त्राः] गृह्यन्ते । तेषां संग्रहेणायमर्थः [illegible]णेति चतुरक्षरम् अस्तु

श्रौषडिति चतुरक्षरम् यजेति द्व्यक्षरम् ये यजामहऽइति पञ्चाक्षरम् द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिरिति (see १, ५, २, १६. १७.) सप्तदशाक्षराणि विद्यन्ते तत्राग्न्यादिसप्तदशदेवाः एकाक्षरप्रभृत्येकैकाक्षरवृद्धियुक्तैः प्राणमनुष्यादीन्जितवन्तः ॥१७॥ नैवारहविषः प्रधानस्विष्टकृतोर्मध्येऽनुष्ठेयं कर्मजातमुपदर्श्य चोदकप्राप्तं स्विष्टकृद्यागादिकमनुसंधत्ते अथाहेत्यादि । अनुब्रूहि अनुवाक्यां पठेति सम्बोध्यो होता । नैवारहविःस्विष्टकृदाहुत्योर्मध्ये क्रियमाणेनान्नसम्भरणवाजप्रसवीयहोमादिना यज्ञरूपं प्रजापतिं जितवान्भवति । अनुवचनानन्तरमाश्रावणादिकं प्रकृतिवत्स्विष्टकृतः कार्यमित्यनुक्रामति आश्राव्येति वषट्कृते होत्रा याज्यान्ते वषट्कारे प्रयुक्ते सति जुहोति सौविष्टकृतं हविः ॥१८॥ माहेन्द्रग्रहानन्तरं तदीयं पृष्ठस्तोत्रमुपाकरोति आरम्भयेत् । तमासन्द्यामधिष्ठितमभिषिक्तं यजमानं स्तोत्राय प्रमीवति ज्ञापयेत् आह्वयेत् । स सुन्वन्नुपावरोहति आसन्द्याः सकाशात् स एवं स्तोत्रशस्त्रयोरन्ते समीपस्थितो भवेत् ॥१९॥ अत्र केचित्[illegible]नानन्तरं माहेन्द्रग्रहणं स्तोत्रशस्त्रे च कृत्वा स्विष्टकृदादिकं यजमानस्य पश्चादवरोहणमिच्छन्ति तद्दूषयितुमनुवदति तदेकऽइति एतत् माहेन्द्रग्रहणादिहोमान्तं तत्कर्म कृत्वा अथानन्तरं तदुक्तं स्विष्टकृदिडोपह्वानान्तं कर्म कुर्वन्ति तद्दूषयति तदु तथेति यथासन्द्यामासीनऽएव यजमाने सत्येव आत्मप्रजारूपे स्तोत्रशस्त्रे कुर्वीत् तर्हि यजमानमात्मप्रजाहीनं कुर्यात् असांनिध्यकरणेनेत्यर्थः (असान्निध्य° Cod.) ॥२०॥ अत उक्त एव पक्षः श्रेयानिति दर्शयितुं पुनः पठति अथेडामिति ॥ २१ ॥ २ ॥ २ ॥ ॥

ब्राह्मणक्षत्रियोभयकर्तृकसंख्यारूपो वा (?) वाजपेय उक्तः अथैकतरकर्तृको विकृतिभूतो राजसूयो विधास्यते । तत्राकृतवाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारः न तु तेनेष्टवतः राज्यफलादपि साम्राज्यफलस्यातिशयितत्वेनोत्तमफलसाधनयागानन्तरमवरफलहेतुक्रतुकरणस्यायुक्तत्वात् । इष्टिपशुसोमदर्विहोमैः शतप्रधानो (?) राजसूयः तत्र श्वो भूतेऽनुमत्यै पुरोडाशमष्टाकपालमित्यादिना (२. ३. २) विहिता इष्टयः अथ श्येनीं विचित्रगर्भामदित्याऽआलभत इत्यादिना (५. २. ८) विहिताः पशवः पवित्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रधृतिसंज्ञकाः सप्त सोमयागाः पञ्चवातीयादयो (२. ४. ४) दर्विहोमाः । तत्र पवि[illegible] प्रथमसोमयागे प्रवृत्तिसमानत्वेन वक्तव्याभावात्तं परित्यज्य तदवसाने कर्तव्यं तत्र (? तत्र Cod.) पूर्णाहुतिप्रभृति वैशेषिकमुत्तरतन्त्रमभिधीयते । पूर्णाहुतेः कालं कात्यायनः सूत्रयामास (१५, १, ४-७) पवित्रश्चतुर्दीक्षः सहस्रदक्षिणो माघीपक्षयजनीये दीक्षा तदन्ते पूर्णाहुतिर्गार्हपत्ये [illegible] इति तद्विधत्ते पूर्णाहुतिमिति आज्यपूर्णया जुह्वा हूयतऽइति पूर्णाहुतिः सा अना[illegible]तमत्वात्प्राजापत्या यत्तूष्णीं तत्प्राजापत्यमिति श्रुतेः । सूयै अभिषिक्तो भूयासम् ॥१॥ आरम्भणीयस्थानीयात्पवित्राख्यादग्निष्टोमादह्नः परस्मिन्नहनि कर्तव्यं विधत्ते अथ श्व इति । यागानुष्ठानस्याधारत्वेनानुज्ञाकरणादनुमतिः पृथिवी । दृषदमभ्याधातुमधः स्थापितायाः शम्यायाः पश्चाद्ये तण्डुलपिष्टलेशा अवशीयन्ते अधः पतन्ति । इरिणमूषरक्षेत्रम् । श्वभ्रप्रदरे [illegible] (°रे ?) विदीर्णप्रदेशे ॥२॥ भूमिर्द्विविधा शालिगोधूमादिसर्वसस्याढ्या तदयोग्या च तत्राद्यभूमिरूपानुमतिः द्वितीयभूमिरूपा निर्ऋतिः सैवानिष्टकारिणी पापदेवता ॥३॥ यथा लोके पुरुषो वस्त्रसहितः सन्नरण्यगमनं चोरादिभयान्न कामयते तद्वस्त्रं भयरहिते स्थाने निधाय चेद्गच्छति तदा अतिमुच्यते भयाद्विमुक्तो भवति तद्वद्वासोदानेन सूयमानमेनं यजमा-

[नमा]सङ्गो भयं न प्राप्नोति ॥५॥ तं यथेष्टीति प्रकृतीष्टिवद्वैषेष्टिः (प्राकृतीष्टि° Cod.) कार्या तेनानुमतीष्टिवत्तन्मध्ये वैकृतं तन्त्रं किंचिदपि न विद्यतऽइति भावः तद्यदेवेति अदः अमुष्मिन्विप्रकृष्टे सोमप्रकरणे प्रज्ञातं दीक्षणीयं दीक्षायां निरुप्तमाग्नावैष्णवं हविः तदेवेदानीं निरुप्यमाणं हविरिति तत्तादात्म्येन प्रशंसा । अवरार्ध्यः आदौ स्थितः परार्ध्यः यज्ञस्य चरमभागेऽवस्थितः ॥६॥ यथेष्टीति सर्वेष्टीनां पौर्णमासेष्टिः प्रकृतिभूता तद्वदत्रापि तदीयमङ्गजातं कुर्यात् । उत्सृष्टो गौरिति कियन्तं कालं शकटवहनादौ विनियोज्य पश्चाद्य उत्सृज्यते स उत्सृष्टः । अमुमन्तरिक्षे दृश्यमानं चन्द्रमसमुत्सर्गमुत्सृज्योत्सृज्य घ्नन्ति पौर्णमासीं लब्ध्वारभ्य देवाः घ्नन्ति प्रतिदिनमेकैककलापकार एव तस्य हननम् अमावास्याकालमारभ्योत्सृजन्ति प्रतिदिनं तस्यैकैककलावृद्धेः तस्मादस्य हविषः सोमदेवतासम्बन्धादेतादृशो गौर्दक्षिणात्वेन युक्तः ॥७॥ वहं नाम युगवहनदेशः ककुत्प्रदेशः । आण्डाभ्यामैन्द्रः सेचनसमर्थत्वात् ॥८॥ इष्टिपशुसोमदर्विहोमात्मकत्वाद्राजसूयस्य तदनुष्ठानेन यज्ञक्रत्विष्ट्यादयः सर्वेऽनुष्ठिता भवन्ति आग्रयणेष्टिरपि देवसृष्टत्वेन प्रशस्तत्वादत्रावरोद्धव्या ॥९॥ चातुर्मास्याख्यो यज्ञक्रतुरप्यवरोद्धव्य इत्यनेनाभिप्रायेण तदनुष्ठानम् ॥१०॥३॥२॥

एव चातुर्मास्यानि सामान्येन विधाय वैश्वदेवाख्यं प्रथमं पर्व विधत्ते वैश्वदेवेनेति । भूमानं भूयसीः प्रजाः ॥१॥ शुनो वायुः सीर आदित्यः । उभौ रसाविति see २, ६, ३. ४. । शुनासीरीयप्रयोगकालः सूत्रितः [का° १५. १. ११.] पवित्रदीक्षास्थाने शुनासीरीयमिति पवित्राख्यस्य सोमयागस्य (°गत Cod.) संवत्सरे यस्यां तिथौ दीक्षा कृता तस्यां फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व कार्यम् अर्थात्पवित्रशुनासीर्ययोर्मध्ये वैश्वदेवादीनि त्रीणि पर्वाणि क्रमेण चतुर्षु मासेषु कार्याणि । आहवनीयमग्निं पञ्चधा व्युह्य प्रतिदिशं मध्ये च पृथक् कृत्वा आज्यस्थाल्याः स्रुवेणोपघातमुपहत्योपहत्य गृहीत्वा जुहोति ॥४॥ तत्र पूर्वादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनं विधत्ते स पूर्वार्ध्यऽइति पूर्वार्धे भवः पूर्वार्ध्योऽग्निः ॥५॥ उत्पिबन्ते उत्कटं पिबन्ति प्राणिनो भक्षयन्ति ॥७॥ क्षणवन्ति हिंसन्ति क्षणु हिंसायाम् विवृहन्ति विश्लेषयन्ति ॥८॥ रथस्य सव्यभागे तिष्ठन्नेकः सारथिश्चैक इति द्वौ ॥९॥ आरोग्यकामस्यापीमं होमं विधत्ते स हैतेनेति । यस्तु गतासुरिव भवति तमप्यनेन होमेनाहरत्येव पुनर्जीवयत्येव ॥१०॥ इन्द्रस्तुरीयश्चतुर्थहविर्देवता यस्मिन्कर्मणि तदिन्द्रतुरीयम् । गवीधुका (!) आरण्यगोधूमाः । वहलायै वहं नाम ककुत्प्रदेशः तद्वत्यै षष्ठ्यर्थे चतुर्थी ॥११॥ वरुणो रुद्रश्चोभावप्यग्निरेव तथाच तैत्तिरीयके ते देवा अग्निमब्रुवन्निति प्रस्तुत्य स त्रेधात्मानं व्यकुरुताग्निं तृतीयं रुद्रं तृतीयं वरुणं तृतीयमिति । वास्तव्य इति रुद्रः खलु वास्तुभवः ग्रामाद्बाह्यो यज्ञभूमिश्मशानादिर्वास्तुः । गवीधुका अपि वास्तुभवाः अतो गवीधुकहविषो रुद्रदेवत्यत्वं युक्तम् । क्लीबे सत्यप्यधर्मेण क्रिया अयोग्येनानोवहनेन वारुणी ॥१३॥ तं राज्ञो विजितिसाधनत्वेन प्रशंसति अपामार्गैर्वाऽइति । अपामृजत अपमार्जनं कृतवन्तः ॥१४॥ एतेनापामार्गहोमेनापि न केवलं पञ्चवातीयहोमेन प्रतिसरं स्वरक्षामभिचार्यमाणः कुर्यात् । प्रतीचीनफलः स्वात्मानं प्रति गतैरवाङ्मुखैः (°र्वा° ?) फलैर्युक्तः । योऽभिचारकोऽस्मै यजमानाय किंचित्पीडादिकं कुर्यात् तमेवैतेनापामार्गहोमेन प्रतिमुखं धूर्वति हिनस्ति तत्कृतोऽभिचारस्तमेव प्रतिनिवृत्य (°त्यपि Cod.) हिनस्ति ॥२०॥४॥२॥

अथ त्रिषंयुक्तेष्टित्रयं विधित्सुः प्रथमं त्रिषंयुक्तमनुक्रामति आग्नावैष्णवमिति । त्रिभिर्ह-विर्भिः संयुक्तं तेन यजेत । देवा एतेन त्रिषंयुक्तेन सहायभूतान्कर्मकरान्पुरुषान्प्राप्तवन्तः ॥१॥ विष्णोरवतारस्वीकारेण मनुष्यसम्बन्धान्मनुष्याः सर्वे वैष्णवाः विष्ण्वधिष्ठिताः ॥२॥ पुरु-षवान् पुरुषसहायवान् । वामनो ह्रस्वाङ्गः ॥४॥ वर्चो ब्राह्मं तेजः ॥१॥ अवर्चसः अतेज-स्कस्य यद्यपि व्याप्तिः सर्वपदार्थव्यापनशक्तिरस्ति तथापि तया व्याप्त्यापि न खल्वर्थः प्र-योजनं विद्यते ॥१२॥ अथानन्तरदिवसकर्तव्यं द्विहविष्कं यागं विधत्ते अथ श्व इति । अनू-चीने पूर्वापरीभूते अहनी अनूचीनाहम् क्रियाविशेषणमेतत् वैश्वानरेष्ट्या पूर्वस्मिन्दिने यजेत वारुण्यापरस्मिन्दिने एवं भिन्नतन्त्रेणैतौ यागौ कार्यौ एकस्मिन्नेवाहनि वा समानतन्त्राभ्यां यष्टव्यमित्याह समानबर्हिर्भ्यामिति बर्हिरुपलक्षितं कृत्स्नं तन्त्रं समानं साधारणं ययोः ते समानबर्हिषी ॥१३॥ ग्रन्थिर्नाम पाशः । अयं दक्षिणाभेद इष्ट्योर्भिन्नतन्त्रत्वे वेदितव्यः समा-नतन्त्रत्वे हि एकेनैव द्रव्येण परिक्रीता ऋत्विजः कृत्स्नं प्रयोगजातं कुर्वन्ति ॥१७॥५॥२॥

प्रथमब्राह्मणे द्वादश रत्नहवींष्यनुदिनं क्रमेण कर्तव्यान्युच्यन्ते । अग्नी गार्हपत्याहवनी-यौ अरण्योः पृथक् पृथक् समारोप्य प्रतिदिवसं तत्तद्गृहं गत्वा तत्र तत्र निर्मथ्य यष्टव्यमिति सर्वेष्टिसाधारणमिदम् । रत्नं रत्नवत्प्रशस्तं गवेषणीयं वस्तु । तस्मै सेनान्यै सूयते तेनानु-ज्ञायते । तद्गृहगमनेन तं सेनान्यं स्वमात्मीयमनपक्रमिणमनतिलङ्घिनं कृतवान्भवति ॥१॥ शितिपृष्ठः श्वेतपृष्ठः । तस्या उपरिभागे अर्यम्णः सूर्यस्य एष परिदृश्यमानः पन्था मार्गः स च किरणसम्बन्धाच्छ्वेतः ॥२॥ सूयमानस्येति सुन्वतो यजमानस्यैव ॥३॥ कृताभिषेकस्य राज्ञो मुख्या स्त्री महिषी । दुहे दुग्धे लोपस्त आत्मनेपदेष्विति (पा° ७. १. ४१.) तलोपः ॥४॥ ग्रामं नयतीति ग्रामणीः वैश्यानां महत्तरः । पृषन् विन्दुमान् श्वेतरक्तकृष्णविन्दुयुतः । पृ-षतो गोर्यदस्ति एतद्रूपाणां भूमेति पदयोजना ॥६॥ क्षत्ता नाम यष्टिहस्तोऽन्तःपुराध्यक्षः सर्वेषां नियन्ता प्रतिहारापरपर्यायः । श्वेतः (!) शुक्लवर्णः ॥७॥ संग्रहीता नाम रथयोजिता । सव्यष्टपदेन संग्रहीतोच्यते । सयोनी समानस्थानौ । यमौ सहैवैकस्या मातुर्गर्भादुत्पन्नौ अ-नूचीनगर्भौ अनुक्रमेण पौर्वापर्येण जातगर्भौ ॥८॥ राज्ञः प्राप्तं षष्ठं भागं प्रजाभ्यो गृहीत्वा राज्ञे दोग्धि प्रयच्छतीति भागदुघः । पूषा नाम मार्गसंरक्षको देवः देवानां भागदुघः भागं दोग्धि स हि यजमानदत्तानि हवींषि मार्गे रक्षोभ्यः संरक्ष्य तांस्तान्देवान्गमयति । see २. ५. ८. ॥१॥ अक्षावापो नामाक्षाणां क्षेप्ता अक्षगोप्ता वा द्यूतकारः । गोविकर्तः मृगयासहायभूतो गो-हिंसको व्याधः । गवीधुकाः (!) अरण्यगोधूमान् । सम्पदः कामाय समृद्ध्यभिलाषसिद्ध्यर्थम् । सभायां सभास्थले द्यूतस्थाने यामिमां पणत्वेन कृतां गां घ्नन्ति कितवाः (see ४. ५. २३.) तत्र तामेतां (°मेतं Cod.) रुद्रोऽभिमन्यते क्रूरकर्मत्वात् स नस्य (?) रुद्रः परम्पर[या]धिदेव-नात्मक इत्याह अग्निर्वै रुद्र इति स चाग्निरधिदेवनं द्यूताधिकरणं स्थानम् अधिदेवनात्मक-स्याग्नेः अक्षावापाङ्गाराः (!?) तमेवमधिदेवनात्मकं रुद्रमेतेनाक्षावापगृहसम्भृतगवीधुकनि-ष्पन्नहविषा प्रीणाति तर्पयति । तस्य गृहेषु अनुमता अध्वर्युप्रभृतिभिरनुज्ञाता सती गौर्हन्यते गोविकर्तेन हिंस्यते अतो गोविकर्तगृहादानीतगवीधुका हननाभिमानिनो रुद्रस्य हविष्टे यो-ज्या इत्यर्थः । नखरो निःकोशोऽसिः कृपाणः । वालदाम्ना रोमस्रजा प्रबद्धमक्षावपनं पात्रम् अक्षा उप्यन्तेऽस्मिन्नित्यक्षावपनमक्षस्थानावपनपात्रम् । एतदु हीति तयोस्तद्द्वयं स्वं भ-

वति एकैकस्यैकैकमस्ति ॥१०॥ पालागलो नाम दूतः आपस्तम्बेन तु दूतविशेषपरत्वेन व्याख्यातः अध्वने स्वाहेति पालागलस्य गृहे जुहोत्यनृतदूतं ब्रुवतऽइति पालागलमनृतवादिनं दूतमिति ब्रुवते आचार्या इत्यर्थः । प्रहेयः राज्ञा प्रेष्यः प्रस्थापनीयः । तस्य दक्षिणेति उक्ष्णावेष्टितम् उक्ष्णाशब्देन स्नाय्वभिधीयते उक्षविकारैः स्नायुभिः वेष्टितं स्यूतं धनुः । चर्ममया वाणवन्त इषुधयः । लोहितवर्ण उष्णीषः शिरोवेष्टनम् ॥११॥ परिवृक्तिगृहे । परिवृक्तिशब्दस्यार्थमाह या वाऽइति अपुत्रा राजपत्नी केवलं भोगार्था परिवृक्तिः (!) । स जुहोतीति जुहोतिचोदितत्वात्स्वाहाकारप्रदानवाचायं होमो दर्विहोमः । परिमूर्णी मुक्ती मोहसमुच्छ्राययोः अस्मात्क्तिनि राल्लोप इति (पा° ६. ४. २१.) क्स्य लोपे निष्ठानत्वे च कृते रूपम् परिमूर्णा अक्षमा पर्यारिणी परित आर्तिमती व्याधिगृहीता केनचिदङ्गेनापहृता वा कृष्णा गौर्दक्षिणा । इष्ट्यन्ते तां परिवृक्तिमाह (!) वदेत् अद्य इदानीमितः परं मे मम ईशायां स्वाम्ये मा वात्सीः मद्भोग्या मा भूरित्यर्थः ॥१३॥१॥३॥

रत्नहविषामुपरि स्वगृहे सौमारुद्रयागः कर्तव्यः । शृतः पक्वः ॥१॥ आसुरोऽसुरपुत्रः । विद्याधाक्षादितवान् । अयज्ञार्हान्सेनान्यादीन् । तमो वा कर्त एनं सुन्वन्तं प्रविशति । वदित्येकपर्यायः एकदा शूद्रान् सेनान्यादीन् वदेकदा यान्कांश्चन गोविकर्तादीन्हीनजातीनपि । ततः पापलेशासंस्पृष्टः सन्दीक्षते दीक्षार्हो भवति ॥२॥ प्रसङ्गात्फलान्तरायास्य होमस्य बाह्यप्रयोगं दर्शयति स हैतेनेति । अपिर्भिन्नक्रमः सोऽपि एतेन सौमारौद्रेण यजेत सः कः य: पुरुषो यशसे यशसः प्राप्तये अलं सन् समर्थो योग्यो भवन्नपि अयशः (!) कीर्तिरहितो भवति । यच्छब्दार्थं विशिनष्टि यो वाऽअनूचान इति साङ्गवेदाध्यायी अनूचानः स यशसे अलं योग्यो भवन्नपि अयशो यशोरहितो भवति यस्तु यशोरहितः स तमसा प्रावृतः तस्यैतेन हविषा सोमारुद्रौ कीर्त्यभावरूपं तमोऽपहृत्य कीर्तिमन्तं कुरुतः स यजमानः अयशोरूपतमसा वियुक्तः सन् ज्योतिरात्मको भूत्वा श्रिया सम्पदा यशसा चोपलक्षितो भवति ॥३॥ दीक्षते दीक्षां कर्तुमर्हति ॥४॥ स्वयंप्रशीर्णा स्वयमेव भग्ना । मित्रसम्बन्धिचरुपाकार्थं पात्रम् ॥५॥ पयः आतच्य आतञ्चनद्रव्येण दधि कृत्वा विनाटे चर्ममये पात्रे दृतौ आसिच्य रथमश्वैः संयोज्य दधिपूर्णं विनाटं रथे सम्बध्य देदीयितवै रथधावनाय आह नियुञ्जीत दीतेर्वा गतिकर्मणो यङ्लुगन्तात्कृत्यार्थे तवैप्रत्ययः । स्वयमुदितं मथनमन्तरेण निष्पन्नं नवनीतम् तदेव स्वयमेव विलीनं सदाज्यं भवति ॥६॥ अणीयांसः अणुतराः परिभिन्नाश्छिन्नाग्रास्तण्डुलाः अपरिभिन्नाः अछिन्नाग्राः अचूर्णीकृताः ॥७॥ बार्हस्पत्यं चरुमधिश्रित्य अग्निमध्ये स्थाल्यामधिश्रितायां बृहस्पत्यर्थास्तण्डुलानोप्य तं चरुमश्वत्थशाखानिर्मितेन मैत्रेण पात्रेणापिदध्यात् तन्नस्मिन्पात्रे स्वयमुत्पन्नमाज्यमानयति आसिञ्चेत् तत्र स्थविष्ठानपरिभिन्नान्मैत्रांस्तण्डुलानावपेत् स एव मैत्रश्चरुरूष्मणैव श्रप्यते पच्यते । अग्निना पक्वो वरुण्यो दाहप्रयुक्तहिंसासम्बन्धात् । उभयोश्चर्वोः दधिपयसोर्दार्शिकयोरिव एकैकस्माद्द्विर्द्विरवद्यन् जुह्वां सहावदानं कुर्वन् मित्राबृहस्पतिभ्यामनुब्रूहीत्येवं संस्तुत्यानुवाक्याप्रैषं (संयुत्या° Cod.) ब्रूयात् एवं यजेति याज्याप्रैषेऽपि वषट्कृते सहैव प्रक्षेपः ॥८॥२॥३॥

एवं पवित्राख्यात्प्रथमसोमयागादनन्तरभावीन्यानुमताद्यानीष्टिदर्विहोमात्मकानि संवत्सरपर्यन्तमनुष्ठेयानि कर्माण्यनुक्रान्तानि । अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगो

ऽभिधास्यते । तत्राभिषेचनीयस्य चोदकप्राप्तां दीक्षामाह स वाऽइति । तत्कालः सूत्रे दर्शितः (का° १५. ३. ३४.) फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षतऽइति । देवसुवां (!) हवींषि विधित्सुस्तेषामग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तुमाह उपवसथऽइति उपवसथः सुत्यादिवसात्पूर्वमहः । तदनु देवसुवां (!) हवींषि निर्वपेत् सुवन्त्यनुजानन्तीति सुवः देवाश्च ते सुवश्चेति देवसुवः तेषां देवस्वाम् श्रोः सुपीति (पा° ६. ४. ८३.) यणादेशः प्रसवितृत्वं चैषामाम्नायते देवसुवामेतानि (!) हवींषि भवन्ति एतावन्तो वै देवानां सवाः तऽएवास्मै सवान्प्रयच्छन्ति तऽएनं सुवतऽइति ॥ १॥ प्राशुकानाम् प्रकर्षेण आशु शीघ्रं पच्यमानानां पुनःप्ररूढानां व्रीहीणाम् रेफस्य छान्दसो लवनिर्देशः । प्रसुवान् प्रसुवन्तु प्रेरयन्तु ॥ २॥ प्राशुकाः पुनःप्ररूढा व्रीहय इत्युक्तम् ततोऽप्यधिककाले पक्षत्रये पच्यमानाः षष्टिका व्रीहयः आशवः तेषामाशुत्वं च त्रिचतुरमासनियतपरिपाकव्रीह्यपेक्षम् । श्रीः खलु गार्हपतं गृहपतित्वमेव तस्माद्यजमानो यावतो धनस्येष्टे ईश्वरो भवति तद्गार्हपतं गृहपतिसम्बन्धि सर्वं वस्तुजातमभि एनं यजमानं गृहपतिगुणकोऽग्निः प्रापयति ॥ ३॥ ज्येष्ठत्वगुणकायेन्द्राय हायनानां संवत्सरपक्वानां रक्तशालीनां चरुं निर्वपेत् । अतिष्ठा अतीत्य तिष्ठन्त्य ओषधयः चिरकालेन पाकात् इन्द्रोऽप्यतिष्ठाः सर्वानतिक्रम्य तिष्ठति ॥ ६॥ नाम्बा नाम अकृष्टपच्याः स्वयंजाता व्रीहयः । कृष्टक्षेत्रोत्पन्ना ओषधयो वरुण्याः कर्षणादिलक्षणहिंसासम्बन्धात् ॥ ८॥ अथ देवसुवां हविर्यागानन्तरं स्विष्टकृतः पूर्वम् । अभिपद्य गृहीत्वा । मित्रः सत्य इति सत्यशब्दाच्चतुर्थ्यर्थे सुः सत्यायेत्यर्थः ॥ ११॥ अमी इत्यस्य स्थाने भरतपदं प्रक्षिप्य पठितं (पतितं Cod.) बौधायनेन अथैनं रत्निभ्य आवेदयति एष वो भरता राजेति आपस्तम्बेन तु राजविशेषेण जनपदनामग्रहणमुक्तम् अथैनं रत्निभ्य आवेदयति एष वो भरता राजेत्येष वः कुरवो राजेति कौरव्यमेष वः पञ्चाला राजेति पाञ्चालमेष वः कुरुपाञ्चाला राजेति वा कुरुपञ्चालमेष वो जनता (!) राजेत्यन्यान्राज्ञ इति । आद्यं भोग्यम् । तस्माद्ब्राह्मणो क्षत्रियेणानाद्यः (!°येणानाद्यः) । सोमराजा सोमो राजा यस्येति बहुव्रीहिः ॥ १२॥ सुवते अनुजानन्ति । देवसूहविःप्रचारस्याग्नीषोमीयदिवसकर्तव्यत्वात् श्व इत्यनेन सुत्यादिनं विवक्ष्यते ॥ १३॥ सुवान्ताऽइति पञ्चमलकारान्तपदम् ॥ १४॥ अग्नीषोमीयपशुपुरोडाशप्रधानाहुतेरनन्तरं कर्तव्यं विधाय प्राकृतं स्विष्टकृद्यागमनुवदति अथाहेति । प्रधानस्विष्टकृदाहुत्योर्मध्ये देवसूहविःप्रचारेण यज्ञरूपप्रजापतिमध्यऽएव यजमानं निहितवान्भवति ॥ १५॥ ३॥ ३॥

चतुर्थब्राह्मणे यजमानाभिषेकार्थं सप्तदशसंख्याकानामपां सम्भरणमुच्यते । आतपवर्ष्याद्यान्युदकानि यूपस्योत्तरप्रदेशे निधाय गृह्णीयात् इतराः सम्भविनीरपस्तु तत्र तत्र गत्वा गृह्णीयात् ॥ १॥ सारस्वतीरेवेति सरस्वत्यां नद्यां भवाः अपः एवशब्दोऽन्ययोगव्यवच्छेदार्थः । एता वाऽएका इति सारस्वत्य आप एका एकमुदकम् एवं सारस्वतीरपो गृहीत्वा षोडशापो गृह्णीयात् ॥ ३॥ अभ्यवेते अवगाढे सति । व्यर्दतः विविधं पूर्वापरभावेन गच्छतः ॥ ४॥ उदर्दति उद्गच्छेत् । स्वाहान्तो हवनमन्त्रः द्वितीयो ग्रहणमन्त्रः ॥ ५॥ प्रतीपं प्रतिकूलम् ॥ ६॥ नदीप्रवाहं परित्यज्य पृथक्प्रवाहरूपेण याः स्यन्दन्ते अपयत्यः ताः । एतस्यै वाऽइति एषा परिणादी एतस्या महानद्याः सकाशादवच्छिद्य (!) पृथक्कृत्य परिवहति तत एषैव पुनर्भवति संसृष्टा परिणादी पुनरेषैव महानदी भवति । यस्मादपच्छिन्ना नदी पुनस्तां महानदीं प्रा-

अतः सोमस्य दानसाधनभूता भवथ ॥१८॥ एनं यजमानं वासांसि तार्प्यपाण्ड्वाधिवासोष्णीषाणि परिधापयेत् तत् तत्रे तेषु प्रथमं तार्प्यमिति वासः न त्वन्यत्कम्बलादिकम् अत एव का° (१५. ५. ७-१०) तार्प्यं परिधापयति क्षौमं त्रिपाणं वा घृतोन्नमेकऽइति तृपा नामौषधिविशेषः तत्तन्तुनिर्मितं क्षौमं वस्त्रं तार्प्यं त्रिःक्वथः पायितं वा घृतोन्नमुन्दी क्लेदने घृतसिक्तमित्येके आचार्या वदन्ति । यज्ञरूपाणि स्रुक्चमसादीनि तत्र स्यूतानि भवेयुः ॥२०॥ पाण्डुं पाण्डुरं श्वेतं कम्बलं तार्प्यस्योपरि प्रावृणुयात् ॥२१॥ अधि उपरि वसनीयमाच्छादनीयं वस्तु अधिवासं (!) तत्प्रतिमुञ्चेत् तार्प्यमुपसंव्याय (°धाय?) पाण्डरमुत्तरीयवदाच्छाद्य अधीवासकञ्चुकादिकमुपरि प्रतिमुञ्चेत् ॥२२॥ उष्णीषं संहृत्य निवीतरूपेण कण्ठेऽवसज्य पुरस्तात्पूर्वभागे नाभिदेशे अवगूहति उष्णीषान्तं नीविस्थाने ग्रथयेत् ॥२३॥ एके शाखान्तरानुसारिणः तदुष्णीषं समन्तं सर्वतो नाभिदेशे परिवेष्टयन्ति । अस्य क्षत्रियस्य उष्णीषरूपा नाभिरपि समन्तं पर्येति परिवेष्टिता भवति ॥२४॥ पूर्वं निहितस्य दीक्षितवसनस्य परित्यागं विधित्सुरेकेषां मतमुपन्यस्यति यद्वा विहितानां (विदि° Cod.) तार्प्यादीनां परिधापनादिकमेव द्रढयितुं पूर्वपक्षयति तद्वैकऽइति । एके शाखिन एकवारं परिधापितानि एतानि वासांसि निदधति विसृज्य निदध्युः अथ तदानीमेव तार्प्यादिवसनकाले निहितं दीक्षितवसनमेनं यजमानं पुनः परिधापयति । तनूरङ्गानि सहोत्पन्नानि वप्ररूपाण्यङ्गानि see ३, १, २, १३-१६ । अतो वासोभिः परिधापनेन तन्वा तन्वा सहोत्पन्नैः शरीररूपैरङ्गैः समर्धितवान्भवति ॥२५॥ निहितस्य दीक्षितवसनस्यावभृथे प्रासनं विधत्ते स यत्रेति अवभृथमभ्यवहरन्ति आहरेयुरप्सु प्रक्षिपेयुः । सलोम प्रकृतिगतमनुसृतम् प्रकृतौ दीक्षितवसनस्यावभृथे परित्याग उक्तः । अवसाने कर्तव्या उदवसानीयेष्टिः ॥२६॥ बाहुद्वयं विमृज्यत् कर्कोपाध्यायेन तु बाहुशब्दस्य धनुष्कोटिपरत्वं व्याख्यातम् (का° १५. ५. १८.) ॥२८॥ दृ विदारणे दृणातीति दृबा विदारिका दृप्यतेर्वा रूपम् । रुजा भङ्गहेतुः । क्षुमा क्षुप विधूनने क्षुपतीति क्षुपा पकारस्य स्थाने मकारः शत्रुक्षपणकारिणी (!) । समर्पणेन परित्यागमात्रेण यया परान्भिनत्ति (!) शत्रून्विदारयति । यया विद्धस्य ताडितस्य जीवने संदेहः । यया राजा शत्रुमपराध्नोति हिनस्त्येव ॥२९॥ अशरव्याः अहिंसकाः शरव्यं शरलक्ष्यं तद्रहिताः करोति अनेन सर्वास्वपि दिक्षु परकीयशरलक्ष्यत्वं निवर्त्यते ॥३०॥ आविन्नपदयुक्ताः सप्त मन्त्रा आविदः । आवेदयन्ति ज्ञापयन्ति देवताभ्य एनं यजमानमिति । अनिरुक्तं साक्षाद्देवतावाचकपदरहितं मन्त्रं वाचयेत् । हे मर्या मरणयोग्या मनुष्याः आविः प्रकाशोऽभूत् । सवमभिषेकम् ॥३१॥ आविन्नः आवेदितः ज्ञापितः विन्नो भोगप्रत्यययोरिति (पा° ८. २. ५८.) निपातितः अग्नये यजमानं ज्ञापितवानित्यर्थः ॥ ३२ ॥ ५ ॥ ३ ॥

सदसो मध्यऽउपविष्टस्य केशवस्य क्लीबस्य वदने लोहायसं ताम्रमर्पयेत् । दंशनशीला मृत्यव इहाभिप्रेताः । अवपूर्वो यजिर्नाशार्थे ॥१॥ केशवलोहायसदन्दशूकानामन्तरालवर्तित्वमुपपादयति अथ यदिति ॥२॥

The explanation of ४. १. ३ — ४. ४. ५ is wanting in AB.

यजमानहस्ते पञ्चाक्षावपनं विधत्ते अथेति अक्षा नाम कपर्दकाः सुवर्णनिर्मिताः विभीदकफलानि सौवर्णा वा । ते चाक्षा द्यूतस्थाने निवपनीयाः तेषां चतुर्णामक्षाणां कृतसंज्ञा पञ्चा-

नां (!) कलिसंज्ञा तथा च शाखान्तरे स्तोमसंख्यायां कृतादिव्यवहारः कृतः ये वै चत्वारः स्तोमाः कृतं तत् अथ ये पञ्च कलिः स इति यदा पञ्चाप्यक्षा उत्ताना (? उत्पन्ना Cod.) भवन्ति तदा देवितुर्जयो भवति पञ्चसु वैकरूपासु (!) जय एव भविष्यतीत्यन्यत्रोक्तम् अतः कलेः सर्वाक्षाभिभावुकत्वात्सुन्वतोऽपि जयापेक्षित्वात्पञ्चाक्षनिवाप इत्यर्थः। अयशब्दोऽक्षवाची ॥६॥ दण्डैर्यज्ञियवृक्षकाष्ठैः एनं सुन्वन्तं पृष्ठतः पश्चाद्भागे तूष्णीममन्त्रकं घ्नन्ति हन्युः। तस्माद्ब्राह्मणोऽदण्ड्यभावः यथा राजा स्वा अपरुद्धाः प्रजा दण्डयति एवं स्वयं न दण्ड्यः ॥७॥ ऋध्य ऋध्यतिर्वशगमने मदीयाय यजमानाय सर्वं वशीकुरु यद्वा द्यूतस्थानपरिलेखनरूपं कार्यं साधय ॥१५॥ पापवस्यसं पापिष्ठं कर्म नेदसत् न भवेत् ॥१९॥ आहवनीयस्योत्तरप्रदेशे स्थापितः स पूर्वाग्निः तस्मिन् तत्संस्पृष्टम् अधिदीव्यन्त्यत्रेति अधिदेवनं द्यूतभूमिः तां शुक्रग्रहस्य पुरोरुचा तं प्रत्नथा पूर्वथा विश्वथेमथेत्यनया कुरुतः। ४, २, १, ३-१० ॥२०॥ मन्थिग्रहपुरोरुचा अयं वेन इत्यनया विमितं विमिन्वन्त्यत्रेति विमितं चतुर्द्वारं चतुरस्रं मण्डपम् तद्विमिनुतः कुरुतः ॥२१॥ तस्मात्तेनाक्षनिधानेनाग्निमेव प्रीणितवान्भवति। देवनकाले यामेव पणत्वेन कृत्वा गां दीव्यध्वमिति द्यूतकरणप्रैषं ब्रूयात् ततोऽस्य पणत्वेनाङ्गीकृतां गामानीय घ्नन्ति हन्तिश्चा[ह]ननमात्रार्थो न मारणार्थः। पूर्वाग्निमाहवनीयं वहत इति पूर्वाग्निवाही तावनड्वाही दक्षिणा। तदिदं देवनं संनिधिबलादभिषेचनीयाख्यसोमयागमध्यगतमपि महाप्रकरणबलादिष्टिपशुसोमयागात्मकराजसूयशेष इति गम्यते प्रकरणेन संनिधेर्बा इति सिद्धान्तितम् ॥२३॥ अथ पय यास्विष्टकृदिडादिकं दर्शयति अथाहेति प्रधानसौविष्टकृतहविषोर्मध्ये यद्देवनादिकं कृतं तत्प्रजापतिमध्यनिधानरूपेण प्रशंसति ॥ २४ ॥ ४ ॥ ४ ॥

पञ्चमे ब्राह्मणे संसृपां हवींषि दशसंख्याकानि दशपेयाख्यसोमयागस्य दीक्षा उपसद्यागः ऋत्विग्विशेषेण दक्षिणाश्च विधीयन्ते। भर्गो यज्ञरूपं वीर्यम् ॥१॥ तमपसृतं गर्भमेताभिर्वक्ष्यमाणाभिः सावित्र्यादिभिरनुसमसर्पत् अनुक्रमेण प्राप्तवान् ॥२॥ सम्यक् सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपो देवताः तासां हवींष्यपि तन्नामानि प्रत्येकमेकैकदिने कर्तव्यानि। अयमत्र क्रमः दशानां संसृपां हविषां मध्ये सप्त हवींषि प्रतिदिनं क्रमेणैकैकं कृत्वा सप्तमे दिने सप्तम्यामिष्टावतीतायामष्टमं हविर्निर्वपेत् अष्टपराह्णे (?) दशपेयस्य द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणां दीक्षां कृत्वा तदानीमेव प्रथमामुपसदं कृत्वा तदन्ते संसृपामष्टमं (!) हविानवपेत् अष्टमे दिने उपसदन्ते संसृपां नवमं हविर्निरुप्य नवमे दिवसे तृतीयोपसदन्ते संसृपां दशमं हविर्निरुप्य तस्मिन्नेवाहनि अग्नीषोमीयपशुप्रचारं कुर्यात् ततो दशमेऽहनि सोमोऽभिषूयते स्रुतशषश्च पीयतऽइति दशपेयत्वम्। एकैकस्मिन्पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमरसो यस्मिन् (स) दशपेयः ॥३॥ अत्र यदुक्तं सूत्रकृता (का॰ १५ ८. १५-१६) अस्यार्थः भक्षणार्थं सदःप्रसर्पणकाले सोम्यानां शतसंख्याकब्राह्मणानां मध्ये एकैकस्य पात्रस्य भक्षयितारो दश दश पुरुषाः यजमानस्य दश सोमपान्पितामहान्यजमानस्य पितामहस्तत्पितामह इत्येवं पितामहदशगणं संख्याय गणयित्वा प्रसर्पेयुः यद्वा सवित्रा प्रसवित्रेति संहितोक्तमन्त्रेण प्रसर्पणं कुर्यादित्यर्थः। अत्र पितामहगणनेन प्रसर्पणं पूर्वपक्षयति तदाहुरिति तद्दूषयति यद्वै (!) ज्येति ज्या ज्यानिर्निकृष्ट इत्यर्थः अत्रोपपत्तिमाह द्वौ त्रीनिति यदि पितामहान्जानीयुः तर्हि द्वौ त्रीनेव जानीयुः न सर्वान् तस्मात्सवित्रादिदशदेवताः

संख्याय प्रसर्पणं कुर्यात् ॥४॥ संसृप्शब्दवाच्यहविर्निर्वापकालं दर्शयति अभिषेचनीयाख्य-सोमयागस्योदवसानीयेष्टिर्यदा समाप्यते तदनन्तरमेतानि हवींषि निर्वपेत् ॥५॥ तत्प्रकारः कात्यायनेन (१५, ८, ४-९. १४) स्पष्टीकृतः सप्त हवींषि पूर्वमिष्टितन्त्रेण कृत्वा सप्त हिरण्मयपुण्डरीकानि दत्त्वा उत्तरासु तिसृषु पञ्च दत्त्वा द्वादशपुण्डरीकस्रक्प्रतिमोकदक्षिणां दशपेयदीक्षां कृत्वा सप्तम्यां संसृपूयागसम्बन्धिन्यां (सृप्र Cod.) सप्तमदिने क्रियमाणायां वारुण्यामिष्टावतीतायां पूर्वमेवाभिषेचनीयदशपेययोरपि द्विधा (!) सोमं क्रीत्वा दशपेयार्थं ब्रह्मागारे स्थापितं सोममाहृत्यासन्द्यभिमर्शनाद्यातिथ्यान्तं कृत्वा संसृपां हविषां मध्येऽन्त्यान्याग्नेयसौम्यवैष्णवानि त्रीणि हवींष्युपसत्प्रतिनिधित्वेन कर्तव्यानि उपसदामप्यग्निसोमविष्णुदेवता अन्तिमत्वात् (! °तास्वन्ति° ??)। तथाप्यग्निसोमयोरेकस्याप्यभावे दशसंख्यापूरणाभावात्तयोरपि दशमत्वमुच्यते तत्र तिसृषु देवतासु तद्देवत्यहविः[षु] पञ्च पुण्डरीकाणि देयानि भवन्ति । दत्तानि सप्त अन्तिमहविस्त्रये दास्यमानानि पञ्चेति द्वादश पुण्डरीकाणि भवन्ति । प्रकृतावप्सु स्नात्यपोऽस्नातीत्यादिना यद्दीक्षामात्रं विहितं तदत्रापवदितुं दत्तदास्यमानपुण्डरीकस्रक्प्रतिमोको विहितः ॥ ६-१३ ॥ पद्मगतपत्रनालविसानां स्वर्गान्तरिक्षभूम्याख्यलोकत्रयात्मकत्वात्तत्प्रतिमोकलक्षणदीक्षाकरणेनैनं यजमानमेषु त्रिषु लोकेषु दीक्षितवान्भवति ॥१४॥ पूर्वमभिषेचनीयदीक्षान्ते राजानं क्रीत्वा द्वैधमुपनह्य तत्रैकं दशपेयार्थं पर्युह्य ब्रह्मागारे स्थापयित्वा एकेनाभिषेचनीये प्रचारः कृतः अथ दशपेये तं ब्रह्मगृहे स्थापितं सोममाहृत्यासन्द्यामासद्यातिथ्यया प्रचरेयुः तदनन्तरमुपसद्यागः तत्राग्निसोमविष्णुदेवताकोपसत्प्रतिनिधित्वेन संसृपूयागसम्बन्धिनामुत्तमानां (संसृपया° Cod.) त्रयाणामाग्नेयसौम्यवैष्णवानामेव निर्वापं पूर्वपक्षयति यदोपसद्भिरिति ॥१५॥ तेन यथेष्टेति एकैकोपसत्स्थाने तेन एकेन हविषा यथेष्टि इष्टितन्त्रेण कुर्यात् उपसत्त्रयार्थमेतद्धविस्त्रयं कर्तव्यमिति शाखान्तरीयः पक्षः तमिमं निराकरोति तदु तथेति । नेयात् न प्रच्युतो भवेत् तत उपसदः पृथक्कुर्यात्तदनु एतानि संसृपामन्तिमानि त्रीणि हवींषि चेष्टितन्त्रेण पृथक्कुर्यात् ॥१६॥१७॥ स एष दशपेयः क्रतुः सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थो भवति ॥१८॥ प्राकाशौ दीपस्तम्भावित्येके स्वर्णमयदर्पणावित्यपरे । वशां वन्ध्याम् । एकेनानडुहा युक्तस्य यवपूर्णस्य शकटस्य दानं विधत्ते अन्यतरत इति ॥२२॥ द्वादश चैत्रादयोऽधिकमासेन सह त्रयोदश वा मासाः ॥२३॥५॥४॥

अथ पञ्चमाध्याये पञ्चबिलसंज्ञकचरुः द्वादश प्रयुजां हवींषि पशुद्वयं केशवपनीयातिरात्रः सौत्रामणीप्रयोगो राजसूयसमाप्त्युदवसानीयेष्टिर्विधीयते । वेदिमध्ये पूर्वार्धे पूर्वभागे ॥१॥ दिगादिभ्यः सकाशात्पुनर्निष्क्रीणाति स्वाधीनं कृतवान्भवति ॥२॥ प्रत्येकहविःप्रचारादनन्तरं बार्हस्पत्ये चरौ संस्रवानयनं विधत्ते संस्रवमिति ॥३॥ निदानेन कारणेन निरूपणे सति ॥८॥ पृषन् बिन्दुयुक्तश्चित्रवर्णः ॥१०॥ वशा वन्ध्या । अप्रवीता वेतेः प्रजननार्थान्निष्ठा अप्रजाता अगृहीतगर्भा ॥११॥ शितिपृष्ठः श्वेतपृष्ठः । अर्यम्णः सूर्यस्य । अथैतस्य हविःपञ्चकस्य फलान्तराय राजसूयाद्बहिःप्रयोगं दर्शयति स हैतेनेति । विष्टाव्राजी (!) एकत्र संनिविष्टाः (!) इतस्ततः पर्यटनमकुर्वन् अन्नाद्यकामः एकत्र (? एवन्न Cod.) स्थित्वैव सर्वतो मेऽन्नं स्यादिति कामयमानः ॥१२॥१॥५॥

द्वितीये प्रयुजां हवींषि विधीयन्ते । एष यष्टा ऋतून्मासान्प्रयुङ्क्ते कर्मणि योजयति ।

ऋतवोऽप्येनं युक्ताः सन्तो वहन्ति प्रापयन्तीष्टं फलम् इदानीमनुष्ठातापि प्रयुक्तानृतूननुलक्ष्य चरति अनुसरति तत्तदनुष्ठानितफलं सुकामः ॥१॥ मनुष्यस्यायुःपरिमाणस्यावगन्तुमशक्यत्वान्मासि-मासि यजनं न कर्तव्यम्। हविःषट्कस्यैकीकृत्य यागकरणेऽपि कंचिद्विशेषं पूर्वपक्षत्वेनोपन्यस्यति शम्यापराव्याधऽइति शम्या परास्ता विध्यति निपतति यत्रेति स शम्यापराव्याधो देशः तत्र देशे पूर्वैः षड्भिः प्राङ्मुखो यान्गाकन्यजेत आहवनीयात्पूर्वदेशे एकैकशम्याप्रासे षट् कर्तव्यानि पुनरावृत्तेन एकैकशम्याप्रासप्रदेशे अपराणि षट् कर्तव्यानि ॥२॥ तं पक्षं निराकृत्य पक्षान्तरं विधत्ते तदु तथेति। समानबर्हीपि बर्हिःशब्दस्तन्त्रोपलक्षकः एकतन्त्राणि कर्तव्यानि। तासां पूर्वहविःषट्कस्य देवतानामग्निषोमादीनां षण्णां रूपमेतत् यथा शिशिरऽर्तौ युक्ताश्चा राजानः प्राञ्चः सन्त आप्रावृषं प्रावृट्कालपर्यन्तं यायुः गच्छेयुः तदिदं प्राङ्मुखं यानं पूर्वपूर्वशम्याप्रासेषु यष्टव्यानामग्न्यादिदेवतानां सम्बन्धि रूपम्। तैत्तिरीयके शिशिरादिषु षट्सु मासेषु राजभेदेन प्राङ्मुखा यात्रा प्रतिमासं व्यापारभेदश्च स्पष्टमाम्नातः आग्नेयमष्टाकपालं निर्वपति तस्माच्छिशिरे कुरुपाञ्चालाः प्राञ्चो यान्ति सौम्यं चरुं तस्माद्वसन्तं व्यवसायादयन्ति सावित्रं द्वादशकपालं तस्मात्पुरस्ताद्यवानां सवित्रा विरुन्धन्ते (°ते)

बार्हस्पत्यं चरुं सवित्रैव विरुध्य ब्राह्मणा (?) यवानादधते त्वाष्ट्रमष्टाकपालं रूपाण्येव तेन कुर्वते वैश्वानरं द्वादशकपालं तस्माज्जघन्ये नैदाघे प्रत्यञ्चं (!) कुरुपाञ्चाला यान्तीति। पूर्वाग्निमाहवनीयं वहन्तीति पूर्वाग्निवाहोऽनड्वाहः तेषां मध्ये द्वौ दक्षिणात्वेन देयौ ॥३॥ वार्षिकमभि वर्षऽर्तुसम्बन्धिनं प्रथममासमभिलक्ष्य पुनरावर्तेरन् शिशिरे दिग्विजयाय प्राञ्चः प्रयाताः कुरुपञ्चालादयो निदाघऽर्तुद्वितीयमासे परकीयं राष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखा निवर्तन्ते तदेतत्सरस्वत्यादिदेवतानां प्रतिनिवृत्य (त्या° Cod.) यष्टव्यानां रूपम्। तेनोत्तरहविःषट्कयागेन प्रावृडादीन्षण्मासान्योजितवान्भवति ॥४॥ उक्तं द्वादशप्रयुग्घविःकरणेनऽर्तुप्रयोगं कुरुपञ्चालवृत्तान्तमुखेन द्रढयति तद्ध स्मैतदिति पूर्वं कुरुपञ्चाला आकुर्वदन्ति विचारयन्ति अस्मानृतवो युक्ताः सन्तो वहन्ति युक्तानृतूननुलक्ष्य चरामोऽनुसराम इति आशंसमा[ना]नामेषां राज्ञां मध्ये राजान आसुः ते राजसूययाजिनः प्रयुग्घविःकरणमृतुप्रयोगरूपमिति प्रत्यूचुरिति तस्यार्थः ॥५॥ तानि द्वादश हवींष्युद्दिशति आग्नेय इति ॥६॥ श्येनीं श्वेतवर्णाम् विचित्रगर्भां प्रज्ञातगर्भाम्। see ४. ५. २. १ ॥८॥ पृषतीं बिन्दुयुक्तां विचित्रवर्णां गर्भिणीम् ॥९॥ शाखाभेदेन देवतान्तरसम्बन्धः ॥१०॥२॥५॥

तृतीये केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते। पशुबन्धद्वयादनन्तरं केशवपनीयातिरात्रयागः कर्तव्यः। अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केशवपनाकरणलक्षणं व्रतमाचर्यम् ततस्तद्व्रतविसर्जनार्थमेकः सोमयागः पौर्णमासीसुत्यः कार्यः स एव केशवपनीयातिरात्र उच्यते रात्रिमतीत्य वर्ततऽइत्यतिरात्रः अतिरात्रसंस्थया कार्य इत्यर्थः। विदुष्यात् (!) गतसारोऽपि भवेत् ॥१॥ केशवपनार्थमुपयुज्यमानः क्रियमाणः स्तोमः एकविंशादिस्तोमवान्यागः केशवपनीयः ॥२॥ तत्र सामगैर्गीयमानेषु स्तोत्रेषु चोदकेन प्रातःसवनादिषु त्रिवृदादिस्तोमप्राप्तौ तानपवदितुं विशेषं दर्शयति तस्यैकविंशमिति। प्रातःसवनमेकविंशस्तोमयुक्तं कर्तव्यम् माध्यन्दिनं सप्तदशस्तोमकम् अस्य सोमयागस्यातिरात्रसंस्था[ना]त्तृतीयसवनेऽग्निष्टोमवद्द्वादश स्तोत्राणि तत उत्तरं त्रीण्युक्थस्तोत्राणि एकं षोडशि-

स्तोत्रं रात्रिपर्यायस्तोत्राणि द्वादश तानि सर्वाण्यपि पञ्चदशस्तोमकानि कर्तव्यानि ॥३॥ स्तोमत्रिवृत्प्रचारस्तु (त्तृत्यिप्रचारतस्तु Cod.) प्राचीमारोहेत्यत्र (४.१.३.) दिक्समारोहणमन्त्रव्याख्यावसरे दर्शितः किं च पूर्वदिवसरात्रिशेषे उत्तरदिवसस्योषःकाले यज्ञसंस्थापकमेकं चरमं स्तोत्रं तृतीयपर्यायस्यान्ते रथन्तरसाम्ना गातव्यम् तत्संधिस्तोत्रमित्युच्यते तत्स्तोत्रं त्रिवृत्स्तोत्रयुक्तं कार्यम् । एकविंशादवरोहणं (ण Cod.) त्रिवृत्पर्यन्तं यत्स्तोमकरणमुक्तं तत्सूर्यलोकादिक्रमाद्भूम्यवस्थानात्मना प्रशंसति एष एवैकविंश इति य एष तपति स एकविंशः सूर्य इत्यर्थः तस्मादप्युक्तो अवरोहतीत्यर्थः सोऽवरुह्यावरुह्य (भोवरु॰ Cod.) त्रिवृद्रूपायामस्यां (अत्रवरु॰ Cod.) भूमिलक्षणायां प्रतिष्ठायां प्रतिष्ठितवान्भवति ॥४॥ माध्यन्दिनसवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितम् अत्रैकं (॰त्रैकं) नियमयति तस्य रथन्तरमिति । अस्य सोमयागस्यातिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति अतिरात्र इति अतिरात्रसंस्थात्मना कृत एष क्रतुः प्रतिष्ठारूपः ॥५॥ अस्य क्रतोः केशावापव्रतविसर्जनार्थं (कश वा॰ Cod.) [illegible] केशवापः कार्यः । तत्र कंचिद्विशेषं विधत्ते स वै न्येवेति स यजमानो निवर्तयते केशान्निकृन्तेदेव न वपेत् वपनं नाम मुण्डनं तन्न कुर्यात् निवर्तनं कर्तनं तत्कुर्यात् । एषा केशकर्तनलक्षणा व्रतचर्या यावज्जीवनं (वन Cod.) कर्तव्या न केशमुण्डनं कार्यम् कदाचिदप्यनुपानद्कोऽपादुकोऽस्यां (? चिदप्यपि उपानहौ पादुके स्यां Cod.) भूमौ न प्रतितिष्ठति अवस्थानं न कुर्यात् ॥६॥ आसन्द्या अवरोहणसमयेऽपि उपानहौ पादुके उपमुञ्चेत इतस्ततः संचरणसमये रथं वा यानं वारोहेत् ॥७॥३॥५॥

समप्रधाने राजसूये सप्त सोमयागाः । तत्र पवित्राख्यसोमयागे विशेषाभावे स नोक्तः । अभिषेचनीयदशपेयकेशवपनीयातिरात्रेषु केषुचिद्वैशेषिका धर्मा उक्ताः । व्युष्टिद्विरात्रोऽग्निष्टोमातिरात्रः (त्रो Cod.) क्षत्रधृतिरिति सोमयागत्रयं केशवपनीयादनन्तरं कर्तव्यम् तेषां सोमयागविकृतित्वादग्निष्टोमवत्सर्वमङ्गजातं कर्तव्यम् तत्र विशेषाभावादत्र नोक्ताः । तदनन्तरकर्तव्या सौत्रामण्यभिधीयते तत्र पशुत्रयं (तत्पशु॰ Cod.) देवतासम्बन्धविशिष्टं विधत्ते श्येत इति । मल्हा (वृह्ला Cod.) मणिला (?) गलस्तनयुता अविर्मेषी । सुअपतराः सुखेन अपयितुमर्हाः ॥१॥ अवयत् (!) वेतेः खादनार्थाच्छान्दसः शप् (शव् Cod.) ॥६॥ कुवित् व्यर्थं मम पुत्रमवधीदिति क्रुद्धः सन् इन्द्रवर्जितमेव सोमयागमाजह्रे अनुष्ठितवान् यथा सोम इन्द्रवर्जितः सुतोऽभिषुतः स्यात्तथेत्यर्थः ॥७॥ विष्वङ् सर्वतः । तस्मादिन्द्रः प्रायश्चित्तियोग्य आस प्रायो विनाशः तस्य चित्तिः संधानं यस्येति तथाविधो बभूव ॥८॥ अवाचः अधोमुखादपानद्वारात् उत्तरात्प्राणाद्गुह्यच्छिद्रात् । कुवलकर्कन्धुबदराणि सूक्ष्मतरस्थूलमध्यपरिमाणानि बदरजातिफलानि । व्यार्ध्यत व्यृद्धो विहीनो बभूव ॥१०॥ सोमातिपूतः अपानद्वारादिभ्यः स्रुतसोमः । मङ्क्तः मकि प्रतिबन्धे संचलद्गतिः (? सवल॰ Cod.) पङ्गुरिव । वसीयान्वसुमत्तरः ॥११॥ बतेति हर्षे ॥१२॥ इयं राजसुयाद्बहिरपि प्रयोक्तव्या ॥१३॥ नखिन्या कण्टकवत्या । अनुषुवति प्रेरितवान्भवति ॥१९॥ उत्तरवेद्यामेकमग्निं तद्दक्षिणभागे उद्धते प्रदेशे एकम् ॥२१॥ तां दर्भैः पावयेत् ॥२२॥ होत्रा द्विवारं वषट्कारः कर्तव्यः अध्वर्युणापि द्विवारं हवनं कार्यम् हवनानन्तरं भक्षार्थमाहरेयुः । एतस्य होममन्वितरौ द्वौ परिस्रुद्धोमौ होतव्यौ एष परिस्रुद्धोमो दक्षिणेऽग्नाविति प्रागुक्तः ॥२६॥ हुतायाः सुरायाः शेषं रु-

ज्योतिष उपदधाति प्रजा वै विश्वज्योतिरनन्तर्हितास्तत्प्रजा ऋतुभ्यो दधाति तस्मात्प्रजा ऋतूनेवानुप्रजायन्तऽऋतुभिर्ह्येव गर्भे सन्तᳪं सम्पश्यन्त्यृतुभिर्जातम् ॥३१॥ अथाषाढामुपदधाति । इयं वाऽअषाढेमामेवैतदुपदधाति तां पूर्वार्धऽउपदधाति प्रथमा ह्येयमसृज्यत ॥३२॥ सा यदषाढा नाम । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्धन्त ते देवा एतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत तामुपधायासुरान्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त यदसहन्त तस्मादषाढा तथैवैतद्यजमान एतामुपधाय द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते ॥३३॥ यद्वेवाषाढामुपदधाति । वाग्वाऽअषाढा वाचैव तद्देवा असुरान्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त तथैवैतद्यजमानो वाचैव द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते वाचमेव तद्देवा उपादधत तथैवैतद्यजमानो वाचमेवोपधत्ते ॥३४॥ सेयं वामभृत् । प्राणा वै वामं यद्धि किं च प्राणीयं तत्सर्वं बिभर्ति तेनेयं वामभृद्वाग्घ त्वेव वामभृत्प्राणा वै वामं वाचि वै प्राणेभ्योऽन्नं धीयते तस्माद्वाग्वामभृत् ॥३५॥ तऽएते सर्वे प्राणा यदषाढा । तां पूर्वार्धऽउपदधाति पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणास्तान्नान्यया यजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यादेतस्यां चितौ नेत्प्राणानपिदधानीति ॥३६॥ यद्वपस्याः पञ्च पुरस्तादुपदधाति । अन्नं वाऽआपोऽनपिहिता वाऽअन्नेन प्राणास्तामनन्तर्हितामृतव्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयति सेयं वागृतुषु प्रतिष्ठिता वदति ॥३७॥ तदाहुः । यत्प्रजा विश्वज्योतिर्वागषाढाथ कस्मादन्तरेणाऽर्तव्येऽउपदधातीति संवत्सरो वाऽऋतव्ये संवत्सरेण तत्प्रजाभ्यो वाचमन्तर्दधाति तस्मात्संवत्सरवेलायां प्रजा वाचं प्रवदन्ति ॥३८॥ अषाढासि सहमानेति । असहन्त ह्येतया देवा असुरान्त्सहस्वारातीः सहस्व पृतनायत इति यथैव यजुस्तथा बन्धुः सहस्रवीर्यासि सा मा जिन्वेति सर्वं वै सहस्रᳪं सर्ववीर्यासि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥३९॥ त-

दाहुः । कस्मादग्निस्वयमातृण्णमन्या इष्टका उपधीयन्ते प्राच्य एता इति द्वे वै यो- नीऽइति ब्रूयाद्देवयोनिरन्यो मनुष्ययोनिरन्यः प्राचीनप्रजनना वै देवाः प्रतीचीन- प्रजनना मनुष्यास्तद्यदेताः प्राचीरुपदधाति देवयोनेरेवैतद्यजमानं प्रजनयति ॥४०॥ ब्राह्मणम् ॥ २ [४. २.] ॥ तृतीयः प्रपाठकः ॥ कण्डिकासंख्या८५ ॥ चतुर्थो ऽध्यायः [४७.] ॥ ॥

कूर्ममुपदधाति । रसो वै कूर्मो रसमेवैतदुपदधाति यो वै स एषां लोकाना- मप्सु प्रविद्धानां पराङ्रसोऽत्यक्षरत्स एष कूर्मस्तमेवैतदुपदधाति यावानु वै रस- स्तावानात्मा स एष इमऽएव लोकाः ॥१॥ तस्य यदधरं कपालम् । अयꣳ स लोकस्तत्प्रतिष्ठितमिव भवति प्रतिष्ठित-इव ह्ययं लोकोऽथ यदुत्तरꣳ सा द्यौ- स्तद्व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षꣳ स एष इमऽएव लोका इमानेवैतल्लोकानुपदधाति ॥२॥ तमभ्यनक्ति । दध्ना मधु- ना घृतेन दधि हैवास्य लोकस्य रूपं घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रूपेण समर्धयत्यथो दधि हैवास्य लोकस्य रसो घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेत- द्रसेन समर्धयति ॥३॥ मधु वाता ऋतायतऽइति । यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्तद्धैतन्मध्वेवैष त्रिचो रसो वै मधु रस- मेवास्मिन्नेतद्दधाति गायत्रीभिस्तिसृभिस्तस्योक्तो बन्धुः ॥४॥ स यत्कूर्मो नाम । एतद्वै रूपं कृत्वा प्रजापतिः प्रजा असृजत यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्मः क- श्यपो वै कूर्मस्तस्मादाहुः सर्वाः प्रजाः काश्यप्य इति ॥५॥ स यः स कूर्मोऽसौ स आदित्यो । ऽमुमेवैतदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं तदादि- त्यं पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात्प्रत्यङ् धीयते दक्षिणतो ऽषाढायै वृषा वै कूर्मो योषाषाढा दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रे ऽरत्निमात्राद्धि वृषा योषामुपशेते सैषा सर्वासामिष्टकानां महिषी यदषाढातस्यै

दक्षिणतः सन्त्सर्वासामिष्टकानां दक्षिणतो भवति ॥६॥ यद्वेव कूर्ममुपदधाति । प्राणो वै कूर्मः प्राणो हीमाः सर्वाः प्रजाः करोति प्राणमेवैतदुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधाति पुरस्तात्तत्प्रत्यञ्चं प्राणं दधाति तस्मात्पुरस्तात्प्रत्यङ् प्राणो धीयते पुरुषमभ्यावृत्तं यजमाने तत्प्राणं दधाति दक्षिणतोऽषाढायै प्राणो वै कूर्मो वागषाढा प्राणो वै वाचो वृषा प्राणो मिथुनम् ॥७॥ ॥ शतम्४२०० ॥ ॥ अपां गम्भन्त्सीदेति । एतद्वापां गम्भिष्ठं यत्रैष एतत्तपति मा त्वा सूर्योऽभितापीन्माग्निर्वैश्वानर इति मैव त्वा सूर्यो हिंसीन्मोऽग्निर्वैश्वानर इत्येतदच्छिन्नपत्राः प्रजा अनुवीक्षस्वेतीमा वै सर्वाः प्रजा या इमा इष्टकास्ता अरिष्टा अनार्ता अनुवीक्षस्वेत्येतदनु त्वा दिव्या वृष्टिः सचतामिति यथैवैनं दिव्या वृष्टिरनुसचेतैवमेतदाह ॥८॥ अथैनमेजयति । त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानितीमे वै त्रयः समुद्राः स्वर्गा लोकास्तानेष कूर्मो भूत्वानुसंसर्पापां पतिर्वृषभ इष्टकानामित्यपां ह्येष पतिर्वृषभ इष्टकानां पुरीषं वसानः सुकृतस्य लोकऽइति पशवो वै पुरीषं पशून्वसानः सुकृतस्य लोक इत्येतत्तत्र गच्छ यत्र पूर्वे परेता इति तत्र गच्छ यत्रैतेन पूर्वे कर्मणेयुरित्येतत् ॥९॥ मही द्यौः पृथिवी च न इति । महती द्यौः पृथिवी च न इत्येतदिमं यज्ञं मिमिक्षतामितीमं यज्ञमवतामित्येतत्पिपृतां नो भरीमभिरिति बिभृतां नो भरीमभिरित्येतद्द्यावापृथिव्ययोत्तमयोपदधाति द्यावापृथिव्यो हि कूर्मः ॥१०॥ त्रिभिरुपदधाति । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तत्षट्तस्योक्तो बन्धुरवका अधस्ताद्भवन्त्यवका उपरिष्टादापो वाऽअवका अपामेवैनमेतन्मध्यतो दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥११॥ अथोलूखलमुसलेऽउपदधाति । विष्णुरकामयतान्नादः स्यामिति स एतेऽइष्टकेऽअपश्यदुलूखलमुसले तेऽउपाधत्त तेऽउपधायान्नादोऽभवत्तथैवैतद्यजमानो यदुलूखलमुसलेऽउपदधाति

येन रूपेण यत्कर्म कृत्वा विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म कृत्वान्नादोऽसानीति तदेतत्सर्वमन्नं यद्उलूखलमुसलेऽउलूखलमुसलाभ्यां ह्येवान्नं क्रियतऽउलूखलमुसलाभ्यामद्यते ॥१२॥ ते रेतःसिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेतदन्नं दधात्युत्तरेऽउत्तरमेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्निमात्राद्ध्यन्नमद्यते ॥१३॥ प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसंमितमेवास्मिन्नेतदन्नं दधाति यद्व वाऽआत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥१४॥ औदुम्बरे भवतः । ऊर्ग्वै रस उदुम्बर ऊर्जमेवास्मिन्नेतद्रसं दधात्यथो सर्वऽएते वनस्पतयो यदुदुम्बर एतेऽउपदधत्सर्वान्वनस्पतीनुपदधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पतीन्दधाति तस्मादनयोर्वनस्पतयश्चतुःस्रक्ति भवति चतस्रो वै दिशः सर्वासु तद्दिक्षु वनस्पतीन्दधाति तस्मात्सर्वासु दिक्षु वनस्पतयो मध्ये संगृहीतं भवत्युलूखलरूपतायै ॥१५॥ यद्वेवोलूखलमुसलेऽउपदधाति । प्रजापतेर्विस्रस्तात्प्राणो मध्यत उदचिक्रमिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति ॥१६॥ प्राणे गृहीतेऽस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णात्तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति ॥१७॥ एतयोरुभयोर्गृहीतयोः । अस्मादूर्गुदचिक्रमिषत्तामेताभ्यामुभाभ्यामगृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्जयति ॥१८॥ ऊर्जि गृहीतायाम् । अस्मादेतेऽउभेऽउदचिक्रमिषतां तेऽऊर्जागृह्णात्तस्मादेतेऽउभे ऊर्जा गृहीते यद्ध्येवोर्जयति स प्राणिति सोऽन्नमत्ति ॥१९॥ तान्येतान्यन्योऽन्येन गृहीतानि । तान्यन्योऽन्येन गृहीत्वात्मन्प्रापादयत तदेतदन्नं प्रपद्यमानं सर्वे देवा अनुप्रापद्यन्तान्नजीवनं हीदं सर्वम् ॥२०॥ तदेष श्लोकोऽभ्युक्तः । तद्धि स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महो भूत्वा प्रजापतिरिति महान्हि स तदभवद्यदेन-

मेते देवाः प्रापश्यन्त भुञ्जो भुञ्जिष्या विह्वेति प्राणा वै भुञ्जोऽन्नं भुञ्जिष्या एतत्सर्वं विह्वेत्येतद्यत्प्राणान्प्राणयत्पुरीत्यात्मा वै पूर्यद्धि प्राणान्प्राणयत्तस्मात्प्राणा देवा अथ यत्प्रजापतिः प्राणयत्तस्माद्व प्रजापतिः प्राणो यो वै स प्राण एषा सा गायत्र्यथ यत्तदन्नमेष स विष्णुर्देवताथ या सोऽग्नेष स उडुम्बरः ॥२१॥ सोऽब्रवीत्। अयं वाव मा सर्वस्मात्पाप्मन उदभार्षीदिति यदब्रवीदुदभार्षीन्मिति तस्मादुडुम्भर उडुम्भरो ह वै तमुडुम्बर इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा उरु मे करदिति तस्मादुरुकरमुरुकरꣳ ह वै तदुलूखलमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः सैषा सर्वेषां प्राणानां योनिर्यदुलूखलꣳ शिरो वै प्राणानां योनिः ॥२२॥ तत्प्रादेशमात्रं भवति। प्रादेशमात्रमिव हि शिरश्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मध्ये संगृहीतं भवति मध्ये संगृहीतमिव हि शिरः ॥२३॥ तं यत्र देवाः समस्कुर्वन्। तदस्मिन्नेतत्सर्वं मध्यतोऽदधुः प्राणमन्नमूर्जं तथैवास्मिन्नयमेतद्दधाति रेतःसिचोर्वेलया पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेतत्सर्वं दधाति ॥२४॥ विष्णोः कर्माणि पश्यतेति। वीर्यं वै कर्म विष्णोर्वीर्याणि पश्यतेत्येतद्यतो व्रतानि पस्पशऽइत्यन्नं वै व्रतं यतोऽन्नꣳ स्पाशयांचक्रऽइत्येतदिन्द्रस्य युज्यः सखेतीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानꣳ ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२५॥ अथोखामुपदधाति योनिर्वाऽउखा योनिमेवैतदुपदधाति तामुलूखलऽउपदधात्यन्तरिक्षं वाऽउलूखलं यद्धि किं चास्या ऊर्ध्वमन्तरिक्षमेव तन्मध्यं वाऽअन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात्सर्वेषां भूतानां मध्यतो योनिरपि वनस्पतीनाम् ॥२६॥ यद्वेवोखामुपदधाति। यो वै स प्रजापतिर्व्यस्रꣳसतैषा सोखेमे वै लोका उखेमे लोकाः प्रजापतिस्तामुलूखलऽउपदधाति तदेनमेतस्मिन्त्सर्वस्मिन्प्रतिष्ठापयति प्राणोऽन्नऽऊर्ध्वथोऽएत-

स्मादेवैनमेतत्सर्वस्मादनन्तर्हितं दधाति ॥२७॥ अथोपशयां पिष्ट्वा । लोकभाज-
मुखां कृत्वा पुरस्तादुखाया उपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तरिता
भवति ॥२८॥ तदाहुः । कथमस्यैषा पक्वा शृतोपहिता भवतीति यदेव यजुष्कृ-
ता तेनाथो यद्वै किं चैतमग्निं वैश्वानरमुपनिगच्छति तत एव तत्पक्वꣳ शृतमुप-
हितं भवति ॥२९॥ ध्रुवासि धरुणेति । तस्योक्तो बन्धुरितो जज्ञे प्रथममेभ्यो यो-
निभ्योऽअधि जातवेदा इत्येतेभ्यो हि योनिभ्यः प्रथमं जातवेदा अजायत स गा-
यत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्नित्येतैर्वाऽएष छन्दोभिर्दे-
वेभ्यो हव्यं वहति प्रजानन् ॥३०॥ इषे राये रमस्व । सहसे द्युम्नऽऊर्जेऽअप-
त्यायेत्येतस्मै सर्वस्मै रमस्वेत्येतत्सम्राडसि स्वराडसीति सम्राड्ढ्येष स्वराट् सा-
रस्वतौ त्वोत्सौ प्रावतामिति मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वताऽउत्सौ
तौ त्वा प्रावतामित्येतद्द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चा
पश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥३१॥ अथैनामभिजुहोति
एतद्वाऽअस्यामेतत्पूर्वꣳ रेतः सिक्तं भवति सिकतास्तदेतदभिकरोति तस्माद्योनौ
रेतः सिक्तमभिक्रियतऽआज्येन जुहोति स्रुवेण स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां
गायत्रीभ्यां तस्योक्तो बन्धुः ॥३२॥ अग्ने युक्ष्वा हि ये तव । युक्ष्वा हि देवहू-
तमानिति युक्तवतीभ्यामिदमेवैतद्योनौ रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न
निष्पद्यते ॥३३॥ स यदि संवत्सरभृतः स्यात् । अथाभिजुहुयात्सर्वं वै तद्यत्सं-
वत्सरभृतः सर्वं तद्यदभिजुहोत्यथ यद्यसंवत्सरभृतः स्यादुपैव तिष्ठेतासर्वं वै त-
द्यदसंवत्सरभृतोऽसर्वं तद्यदुपतिष्ठतेऽभि त्वेव जुहुयात् ॥३४॥ पशुरेष यदग्निः ।
सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्यावाड् प्राणाः स्वयमातृण्णा श्रोणी द्वियजुः पृष्ट-
यो रेतःसिचौ कीकसा विश्वज्योतिः ककुदमृतव्ये ग्रीवा अषाढा शिरः कूर्मो ये
कूर्मे प्राणा ये शीर्षन्प्राणास्ते ते ॥३५॥ तं वाऽएतम् । इत ऊर्ध्वं प्राञ्चं चिनो-

त्यसौ वाऽआदित्य एषोऽग्निरमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः प्राङ् धीयते ॥३६॥ अथैनं प्रसलव्यावर्तयति । अमुं तदादित्यं प्रसलव्यावर्तयति तस्मादसावादित्य इमाँल्लोकान्प्रसलव्यनुपर्यैति ॥३७॥ उदरमुखा । योनिरुलूखलमुत्तरोखा भवत्यधरमुलूखलमुत्तरꣳ ह्युदरमधरा योनिः शिश्नं मुसलं तद्वृत्तमिव भवति वृत्तमिव हि शिश्नं तद्दक्षिणत उपदधाति दक्षिणतो वै वृषा योषामुपशेते यद्व पशोः संस्कृतस्यान्नं तद्वेष्टका तस्य वाऽएतस्योत्तरोऽर्ध उदाहिततरो भवति पशुरेष यदग्निस्तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥३८॥ ब्राह्मणम् ॥ १ [५. १.] ॥ ॥

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोका उखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून्दधाति तस्मादिमऽएषु लोकेषु पशवः ॥१॥ यद्वेवोखायाम् । योनिर्वाऽउखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्मादृच्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति ॥२॥ यद्वेव पशुशीर्षाण्युपदधाति । या वै ताः श्रिय एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यास्ताः पञ्च चितय इमे ते लोकास्तद्य तऽइमे लोका एषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि संदधाति ॥३॥ तान्पुरस्तात्प्रतीच उपदधाति । एतद्ध यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्यमाना उदचिक्रमिषंस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्तात्प्रतीच आत्मन्नधत्त ॥४॥ तद्वाऽएतत्क्रियते । यद्देवा अकुर्वन्निदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्त्वेतत्करोति यद्देवा अकुर्वंस्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीच आत्मन्धत्ते ॥५॥ यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वाऽइदमग्रऽआसीदेक एव सोऽकामयतान्नꣳ सृजेय प्रजायेयेति स प्राणेभ्य एवाधि प-

शून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गां श्रोत्रादविं वाचोऽजं तद्यदे-
नान्प्राणेभ्योऽधि निरमिमीत तस्मादाहुः प्राणाः पशव इति मनो वै प्राणानां
प्रथमं तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां वीर्यवत्तम
इति मनो वै सर्वे प्राणा मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तद्यन्मनसः पुरुषं
निरमिमीत तस्मादाहुः पुरुषः सर्वे पशव इति पुरुषस्य ह्येवैते सर्वे भवन्ति
॥६॥ तदेतदन्नं सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त तस्माद्यः कश्चान्नं सृजते पुर-
स्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वाऽउखायामुदरं वाऽउखोदरे तदन्नं दधाति ॥७॥
अथैषु हिरण्यशकलान्प्रत्यस्यति । प्राणो वै हिरण्यमथ वाऽएतेभ्यः पशुभ्यः सं-
ज्ञप्यमानेभ्य एव प्राणा उत्क्रामन्ति तद्यद्धिरण्यशकलान्प्रत्यस्यति प्राणानेवैष्वेतद्द-
धाति ॥८॥ सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणास्तानस्मिन्नेतद्दधात्यथ यदि पञ्च
पशवः स्युः पञ्चैव कृत्वः सप्त-सप्त प्रत्यस्येत्पञ्च वाऽएतान्पशूनुपदधाति सप्त-सप्त
वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधाति ॥९॥ तद्धैकेऽपि । यद्येकः
पशुर्भवति पञ्चैव कृत्वः सप्त-सप्त प्रत्यस्यन्ति पञ्च वाऽएतान्पशूनुपदधाति सप्त-
सप्त वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दध्म इति न तथा कुर्याद्
तस्मिन्वै पशौ सर्वेषां पशूनां रूपं तद्यदेतस्मिन्प्रत्यस्यति तदेवैषु सर्वेषु प्रा-
णान्दधाति ॥१०॥ मुखे प्रथमं प्रत्यस्यति । सम्यक्स्रवन्ति सरितो न धेना इत्यन्नं
वै धेनास्तदिदं सम्यङ्मुखमभिसंस्रवत्यन्तर्हृदा मनसा पूयमाना इत्यन्तर्वै हृद-
येन मनसा सतान्नं पूतं य ऋजुस्तस्य घृतस्य धारा अभिचाकशीमीति या एवैत-
स्मिन्नग्नावाहुतीर्होष्यन्भवति ता एतदाह हिरण्ययो वेतसो मध्येऽअग्नेरिति य
एवैष हिरण्मयः पुरुषस्तमेतदाह ॥११॥ ऋचे त्वेतीह । प्राणो वाऽऋक्प्राणेन
ह्यर्चति रुचे त्वेतीह प्राणो वै रुक्प्राणेन हि रोचतेऽथो प्राणाय हीदं सर्वं
रोचते भासे त्वेतीह ज्योतिषे त्वेतीह भास्वती हीमे ज्योतिष्मती चक्षुषीऽअभू-

दिद् विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चेतीह्यग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वानितीह विश्वावतीभ्यां विश्वꣳ हि श्रोत्रम् ॥१२॥ अथ पुरुषशीर्षमुद्गृह्णाति । मह्यत्येवैनदेतत्सहस्रदा असि सहस्राय त्वेति सर्वं वै सहस्रꣳ सर्वस्य दातासि सर्वस्मै त्वेत्येतत् ॥१३॥ अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तद्वीर्येणाप्त्वा दधाति मध्ये पुरुषमभित इतरान्पशून्पुरुषं तत्पशूनां मध्यतोऽत्तारं दधाति तस्मात्पुरुष एव पशूनां मध्यतोऽत्ता ॥१४॥ अश्वं चाविं चोत्तरत । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥१५॥ गां चाजं च दक्षिणत । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥१६॥ पयसि पुरुषमुपदधाति । पशवो वै पयो यजमानं तत्पशुषु प्रतिष्ठापयत्यादित्यं गर्भं पयसा समङ्ग्धीत्यादित्यो वाऽएष गर्भो यत्पुरुषस्तं पयसा समङ्ग्धीत्येतत्सहस्रस्य प्रतिमां विश्वरूपमिति पुरुषो वै सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति परिवृङ्ग्धि हरसा माभिमꣳस्था इति पर्येनं वृङ्ग्ध्यर्चिषा मैनꣳ हिꣳसीरित्येतच्छतायुषं कृणुहि चीयमान इति पुरुषं तत्पशूनाꣳ शतायुं करोति तस्मात्पुरुष एव पशूनाꣳ शतायुः ॥१७॥ अथोत्तरतोऽश्वम् । वातस्य जूतिमिति वातस्य वाऽएष जूतिर्यदश्वो वरुणस्य नाभिमिति वारुणो ह्यश्वोऽश्वं जज्ञानꣳ सरिरस्य मध्यऽइत्यापो वै सरिरमप्सुजा उ वाऽअश्वः शिशुं नदीनाꣳ हरिमद्रिबुध्नमिति गिरिर्वाऽअद्रिर्गिरिबुध्ना उ वाऽआपोऽग्ने मा हिꣳसीः परमे व्योमन्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतत् ॥१८॥ अथ दक्षिणतो गाम् । अजस्रमिन्दुमरुषमिति सोमो वाऽइन्दुः स हैष सोमोऽजस्रो यद्गौर्भुरण्युमिति भर्तारमित्येतदग्निमीडे पूर्वचित्तिं नमोभिरित्याग्नेयो वै गौः पूर्वचित्तिमिति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्ति स पर्वभिर्ऋतुशः कल्पमान इति यद्वाऽएष चीयते तदेष पर्वभिर्ऋतुशः कल्पते गां मा हिꣳसीरदितिं विराजमिति

विराड्वै गौरन्नं वै विराडन्नमु गौः ॥१९॥ अथोत्तरतोऽविम् । वरूत्रीं त्वष्टुर्वरुणस्य नाभिमिति वारुणी च ह्येषा त्वाष्ट्री चाविरविं जज्ञानाꣳ रजसः परस्मादिति श्रोत्रं वै परꣳ रजो दिशो वै श्रोत्रं दिशः परꣳ रजो महीꣳ साहस्रीमसुरस्य मायामिति महतीꣳ साहस्रीमसुरस्य मायामित्येतदग्ने मा हिꣳसीः परमे व्योमन्निति इमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतत् ॥२०॥ अथ दक्षिणतोऽजम् । योऽअग्निरग्नेरध्यजायतेत्यग्निर्वाऽएषोऽग्नेरध्यजायत शोकात्पृथिव्याऽउत वा दिवस्परीति यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायत येन प्रजा विश्वकर्मा जजानेति वाग्वाऽअजो वाचो वै प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्त्विति यथैव यजुस्तथा बन्धुः ॥२१॥ तऽएते पशवः । तान्नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः ॥२२॥ अथ पुरुषशीर्षमभिजुहोति । आहुतिर्वै यज्ञः पुरुषं तत्पशूनां यज्ञियं करोति तस्मात्पुरुष एव पशूनां यजते ॥२३॥ यद्वेवैनदभिजुहोति । शीर्षंस्तद्वीर्यं दधात्याज्येन जुहोति वज्रो वाऽआज्यं वीर्यं वै वज्रो वीर्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण वृषा वै स्वाहाकारो वीर्यं वै वृषा वीर्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा वज्रो वै त्रिष्टुब्वीर्यं वै वज्रो वीर्यं त्रिष्टुब्वीर्येणैवास्मिन्नेतद्वीर्यं दधाति ॥२४॥ स वाऽअर्धर्चमनुद्रुत्य स्वाहाकरोति । अस्थि वाऽइदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो वीर्यं तदस्मिन्दधाति ॥२५॥ अथोत्तरमर्धर्चमनुद्रुत्य स्वाहाकरोति । इदं तच्छीर्षकपालꣳ संधाय यदिदमुपरिष्टाच्छीर्ष्णो वीर्यं तदस्मिन्दधाति ॥२६॥ चित्रं देवानामुदगादनीकमिति । असौ वाऽआदित्य एष पुरुषस्तदेतच्चित्रं देवानामुदेत्यनीकं चक्षुर्मित्रस्य वरुणस्याग्नेरित्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षुराप्रा द्यावापृथिवीऽअन्तरिक्षमित्युद्यन्वाऽएष इमांल्लोकानापूरयति सूर्य आत्मा जगतस्तस्थुषश्चेत्येष ह्यस्य सर्वस्यात्मा यच्च जगद्यच्च तिष्ठति ॥२७॥ अथो-

त्सर्गैरुपतिष्ठत । ऽएतद्धि यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्यमाना अ-
शोचंस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहंस्तथैवैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मा-
नमपहन्ति ॥२८॥ तद्धैके । यं-यमेव पशुमुपदधति तस्य-तस्य शुचमुत्सृजन्ति ने-
च्छुचं पाप्मानमभ्युपदधामहाऽइति ते ह ते शुचं पाप्मानमभ्युपदधति याꣳ हि
पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥२९॥ विपरिक्राममु हैकऽउप-
तिष्ठन्ते । ऊर्ध्वाꣳ शुचमुत्सृजाम इति ते ह ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वी ह्येतेन
कर्मणेत्यूर्ध्वामु शुचमुत्सृजन्ति ॥३०॥ बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोका एषो
ऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्धा शुचं
दधात्युदङ् तिष्ठन्नेतस्याꣳ ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैषेतच्छुचं दधाति
॥३१॥ पुरुषस्य प्रथममुत्सृजति । तꣳ हि प्रथममुपदधातीमं मा हिꣳसीर्द्विपादं
पशुमिति द्विपाद्वाऽएष पशुर्यत्पुरुषस्तं मा हिꣳसीरित्येतत्सहस्राक्षो मेधाय ची-
यमान इति हिरण्यशकलैर्वाऽएष सहस्राक्षो मेधायेत्यन्नायेत्येतन्मयुं पशुं मेधमग्ने
जुषस्वेति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येतत्तेन चिन्वानस्तन्वो नि-
षीदेत्यात्मा वै तनूस्तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतन्मयुं ते शुगृच्छतु यं
द्विष्मस्तं ते शुगृच्छत्विति तन्मयौ च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३२॥ अ-
थाश्वस्य । इमं मा हिꣳसीरेकशफं पशुमित्येकशफो वाऽएष पशुर्यदश्वस्तं मा
हिꣳसीरित्येतत्कनिक्रदं वाजिनं वाजिनेष्विति कनिक्रदो वाऽएष वाज्यु वाजि-
नेषु गौरमारण्यमनु ते दिशामीति तदस्मै गौरमारण्यमनुदिशति तेन चिन्वान-
स्तन्वो निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतद्गौरं ते शुगृच्छतु यं द्वि-
ष्मस्तं ते शुगृच्छत्विति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३३॥ अथ
गोः । इमꣳ साहस्रꣳ शतधारमुत्समिति साहस्रो वाऽएष शतधार उत्सो यद्गौ-
र्व्यच्यमानꣳ सरिरस्य मध्यऽइतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वि-

त्येतद्घृतं दुहानामदितिं जनायेति घृतं वाऽएषादितिर्जनाय दुहेऽग्ने मा हिꣳसीः
परमे व्योमन्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतद्गवय-
मारण्यमनु ते दिशामीति तदस्मै गवयमारण्यमनुदिशति तेन चिन्वानस्तन्वो
निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतद्गवयं ते शुगृच्छतु यं द्विष्मस्तं
ते शुगृच्छत्विति तद्गवये च शुचं दधाति यं च द्वेष्टि तस्मिꣳश्च ॥३४॥ अथावेः । इ-
ममूर्णायुमित्यूर्णावलमित्येतद्वरुणस्य नाभिमिति वारुणो ह्यविस्त्वचं पशूनां द्वि-
पदां चतुष्पदामित्युभयेषाꣳ ह्येष पशूनां त्वग्द्विपदां च चतुष्पदां च त्वष्टुः प्रजानां
प्रथमं जनित्रमित्येतद्ध त्वष्टा प्रथमꣳ रूपं विचकाराग्ने मा हिꣳसीः परमे व्योमन्नि-
तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतदुष्ट्रमारण्यमनु ते दि-
शामीति तदस्माऽउष्ट्रमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चि-
न्वान आत्मानꣳ संस्कुरुष्वेत्येतदुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तदुष्ट्रे
च शुचं दधाति यं च द्वेष्टि तस्मिꣳश्च ॥३५॥ अथाजस्य । अजो ह्यग्नेरजनिष्ट शो
कादिति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत सोऽअपश्यज्जनिता-
रमग्रऽइति प्रजापतिर्वै जनिता सोऽपश्यत्प्रजापतिमग्रऽइत्येतत्तेन देवा देवता-
मग्रऽआयन्निति वाग्वाऽअजो वाचो वै देवा देवतामग्रमायंस्तेन रोहमायन्नुप
मेध्यास इति स्वर्गो वै लोको रोहस्तेन स्वर्गं लोकमायन्नुप मेध्यास इत्येतच्छ-
रभमारण्यमनु ते दिशामीति तदस्मै शरभमारण्यमनुदिशति तेन चिन्वानस्तन्वो
निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतच्छरभं ते शुगृच्छतु यं द्विष्मस्तं
ते शुगृच्छत्विति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिꣳश्च ॥३६॥ तदाहुः । यां
वै तत्प्रजापतिरेतेषां पशूनाꣳ शुचं पाप्मानमपाहंस्तऽएते पञ्च पशवोऽभवंस्त
ऽएतऽउत्क्रान्तमेधा अमेध्या अयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि द-
धाति तस्मादेतस्यां दिशि पर्जन्यो न वर्षुको यत्रैते भवन्ति ॥३७॥ प्रत्येत्याग्निमु-

पतिष्ठते । एतद्वाऽएतद्यथायथं करोति यदग्नौ सामिचिते बर्हिर्वेद्येति तस्माऽए-
वैतन्निह्नुतेऽहिꣳसायाऽआग्नेय्याग्नयऽएवैतन्निह्नुते गायत्र्या गायत्रोऽग्निर्यावानग्नि-
र्यावत्यस्य मात्रा तावतैवास्माऽएतन्निह्नुतेऽनिरुक्तया सर्वं वाऽअनिरुक्तꣳ सर्वे-
णैवास्माऽएतन्निह्नुते यविष्ठवत्यैतद्वास्य प्रियं धाम यद्यविष्ठ इति यद्वै जात इदꣳ
सर्वमयुवत तस्माद्यविष्ठः ॥३८॥ त्वं यविष्ठ दाशुष इति । यजमानो वै दाश्वान्नॄं
पाहीति मनुष्या वै नरः शृणुधी गिर इति शृणु न इमाꣳ स्तुतिमित्येतद्रक्षा
तोकमुत त्मनेति प्रजा वै तोकꣳ रक्ष प्रजां चात्मानं चेत्येतत् ॥३९॥ अरुह्या-
ग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति । आप एता यदपस्या अथ वा
ऽएतेभ्यः पशुभ्य आप उत्क्रान्ता भवन्ति तद्यदपस्या उपदधात्येष्वेवैतत्पशुष्वपो द-
धात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्च-पञ्चोपद-
धाति पञ्च ह्येते पशवः सर्वत उपदधाति सर्वत एवैष्वेतदपो दधाति ॥४०॥ त-
द्याः पञ्चदश पूर्वाः । ता अपस्या वज्रो वाऽआपो वज्रः पञ्चदशस्तस्माद्येनापो
यन्त्यपीव तत्र पाप्मानं घ्नन्ति वज्रो ह्येव तस्यार्धस्य पाप्मानमपहन्ति तस्माद्वर्षत्य-
प्रावृतो व्रजेदयं मे वज्रः पाप्मानमपहनदिति ॥४१॥ अथ याः पञ्चोत्तराः । ता-
श्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवोऽन्नमु पशोर्माꣳसमथ वाऽएतेभ्यः पशु-
भ्यो माꣳसान्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या उपदधात्येष्वेवैतत्पशुषु माꣳसानि
दधात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितानि तत्पशुभ्यो माꣳसानि दधात्यन्तरा
अपस्या भवन्ति बाह्याश्छन्दस्या अन्तरा ह्यापो बाह्यानि माꣳसानि ॥४२॥ त-
दाहुः । यदिमा आप एतानि माꣳसान्यथ क्व त्वक्क्व लोमेत्यन्नं वाव पशोस्त्वगन्नं
लोम तद्यच्छन्दस्या उपदधाति सैव पशोस्त्वक्तल्लोमाथो यान्यमून्युखायामजलो-
मानि तानि लोमानि बाह्योखा भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि लो-
मान्यन्तर आत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सर्वानेव वयं कृ-

त्स्मान्पशूत्संस्कुर्म इति ॥४३॥ यद्वेवापस्या उपदधाति । प्रजापतेर्विस्रस्तादाप आ-यंस्तास्वितास्वविशद्यदविशत्तस्माद्विशतिस्ता अस्याङ्गुलिभ्योऽध्यस्रवन्नन्तो वा ऽअङ्गुलयोऽन्तत एवास्मात्ता आप आयन् ॥४४॥ स यः स प्रजापतिर्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयतेऽथ या अस्मात्ता आप आयन्नेतास्ता अपस्यास्तद्यदे-ता उपदधाति या एवास्मात्ता आप आयंस्ता अस्मिन्नेतत्प्रतिदधाति तस्मादेता अन्तेदधाति ॥४५॥ अपां त्वेमन्त्सादयामीति । वायुर्वाऽअपामेम यदा ह्येवैष इ-तश्चेतश्च वात्यथापो यन्ति वायौ ताꣳ सादयति ॥४६॥ अपां त्वोद्मन्त्सादयामीति । ओषधयो वाऽअपामोद्म यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्तऽओ-षधिषु ताꣳ सादयति ॥४७॥ अपां त्वा भस्मन्त्सादयामीति । अभ्रं वाऽअपां भस्मा-भ्रे ताꣳ सादयति ॥४८॥ अपां त्वा ज्योतिषि सादयामीति । विद्युद्वाऽअपां ज्यो-तिर्विद्युति ताꣳ सादयति ॥४९॥ अपां त्वायने सादयामीति । इयं वाऽअपामय-नमस्याꣳ ह्यापो यन्त्यस्यां ताꣳ सादयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥५०॥ अर्णवे त्वा स-दने सादयामीति । प्राणो वाऽअर्णवः प्राणे ताꣳ सादयति ॥५१॥ समुद्रे त्वा स-दने सादयामीति । मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनंस्तदेष श्लोकोऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णाभिरभ्रिभिः सुदेवो ऽअद्य तद्विद्याद्यत्र निर्वपणं दधुरिति मनः समुद्रो वाक्तीक्ष्णाभ्रिस्त्रयी विद्या नि-र्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि ताꣳ सादयति ॥५२॥ सरिरे त्वा सदने सा-दयामीति । वाग्वै सरिरं वाचि ताꣳ सादयति ॥५३॥ अपां त्वा क्षये सादयामी-ति । चक्षुर्वाऽअपां क्षयस्तत्र हि सर्वदैवापः क्षियन्ति चक्षुषि ताꣳ सादयति ॥५४॥ अपां त्वा सधिषि सादयामीति । श्रोत्रं वाऽअपाꣳ सधिः श्रोत्रे ताꣳ सा-दयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथोऽएतान्ये-

वास्मिन्नेतद्रूपाणि दधाति ॥५५॥ अपां वा सदने सादयामीति । द्यौर्वाऽअपाᳪ सदनं दिवि ह्यापः सन्ना दिवि ताᳪ सादयति ॥५६॥ अपां वा सधस्थे सादयामीति अन्तरिक्षं वा अपाᳪ सधस्थमन्तरिक्षे ताᳪ सादयति ॥५७॥ अपां वा योनौ सादयामीति । समुद्रो वाऽअपां योनिः समुद्रे ताᳪ सादयति ॥५८॥ अपां वा पुरीषे सादयामीति । सिकता वाऽअपां पुरीषᳪ सिकतासु ताᳪ सादयति ॥५९॥ अपां वा पाथसि सादयामीति । अन्नं वाऽअपां पाथोऽन्ने ताᳪ सादयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥६०॥ गायत्रेण वा छन्दसा सादयामि । त्रैष्टुभेन वा छन्दसा सादयामि जागतेन वा छन्दसा सादयाम्यानुष्टुभेन वा छन्दसा सादयामि पाङ्क्तेन वा छन्दसा सादयामीति तद्या अस्यैतेभ्यश्छन्दोभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतच्छन्दाᳪसि दधाति ॥६१॥ ता एता अङ्गुलयः । ताः सर्वत उपदधाति सर्वतो हीमा अङ्गुलयोऽन्तेषूपदधात्यन्तेषु हीमा अङ्गुलयश्चतुर्धोपदधाति चतुर्धा हीमा अङ्गुलयः पञ्च-पञ्चोपदधाति पञ्च-पञ्च हीमा अङ्गुलयो नानोपदधाति नाना हीमा अङ्गुलयः सकृत्सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनाः ॥६२॥ ब्राह्मणम् ॥२ [५.२.]॥ चतुर्थः प्रपाठकः ॥ कण्डिकासंख्या१००॥ पञ्चमोऽध्यायः [४८.] ॥ ॥ अस्मिन्काण्डे कण्डिकासंख्या३१८ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे हस्तिघटनाम सप्तमं काण्डं समाप्तम् ॥७॥

## EXTRACTS FROM THE COMMENTARY OF SÂYAṆÂCÂRYA.

उखासम्भरणाद्यं तु भस्मावहरणान्तकम् । चित्यस्याग्नेर्ब्राह्मणमङ्गं प्रोक्तं षष्ठेऽथ सप्तमे ॥
इष्टकाचयनात्पूर्वमग्निस्थानस्य संस्क्रिया । कर्तव्या यासन (?) सेह विस्पष्टमीर्यते ॥ ॥ अग्निं चिन्वत इत्यनारभ्य विहितस्याग्निचयनस्याथा नोऽग्निमग्निष्टोमेनानुयजतीत्यादिवाक्येन सोमयागशेषत्वावगतेः साग्निकस्य सम्बन्धिनां गार्हपत्यादिधिष्ण्यानां सर्वेषामेव चयनं सं-

स्कुर्यत्वान् (AB. सस्कर्तव्यत्वात् ?) । तत्र धिष्ण्येषु गार्हपत्याख्यस्य प्राथम्यात्तत्र प्रथमं चयनं विधित्सुस्ततः प्राच्यान्भूसंस्कारान्विधास्यन् (°च्याभू° AB.) तत्स्थानस्य समन्त्रकं व्युद्धननं विधत्ते गार्हपत्यं चेष्यन्निति । गृहपतिना संयुक्तोऽग्निर्गार्हपत्यः इह तु तस्याग्नेराधारभूतो भूप्रदेशः आधाराधेययोरभेदोपचारेणाधेयवाचिना शब्देनोच्यते संस्कर्तव्यत्वप्रतिपत्तये। एतत्स्थानं गार्हपत्यस्याग्नेरधिकरणमतश्च चयनेन संस्कर्तव्यम् । यतोऽस्मिन्स्थाने चयनं कर्तव्यमतो हेतोरेतत्पलाशवृक्षस्य शाखया व्युद्धहति लोष्टतृणादि संमार्जनेनापसारयति । गार्हपत्यस्याग्नेर्यत्स्थानं चयने सस्कराति मयात्र सोमेन यष्टव्यमिति तत्तेन व्युद्धननेन अवस्यति निश्चिनोत्येव यद्वा गार्हपत्यस्य यच्चयनं तदेव देवयजनाध्यवसानम् तथा च ये केचिदग्निचितः अग्निं चितवन्तो यजमानाः तेऽस्यामेव पृथिव्यामवसिताः अवसानं प्राप्तास्तत्रैव प्रवर्तन्ते तत्तथा सति पलाशशाखया यत्स्थानं व्युद्धहतीति यत् तत्तेन अवसितानेव तत्र स्थितान्प्राक्तनान्यजमानान्व्युद्धहति विविधं निरस्यति व्युद्धननं कुर्वतो यजमानस्याभिप्रायमाह नेदिति अग्निचयनमनुष्ठाय तत्रैवावस्थितान्यजमानानत्रैवाध्यवस्यामि तेषामुपरि अध्यवसानमवस्थानं न करिष्यामि ॥१॥ अवस्यत्यस्मिन्नित्यवसानं स्थानम् ॥३॥ यमः पितॄणां राजेति श्रुतिः । सविदानः संजानानः ऐकमत्यं प्राप्तः सन् ॥४॥ अवसितानवसाय स्थितान् । उदस्यति उत्क्षिपति परित्यजति ॥५॥ क्षारमृत्तिका ऊषाः । ऊषरदेशस्य पशुभिरुपजीव्यत्वादूषाणां पशुत्वव्यपदेशः ॥६॥ उल्वं गर्भवेष्टनम् ॥७॥ विक्रियते उत्पाद्यते ॥१०॥ यातयाम गतसारम् ॥११॥ एनं गार्हपत्यप्रदेशम् । परिश्रयन्त्येभिरिति परिश्रितः शर्करापर्यायाः सूक्ष्मपाषाणाः तैः परिश्रयन्ति परिवेष्टयन्ति ॥१२॥ दक्षिणावृत् प्रदक्षिणमावृत् आवर्तनं यथा भवति तथा । खाते देशे परिश्रयणं विधाय स्तौति खातेनेति गार्हपत्यायतनस्य परितः खातेन प्रदेशेन परिश्रिद्भिः परिश्रयेत् ॥१३॥ ऊर्ध्व एव विजते व्याप्नोति न तु तिर्यङ् कृत्स्नां भूमिमावृणोति विजतिव्याप्तिकर्मा । युगपदेवेदं सर्वं जगत्समुद्रो निर्मज्ज्यात् (!) निःशेषेण प्रक्षालयेत् स च समुद्रे प्रतिलीयेत । सादनं सूददोहसाधिवदनं चेष्टकाधर्मणा प्रसक्तमत्र निषेधति । उपधानकाले मन्त्रेणोपधाय ततस्तया [देवतये]त्युपहितस्य सादनम् ता अस्य सूददोहस इति मन्त्रः सूददोहाः तेनाधिवदनमुपरिष्टाद्वदनं सर्वेष्टकासाधारणो मन्त्रः तदुभयं परिश्रिदुपधाने न कर्तव्यम् । असन्ना ह्यापः क्वचित्क्वचित्सीदन्ति प्रवहणशीलत्वात् ॥१४॥ प्राण एव सूददोहाः अस्थिसंस्तुतासु परिश्रित्सु नासौ कर्तव्यः न खल्वस्थिषु प्राणोऽस्ति नाडीष्वेव हि तस्य संचारः । चित स्थेत्येकेनैव यजुषा बह्वीनां परिश्रितां स्थापनम् चोदितत्वात्परिश्रितामिष्टकात्वम् अत एवाहापस्तम्बः स्रावो (!) सप्त स्वयमातृण्णाः शर्करा हिरण्येष्टकाः पञ्च घृतेष्टका दूर्वास्तम्बः (पू°) कूर्म उलूखलमुसलं शूर्पमश्मानः पशुशिरांसि सर्पशिरश्चामृन्मयीरिष्टका इति । आप इति यत् एकरूपा एव हि लक्ष्यन्ते अत एकेन यजुषा परिश्रिद्रूपाणामपामुपधानं युक्तम् ॥१५॥ परिश्रितः शर्करा योनिः गर्भनिर्गमणमार्गः ॥१६॥ एनं व्युद्धननादिभिः संस्कृतं गार्हपत्यदेशमिष्टकाभिश्चिनोति ॥१७॥ गार्हपत्यायतनस्य मध्ये प्रथमं चतस्रः प्रागायता इष्टका उपदध्यात् ततः पश्चाद्भागे तिर्यगायते द्वे तथा चतसृणां पुरस्तादपि । स आत्मा मध्यदेह इत्यर्थः त्वगसृङ्मांसास्थिभेदेन मनोबुद्ध्यहङ्कारचित्तैर्वा जाग्रदवस्थाचतुष्टयेन वा आत्मनश्चातुर्विध्यम् । सक्थिः श्रोणिः तेन च पादो लक्ष्यते ॥१८॥

गर्भाशयेऽवस्थितं रेतो गर्भः यादृशाकारं विक्रियते विशिष्टावयवं क्रियते जननसमयेऽपि तादृगाकारविशिष्टमेवापत्यं जायते । तत् तत्र एतमग्निमत्र गार्हपत्यायतने यद्यस्मात्पक्षपुच्छवन्तं विकरोति सूक्ष्मरूपेण निर्मिमीते तस्मादेषोऽमुत्राहवनीयस्थाने पक्षपुच्छवाञ्जायते जायमान उपलभ्यते ॥ १९॥ एनमनभिव्यक्तरूपमग्निममुत्राहवनीयस्थाने अभिव्यक्तावयवं पश्यन्ति ॥२०॥ आत्मसंस्तुता इष्टकाः पूर्वमुपदध्यात् । उत्तराध्यामुत्तरार्धे भवामुत्तमभागेऽवस्थिताम् । तथैव खल्वस्य दक्षिणतोऽवस्थितस्याध्वर्योरेषो अग्निः अभ्यात्ममात्माभिमुखमेव चितो भवति ॥२१॥ प्रावणेभिरिति मन्त्रगतः प्रशब्दः प्रायणरूपं प्रायणम्य प्रगमनस्य प्रारम्भस्य रूपम् गार्हपत्यविविश्वाग्नेरग्निचयनस्य (? °चितिश्वा°?) प्रायणं प्रारम्भः अतः प्रशब्दोपेतो (°शाब्दाप्रवणे) मन्त्रोऽत्र योग्यः ॥२५॥ नाना पृथगेकैकेष्टकामुपदध्यात् ततो यऽआत्मन् आत्मस्थिताः नानाविधाः कामाः तान्सर्वानसंकीर्णा (°न् अत्रकी° AB.) पृथगेव स्थापयति । तया देवतयेति यत्सादनं तद्यतसृणामिष्टकानां सम्भूय सकृदेव कर्तव्यम् । संतनोति संयोजयति ॥ २६॥ मध्येष्टकोपधानानन्तर्यमथशब्दार्थः । गार्हपत्यस्थानस्य पश्चात्परिक्रम्य उत्तरस्यां दिशि दक्षिणामुखः आसीनः सन्नपरयोः पश्चात्ययोरिष्टकयोर्दक्षिणां दक्षिणभागस्थामिष्टकां प्रथममुपदधाति इडामग्न ऽइति मन्त्रेण ॥२७॥ सनातन इति ऋतव्यपदव्याख्यानमृत्वात्मकस्य कालस्य सर्वदा विद्यमानत्वात्तत्र भवोऽग्निः सनातनो नित्यः । यजुर्मन्त्रो यथैव प्रतिपादयति तथैव तस्य बन्धुः वध्नीयं (? बन्धनीयं ?) व्याख्यातः स्पष्टार्थतया न पृथग्व्याख्यायते ॥२८॥ अस्याग्नेः सक्थ्यौ श्रोण्यौ । इमे मनुष्यसम्बन्धिन्यौ । नाना पृथगसंश्लिष्टे । अग्रप्रदेशेन तयोः परस्परसंसर्गं विधत्ते अग्राभ्यामिति आत्मसमीपऽअग्रदेशः तत्रैते संस्पृष्टे भवतः ॥२९॥ येन मार्गेण पश्चात्ययोरुपधाने परिक्रमणं कृतं तेनैव पुनर्दक्षिणतः परिक्रम्य ॥३०॥ दक्षिणावृत्प्रादक्षिण्येन वर्तनम् ॥३१॥ पञ्च कृत्व इति मध्यऽउपधेयस्येष्टकाचतुष्टयस्यैकं सादनमन्यासां चत्वारीति पञ्च भवन्ति । पञ्चचितिकोऽग्निरिति पञ्च चितयः प्रस्तारा यस्मिन्स तथोक्तः । चित्यस्याग्नेः चितिपुरीषाणि त्रयोदश भवन्ति आदितश्चतस्रश्चितयः पुरीषनिवपनीतः (!) स्तोमभागीता (!) पञ्चमी चितिः तदनन्तरभाव्येकं पुरीषं नाकसत्प्रभृतिपुरीषनिवपनी ता (!) षष्ठी चितिरित्यादिना ॥३२॥ अवशिष्टे गार्हपत्यचितिस्थाने लोकम्पृणाख्यामिष्टकामुपदधाति । see ८. ७. २. १ । सकृदुच्चारितेन लोकं पृणेति मन्त्रेण तिसृणां युगपदुपधानं विधत्ते तिस्रः पूर्वा इति । अथ तेनैव सकृदुच्चारितेन मन्त्रेण दशानामिष्टकानामुपधानं विधत्ते दशोत्तरा इति उत्तरा उपरिभाविनीः । त्रेधाविभागपक्षमाह द्वे वाग्रऽइति तं लौकिकेन निदर्शनेनोपपादयति (निदेश° Codd.) एवं ह्येति यत्र हि काष्ठादिभिश्चितिर्निर्मीयते तत्र एवमेव हि चितिं चिन्वन्ति मूलाग्रभागयोर्द्वे काष्ठे प्रथमं तिर्यक्स्थापयन्ति पश्चात्तयोरुपर्युपर्यन्यानि सर्वाणि प्रागग्राण्यवशिष्टानि स्थापयन्ति उपरिष्टाच्चलनाभावायैकं (? वार्व्वेकं Codd.) पुनः स्थापयन्ति ॥३३॥ गार्हपत्यचितेः परितश्रिताः शर्करा अप्येकविंशतिसंख्याका एव भवन्ति । अयमेव चीयमानोऽग्निरमुतोऽमुत्र परिश्रित्स्वेकविंशः एकविंशतिसंख्यापूरकः अधिः सप्तम्यर्थानुवादी । यस्मादेताः परिश्रित इष्टकाश्च एवं प्रत्येकमेकविंशतिसंख्याका उपदधाति एतेन एतावेव अग्न्यादित्यौ अन्योऽन्यस्मिन्प्रतिष्ठापयति । इमावग्न्यादित्यावुभावप्यत्र चित्याग्नौ संनिहितौ भवतः तत्राहवनीयचितिरूपेणादित्यो वर्तते गार्हपत्यचितिरूपेणाग्निः ॥३५॥ इष्टकासंधिषु छिद्रपूरणार्थाः

पांसवः पुरीषम् तत्रासामुपरि प्रक्षिपति । उत्तरवेद्यर्थानां पांसूनां निर्हरणस्थानं चात्वालः उत्तरवेद्यंसदेशः तस्य या वेला समीपं ततः पुरीषमाहरेत् । आहवनीयाद्याधारोत्तरवेदिहेतुचात्वालस्याग्न्यात्मकता तथैव खलु सति अस्य चित्याग्नेरेतत्पुरीषमप्याग्नेयमग्निसम्बन्धमेव भवति ॥ इत्थं पुरीषान्ता गार्हपत्यचितिरुक्ता अथ तस्याः प्रान्तेषु साम्यमाह समम्बिला समं समानं बाह्याभ्यन्तरभावेन न्यूनाधिकरहितं बिलं परितः प्रान्तदेशो यस्याः सा ॥३६॥ चतुररत्निर्व्यामः तिर्यक्प्रसारितौ बाहू यावत्परिमाणौ भवतः तस्य परिमाणस्य माते (!) ऽस्मिन्बाहुद्वयमिति व्युत्पत्त्या व्यायाम इति संज्ञा स एवात्र वर्णलोपेन व्याम इत्युच्यते ॥३७॥ गार्हपत्यचितिरूपस्याग्नेरुख्याग्नेश्च (च)तुर्भिर्मन्त्रैः संसर्जनं विधत्ते अथैनाविति चित्योख्यरूपावग्नी संगमयति इष्टकाभिश्चिते गार्हपत्याधिहत्ये (?) उख्यमग्निं स्थापयति । आभ्यामग्निभ्यां कर्तरि तृतीया अग्निद्वयकर्तृकं संज्ञानं परस्परैकमत्यम् ॥३८॥ The explanation of k. ३९ - ४४ is wanting in AB. । तत्पय उखाया मध्ये आसिञ्चति यथा तत्पयः प्रति उपधानसमये पुरुषशीर्षमुपदध्यात्तथेत्यर्थः ॥ ४४ ॥ १ ॥ १ ॥

उख्यरूपेण संस्कृतस्याग्नेर्विराड्रूपप्रजापत्यात्मकतां वक्ष्यन् तस्य प्रजापतिसंस्कृतिवक्तुकामस्तच्छरीरविश्लेषं प्रतिपादयति प्रजापतिरिति आत्तः सन्विस्रस्तावयवोऽभवत् । यच्चक्षुरध्यशेत चक्षुरधि चक्षुषोर्मध्ये चक्षुषो ज्योतिरवस्थितमभवत् तस्मात् ज्योतिषोऽस्य प्रजापतेरन्नं स्रुतमभवत् । प्रतिष्ठास्पदम् ॥१॥ इतोऽस्मात्प्रजापतेः । स च संस्कृतो नोऽस्माकं पुनः प्रतिष्ठा आश्रयो भविष्यति ॥२॥ यत्खलु संवत्सरस्य मध्ये व्रीहियवादिरूपमन्नं पच्यते तदात्मना प्रजापतिविस्रस्तमन्नं परिणतमभवत् ॥५॥ प्रावृञ्जन् प्रतपनेन समस्कुर्वन् एनं प्रवृक्तं प्रजापतिं योऽग्निरारोहति संक्रामति तदात्मना प्राङ्निष्क्रान्तः प्राण एव एनं प्रजापतिं पुनरापद्यत प्राप्नोत् । उदश्रयन् उच्छ्रितमकुर्वन् ॥६॥ प्रतिष्ठाशब्देन पादाऽउच्येते । पार्थिवो ऽग्निस्तस्यावाचीनः प्राणः येन मूत्रपुरीषादिकमुत्सृज्यते । आत्मा मध्यदेहः । यस्मात्तस्माच्चक्षुषोऽन्नमस्रवत्तस्मात्कारणात्तच्चक्षूरूपश्चन्द्रमाः अतिशयेन मीलितः सूर्यादल्पप्रकाशो दृश्यते ॥७॥ एषा प्रजापत्यात्मिका । न केवलमतीतकालऽएव प्रजापतेः प्रतिष्ठारूपता वर्तमानभविष्यत्कालयोरपीत्याह सैवेयमिति ॥८॥ योऽयमग्निः गार्हपत्यचितिरूपोऽग्निः । तयोः तादात्म्योपपत्तये प्रजापतेरवस्थाविशेषं तत्रापि दर्शयति तद्यदेषेति तत्तत्र आहवनीये ॥९॥ संस्कारसाम्यमाह तामुखामग्नौ आहवनीये प्रवृणक्ति प्रतपति । एनामुखां प्रतप्तामग्निरारोहति आक्रमते अन्तर्जायतऽइति यत् । यजमानः सौवर्णं रुक्मं कण्ठे सूत्रेण बद्ध्वा तस्योपरि तमुख्यं बिभर्तीति यत् । उखायामग्न्यारोहणानन्तरं तस्मिन्याः समिध आदधाति ॥१०॥ समिधामाधानं तस्मिन्संवत्सरे प्रत्यहं कालत्रयेऽपि कर्तव्यम् । रुक्मप्रतिमोचनोख्यभरणादीनां संवत्सरकालव्याप्तिमाह तान्येतानीति तानि रुक्मप्रतिमोचनोख्यभरणसमिदाधानविष्णुक्रमणादीनि पूर्वोक्तानि एतानि प्राणवीर्यान्नरूपेणानुक्रान्तानीत्यर्थः(!) । अत्र प्रतिपुस्तके पत्रकुषं (°त्रद्वयं A.) गतम् (A. B.) । the explanation of क° ११-१९. is wanting ॥ तयोरिकामनुष्टुभं बुद्ध्वा विविच्याहवनीयस्थानं (विचिव्या°) हन्ति अनुसंधानाय हरेयुः । इहास्मिन्गार्हपत्यस्थाने ॥१९॥ आहवनीयगार्हपत्ययोर्मध्ये यदस्ति स्थानमाग्नीध्रीयाख्यमेतदेव सा यजुर्द्वयात्मिकानुष्टुप् । तनीयः तनुतरोऽल्पपरिमाण एव ॥२०॥ एष उख्योऽग्निः ॥२१॥ सैषा गार्ह-

पत्यचितिर्बृहत्येव सम्पद्यतऽइति शेषः । न चैकस्माद्क्षराद्विद्यमानाच्छन्दो व्येति विगच्छति अन्यथाभवति न च द्वाभ्यामक्षराभ्याम् एकेन द्वाभ्यां वा न्यूनं छन्दो न वैकल्यं प्राप्नोतीत्यर्थः तथा चैषां पञ्चत्रिंशत्संख्या[याम]पि बृहत्येवेति तत्सम्पत्ति[र]विरुद्धा । यथैव लोकवत्तथैवात्रापि योनिरूपायां गार्हपत्यचितौ यत् यस्मादेतां बृहतीं करोति तस्मादित उत्पद्यमान एष संचितो महाग्निरपि बृहतीमभिसम्पद्यते तां सम्पत्तिं यजुष्मतीनां षष्ट्युत्तरत्रिशतसंख्यया दश बृहत्यः सम्पद्यन्तऽइति दशमकाण्डे दर्शयिष्यामः ॥२२॥ गार्हपत्याग्नीध्रीयाहवनीयानां क्रमेण पृथिव्यन्तरिक्षद्युलोकात्मत्वात् क्रमेणैव तेषां संस्कारो युक्त इत्याशङ्क्य व्युत्क्रमानुष्ठानमुपपादयति तदाहुरिति । गार्हपत्याहवनीययोरन्तरालवर्तिनः आग्नीध्रीया धिष्ण्याः । गार्हपत्यचयनानन्तरं धिष्ण्यनिवपनमकृत्वा अथ कस्माद्धेतोराहवनीयचयनमेव क्रियते अथानन्तरमेव धिष्ण्यान्निवपति उपसर्गश्रवणाद्योग्यक्रियाध्याहारः (but there is no upasarga here!) । इत्थमनुष्ठाने कारणं वक्तुमाह सह हेति ॥२३॥२॥१॥

अथ गार्हपत्यचयनानन्तरमतोऽस्मात्स्थानान्निर्ऋतिदेवता इष्टका हरन्ति नैर्ऋत्यां दिशि निरस्येयुः । अनतिदृश्यमतिक्रम्य ॥१॥ निर्ऋतिः दक्षिणापरदिगधिदेवता ॥३॥ विंशत्यधिकशताङ्गुलिपरिमितः पुरुषः तस्य दशमोंऽशः पादः । अधस्पदं पादस्याधस्तात् । एतेन पादमात्र इत्यत्र पादशब्दोऽङ्घ्रिपर्यायो न चतुर्थांशवाचकः । आलिखितादिकं लक्षणं तद्रहिताः ॥७॥ इरिणं निस्तृणमूषरस्थानम् श्वभ्रप्रदरो वा श्वभ्राकारेण प्रदीर्णः प्रदेशः । तत् तस्मिन्स्थाने । अवदीर्यति भिद्यते । पराचीः पराञ्चनाः स्वस्वानभिमुखाः लोकभाजः स्थानभाजः ॥८॥ प्रलायं प्रलीय अदृश्यो भूत्वा एति गच्छति प्रलायमिति णमुलन्त्यः एवं त्वमपि प्रलयनमदर्शनं गच्छ ॥९॥ यो निःशेषेण ऋच्छति आर्तिं प्राप्नोति तं निरर्पयति निर्ऋतं प्रयुङ्क्ते ॥११॥ उपहिताया इष्टकायाः प्रथममुपस्पर्शनं कर्तव्यम् पश्चात्तया देवतयेति सादनम् ततस्ता अस्येति मन्त्रेण सूददोहसाधिवदनम् तदेतत्त्रितयमत्र न कर्तव्यम् ॥१२॥ परस्ताद्विप्रकृष्टाद्देशादारभ्यावाचीरात्माभिमुखमुत्तरोत्तरमात्माभिमुखीरुपदधाति ॥१५॥ अथ समिदाधानानन्तरमुख्याग्निधारणार्था या आसन्दी यच्च (? पत्र) भरणसमये उख्यधारणार्थं शिक्यं यश्च सौवर्णस्य रुक्मस्य प्रतिमोचनार्थं पाशः सूत्रं ये च इण्ड्वे अग्निसहिताया उखाया उभयतो धारणाय तृणमयौ पिण्डौ तत्सर्वं नैर्ऋतीनां परार्धे पश्चाद्भागे न्यस्यति क्षिपेत् । आसन्द्यादीनामुख्याग्नितप्तत्वात्प्रासनीयत्वं स्पष्टमित्यभिप्रेत्य रुक्मपाशस्य प्रासनीयत्वमुपपादयति नैर्ऋतो वाऽइति । आयुषो दातृत्वादग्निरायुः । एतं पितुमग्निचयनफलभूतमन्नं प्रसूतो निर्ऋतिदेवतयानुज्ञातः सन्हे यजमान त्वमशान ॥१५॥ स्वात्मन इष्टकानां च मध्ये उदकपूर्णं चमसं निषिञ्चति । भूत्यै श्रियै भवनाय ऐश्वर्याय । प्रतिनिवृत्य नैर्ऋतस्थानस्येक्षणमकृत्वा शालामागच्छन्ति ॥१७॥ गार्हपत्यम् । the explanation of the end of क° १८ to २, २ is wanting in AB. —

एतत् एतर्हि एतस्मिन्नवसरे खलु एनं पितरं प्रजापतिं विस्रस्तावयवं चयनेन संस्करिष्यन्तो देवाः पुरस्तात्ततः प्रागेव सीरलक्षणेनान्नेन समृद्धमकुर्वन् । इरा अन्नम् ॥२॥ परिसीर्यं परितः सीरस्य योजनायोपयुज्यमानं दाम मुञ्जतृणैर्निर्मितं त्रिगुणं च कर्तव्यम् ॥३॥ चेष्यमाणस्याग्नेर्यावान्भूभागः शौल्वेन मानेन चतुरश्रीकृतः तस्य दक्षिणां श्रोणिं जघनेन दक्षिणापरकोणस्य (? परमेतस्य) पश्चात्तिष्ठन् उत्तरांसस्याग्निक्षेत्रसम्बन्धिन उत्तरपूर्वकोणस्य

पुरस्ताद्युज्यमानं सीरं युगबलीवर्दादिभिः सह ज्ञा (!) बध्यमानं मन्त्रद्वयेनाभिमन्त्रयते । अत्र च सीरयोजनस्य तदभिमन्त्रणस्य(च) भिन्नदेशकर्तव्यतया यौगपद्याय कर्तृभेदोऽवसीयते तत्राभिमन्त्र[illegible]। प्रधानत्वात्सीरयोजनमध्वर्युः कुर्यात्तत्संस्कारात्मकमभिमन्त्रणं तद्द्वितीयः प्रतिप्रस्थाता कुर्यात् । सुखहेतुवाद्यन्नः खलु सुखशब्दाभिधेयः ॥४॥ अत्र प्रतिपुस्तके पत्रद्वयं गतत् (AB.) । the explanation of क° ५-१२ is wanting । चतसृषु दिक्षु प्रादक्षिण्येन कृतं कर्षणमभिनयेन स्तौति इत्यग्रऽइति । दक्षिणावृत्प्रादक्षिण्येनावृत्ति ॥१२॥ यजुर्मन्त्रेण कर्षणं प्रकारान्तरेण स्तौति तद्वाऽइति ॥१३॥ सीतानां संवत्सरसम्बन्धिनां मासानां [illegible]भ्यात्कृत्स्ने संवत्सरे यदेव व्रीहियवादिकमन्नं पच्यते तत्सर्वमस्मिन्नग्नौ एतदेतेन द्वादशसीताकर्षणेन दधाति । पूर्ववदत्राप्यभिनयेन कर्षणप्रकारं निर्दिश्य स्तौति इत्यग्रऽइति । इत्यनेन प्रकारेण अग्रे प्रथममात्मनो दक्षिणार्धमारभ्योत्तरार्धपर्यन्तं कर्षणं कुर्यात् अथानन्तरमित्यनेन प्रकारेण दक्षिणां श्रोणिमारभ्योत्तरांसपर्यन्तमक्ष्णया विकृषेत् अथानन्तरमित्यनेन प्रकारेण पश्चाद्भागमारभ्य पूर्वार्धपर्यन्तं विकृषेत् एतदनन्तरमित्यनेन प्रकारेणोत्तरां श्रोणिमारभ्य दक्षिणांसपर्यन्तं विकृषेत् ॥२४॥ स्तोत्रियानवकात्मको हि त्रिवृत्स्तोमः अग्निरपि (ग्नेरपि) रुद्रादिनामाष्टकाभिधेयैरष्टाभिरग्निरूपैः स्वात्मना च नवसंख्योपेतत्वात्त्रिवृत् see ६, १.३.१८. ॥१५॥ षोडशावयवसमुदायो हि स्थूलशरीराभिमानी विराडात्मकः प्रजापतिः ज्ञानेन्द्रियाणि पञ्च तथा कर्मेन्द्रियाणि मन एकं पञ्चभिर्भूतैः (?र्भूतैः) प्राणैर्वा सह तस्य षोडश कलाः ॥१७॥ विकर्षणं प्रकारान्तरेण स्तोतुमनुवदति यद्वेवेति । चक्षुरादिगोलकात्मिकासु रेखासु ॥१८॥ चक्षुः श्रोत्रं नासिका मुखम् ॥१९॥ प्राणाः प्राणवृत्तयः प्राणापानादिलक्षणाः मनोबुद्ध्यादिरूपा अन्तःकरणवृत्तयश्च ॥२०॥ तं कामं कर्षणलक्षणं प्रयोजनम् । अविक्रयक्रियहेतवो दातव्या गावो दक्षिणाः तासां यः कालो माध्यन्दिनसवनात्मकः तस्मिंस्तानडुहः अनुदिशेत् दद्यात् ॥२१॥२॥२॥

अत्र प्रतिपुस्तके पत्रत्रयं गतम् (AB.) । the explanation of ३. १. to ४. १४ is wanting । [ओ]षधिरूपस्य बीजस्य वर्जनं विधत्ते तेषामेकमिति । उद्धरेत्पृथक्कुर्यात् नावपेत् ॥१४॥ एवमृग्द्वयं व्याख्याय उत्तरासामप्येवमेव व्याख्यानमित्यतिदिशति ता इति ता एता बीजावपनार्था ऋचः एकव्याख्यानाः समानव्याख्यानाः अतो न पृथग्व्याख्यायन्ते अतिदिष्टं व्याख्यानं योजयति एतमेवाभीति इमं मेऽअगदं कृतेति योऽयं पुरुषोऽनुक्रान्तः एतमेव भेषजैर्युक्तं कुर्यात् तेन च भैषज्येन एतं व्याधिग्रस्तं पारयेत् पारमारोग्यं प्रापयेत् । एवं सति एनं पुरुषविधं चेष्यमाणमग्निमेतदेतेनानुष्टुप्छन्दसः प्रयोगेन सर्वेणैव भेषजेन भिषज्यति ॥२८॥ विहितानां कर्मणां समन्त्रकामन्त्रकत्वं सम्भूय स्तौति अथात इति ॥२९॥४॥२॥

साग्निचित्यक्रतौ सोमक्रयस्य कालं विधाय स्तौति चित इति ॥१॥ तस्मादयमात्मा देहः आन्तं शिरःप्रभृति पादपर्यन्तं रसेन व्याप्तो दृश्यते ॥३॥ आतिथ्यहविष्कृदन्ते आहवनीयचितिसंस्कारं विधित्सुः ततः प्राक्तनं चोदकप्राप्तं प्रयोगजातमनुक्रामति । तस्य कर्मणः हविष्कृता हविष्कृदेहीति मन्त्रेण प्राङ्नियमितां वाचं विसृजते । अस्मिन्समये आहवनीयचितिसंस्कारं विधित्सुस्तदुपोद्घातत्वेन सौमिकाग्निकयोः कर्मणोः परस्परं व्यतिषङ्गं विधत्ते अथ वा इति अथ खल्वेतदेव कुर्वन्नध्वर्युर्व्यतिषजति । सौमिकाग्निकभेदेन द्विविधस्य कर्मणः

एकीभवनार्थम् ॥४॥ वाग्विसर्जनानन्तरमाहवनीयसमीपदेशगमनम् ॥६॥ (गार्हपत्यवत्) आहवनीयस्थानस्यापि पलाशशाखया व्युद्हनं एकीयमतेनोपन्यस्य दूषयति तदेकऽइति । गार्हपत्यचयनेन हि यागदेशमध्यवस्यति अध्यवसानसमये भूशोधनार्थं व्युद्हनमपेक्षितम् ॥७॥ एवकारव्यवच्छेद्यमाह नाहवनीयऽइति । ऊषरप्रदेशस्य पशुभिर्लेह्यमानत्वादूषाणां पश्वात्मकत्वम् ॥८॥ सितभास्वरत्वादिरूपसाम्यात्सिकतानां रेतस्त्वम् ॥९॥ भिन्नमन्त्राभ्याम् अग्नेर्भस्मासीति हि मन्त्रेण गार्हपत्ये सिकतानिवपनं विहितम् (१. १. ११.) अग्ने तव श्रव इत्याहवनीये सिकतानिवपनस्य मन्त्रो विधास्यते (क० २१.) । इमाः परिश्रितः विशिष्टरूपाः कृता भवेयुः ॥१०॥ आहवनीयचितौ सिकतानिवपनात्पूर्वं परिश्रित्संज्ञकान् शर्करापरपर्यायक्षुद्रपाषाणानभिमन्त्रयते चित स्थेति मन्त्रेण (१. १. १२.) ॥११॥ आहवनीयस्थानन्युप्तानामेव सिकतानामाप्ययनवतीभ्यां (!) आप्यायतिधातुनिष्पन्नशब्दयुक्ताभ्यामाप्यायस्व सं तऽइत्येताभ्यामृग्भ्यामभिमर्शनं कर्तव्यम् ॥१२॥ लोकसंस्तुताभिः तिसृभिः स्वयमातृण्णाभिर्युक्तत्वात् (भिपु०) लोकसारप्रसिद्धा (? सरवसिद्धा) लोष्टरूपा इष्टका लोकेष्टकाः (!) ॥१३॥ वेदेर्बाह्यदेशेनेष्टकानामाहरणं विधाय स्तौति बाह्येनेति ॥१४॥ आहरणस्याग्निक्षेत्रापेक्षया बहिर्देशसम्बन्धो वेद्यपेक्षयापि तथात्वं विधत्ते बहिर्वेदेरिति ॥१५॥ समस्कुर्वन् चित्याग्निरूपेण संस्कृतवन्तः ॥१६॥ इयं वेदिलक्षणा भूमिर्वित्तिः लब्धव्यधनरूपा ॥१९॥ पूर्वस्या दिशः सकाशाल्लोकेष्टकां स्फ्येनाहरति । शर्कराणामभ्यन्तरदेशे आत्मनि स्थापयेत् ॥२०॥ इषितः प्रेरितः । पक्षसंधिमन्तरेण दक्षिणपक्षस्य आत्मभागस्य च यः संधिप्रदेशस्तस्याभ्यन्तरे आत्मभागे स्थापयेत् ॥२१॥ अत्राग्निशब्देन तदधिष्ठिता भूमिरेवाभेदोपचारेणोच्यते । पक्ष्याकारस्य चित्याग्नेः पुच्छ[स्या]त्मभागस्य च यः संधिः तमन्तरेण तस्य मध्ये आत्मन्नात्मनि । यज्ञपथः अग्नेः पश्चात्यो देशो हविर्धानादि ततः सकाशात् नेदुसमाहराणि रसस्याहृतत्वात्तत्र करिष्यमाणो यज्ञो नीरसः स्यात् । इतः प्रतीच्या दिशः इव न तु साक्षात्प्रतीच्या दिशः उत्तरापरस्या दिश आहरेत् ॥२२॥ इदं जातः इदानीं जातमात्र एव महानविवेको भूत्वा सर्वं जगदैष्णात् व्याप्नोत् । तस्यां दिशि सिकतानां प्रध्वंसनं विधत्ते जहामीति । सेदिः अवसादापरपर्याया हानिः । तस्मादेतस्यामुत्तरस्यां दिशि सर्वाः प्रजाः अशनेच्छा क्षुधा तया पीडिता दृश्यन्ते ॥२३॥ ताः प्राच्यादिदिक्षु क्रमेणोपहिता एता इष्टका दिगात्मिकाः । नाना पृथक् । आसीनात् ॥२४॥ अग्निक्षेत्रस्यात्मभागऽएवोपधानम् । यजुष्मत्यः करणभूतैर्यजुर्मन्त्रैर्युक्ताः । आत्मभागऽएव हि यजुर्मन्त्रोपधेया वक्ष्यमाणा इष्टका उपधीयन्ते ॥२५॥ स्वयंभृतः खलु अग्न्यादिपाकानपेक्षः । तत एव तस्मादेव संसर्गात् ॥२६॥ षडशीत्यङ्गुलपरिमितं युगम् उक्तं ह्यापस्तम्बेन अष्टाशीतिशतमीषा तिर्यगक्षश्चतुःशतं षडशीतिर्युगं वास्येति । सर्वतः सर्वासु दिक्षु तावन्मात्राम् । अनयोः प्रमाणयोर्मध्ये येन प्रकारेण कामयेत । तस्योक्तो बन्धुः (१. १. १०.) ॥२७॥ निखिलयागोत्पत्तिकारणाहवनीयस्थानत्वादुत्तरवेदिरपि योनिः अत एवाग्निप्रणयनीयास्वाम्नायते ऊर्णावन्तं प्रथमः सीद योनिमिति ॥२८॥ इरज्यतिः कण्ड्वादिर्दीप्तिमत्कर्मा । पृणक्षि फलेन संयोजयसि ॥३२॥ इष्कर्तारम् उपसर्गस्यादिलोपश्छान्दसः निष्कर्तारम् तथैव तैत्तिरीयैराम्नायते ॥३३॥ पृश्नयः सूक्ष्मपरिमाणबिन्दुरूपाः ॥३६॥ अथैतदुपधानकरणस्य षड्चस्य यच्छन्दः तस्य समुद्रियमिति नाम कस्मान्निमित्तादिति पृच्छति ॥३९॥ नन्वनन्तानां

सिकतानामुपधानं पृथक्पृथक् कथं समन्त्रकं स्यादिति पृच्छति मनो वाऽइत्युत्तरम् मन एव हि सर्वासां सिकतानां साधारणं यजुः तदिदं मनोरूपं यजुः सर्वाः सिकता अनुलक्ष्य विभवति प्रत्येकं व्याप्तुं शक्नोति ॥४०॥ शरीरस्य (शनोर) हि प्रकृतिमहदादिचतुर्विंशतितत्त्वात्मत्वात्तदुत्पन्नं (? शतितत्वात्मततदु°) रेतः पञ्चविंशम् ॥४३॥ सिकतानामपीष्टकात्वादितरेष्टकास्विव प्रसक्तं सादनं निषेधति न सादयतीति तया देवतयेति मन्त्रेण स्थापनं सादनात्तं न कर्तव्यम् ॥४४॥ आप्यायनवतीभ्याम् (!) । यत्सौमीभ्यामभिमर्शनमेष (न एष) एव सिकतोपधाने सूददोहाः ता अस्य सूददोहस इति मन्त्रकरणकमधिवदनम् ॥४५॥ अस्य लतारूपेण वर्तमानस्य सोमस्य द्युलोके उत्कृष्टं अवो नाम चन्द्रमा एवोच्यते । अमुष्मिन्स्वर्गलोके स खलु चन्द्रमाः एनं सोमममृतात्मना पीयमानः सन् आवयति प्रख्यापयति ॥४६॥१॥३॥

एवमाहवनीयदेशस्य संस्कारसमनन्तरं कर्तव्यं प्राकृतं प्रयोगजातमनुक्रामति प्रागुक्तमाग्निकसौमिकयोः कर्मणोर्व्यतिषङ्गं दर्शयितुम् आप्यायनवतीभ्यामित्यादिना । प्रत्येत्य उत्तरवेदिदेशात्प्राग्वंशं प्रत्यागत्य । अनन्तरमाग्निकस्य कर्मणः प्रवेशं दर्शयति अथैतामिति अथशब्दः प्रथमोपसदानन्तर्ये आनडुहे लोहिते चर्मणि एतां प्रथमां चितिं प्रथमचित्यर्थमिष्टकासमूहं समवशमयन्ति सम्यग्घृतावोक्षणेन तप्तानामिष्टकानां शमनं कुर्युः । लोमतः लोमप्रदेशे ॥१॥ गार्हपत्यचितेरग्रेण पूर्वभागे महावेदिमध्ये । तत्तत्र प्रथमचितेः पर्याप्तमिष्टकासंघातं (संघंशं) अवशमयन्ति संशान्तौष्ण्यं (? सौणंत्यौष्ण्यं) कुर्युः । अनतिक्रमणाय अैश्वर्याय । न होति इष्टकाभ्योऽन्यत्पुरोडाशादिकं किमपि हविः आज्यकरणकेन (वधाग्रकर°) प्रोक्षणेन संस्क्रियते उदकेनैव हि तस्य प्रोक्षणम् । चितेः पादसंस्पर्शविरहरूपानभ्यारोहणाय ॥२॥ अभ्यक्तमभितः सर्वत आज्येन सिक्तम् अभिघारितमुपरि घृतधारया संस्कृतम् ॥३॥ प्रथमचितिप्रोक्षणसमये द्वितीयतृतीयादिचित्यर्थानामिष्टकानां प्रोक्षणं विधित्सन्ब्रह्मवादिनां प्रश्नमवतारयति तदाहुरिति अस्योत्तरमाह अत्रास्मिन्समये सर्वासां चितीनां सम्बन्धिनीरिष्टकाः आज्येन दर्भाग्रैः प्रोक्षतीति यदस्ति एवमेव अनेनैव प्रकारेण खल्वस्य यजमानस्य एष सर्वः सप्तचितिकोऽग्निः प्रोक्षितो भवति एवमेव चर्माधिकरणं प्रण[यनमश्वसहितं प्रण]यनं चास्मादेव प्रोक्षणात्सिध्यति । उद्यच्छन्तीति चर्मणः इष्टका उद्गृह्णन्ति यजमानपरिचारकाः ॥४॥ अथाहवनीयदेशं प्रति नयनं विधित्सुस्तदर्थं होतारमुद्दिश्याध्वर्योः सम्प्रैषवचनं विधत्ते अथाहेति । बहुवचनात्तेनाग्निशब्देनाग्न्यवयवाश्चितयो विवक्षिताः आहवनीयदेशं प्रति प्राचीनं ह्रियमाणेभ्यः इष्टकारूपेभ्योऽग्न्यवयवेभ्यः हे होतरनुब्रूहि । सम्प्रैषानन्तरं प्रथमचित्यर्थानामिष्टकानां पूर्वस्यां दिशि हरणं विधित्सुस्तदाख्यायिकया स्तौति एतद्वै देवानिति एतत् एतस्मिन्समये । एतान् चितिरूपानग्नीन् ॥६॥ सम्प्रैषं व्याचष्टे । सप्तचित्यभिप्रायेण बहुवचनम् । यस्मादध्वर्युः इमा इष्टकाः प्रहरति पुरस्तादाहवनीयदेशं प्रापयति अतः प्राचीनं ह्रियन्तऽइति प्रह्रियमाणास्तेऽग्नय उच्यन्ते ॥७॥ तत्र होत्रा अनुवक्तव्यामृचमेकीयमतेनोपन्यस्य व्याचष्टे तद्वैकऽइति एके के चन ऋक्शाखाध्यायिनः । प्रावणेभिरिति पदस्यार्थमाह प्रायणरूपमिति प्रायणस्य प्रगमनकर्मप्रवृत्तेः प्रवणेभिरिति प्रशब्दोपेतं (यश°) पदं सूचकं रूपम् । कामवतीः कामशब्दोपेताः ॥८॥ त्रिस्त्रिवारमनूक्ताभ्यामाद्योत्तमाभ्यां सह । अनुवचनं कुर्वन्होता स्वयम-

पीष्टका अनुगच्छति ॥९॥ इष्टकाहरणसमये श्वेतस्याश्वस्य पुरस्तान्नयनम् । अश्वप्रमुखास्ते अ-
ध्रियमाणाः इष्टकाभिः सह अग्निक्षेत्रसमीपमागच्छेयुः आगत्य च अग्निपुच्छस्य दक्षिणभागे
चर्मणा चितिमुपनिदधाति चित्यर्थमानीता इष्टका स्थापयन्ति ॥१०॥ अग्निक्षेत्रस्य उत्तरभागे
परिश्रितामग्नेश्च मध्यदेशे । प्रसृजति विमुञ्चति ॥११॥ पुच्छस्य दक्षिणतो निहितामेतां चितिम्
॥१२॥ एताः उपधास्यमानाः तिस्रः स्वयमातृण्णाख्याः शर्कराः क्षुद्रपाषाणाः पृथिव्यादिलोक-
त्रयात्मिकाः । मणिवत्समावयते सम्यक्प्रीतान्करोति ॥१३॥ पद्मिनीपत्रे । उष्टाक्षिभ्यां युक्तो
भवितुं शीलवान् । कृत्वा आर्तिं गमयित्वा ॥१४॥ अध्वर्युणा आहुतिप्रदानसमये अग्निक्षेत्रस्या-
धिरोहणमपेक्षितम् अग्निक्षेत्रस्योपरि पादनिधानलक्षणं क्रमणमधिरोहणम् । आत्मभागेन मध्य-
देशेन । आरोहणानन्तरमुत्तरवेदिसंस्काररूपं कर्मजातं कृत्वा अध्वर्युः स्वात्मनि स्वकीयमग्निं गृह्णी-
ते यथा बहिश्चित्याग्निप्रदेशे न निष्क्रामति तथा मयि गृह्णामीति मन्त्रपदेन (°पेन) स्वात्मनि
धारयेत् । यत्सत्यं सामेति प्रसिद्धं सामवेदे तद्यजमानो गायेत् ॥१७॥ अस्तमयसमीपे । रा-
त्रिं सचन्ते समवयन्तीति रात्रिसाचयानि रात्रौ संचरणशीलानि । सोऽश्वः पुनर्विपल्ययते वि-
परिवर्तते उपधानकाले कर्मणोऽङ्गभावं प्रतिपद्यतऽइत्यर्थः ॥१९॥२॥३॥

अग्नि(ग्र)हणसत्यसामगानपुष्करपर्णोपधानानि पूर्वस्मिन्ब्राह्मणे संग्रहेण विहितानि इ-
दानीं तानि क्रमेण प्रपञ्चयति । चयनं करिष्यन्नध्वर्युः आत्मनि अग्निं गृह्णीते मन्त्रेण धारयेत्
॥१॥ अग्निग्रहणं च तिष्ठता कर्तव्यम् चयनसमयेऽनूपवेशनम् यत्र-यत्रेष्टकामुपदधाति तं देशं
गत्वा समीपे उपविश्य चिनुयात् । विज्ञायते प्रसूते ॥२॥ इत्याहुः कथयन्ति ब्रह्मवादिनः ।
तेन सत्यसाम्नोऽग्रतो गानेन अस्य सर्वस्य जगतः अप एवाग्रं मुखमकुर्वन् देवा इत्यर्थः
॥६॥ तमद्य उपोदासृप्त[मित्यादिना] (३. २. १४.) पुष्करपर्णस्याग्नियोनित्वम् ॥७॥ आपो वै
पुष्करमित्यादि पुष्करं सर्वतोमुखमित्यादिनिगदप्रसिद्धिद्योतको वैशब्दः । तासामपां प्र-
थमसृष्टानामियं पृथिवी पर्णस्थानीया । अस्यै अस्याः पृथिव्याः सकाशात् मृन्मयीभिरिष्टका-
भिः कृत्स्नोऽग्निर्ध्यायितश्चीयते (!) अतः पृथिवीमुपहितवान्भवतीत्यर्थः । सत्यसामगानादव्य-
वहितां तां पुष्करपर्णेष्टकामुपदध्यात् । अज्ञातमां प्रत्यक्षतमामापरोक्ष्येण वर्तमाना (°तमा आ-
परोक्षेण वतासमाना) ॥८॥ पिन्वते सिञ्चति । चतुर्थपादावसाने पुष्करपर्णमुपदधानः त-
स्यानुलोमेन विमार्जनं कुर्यात् । उत्तरार्धे वैराजपादाभ्यां द्वेऽअक्षरेऽअधिके तदाधिक्यं स्वरा-
डाख्यस्य छन्दसो लक्षणम् ॥९॥ आकाशात्मना (!) स्तुतस्य पुष्करपर्णस्य मध्ये सूर्यमण्ड-
लात्मना ध्यातव्यस्य रुक्मस्योपधानम् । वर्तुलाकृतिः एकविंशतिसंख्याकैः पुलकैर्युक्तः ।
उपधानसमये निर्बाधानामधोभागेऽवस्थानं यथा भवति तथा कर्तव्यम् ॥१०॥ पुष्करनाम-
निर्वचनेन प्रतिष्ठारूपतां ब्रुवन्स्तौति । समुदौहन् समुत्क्षिप्तवन्तः ॥१३॥ प्रजिजनिषमाणः
प्रजनितुं प्रादुर्भवितुमुदेतमिच्छन् अवेनत् कान्तियुक्तोऽभवत् वेनति दीप्यतऽइति वेन इति
(वेनमिति) सूर्यस्य नाम सम्पन्नम् ॥१४॥ रुक्ममध्ये हिरण्मयपुरुषस्योपधानम् । स प्रजा-
पतिः स्थूलप्रपञ्चाभिमानिविराडात्मकः स एवाग्निः सूक्ष्मप्रपञ्चाभिमानिहिरण्यगर्भात्मकः यज-
मानस्य तद्रूपप्राप्तेर्यजमानोऽपि सः । यस्माच्चित्याग्निरूपेण संस्कर्तव्यः प्रजापतिः पुरुषविधः
तत्प्रतिरूपत्वाद्धिरण्मयस्योपधेयस्य पुरुषाकृतिर्युक्ता ॥१५॥ रम्या रमणीया ज्ञानक्रियाशक्तिरूपा
सूक्ष्मा तनूः । चक्षुराद्यभिमानिदेवताः आदित्यादयः अजङ्गरत्यजन् । तं तथाविधं प्रजापतिं

ह वाऽअस्य दैवोऽमृत आत्मा स य एतानि परस्मै करोत्येतꣳ ह स दैवमा-
त्मानं परस्मै प्रयच्छति शुष्क एव स्थाणुः परिशिष्यते ॥१३॥ तद्धैके । कृत्वा कु-
र्वते वा प्रति वा कारयन्तऽएषा प्रायश्चित्तिरिति न तथा कुर्याद्यथा शुष्कꣳ स्था-
णुमुदकेनाभिषिञ्चेत्तादृक्तत्पूयेद्वा वै स वि वा म्रियेतनैतस्य प्रायश्चित्तिरस्तीत्येव
विद्यात् ॥१४॥ अथ ह स्माह शाण्डिल्यः । तुरो ह कावषेयः कारोत्यां देवे-
भ्योऽग्निं चिकाय तꣳ ह देवाः पप्रच्छुर्मुने यदलोक्यामग्निचित्यामाहुरथ कस्मादचै-
षीरिति ॥१५॥ स होवाच । किं नु लोक्यं किमलोक्यमात्मा वै यज्ञस्य यजमा-
नोऽङ्गान्यृत्विजो यत्र वाऽआत्मा तदङ्गानि यत्रोऽअङ्गानि तदात्मा यदि वाऽऋ-
त्विजोऽलोका भवन्त्यलोक उ तर्हि यजमान उभये हि समानलोका भवन्ति द-
क्षिणासु त्वेव न संवदितव्यꣳ संवादेनैवऽर्त्विजोऽलोका इति ॥१६॥ ब्राह्मणम्
॥३ [५. २.] ॥ चतुर्थः प्रपाठकः ॥ कण्डिकासंख्या१०७ ॥ पञ्चमोऽध्यायः [६०] ॥ ॥
अस्मिन्काण्डे कण्डिकासंख्या४०२ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे संचितिनाम नवमं काण्डं समाप्तम् ॥९॥ ॥

## EXTRACTS FROM THE COMMENTARY OF SÂYAṆÂCÂRYA.

चितीनामुपधानं हि काण्डेऽष्टमऽउदीरितम् अथास्मिन्नवमे कर्म संचितस्याभिधास्यते ॥
तत्रादौ तावच्छतरुद्रियहोमं विधत्ते । विहितोऽयं होमो रुद्ररूपतापन्नस्याग्नेरुपशमनार्थः ॥१॥
शान्तदेवत्यं शान्तदेवतार्थं देवताशान्त्यर्थं ॥२॥ जर्तिला आरण्यतिलाः ॥३॥ चितीः परितो
निक्षिप्ताः क्षुद्रपाषाणाः परिश्रितः ॥५॥ गवेधुका आरण्या गोधूमाः तेषां पिष्टैः । सा प्रजाप-
तिरूपा देवता ॥८॥ आशये हृदयदेशः ॥९॥ लोमसु विषसंस्पृष्टेष्वपि बाधाभावात् । अत
एतउत्तरार्धहोमेन स्वस्यामेव (!) दिशि एनं रुद्रं प्रीणाति स्वस्यामेव तमवयजते पृथक्करोति
॥१०॥ स वाऽअशीत्यां च स्वाहाकरोतीत्यादिना (क° २१) तिसृष्वशीतिषु स्वाहाकारः क्रिय-
तऽइत्युपरिष्टाद्वक्ष्यते तत्र कस्मिन्प्रदेशे स्वाहाकार इति तत्राह जानुदघ्नऽइति जानुप्रमाणप्र-
देशे सोऽध्वर्युः प्रथमं स्वाहाकरोति ॥११॥ उत्तरं भागम् ॥१५॥ प्रथमानुवाके षोडश मन्त्राः
तत्र चतुर्दश मन्त्रानवयुत्य स्तौति ॥१६॥ नमो हिरण्यबाहवऽइत्यादिषु मन्त्रेषु प्रतिपाद्या
देवता द्वन्द्विनः तत्र [द्वयो]र्द्वयोर्देवतयोः प्रतिपादनात् । दिशां च पतये नम इत्येतद्धिरण्य-

ञाहवे सेनान्यऽइत्येतयोर्विशेषणम् ॥ १८ ॥ एतत् मन्त्रचतुष्टयम् ॥ २२ ॥ एतानि देवानां हृद्यानि यथा हृदयं प्रधानं तद्वदेतेऽपि प्रधानानि । विचिन्वन्ति अभ्यवहारार्थम् अतस्तत्परिहाराय तेभ्यो नम इत्याह ॥ २३ ॥ दिद्रापयिषति कुत्सितं कर्तुमिच्छति ॥ २४ ॥ अधिमासापेक्षया संवत्सरे सप्तऽर्तवो भवन्ति । यैषा संख्यासम्पत्तिस्तामभिलक्ष्य भवति तथाविधा संख्यासम्पत्तिरत्र सम्पादिता भवति ॥ २६ ॥ एतस्मिन्काले खलु एतेन होमेन इमान्पृथिव्यादीन्लोकानित ऊर्ध्वो भूत्वा रोहति स यजमानः ॥ ३२ ॥ तमेषां जम्भे दध्म इत्यत्र तमित्यस्य स्थाने अमुमिति प्रयुञ्ज्यादिति कस्यचिन्मतं पूर्वपक्षयितुमाह अमुमेषामिति । अमुमिति तन्नामनिर्देशः । नामधेयग्रहणं तन्निर्देशसिद्ध्यर्थं भवति स च निर्देशो यं द्विष्मो यश्च नो द्वेष्टि तमेषामित्यभिधानादेव सिद्ध इति तथा न कुर्यात् ॥ ३१ ॥ जान्वादिमुखान्तेषु त्रिषु प्रमाणेषु होमकरणादित ऊर्ध्वं त्रिः कृत्वो रोहन्विति पुनश्च त्रिःकृत्वः प्रत्यवरोहति तथा सति षट्संख्या सम्पद्यते ॥ ४० ॥ एतच्छतरुद्रियं षष्ट्युत्तराणि त्रीणि शतानि यजूंषि पञ्चात्रिंशत्ततः पञ्चात्रिंशत् । अथावशिष्टानि यानि पञ्चत्रिंशद्विद्यन्ते तानि त्रयोदशो मासः स चाधिको मासः संवत्सरस्यात्मा मध्यभागः　द्वे यजुषी पादौ प्रतिष्ठाशब्देन पादावुच्येते　पुनर्द्वे यजुषी प्राणा इन्द्रियाणि यद्यपि ते प्राणा बहवस्तथापि याभि (!) पञ्चत्रिंशद्भिनाधिकमासवत्संवत्सरान्तःपातित्वमभिदधत् (°मासवसंव° !) तन्मासात्मकेन पञ्चत्रिंशता संवत्सरः व्रणावरणादिविशिष्टपुरुषाकारतया (!) प्रदर्श्यते । शाण्डिल्यदृष्टेऽस्मिन्नग्नौ (स्मिन) मध्यतो मध्यप्रदेशे एतावत्यः षष्ट्युत्तरशतत्रयसंख्याका इष्टका मन्त्रवत्य उपधीयन्ते ॥ ४३ ॥ महदुक्थमिति प्रयहाज्र्तसाहव्यपदेशं (?) शस्त्रान्तेनानुशंसनीयं स्तोत्रं (?शस्त्रान्ता°) पक्ष्याकारं भवति तत्र पञ्चविंश स्तोम आत्मभागः अतश्चात्रापि अशीतीनामभितो विद्यमानानि यानि (?तानि) पञ्चविंशतिर्यजूंषि तान्येव महदुक्थे पञ्चविंशस्तोमात्मक आत्मभागः । आत्मभागादेव तेषां सर्वेषामुत्पत्तेः आत्मभागे तानि सर्वाण्यन्तर्भूतानि । अद इति महदुक्थात्परं मन्त्रजातं बुद्धिस्थं परामृश्यते ॥ ४४ ॥ ॥ १ ॥ १ ॥

पूर्वस्मिन्ब्राह्मणे शतरुद्रीयहोमोऽभिहितः अथास्मिन्नग्नौ परिषेकधेनुकरणविकर्षणादिकं कर्माभिधास्यते ॥ १ ॥ कस्मादध्वर्युपरित्यागेनाग्नीध्रः परिगृह्यतऽइत्यत्राह अग्निरेष इति परिषेक्तव्यस्याग्नेरशमनेन ज्ञयदध्वर्यौ (?) परिषेक्तरि नो (!) हिंसा संभाविता स्यात् आग्नीध्रस्य पुनरग्न्यात्मकत्वेन आत्मनैवात्मनो हिंसाया असम्भवादहिंसार्थं तस्य परिग्रहः । निकक्षः कक्षप्रादेशः (!) तत्संधिस्थानम् । सर्वतः स्तेरुस्थस्थाने (?) पाषाणं निधाय तत आरभ्य परिषिञ्चेत् ॥ ४ ॥ परिषेकानन्तरमश्मंस्तऽइत्यनेन मन्त्रेण पाषाणे कुम्भं निदध्यात् अश्मनि कुम्भस्य निधाने परिषेकेण शान्तस्य रुद्रस्य क्षुधं पाषाणे निहितवान्भवति ॥ ५ ॥ विपल्ययते प्रतिपर्येति । लघूयति लघुमिवाचरति । निह्नुते स्वकृतं तद्विषयमपराधमपमार्ष्टि ॥ ६ ॥ साश्मानं कुम्भं नैर्ऋत्यां दिशि प्रक्षिपेत् । एतां दिशमिति नैर्ऋतीं दिशं हस्तेनाभिनीय दर्शयति ॥ ९ ॥ प्रक्षेपार्थं हरणावसर अग्नेर्बाह्यभागेन हरेत् ॥ ११ ॥ धेनुकरणं नाम वक्ष्यमाणमन्त्रजपपूर्वकं धेनुरूपेणानुसंधानम् ॥ १३ ॥ अतश्च पृथिव्यादिलोकत्रयात्मकस्याग्नेरवयवीभूतानामिष्टकानां धेनुकरणं स्थिरत्वा सम्पाद्यम् यथा धेनवोऽभिमतं पयो (तं या) दुहन्ति तद्वदेवैता अपीष्टकाः स्वाभिलषितं दुहन्तीति (हंति) बुद्ध्या धेनुरूपेणानुसंधानं क्रियते　धेनवश्च वीर्यवत्तरेण दुह्यमा-

ना भूयः पयो दुहन्ति न पुनर्दुर्बलेन ॥१४॥ एष यजमानोऽमुष्मिन्लोके उपलक्षणमेतत् इहलोकेऽपि (? इहाताकेऽपि) ब्रह्मणा बृहता वीर्यवता तेन यजुर्मन्त्रेण एता इष्टका बह्वीः एकादिपरार्धान्तसंख्याकाः कुरुते मन्त्रसामर्थ्याद्ल्पस्य बहुवचनम् ॥१६॥ भुञ्जन्ति पालयन्ति ॥१७॥ अत्यर्थं मूत्रं विसृजन्त्यः । अन्यासामिष्टकानां स्वयमातृण्णरेतःसिग्विश्वज्योतिरपस्याप्राणभृदित्यादिकानि नामानि विद्यन्ते लोकम्पृणानां तु तथा प्रातिस्विकनामधेयाभावादिष्टकात्वस्वनामानाह्वानेन विमुखा भूता अवस्थिताः पश्चाद्देवास्ता इष्टका विराजनाम्नीरन्कुर्वत ॥१९॥ एनमग्निमग्निस्थलम् ॥२०॥ संस्कारप्रकारस्तु षष्ठकाण्डस्यादावुक्तः ॥२१॥ पक्षादीनां विकर्षणमात्मभागमभिलक्ष्य कुर्यात् अध्यात्मानमभि अभ्यात्मम् ॥३०॥ पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके । अधिमासापेक्षया सप्तर्तवः ॥३१॥ अभि त्वा शूर नोनुम इत्येतस्यामृच्युत्पन्नं साम रथन्तरम् । अतिशयरसाधारत्वेन रसतमः रसतम एव रसंतमः ॥३६॥ त्वामिद्धि हवामहऽइत्येतस्यामृच्युत्पन्नं साम बृहत् ॥३७॥ कया नश्चित्र आभुवदित्यस्यामृच्युत्पन्नं साम वामदेव्यम् ॥३८॥ यज्ञा यज्ञा वोऽअग्नय इत्यस्यामृच्युत्पन्नं साम यज्ञायज्ञीयम् कस्य ईयादेशः ह्रस्वत्वं छान्दसम् ॥३९॥ प्रजापतेर्हृदयमिति किंचित्साम तदप्यत्र गायेत् । आत्मन् आत्मभागे ॥४०॥ प्रजापतेर्हृदयं गायत्रादिसामवत्कस्यां चिदृचि न गीयते अपि तु केवलं प्रजाशब्दे [प्रजापतिशब्दे] च गीयते अत एवापस्तम्बेन सूत्रितम् प्रजापतेः सामानृचं गायतीति ॥४१॥ एतानि गायत्र्यादीनि सामानीष्टकारूपेण स्तौति ता हैता इति स्त्रीलिङ्गविशेषेयेष्टकापत्ते (!) । वृतस्य (?) गातृत्वे तदुपधानवैधुर्येणाध्वर्युः विजितः पराभूतो भवेत् ॥४३॥२॥१॥

औपवसथ्यदिवसात्प्राचीने दिवसे कर्तव्यं प्रयोगमभिधाय तथा तस्मिन्दिवसे कर्तव्यमभिधत्ते । यजमानस्य वाग्विसर्जनमध्वर्योराज्यग्रहणम् । पात्री शरावाकारा स्थाली तु पिठरांकामु[हवि]ल्यां (!) महामुख्यां व्यत्ययेन ङीप्रत्ययः ॥१॥ व्याघारणं नाम एकस्मात्कोणात्कोणान्तरं प्रत्याज्यधाराक्षारणम् ॥३॥ याममूम् बुद्धौ परामर्शः पूर्वामुत्तरवेदिं व्याघारयति सा पुनः सोमयागस्य ॥५॥ व्यतिहारमित्यनेनं पूर्वं दक्षिणांसे व्याघारणं तत उत्तरश्रोणी पश्चाद्दक्षिणश्रोणौ तत उत्तरांसे तत मध्ये इत्ययं क्रमो विवक्षितः ॥७॥ वेडिति सम्प्रदानार्थीयो निपातः । स्वर्गं लभयतीति स्वर्वित् ॥८॥ तदृदः काले अदःशब्दस्तस्य कालस्य विप्रकर्षमभिधत्ते । अमुं भागमिति यदुक्तं तदेवाह अतः (!) सजूरब्दीयमिति सजूरब्दोऽअयवोभिरित्येतेन मन्त्रेण प्रतिपादितं होमरूपमन्नम् (? पं अत्रं) ॥१३॥ व्रतं पयः । अथ तदानीमेवापराह्णिकाभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य ॥१८॥ परितः स्यन्दो जलस्रवणं यस्य परिष्यन्दो द्वीपः ॥१९॥ अग्नावुत्सादयतीति लोपः शाकल्यस्येति (पा° ८. ३. १९.) वकारलोपः ॥२१॥ स्य प्रवर्ग्यस्य यथा येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण उत्सादनमुक्तं तेन प्रकारेण प्रवर्ग्यमुत्सादयेत् ॥२३॥१॥२॥

प्रवर्ग्योद्वासनानन्तरं संचिते इष्टकासमूहे स्थापनायाग्निं प्रणेतुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते । प्रहरिष्यन्प्रणेष्यन् । विहितहोम आहवनीयप्रदेशं समिद्धस्याग्नेः (°मियातोग्नेः) प्रणयनाय पुरस्तादन्नेन (°दंत्रेन) सम्पाद्यतऽइत्याह एतद्वाऽएनमित्यादिना ॥१॥ अष्टौ प्राणा अष्टावङ्गानीत्येतैः (? °त्येग्नेः) षोडशावयवः प्रजापतिः ॥२॥ पूर्वेद्युरात्रौ सर्वस्या-

मेव घृते वसन्ति ॥३॥ विधृतिं विभेदेन धारणमसंकीर्णताम् । अग्निस्तिग्मेनेत्यनया ऋचा पञ्चगृहीतं हूयते य इमा विश्वेत्यादिभिरष्टाभिर्ऋग्भिः षोडशगृहीतार्धं हूयते अवशिष्टं चक्षुषः पितेत्यादिभिरष्टाभिर्हूयते ॥६॥२॥२॥

इत्थमग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत्प्रयोगौपायिकीः (? तत्स्मायाणोपयिकीः) क्रियाः कर्तुं तदुचितं सम्प्रैषमाह । प्रणेष्यमाणाग्निसिद्ध्यर्थं गार्हपत्ये प्रक्षिप्तं काष्ठमिध्मस्तदुच्छ्रक (मिकातंड°) अग्निधारणार्थमधस्तात्क्रियमाणाः सिकता उपयमन्यः ताश्चापयच्छेति एतदुभयं प्रतिप्रस्थातारं प्रत्युच्यते । हे होतः प्रणीयमानायाग्नयेऽनुब्रूहि अग्निप्रणयनीया ऋचोऽनुब्रूहि । हे अग्नीत् यच्यंराव्या (एकस्फ्यया ?) स्फ्यरेखया अनुगच्छ । हे ब्रह्मन् आशुः शिशान इत्येतदप्रतिरथाख्यं सूक्तं जपेति एवं तत्र-तत्र व्यापारे तं-तं सम्प्रेष्यति विनियुञ्ज्यात् ॥१॥ चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशताक्षराणि सम्पद्यन्ते चतुर्विंशत्यक्षराणां गायत्रीणां द्वाविंशतिस्तावदक्षरा भवन्ति अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशतिर्गायत्र्यस्ताश्चाग्नेय्यो·(? °गायत्र्यश्चा°) भवन्ति अग्निना सहोत्पन्नत्वात् ॥६॥ उपयमनानन्तरमध्वर्युप्रभृतीनां चित्यं प्रति [आग्नीध्रपर्यन्तं] गमनम् ॥८॥ अग्नेरुक्थानि स्तोत्रशस्त्राणि पत्रवदङ्गानि भवन्ति ॥१॥ आतः सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं सम्प्राप्नुवन् । आतः अन्तरिक्षात्मकाग्नीध्रमण्ड(प)पर्यन्तं सम्प्राप्नोति ॥१३॥ पृश्निशब्देन श्वैत्यमुच्यते (! श्वैत्य° or चैत्र्य° ?) पृश्नेरश्मन उपधानेनादित्यस्यैवोपधानं भवति ॥१४॥ व्यध्व इत्यर्धमार्ग उच्यते तत्रैतस्याश्मन उपधानं क्रियते तस्मादितः प्रदेशादूर्ध्वे (! °शादूव्यध्वे ?) ऽर्धमार्गे एष सूर्यस्तपति ॥१५॥ एष सूर्यस्त्रिष्टुभोऽन्तरिक्षे वर्तमानत्वात् । एष सूर्यः असन्नः क्वचिदेवावस्थितो न भवति सर्वत्र परिभ्रमणात् ॥१६॥ आहवनीयदेशं प्रति ॥२०॥ चित्याग्निसमीपगमनानन्तरं (गनामंवरं) क्रमध्वमित्यादिभिः पञ्चभिर्मन्त्रैस्तस्यारोहणम् । एतमित्यभिनयेन निर्देशः एतं स्वर्गम् ॥२४॥ चित्याग्निसमारोहणानन्तरमस्मिन्नग्नौ होमं विधत्ते ॥३०॥ प्रोक्षणे विनियुक्तैः (८. ७. ४. ७.) सहस्रसंख्याकैः (हयंख्याकैः) हिरण्यशकलैः ॥३२॥ अभिहोमानन्तरमुख्याग्नेश्चितोनामुपरि निधानम् । विकृत्या विकृतिसाधनभूतेन मन्त्रेण ॥३४॥ निधानानन्तरमस्मिन्नग्नौ समिधामाधानं विधाय ताः सामिधश्चित्याग्निं प्राप्तस्याग्नेरुपरिष्टादन्नरूपेण (°ग्नेरूपरितत्रान्नरूपेण) स्तौति ॥३६॥ ग्रग्धिर्भक्षणं भक्षणाभावाय अहिंसायै ॥३७॥ एनां शमीरूपां गाम् ॥३८॥ तस्या वैकङ्कतसमिद्धोमब्राह्मणं प्रागेव षष्ठकाण्डेऽभिहितम् ॥३१॥ कर्णकशब्देनात्र पत्रशाखादिकं विवक्ष्यते । पत्रादीनां पशुपुष्टिसाधनत्वेन (? पशुषुष्टि°) पशुत्वात्तथाविधायाः समिधो होमेन पशुरूपेणैवैनं प्रीणाति । दधिविन्दुम् ॥४०॥ समिद्धोमानन्तरमाज्याहुतीर्विधत्ते । लोके भुञ्जानस्य यथा शाकसूपौदनादिकं परिविष्य पश्चाज्जलादिकं पेपयात् (पाययेत्) ॥४१॥ पूर्णा चासावाहुतिश्चेति पूर्णाहुतिः आज्यपूर्णया स्रुचा सम्पाद्यमाना आहुतिः ॥४३॥ अथास्याग्निप्रणयनात्मकस्य कर्मणः सम्पत्तिमभिधातुं प्रतिजानीते अथात इति । तामेव दर्शयति षट् पुरस्तादित्यादिना प्रणयनात्पूर्वं तिस्र आज्याहुतीस्तिस्रः समिदाहुतीश्च जुहोति अतस्तत्र षण्मन्त्रा भवन्ति यद्यपि द्वितीयराज्याहुत्योः (!) षोडश मन्त्राः प्रयुज्यन्ते तथापि आहुत्यनुसारेण ते सर्वेऽपि द्वावेव (? द्वाय) मन्त्राविति परिगण्येते (°ण्याते) । उपरिष्टादग्निनिधानात्पश्चात्तिस्रः समिदाहुतीस्तिस्र आज्याहुतीश्च जुहोतीति तेऽपि षण्मन्त्राः । आग्नीध्रमण्डपेऽपि (? मंडेऽपि) पृश्निरश्मोपधो-

ना भूयः पयो दुहन्ति न पुनर्दुर्बलेन ॥१४॥ एष यजमानोऽमुष्मिन्लोके उपलक्षणमेतत् इहलोकेऽपि (? इहाताकेऽपि) ब्रह्मणा बृहता वीर्यवता तेन यजुर्मन्त्रेण एता इष्टका बह्वीः एकादिपरार्धान्तसंख्याकाः कुरुते मन्त्रसामर्थ्याद्‌ल्पस्य बहुवचनम् ॥१६॥ भुञ्जन्ति पालयन्ति ॥१७॥ अत्यर्थं मूत्रं विसृजन्त्यः । अन्यासामिष्टकानां स्वयमातृण्णारेतःसिग्विश्वज्योतिरपस्याप्राणभृदित्यादिकानि नामानि विद्यन्ते लोकम्पृणानां तु तथा प्रातिस्विकनामधेयाभावादिष्टकावत्स्वनामानाह्वानेन विमुखा भूता अवस्थिताः पश्चादेवास्ता इष्टका विराजनाम्नीरन्कुर्वत ॥१९॥ एनमग्निमग्निस्थलम् ॥२०॥ संस्कारप्रकारस्तु षष्ठकाण्डस्यादावुक्तः ॥२१॥ पक्षादीनां विकर्षणमात्मभागमभिलक्ष्य कुर्यात् अग्र्यात्मानमभि अभ्यात्मम् ॥३०॥ पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके । अधिमासापेक्षया सप्तऽर्तवः ॥३१॥ अभि त्वा शूर नोनुम इत्येतस्यामृच्युत्पन्नं साम रथन्तरम् । अतिशयरसाधारत्वेन रसतमः रसतम एव रसंतमः ॥३६॥ त्वामिद्धि हवामहऽइत्येतस्यामृच्युत्पन्नं साम बृहत् ॥३७॥ कया नश्चित्र आभुवदित्यस्यामृच्युत्पन्नं साम वामदेव्यम् ॥३८॥ यज्ञा यज्ञा वोऽअग्नय इत्यस्यामृच्युत्पन्नं साम यज्ञायज्ञीयम् कस्य ईयादेशः ह्रस्वत्वं छान्दसम् ॥३९॥ प्रजापतेर्हृदयमिति किंचित्साम तदप्यत्र गायेत् । आत्मन् आत्मभागे ॥४०॥ प्रजापतेर्हृदयं गायत्रादिसामवत्कस्यां चिदृचि न गीयते अपि तु केवलं प्रजाशब्दे [प्रजापतिशब्दे] च गीयते अत एवापस्तम्बेन सूत्रितम् प्रजापतेः सामानृचं गायतीति ॥४१॥ एतानि गायत्र्यादीनि सामानीष्टकारूपेण स्तौति ता हैता इति स्त्रीलिङ्गविशेषेयेष्टकापक्षे (!) । वृतस्य (?) गातृत्वे तदुपधानवैधुर्येणाध्वर्युः विजितः पराभूतो भवेत् ॥४३॥२॥१॥

औपवसथ्यदिवसात्प्राचीने दिवसे कर्तव्यं प्रयोगमभिधाय तथा तस्मिन्दिवसे कर्तव्यमभिधत्ते । यजमानस्य वाग्विसर्जनमध्वर्योराज्यग्रहणम् । पात्री शरावाकारा स्थाली तु पिडरांकामु[जवि]ल्यां (!) महामुख्यां व्यत्ययेन ङीप्रत्ययः ॥१॥ व्याघारणं नाम एकस्मात्कोणात्कोणान्तरं प्रत्याज्यधाराक्षारणम् ॥३॥ याममूम् बुद्धौ परामर्शः पूर्वामुत्तरवेदिं व्याघारयति सा पुनः सोमयागस्य ॥५॥ व्यतिहारमित्यनेन पूर्वं दक्षिणांसे व्याघारणं तत उत्तरश्रोणौ पश्चाद्दक्षिणश्रोणौ तत उत्तरांसे तत मध्ये इत्ययं क्रमो विवक्षितः ॥७॥ वेडिति सम्प्रदानार्थीयो निपातः । स्वर्गं लम्भयतीति स्वर्वित् ॥८॥ तदृदः काले अदःशब्दस्तस्य कालस्य विप्रकर्षमभिधत्ते । अमुं भागमिति यदुक्तं तदेवाह अतः (!) सजूरब्दीयमिति सजूरब्दोऽअयवोभिरित्येतेन मन्त्रेण प्रतिपादितं होमरूपमन्नम् (? पं अत्रं) ॥१३॥ व्रतं पयः । अथ तदानीमेवापराह्णिकाभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य ॥१८॥ परितः स्यन्दो जलस्रवणं यस्य परिष्यन्दो द्वीपः ॥१९॥ अग्नावुत्सादयतीति लोपः शाकल्यस्येति (पा° ८. ३. १९.) वकारलोपः ॥२१॥ तस्य प्रवर्ग्यस्य यथा येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण उत्सादनमुक्तं तेन प्रकारेण प्रवर्ग्यमुत्सादयेत् ॥२३॥१॥२॥

प्रवर्ग्योद्वासनानन्तरं संचिते इष्टकासमूहे स्थापनायाग्निं प्रणेतुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते । प्रहरिष्यन्प्रणेष्यन् । विहितहोम आहवनीयप्रदेशं समिद्धस्याग्नेः (°मिध्यताग्नेः) प्रणयनाय पुरस्तादन्नेन (°दंत्रेन) सम्पाद्यतऽइत्याह एतद्वाऽएनमित्यादिना ॥१॥ अष्टौ प्राणा अष्टावङ्गानीत्येतैः (? °त्येग्नेः) षोडशावयवः प्रजापतिः ॥२॥ पूर्वेद्युरात्रौ सर्वस्या-

मेव घृते वसन्ति ॥३॥ विधृतिं विभेदेन धारणमसंकीर्णताम् । अग्निस्तिग्मेनेत्यनया ऋचा पञ्चगृहीतं हूयते य इमा विश्वेत्यादिभिरष्टाभिर्ऋग्भिः षोडशगृहीतार्धं हूयते अवशिष्टं चक्षुषः पितेत्यादिभिरष्टाभिर्हूयते ॥६॥२॥२॥

इत्थमग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत्प्रयोगौपायिकीः (? तत्स्मायाणोपयिकीः) क्रियाः कर्तुं तदुचितं सम्प्रैषमाह । प्रणेष्यमाणाग्निसिद्ध्यर्थं गार्हपत्ये प्रक्षिप्तं काष्ठमिध्मस्तदुच्यते (मिकातंड°) अग्निधारणार्थमधस्तात्क्रियमाणाः सिकता उपयमन्यः ताश्चोपयच्छेति एतदुभयं प्रतिप्रस्थातारं प्रत्युच्यते । हे होतः प्रणीयमानायाग्नयेऽनुब्रूहि अग्निप्रणयनीया ऋचोऽनुब्रूहि । हे अग्नीत् यच्यंराव्या (एकस्फ्यया?) स्फ्यरेखया अनुगच्छ । हे ब्रह्मन् आशुः शिशान इत्येतदप्रतिरथाख्यं सूक्तं जपेति एवं तत्र-तत्र व्यापारे तं-तं सम्प्रेष्यति विनियुञ्ज्यात् ॥१॥ चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशताक्षराणि सम्पद्यन्ते चतुर्विंशत्यक्षराणां गायत्रीणां द्वाविंशतिस्तावदक्षरा भवन्ति अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशतिर्गायत्र्यस्ताश्चाग्नेय्यो (? °गायत्र्यश्चा°) भवन्ति अग्निना सहोत्पन्नत्वात् ॥६॥ उपयमनानन्तरमध्वर्युप्रभृतीनां चित्यं प्रति [आग्नीध्रपर्यन्तं] गमनम् ॥८॥ अग्नेरुक्थानि स्तोत्रशस्त्राणि पत्रवदङ्गानि भवन्ति ॥१॥ आतः सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं सम्प्राप्नुवन् । आतः अन्तरिक्षात्मकाग्नीध्रमण्ड(प)पर्यन्तं सम्प्राप्नोति ॥१३॥ पृश्निशब्देन श्वैत्यमुच्यते (! श्वैत्य° or चैत्र्य°?) पृश्नेरश्मन उपधानेनादित्यस्यैवोपधानं भवति ॥१४॥ व्यध्व इत्यर्धमार्ग उच्यते तत्रैतस्याश्मन उपधानं क्रियते तस्मादितः प्रदेशादूर्ध्वे (! °शाद्व्यध्वे?) ऽर्धमार्गे एष सूर्यस्तपति ॥१५॥ एष सूर्यस्त्रिष्टुभोऽन्तरिक्षे वर्तमानत्वात् । एष सूर्यः असन्नः क्वाचिदेवावस्थितो न भवति सर्वत्र परिभ्रमणात् ॥१९॥ आहवनीयदेशं प्रति ॥२०॥ चित्याग्निसमीपगमनानन्तरं (गनामंवरं) क्रमध्वमित्यादिभिः पञ्चभिर्मन्त्रैस्तस्यारोहणम् । एतमित्यभिनयेन निर्देशः एतं स्वर्गम् ॥२४॥ चित्याग्निसमारोहणानन्तरमस्मिन्नग्नौ होमं विधत्ते ॥३०॥ प्रोक्षणे विनियुक्तैः (८. ७. ४. ७.) सहस्रसंख्याकैः (हयंख्याकैः) हिरण्यशकलैः ॥३२॥ अभिहोमानन्तरमुख्याग्नेश्चितोनामुपरि निधानम् । विकृत्या विकृतिसाधनभूतेन मन्त्रेण ॥३४॥ निधानानन्तरमस्मिन्नग्नौ समिधामाधानं विधाय ताः समिधश्चित्याग्निं प्राप्तस्याग्नेरुपरिष्टादन्नरूपेण (°ग्नेरुपरितत्रान्नरूपेण) स्तौति ॥३६॥ जग्धिर्भक्षणं भक्षणाभावाय अहिंसायै ॥३७॥ एनां शमीरूपां गाम् ॥३८॥ तस्या वैकङ्कतसमिद्धोमब्राह्मणं प्रागेव षष्ठकाण्डेऽभिहितम् ॥३९॥ कर्णकशब्देनात्र पत्रशाखादिकं विवक्ष्यते । पत्रादीनां पशुपुष्टिसाधनत्वेन (? पशुपुष्टि°) पशुत्वात्तथाविधायाः समिधो होमेन पशुरूपेणैवैनं प्रीणाति । दधिविन्दुम् ॥४०॥ समिद्धोमानन्तरमाज्याहुतीर्विधत्ते । लोके भुञ्जानस्य यथा शाकसूपौदनादिकं परिविष्य पश्चाज्जलादिकं पेपयायत् (पाययेत्) ॥४१॥ पूर्णा चासावाहुतिश्चेति पूर्णाहुतिः आज्यपूर्णया स्रुचा [illegible] आहुतिः ॥४३॥ अथास्याग्निप्रणयनात्मकस्य कर्मणः सम्पत्तिमभिधातुं प्रतिजानीते अथात इति । तामेव दर्शयति षट् पुरस्तादित्यादिना प्रणयनात्पूर्वं तिस्र आज्याहुतीस्तिस्रः समिदाहुतीश्च जुहोति अतस्तत्र षण्मन्त्रा भवन्ति यद्यपि द्वितीयाज्याहुत्योः (!) षोडश मन्त्राः प्रयुज्यन्ते तथापि आहुत्यनुसारेण ते सर्वेऽपि द्वावेव (? द्वाय) मन्त्राविति परिगण्येते (°ण्याते) । उपरिष्टादग्निनिधानात्पश्चात्तिस्रः समिदाहुतीस्तिस्र आज्याहुतीश्च जुहोतीति तेऽपि षण्मन्त्राः । आग्नीध्रमण्डपेऽपि (? मंड़ेऽपि) पृश्निरश्मोपधी-

यते तात्पर्यं षड्भिर्मन्त्रैर्गच्छन्ति अत्र यद्यपि पञ्च दिशो दैवीरित्यादयः पञ्चैव मन्त्रा गमने विनियुक्ताः तथाप्युदु त्वेत्यादिना मन्त्रेण सहैते षड्भवन्ति इति षषामपि मन्त्राणां गमनसाधनत्वाभिधानं गमनमन्त्रबाहुल्याभिप्रायम् ॥४७॥ सप्तमकाण्डे गार्हपत्यचयनाभिधाना[न]न्तर तत्र तिस्रोऽनुष्टुभः सम्पाद्य तासां मध्ये एकामाहवनीयं प्रत्यन्तं ग्रवंत्युक्ताम् (? see ७.१.२.११.) । अत्रोक्तप्रकारेणानुष्टुभः सम्पादने (°पानने) तासामेकामनुष्टुभमत्रान्हृतवन्तो (°मेका सा अनु°) भवन्तीत्याह तद्या अमूरिति । गार्हपत्यात्खल्वग्निराहवनीयस्थानं प्रति प्रणीतोऽतश्चाग्निप्रणयने विद्यमानमन्त्राहुतिसंख्याद्वारास्यानुष्टुभः (!) सम्पादनात् गार्हपत्ये सम्पादितानामनुष्टुभामेकामत्राह्हृतवन्तो भवन्तीत्युच्यते ॥४८॥ स चित्याग्निः प्रणेष्यमाणमग्निमब्रवीत् । तस्माद्यस्मिन्नवसरे एतमग्निं गार्हपत्यादत्र चित्याग्नावाहरन्ति अथ पश्चादेष आहुतिरूपायान्नाय समर्थो भवति अग्निप्रणयनानन्तरमेव चित्याग्नेराहुतिसम्बन्धादिति भावः ॥४९॥ चित्याग्निरूपः प्रजापतिः ॥५०॥३॥२॥

पूर्वस्मिन्नध्याये स्वयमातृण्णाया व्याघारणसमुक्षणादि कर्माभिहितम् अथास्मिन्नध्याये वैश्वानरमारुतवसोर्धारादिहोमलक्षणं कर्माभिधास्यते ॥१॥ अदःशब्दो दीक्षणीयेष्टिकालं परामृशति । दीक्षणीयायां वैश्वानरं रेतोरूपेण सिक्तवानिति यत् तस्मादयमग्निरिहापि तदनुरोधेन वैश्वानर एव जायते अतश्च वैश्वानररूपेणोत्पादनाय वैश्वानरदेवत्यं हविर्जुहुयादिति भावः । निरुक्तमुच्चैः प्रकाशम् ॥२॥ इदमिति मुखं श्मश्रुविशिष्टं हस्तेन प्रदर्शने (°दर्श्यते?) ॥४॥ इदमिति मुखादुपरितनं दन्तनेत्रनासिकाललाटस्थानं निर्दिश्यते । अलोमकमिव व्यन्तरिक्षमिति तत्र पृथिवीवत् महीधरमहीरुहादीनामभावात् । स प्राणोऽस्य निर्दिष्टप्रदेशस्य मध्येन वर्तते ॥५॥ शिर एवेति अत्र शिरःशब्देन ललाटादुपरितनं केशोद्गमस्थानमुच्यते इदं तच्छिर इत्यत्र गलादुपरितनं सर्वमपि शिरसा ऽसीद्धन (प्रसिद्धेन?) विवक्षितम् अन्यथा पूर्वोक्तस्यानुपपत्तेः ॥६॥ वैश्वानरयागानन्तरं मारुतानां होमं विधाय तान्प्राणात्मना प्रशंसति ॥७॥ प्राणयोर्हस्तेन निर्देशः । अनयोः श्रोत्रयोः शिरोमध्येऽवस्थानात् ॥१०॥ इमाविति चक्षुषोर्निर्देशः ॥११॥ इमाविति नासाविवरयोर्निर्देशः । अरण्येऽनूच्यः कश्चिदनुवाकः तेन ह्रयमानोऽपि पुरोडाशोऽरण्येऽनूच्यो भवति ॥१२॥ प्रजायास्तु तदाज्ञाधीनत्वान्नोच्चैर्वक्तेरनिरुक्तत्वम् ॥१५॥ पुरोऽनुवाक्यवन्तं याज्यवन्तमिति छान्दसो ह्रस्वः ॥१६॥ एतेषां वै सप्तपदानामित्यत्र मारुतशब्देन तद्धोमसाधनभूताः शुक्रज्योतिश्चेत्यादयो मन्त्रा विवक्ष्यन्ते ते च सप्तपदा भवन्ति । इयमेव चिति (! इदमेवेति) प्रसृतिरभिनयेन प्रदर्श्यते कपुशलामेव (!) वक्तुङ्मुखमच्यते (? सुङ्मु°?) । अयमिति बाहुदण्डः प्रदर्श्यते एवं बाहुरेव क्रमित्युक्तं (? स्रुगि°?) भवति ॥१७॥ अथ होमक्रमेण तान्मारुतान्प्रत्येकं नद्यादिरूपेण प्रशंसति तद्यमिति । प्राच्यः प्राङ्मुखाः पूर्वसमुद्रगामिन्यो गङ्गायमुनादयः सप्त नद्यः ॥१८॥ रिप्रतराः रिप्रमिति पापमुच्यते पापिष्ठाः । शपनमिति व्यत्ययेन पकारस्य फकाध्रुवः (!?) अत्यर्थमुपालम्भनीयाः । आहनमिति प्रोचोक्तिमुच्यते (!?) तस्या अत्यर्थं वादितारो भवन्तीति मूत्ररूपत्वात्तासां नदीनां पयः पिबन्तो तितरा (!) नीचा भवन्तीत्यर्थः ॥२४॥१॥३॥

अथ पुनस्तामेव वसोर्धारां संस्कृतस्याग्नेरभिषेकात्मना प्रशंसति ॥२॥ इदं च मऽइदं च मऽइति वाजश्च मे प्रसवश्च मऽइत्यादिमन्त्राणां निर्देशः ॥५॥ व्योकसौ विभिन्नदेशस्था-

वाचार्यौ (°र्यो) यथा संयुञ्ज्यात् ॥६॥ ननु सर्वत्र द्वादशस्वेव कल्पयेदिति नेत्याह चतुर्दशसु च (!) कल्पयतीति ॥८॥ वाजश्च मे प्रसवश्च मऽइत्यारभ्याष्टाभिरनुवाकैरेषा वसोर्धारा हूयते तत्रैकस्मिन्ननुवाके अग्निश्च मऽइन्द्रश्च मे सोमश्च मऽइन्द्रश्च मऽइत्यादिमन्त्राः समाम्नाताः तत्र द्वौ-द्वौ संयुनक्तीति वचनेन द्वयोर्द्वयोरवसानविधानान्मन्त्रद्वयस्येन्द्रश्च मऽइत्येतदर्धं (त्ये इ र्धे) भवति अतस्ते मन्त्रा अर्धेन्द्रशब्देनोच्यन्ते ॥१॥ अंशुश्च मे रश्मिश्च मऽइत्यादयो मन्त्रा ग्रहप्रतिपादकत्वाद्ग्रहाः तत्साध्यमपि होममनूद्य प्रशंसति ॥१॥२॥३॥

अथ पूर्ववद्यज्ञकर्मक्रतुमन्त्रसाध्यहोमं (°तुर्मन्त्र°) प्रशंसति ॥१॥ एका च मे तिस्रश्च मऽइत्यादयो मन्त्रा अयुज स्तोमाः तत्साध्यं होमं प्रशंसति अथायुज इति । स्तोमशब्द स्तोत्रीया आचष्टे ॥२॥ चतस्रश्च मेऽष्टौ च मऽइत्यादयो मन्त्राः युग्मतः (!) ॥४॥ सप्त चितयः सप्तमचितौ पुरीषाभावात्षडेव पुरीषाणीति मिलित्वा चितिपुरीषाणि त्रयोदश भवन्ति ॥१॥ वाजाय स्वाहेत्यादिमन्त्रहोमानन्तरमियं ते राडिति मन्त्रस्य प्रयोगं विधत्ते ॥१०॥ अथ कल्पहोमं शंसति । क्लृपिधातुसाहित्येन मन्त्राणां कल्पशब्देनाभिधानम् ॥१२॥ अन्तिमं मन्त्रं व्याचष्टे अथाहेति । आज्यलिप्तम् लिप्तमाज्यमाहिताग्न्यादित्वान्निष्ठायां परनिपातः अत्र स्रुचि यच्छिष्टमाज्यम् ॥१४॥ जलधारेव धारा । उक्तप्रकारेण द्युलोके गवाकारा (°रे) वसोर्धारा दिवः सकाशाद्गामध्यागच्छति ॥१५॥ क्षीरधारा । एवं गवि गवाकारा ॥१६॥३॥३॥

अथ वाजप्रसवीयहोमं विधाय तत्प्रयोजनकथनद्वारा तस्य पदस्य प्रवृत्तिनिमित्तं दर्शयति अथात इति । प्रसौति अनुजानाति ॥१॥ वाजप्रसवीयहविः सर्वौषधं सर्वाभिरोषधिभिः सम्पादितं भवति । अत्र सर्वा ओषधय इति सप्त ग्राम्याः सप्तारण्याः परिगृह्यन्ते ॥४॥ येनैतदित्येतच्छब्देनाभिषेककालः परामृश्यते एतस्मिन्काले ॥५॥ यानि सप्त पूर्वाणि वाजस्येममित्यादिमन्त्रसाध्यानि कर्माणि तानि वाजपेयस्य वाजप्रसवीयं कर्म यानि सप्त वाजस्य नु प्रसव इति मन्त्रसाध्यानि कर्माणि तान्यग्निचयनस्य वाजप्रसवीयम् ॥७॥ यजमानस्य कृष्णाजिनेऽभिषेकः । उत्तरतः उत्तरभागे ॥१०॥ अस्य यजमानस्यैव आहवनीयो देवसम्बन्धी आत्मा अग्निचयनेन यजमानस्याग्नित्वप्राप्तेः । अयमिति यजमानो निर्दिश्यते अयं पुनर्मानुष आत्मा । एवं चाहवनीयसमीपेऽभिषिञ्चन्तस्ते ऋत्विजोऽस्य यजमानस्य दैवमात्मानं मर्त्येनात्मनानुप्रसजन्ति मेलयन्ति द्वावप्यात्मानौ संकीर्णौ कुर्वन्ति ॥१२॥ भूतः प्राप्तैश्वर्यः ऐश्वर्यं प्राप्तुमिच्छन्बुभूषन् ॥१४॥ आस्पृष्टं परिश्रितः तृतीयार्थे षष्ठी आङीषदर्थे परिश्रिता किंचित्स्पृष्टम् । अग्निमन्वारब्धं स्पृष्टवन्तम् ॥१५॥ पार्थादिहोमस्याभिषेकस्य च पौर्वापर्यमुपपादयति ॥१६॥ यजमानस्य दक्षिणबाहुसमीपं गत्वा ॥१७॥४॥३॥

राष्ट्रभृदाख्यान्होमान्कुर्यात् राष्ट्रभरणसाधारण्येनैतेषां राष्ट्रभृतां राजत्वमाह राजाना वाऽइति ॥१॥ गन्धान विशतीति (!) गन्धर्वाः अप्रशब्देन (!) रूपमभिधीयते तेन विशिष्टाश्चरन्तीति अप्सरसः ॥४॥ स्वाहा वाट् इति शब्दद्वयमपि प्रदानार्थम् ॥७॥ आयुवाना मिश्रयन्त्य-इव ॥८॥ भास्तेजांसि (! भां ते°) ॥१॥ इष्यमाणसाधनत्वादिष्टयः आ इष्टयः एष्टयः ॥१२॥ एष आहवनीयस्योपरि धार्यमाणो रथः असौ आकाशमध्ये वितयमान (!) आदित्यात्मकः । रथस्यादित्यात्मकत्वमादित्यवन्मण्डलाकाररथाङ्गवत्त्वात् शीघ्रगामित्वाद्वा ॥१५॥१॥४॥

उक्तहोमानन्तरं वातहोमान्कुर्यात् ॥१॥ होष्यमाणो वायुरग्नेर्बाह्यप्रदेशादाहरणीयः । ततो

बहिरवस्थितस्य वायोर्निधानमस्मिन्नग्नौ सम्पाद्यते ॥२॥ इतीवेत्यभिनयेन दर्शनम् एतस्य वायोरितीवाग्न्यादिवत्स्कन्दनादिविपत्तिर्नास्ति (! °भ्नादिवि°) अविपत्तिरिति (!) पदविभागः । उपरि धार्यमाणस्य रथस्य धुरोऽधोऽधोभागे ॥४॥ असौ लोकः स्वर्लोकः सर्वदा वृष्टिप्रदानेन समदानशीलत्वात्समुद्रः । नभ इति नक्षत्रनाम नभस्वान्नक्षत्रविशिष्टः । तेन समुद्रोऽसीत्यादिना मन्त्रप्रयोगेण अमुष्मिन्लोके यो वायुः बहिःप्रदेशादाहृतोऽस्ति तमेवास्मिन्नग्नौ निदधाति ॥५॥ तमश्वं नाभियुञ्ज्यात् अभियोजनं नाम युक्ते पुनर्योजनम् । तं रथमध्वर्युगृहपर्यन्तमुपर्येव हरेयुः ॥११॥ रुक्शब्दसम्बन्धाद्धोमसाधनभूता ऋचो रुङ्मत्यः तत्साध्यान्होमान्कुर्यात् ॥१२॥ अयमिदानीं संचितोऽग्निरेवार्कः असाविति दूरदेशवर्ती सूर्यो निर्दिश्यते तस्य चाश्वमेधत्वमश्वमेधसम्बन्धिनोऽश्वस्य तदात्मनानुसंधातव्यत्वात् ॥१८॥ आवपनं प्रक्षेपः तस्य मीमांसात्र क्रियत इति शेषः । ब्राह्मणवतीं ब्राह्मणसंयुक्तां शाखान्तरेष्वग्निचयनब्राह्मणोक्तामनारभ्याधीताम् ॥२७॥२॥४॥

अग्निचयनस्य धिष्ण्यचयनस्य पौर्वापर्यात्पूर्वं क्षत्रं कृत्वाथ विशं कृतवान्भवति ॥१॥ सोमयागसम्बन्धिनोऽग्निचयनसम्बन्धिनश्चेत्युभयानपि धिष्ण्यान् चिनोति ॥५॥ यस्मिन्नृतौ यो म्रियेत स जनः स एवऽर्तुर्भवति अयमर्थस्तैत्तिरीयके श्रूयते यदि वसन्ते प्रमीयते वसन्तो भवतीत्यादिना । ते ऋत्वात्मकाः पितरस्तं मार्जालीयं धिष्ण्यं प्रदक्षिणभागे व्यवस्थापितवन्तः अत इदानीं स एष मार्जालीय एषां देवानां दक्षिणभागेऽवतिष्ठते एवमृत्वात्मकपितृसम्बन्धात्तत्रोपधेयानामिष्टकानामृतुसंख्यानविधानमुपपन्नम् । अथ धिष्ण्यानां चित्याग्नेश्च संस्थानं प्रशंसति स वा इति अ(त्र) इतीति आग्नीध्रदेशं धिष्ण्योपधानप्रकारं हस्तेन दर्शयति इतोमानित्यत्रेतिशब्देन सदसि होत्रीयादिधिष्ण्यानामुपधानप्रकारम् इत्यमुमितीतिशब्देन चित्याग्न्युपधानप्रकारम् ॥८॥ इष्टकाभिश्चितानां धिष्ण्यानां परिश्रिद्भिः परिश्रयणम् । समुद्रगता आपो यथा पृथिवीं परिश्रयन्ति तद्वत्परिश्रितोऽपि धिष्ण्यान्परिश्रयन्ति ॥९॥ दिशामवेष्टीरिति बहुवचनं हविर्बहुत्वापेक्षम् इष्टेरेकत्वात् ॥१०॥ विहितामिष्टिं पूर्वपक्षीकृत्य तत्रेष्ट्यन्तरं विधत्ते तदाहुरिति तन्त्रत्राग्नीषोमीयस्य पशुपुरोडाशे विहितेष्टिस्थाने दशहविषमेवैतामिष्टिं निर्वपेत् पूर्वोक्तामिष्टिमतिक्रम्यैतदिष्टिस्वीकारे कारणमाह सा सर्वस्तोमेति सेष्टिः त्रिवृदादिभिः सर्वैः स्तोमैः रथन्तरादिभिः सर्वैः पृष्ठैश्च विशिष्टा सर्वाणि च छन्दांसि तद्विशिष्टत्वात् सर्वाश्च दिशः तदीयानां पुरोऽनुवाक्यानां तल्लिङ्गत्वात् सर्वे च ऋतवः तद्विशिष्टत्वात् अत एव तैत्तिरीयके श्रूयते अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाष्टाकपाल इत्यादि दिग्वतीः पुरोऽनुवाक्या भवन्ति सर्वासां दिशामभिहित्या (°तित्या) इति च । अयमग्निः एतत्सर्वजगदात्मकः तथा च सर्वात्मकायाग्नये सर्वस्तोमादिविशिष्टेष्टिरुपसम्पन्ना ॥११॥ पूर्ववदेव तामपीष्टिं पक्षीकृत्येष्ट्यन्तरं विधत्ते तद्वै (!) देवस्वामेवेति ॥१२॥ अथैतासामग्न्यादिदेवतानां नामद्वयसम्बन्धमुपपादयति ता वै द्विनाम्न्य इति । तदेव द्वितीयं नाम भवति तथा वाजपेययाजीत्येवमादि ॥१३॥ इष्टिर्हीति काम्येष्टिषु प्रधानस्योपांशुत्वमिति व्यवस्थितत्वात् अस्या अपि कामार्थेष्टित्वात् । इष्ट्यामध्वरवन्मैत्रावरुणो नास्तीति अनुब्रूहि यजेत्येव ब्रूयात् ॥१५॥ देवतायागानन्तरं स्विष्टकृद्यदानात्पूर्वं (! °दवदा°?) सविता त्वेत्यादिना पूर्वाभिषेकाख्येन मन्त्रेणैनमग्निमभिमृशेत् ॥१६॥३॥४॥

इत्थमौपवसथ्यदिवसप्रयोगमभिधायाथ सुत्याहःप्रयोगं विवक्षुः प्रथममग्नियोगं विधत्ते । प्रातर्यावभ्यो देवेभ्योऽनुब्रूहीत्येवं सम्प्रैषः प्रातरनुवाकस्योपाकरणम् । यथा लोके नियुक्ताश्वेन रथेन जिगमिषितप्रदेशान्गच्छति तद्वन्नियमितेनानेन सर्वान्कामानाप्नवानीति यजमानोऽध्वर्युमुखेनाग्निं नियच्छति ॥ १॥ ऋषिशब्देन षष्ठकाण्डस्यादावभिहितानृषीनाहेति व्याचष्टे अमूनेतदिति ॥४॥ स एषोऽग्निरस्य यजमानस्य दैव आत्मा एवं च यजमान एवाभिषिक्तो भवति । सोमस्यामृतत्वात्सोमाभिषेकेणामृताभिषिक्तो भवति ॥ ८॥ संध्योः परिधिसंध्योः । पूर्वं त्रिभिर्मन्त्रैस्त्रिष्वपि परिधिष्वग्नेर्युक्तत्वात्तथैव विमोचनमपि कर्तव्यम् अस्याग्नेरेष विमोचनलक्षणः प्रयोगः मूर्धा मूर्धवत्सर्वस्याप्युपरितनो भवति । अप्सुमतीभ्यामित्यत्रोत्तरमन्त्रे अप्सुशब्दप्रयोगादुपचारेण प्रथममन्त्रस्या(प्य)प्सुमत्वम् यज्ञायज्ञियं स्तोत्रं वैश्वानरस्याग्नेः सम्बन्धि भवति तद्देवत्यत्वात् अनेनास्याशान्तत्वमुक्तम् आपस्तु शान्तिः तस्माद्यज्ञायज्ञियस्तोत्रे कर्तव्यं विमोचनमप्सुमतीभ्यामृग्भ्यां क्रियते ॥ १३॥ यथा सामिधेन्योऽनूच्यन्ते तासां कर्माङ्गत्वेन प्रत्यहं परिसमाप्ये कर्मणि-कर्मण्यनूच्यत्वात् अतस्तत्समानत्वेन योजनविमोचनेऽपि प्रत्यहमेव कुर्यात् ॥ १६ ॥ ४ ॥ ४ ॥

अथातः शिष्टः कृत्स्नोऽपि योगः प्रकृतिवद्देवेति अभिप्रायेण तमनभिधाय पयोव्रतस्य मीमांसा क्रियतऽइति वाक्यशेषः । व्रतशब्देनात्राभ्यवहार उच्यते ॥ १॥ आसक्ति सत्यं केवलं सत्यं वदन्तस्तदानीमवीरतरा-इव अनाढ्यतरा-इवाभवन् एषेति (!) शब्दः तदानीमित्यस्मिन्नर्थे वर्तते केवलं सत्यं वदतां कार्यानुरोधेन वचनस्यासम्भवात्तदानीमसमर्था-इवानाढ्या-इव भवन्ति ॥ १६॥ पिपिशुः (!) पिशु (!) अवषवे (!) अवयविन-इव बभूवुः पिष्टा-इव (पुष्टा-इव ?) बभूवुरित्यर्थः ॥ १७॥ समिष्टयजुषः पूर्वभावि कर्म कृतं समिष्टयजुर्न कृतं तस्मिन्नवसरे आगताः ॥ १९॥ The explanation of क° २०-२७. as well as of ३४. ३५. ५७. ६२. and part of ६३. is wanting in AB. । एते असमापिता दीक्षणीयादयो यज्ञा नव भवन्ति ॥ ३०॥ ताः दिगात्मिका दर्भस्तम्बादिरूपा दिशः इष्टकाः तत्रैव प्रथमायां चितौ प्रागादिक्रमेण पञ्चसु दिक्षु प्राणभृतामुपधापनात् (!) दिगात्मिकाः प्राणभृतश्च द्वितीयादिषु चतुर्थ्यन्तासु तिसृषु चितिषु सर्वासामपीष्टकानां प्रागादिक्रमेणैवोपधानात् तासां दिगात्मकत्वम् ताश्च पञ्चम्याश्चितेः सम्बन्धिन्यः असपत्ना नाकसदः पञ्चचूडा इत्येता अपि तथैवोपधानाद्दिगात्मिकाः ता एताः सर्वा अपि दिग्रूपा इष्टकाः ऊर्ध्वा उत्क्रामन्त्यो गताः ॥ ३६॥ एतेषां हविषां निर्वापेण दर्भस्तम्बादीष्टकालक्षणासु उत्क्रान्तासु दिक्षु प्रजापतिं प्रतिष्ठापितवान्भवति ॥ ३८॥ ता एता अनुमत्यादयो देव्यः ॥ ३९॥ अस्य पशोः समाप्तिरूपत्वात् ॥ ४१॥. प्रायणं प्रारम्भः उदयनं समापनम् ॥ ४३॥ पुरस्तात्षष्ठेऽभिहितं तूष्णीमभिधन्तऽइत्याह अमूनेतदिति ॥ ४५॥ एतं यजमानम् ॥ ४६॥ सम्प्रति युक्तमन्यूनानतिरिक्तम् [असम्प्रति] न्यूनातिरिक्तम् ॥ ४९॥ तच्च नाम कात्यायनेनोक्तम् (१८. ६. २३.) नाम करोति चित्योऽसीतीति (चित्रो !) ॥ ५२॥ यो यजमानः एतदग्निचयनाख्यं कर्म करोति एतेन देवेषु भवति । मानुष्यां स्त्रियाम् ॥ ५४॥ तर्हि पूर्ववदेव किमग्निचयनं कृत्स्नमपि कुर्यादिति तत्राह स इति सोऽध्वर्युरनन्तरं क्रियमाणे क्रतौ स्वयमातृण्णा एवोपदधीत [न] पुनरिष्टकान्तराम् एतावता कथं तस्याग्नेः सिद्धिरिति तत्राह इमऽइति प्रथममध्यमोत्तमासूपधीयमानास्तिस्रः स्वयमातृण्णाः पृथिव्यादिलोकत्र-

यात्मिका एष संचितोऽग्निरपि प्रजापतिरूपत्वाल्लोकत्रयात्मिकः (!) एवं च स्वयमातृणोपधानेनैव स संचितोऽग्निः सेत्स्यति ॥५८॥ अथ वा अतव्या वा विश्वज्योतिषो वा पुनश्चितिं वोपदधीतेत्याह अतव्या एवेति अत्र सर्वत्र एवकारस्यावधारणार्थत्वादितरनिषेधसिद्धौ स्वयमातृणादीनां सर्वासामपि विधिनिषेधे सम्भवात् (ऽस°?) षोडशिग्रहणवद्विकल्पसिद्धिः (°णावद्वि°) ॥५९॥ एता अग्निवाय्वादित्यात्मिका देवता विश्वज्योतिषः ॥६०॥ संचितेऽग्नौ य एवाग्निर्निधीयते तदग्निरूपामेवेष्टकामभिलक्ष्य एष सर्वोऽपि चित्याग्निः सम्पद्यते उपरि निधायमानायामग्निरूपायामिष्टकायामिष्टकासमुच्चयरूपः(°पायामेतिविष्ट°)कृत्स्नोऽप्यग्निरन्तर्भवति ॥६१॥ तदा सर्वदापि सर्वमेव महदुक्थं शंसेत् न अगशीतीरिव ॥६३॥ अथाग्निभरणविषये अन्यानपि कांश्चित्पक्षान्दर्शयितुमुपोद्घातयति अथ हेति ॥६४॥ न तस्य संवत्सरभरणनियमः किं तु कानिचिद्दिनानि भृत्वा चयनम् ॥६५॥ गवामयनादौ संवत्सरं सोमस्याभिषवात् ॥६६॥ यः द्वादशसु मासेषु पूर्णेषु जातः स्यात् ॥६८॥१॥५॥

अथ येऽग्नय इत्यस्य मन्त्रस्यानन्तरं वार्त्रहत्यायेत्यादयः सप्त मन्त्राः समाम्नायन्ते तेषामिदानीं विनियोगमभिधातुमुपोद्घातमाह इन्द्र इति । न्यूनस्याकृतस्य कर्मणः प्राप्त्यै आधिक्येन कृतस्यानाधिक्याय अन्यथाकृतस्य चानन्यथाकारणाय । the rest is wanting in AB.

इति माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डव्याख्या समाप्ता ॥१॥ ॥

---

## VARIOUS READINGS.

*Adhy.* १.१.१० स्वस्याम् Sây. - १६ मूयान्न° B. with a dot in the म् (and thus ब् is generally expressed in B.). - १७ ब्रूयादसौ ABC. - २.४३ विजितो A 2. Sây. — *Adhy.* २. ३. ३१ इत्येतत्प्र ABC. — *Adhy.* ३. १. १२ नियछति Sây. - १७ कपुत्स° A. B 1. कपुछ° C. B 2. इयमेव कपुशा° Sây. - २४ शफन° Sây. (?). - ३. १४ अभूमेति स्वर्द्दि ABC. — *Adhy.* ४. १. ९ नामिते ! ABC. - Sây. unites the two first brâhma*n*as into one. - २. ४ आविपत्तिः (?) Sây. - ३. १२ तवै A. तवै or तन्वै BC. - १७ प्रतीष्य (!) Sây. — *Adhy.* ५. १. १५ Sây. divides ऐषावीर into ऐष and अवीर. - ibid. सह वेवा° A 2. B. C. - १७ पिपिशु° पिश्य° Sây. - ५७ °इयायै° C. ययायै B 2. - ६२ तन्वेव ABC. - ६५ कामन्वा ABC. - २. १ °पार्ण्यः A. - १६ °ज्ञो लोका ABC. —

ओम् । अग्निरेष पुरस्ताच्चीयते । संवत्सर उपरिष्टान्महदुक्थं शस्यते प्रजापतेर्विस्रस्तस्याग्रं रसोऽगच्छत् ॥१॥ स यः स प्रजापतिर्व्यस्रंसत । संवत्सरः सोऽथ यान्यस्य तानि पर्वाणि व्यस्रंसन्ताहोरात्राणि तानि ॥२॥ स यः स संवत्सरः प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्य तान्यहोरात्राणि पर्वाणि व्यस्रंसन्तेष्टका एव तास्तद्यदेता उपदधाति यान्येवास्य तान्यहोरात्राणि पर्वाणि व्यस्रंसन्त तान्यस्मिन्नेतत्प्रतिदधाति तदेतदत्रैव यजुश्चितमत्राप्तम् ॥३॥ अथ योऽस्य सोऽग्रं रसोऽगच्छत् । महत्तदुक्थं तमस्य तं रसमृक्सामाभ्यामनुयन्ति तद्यत्तत्र यजुः पुरस्तादित्यभिनेनेतीव तदेति यथादो मेऽमुत्रैकं तदाहरिष्यामीत्येवं तद्यजुः पुरस्तादेति तं संवत्सरेऽआप्नुवन्ति ॥४॥ तमध्वर्युर्ग्रहेण गृह्णाति । यद्गृह्णाति तस्माद्ग्रहस्तस्मिन्नुद्गाता महाव्रतेन रसं दधाति सर्वाणि हैतानि सामानि यन्महाव्रतं तदस्मिन्त्सर्वैः सामभी रसं दधाति तस्मिन्होता महतोक्थेन रसं दधाति सर्वा हैता ऋचो यन्महदुक्थं तदस्मिन्त्सर्वाभिर्ऋग्भी रसं दधाति ॥५॥ ते यदा स्तुवते यदानुशंसति । अथास्मिन्नेतं वषट्कृते जुहोति तदेनमेष रसोऽप्येति न वै महाव्रतमिदं स्तुतं शंसतऽइति पश्यन्ति नो महदिदमुक्थमित्यग्निमेव पश्यन्त्यात्मा ह्यग्निस्तदेनमेतेऽउभे रसो भूत्वापीत ऋक्च साम च तदुभेऽऋक्सामे यजुरपीतः ॥६॥ स एष मिथुनोऽग्निः । प्रथमा च चितिर्द्वितीया च तृतीया च चतुर्थी चाथ पञ्चम्यै चितेर्यश्चितेऽग्निर्निधीयते तन्मिथुनं मिथुन उऽएवायमात्मा ॥७॥ अङ्गुष्ठा इति पुमांसः । अङ्गुलय इति स्त्रियः कर्णाविति

पुमाꣳसौ भ्रुवाविति स्त्रियाऽओष्ठाविति पुमाꣳसौ नासिकेऽइति स्त्रियौ दन्ता इति पुमाꣳसो जिह्वेति स्त्री सर्व एव मिथुनः सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति ॥८॥ एषात्रापीतिः। अप्यहैवं मिथुन इत्यꣳ ह त्वेवापि मिथुनो वागेवेयं योऽयमग्निश्चितो वाचा हि चीयतेऽथ यश्चितेऽग्निर्निधीयते स प्राणः प्राणो वै वाचो वृषा प्राणो मिथुनं वाग्वेवायमात्माथ य आत्मन्प्राणस्तन्मिथुनꣳ सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति ॥९॥ एषोऽअत्रापीतिः। न ह वाऽअस्यापुत्रतायै का चन शङ्का भवति य एवमेतौ मिथुनावात्मानं चाग्निं च वेदान्नꣳ ह त्वेवायमात्मा दक्षिणान्नं वनुते यो न आत्मेति ह्यप्यृषिणाभ्युक्तम् ॥१०॥ तदिदमन्नं जग्धं द्वेधा भवति। यदस्यामृतमूर्ध्वं तन्नाभेरूर्ध्वैः प्राणैरुच्चरति तद्वायुमप्येत्यथ यन्मर्त्यं पराक् तन्नाभिमत्येति तद्द्वयं भूत्वेमामप्येति मूत्रं च पुरीषं च तद्यदिमामप्येति योऽयमग्निश्चितस्तं तदप्येत्यथ यद्वायुमप्येति यश्चितेऽग्निर्निधीयते तं तदप्येत्येषोऽएवात्रापीतिः ॥११॥ ब्राह्मणम् ॥१॥

प्रजापतिरिमाँल्लोकानिप्सत्। स एतं वयोविधमात्मानमपश्यदग्निं तं व्यधत्त तेनेमं लोकमाप्नोत्स द्वितीयं वयोविधमात्मानमपश्यन्महाव्रतं तद्व्यधत्त तेनान्तरिक्षमाप्नोत्स तृतीयं वयोविधमात्मानमपश्यन्महदुक्थं तद्व्यधत्त तेन दिवमाप्नोत् ॥१॥ अयं वाव लोक एषोऽग्निश्चितः। अन्तरिक्षं महाव्रतं द्यौर्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थꣳ सह ह्येमे लोका असृज्यन्त तद्यदग्निः प्रथमश्चीयतेऽयꣳ ह्येषां लोकानां प्रथमोऽसृज्यतेत्यधिदेवतम् ॥२॥ अथाध्यात्मम्। मन एवाग्निः प्राणो महाव्रतं वाङ्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयात्सह हि मनः प्राणो वाक्तद्यदग्निः प्रथमश्चीयते मनो हि प्रथमं प्राणानाम् ॥३॥ आत्मैवाग्निः। प्राणो महाव्रतं वाङ् महदुक्थं तस्मादेतानि सर्वाणि सहोपेयात्सह ह्यात्मा प्राणो वाक्तद्यदग्निः प्रथमश्चीयतऽआत्मा हि प्रथमः सम्भ-

वतः सम्भवति ॥४॥ शिर एवाग्निः । प्राणो महाव्रतमात्मा महदुक्थं तस्मादेतानि सर्वाणि सहोपेयात्सह हि शिरः प्राण आत्मा तद्यदग्निः प्रथमश्चीयते शिरो हि प्रथमं जायमानस्य जायते तस्माद्यत्रैतानि सर्वाणि सह क्रियन्ते महदेवोऽथमात्मा व्यायतऽआत्मा हि महदुक्थम् ॥५॥ तदाहुः । यदेतानि सर्वाणि सह दुरुपापानि कैतेषामुपाप्तिरिति ज्योतिष्टोमऽएवाग्निष्टोमे ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥६॥ तस्य वाऽएतस्य ज्योतिष्टोमस्याग्निष्टोमस्य । त्रिवृद्बहिष्पवमानं तद्वतस्य शिरः पञ्चदशसप्तदशाऽउत्तरौ पवमानौ तौ पक्षौ पञ्चदशᳬ होतुराज्यᳬ सप्तदशं पृष्ठमेकविᳬशं यज्ञायज्ञियं तत्पुच्छम् ॥७॥ तयोर्वाऽएतयोः । पञ्चदश सप्तदशयोर्द्वात्रिᳬशत्स्तोत्रियास्ततो याः पञ्चविᳬशतिः स पञ्चविᳬश आत्माथ याः सप्तातियन्ति ताः परिमादः पशवो हैताः पशवः परिमाद एतावद्वै महाव्रतं तदेतदत्रैव महाव्रतमाप्नोति ॥८॥ अथ होता सप्त छन्दाᳬसि शᳬसति । चतुरुत्तराण्येकर्चानि विराडष्टमानि तेषां तिस्रश्चाशीतयोऽक्षराणि पञ्चचत्वारिᳬशच्च ततो या अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यानि पञ्चचत्वारिᳬशत्ततो यानि पञ्चविᳬशतिः स पञ्चविᳬश आत्मा यत्र वाऽआत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ यानि विᳬशतिस्तदावपनमेतावद्वै महदुक्थं तदेतदत्रैव महदुक्थमाप्नोति तानि वाऽएतानि सर्वाणि ज्योतिष्टोमऽएवाग्निष्टोमऽआप्यन्ते तस्मादु ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥९॥ ब्राह्मणम् ॥२॥

प्रजापतिः प्रजा असृजत । स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा अथोर्ध्वमेव मृत्युं प्रजाभ्योऽत्तारमसृजत ॥१॥ तस्य ह प्रजापतेः । अर्धमेव मर्त्यमासीदर्धममृतं तद्यदस्य मर्त्यमासीत्तेन मृत्योरबिभेत्स बिभ्यदिमां प्राविशद्द्वयं भूत्वा मृच्चापश्च ॥२॥ स मृत्युर्देवानब्रवीत् । क्व नु सोऽभूद्यो नोऽसृष्टेति त्वद्बिभ्यदिमां प्राविक्षदिति सोऽब्रवीत्तं वाऽअन्विच्छाम तᳬ सम्भ-

राम न वाऽश्रहं तॠ हिॠसिष्यामीति तं देवा अस्याऽअधि समभरन्यदस्यास्वासीत्ता अपः समभरन्नथ यदस्यां तां मृदं तदुभयॠ सम्भृत्य मृदं चापश्चेष्टकामकुर्वंस्तस्मादेतदुभयमिष्टका भवति मृच्चापश्च ॥३॥ तदेता वाऽअस्य ताः। पञ्च मर्त्यास्तन्व आसंल्लोम त्वङ्मांॠसमस्थि मज्जाथैता अमृता मनो वाक्प्राणश्चक्षुः श्रोत्रम् ॥४॥ स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयतेऽथ या अस्य ताः पञ्च मर्त्यास्तन्व आसन्नेतास्ताः पुरीषचितयोऽथ या अमृता एतास्ता इष्टकाचितयः ॥५॥ ते देवा अब्रुवन् । अमृतमिमं करवामेति तस्यैताभ्याममृताभ्यां तनूभ्यामेतां मर्त्यां तनूं परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्यां पुरीषचितिं तथा द्वितीयां तथा तृतीयां तथा चतुर्थीम् ॥६॥ अथ पञ्चमीं चितिमुपधाय । पुरीषं निवपति तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिस्तदमृतमेवमस्यैताभ्याममृताभ्यां तनूभ्यामेता मर्त्यां तनूं परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्यां पुरीषचितिं ततो वै प्रजापतिरमृतोऽभवत्तथैवैतद्यजमान एतममृतमात्मानं कृत्वा सोऽमृतो भवति ॥७॥ ते वै देवास्तं नाविदुः । यद्येनॠ सर्वं वाकुर्वन्न वा सर्वं यद्यति वारेचयन्न वाभ्यापयंस्तऽएतामृचमपश्यन्धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभऽइति ॥८॥ तस्या अस्त्येवाग्नेयम् । अस्त्यैन्द्रमस्ति वैश्वदेवं तद्यदस्या आग्नेयं यदेवैतस्याग्नेराग्नेयं तदस्य तेन समस्कुर्वन्यदैन्द्रं तदैन्द्रेण यद्वैश्वदेवं तद्वैश्वदेवेन तमत्रैव सर्वं कृत्स्नॠ समस्कुर्वन् ॥९॥ तद्यदेतयोपतिष्ठते । यदेवास्यात्र विद्वान्वाविद्वान्वाति वा रेचयति न वाभ्यापयति तदेवास्यैतया सर्वमाप्नोति यदस्य किं चानाप्तमनुष्टुब्धामच्छद्भवति वाग्वाऽअनुष्टुब्वाग्धामच्छद्वाचैवास्य तदाप्नोति यदस्य किं चानाप्तं पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैकऽआहुस्तत्र हि सा सर्वा कृत्स्ना भवतीति ॥१०॥ तदु वाऽआहुः । यद्विष्ठवल्यैवोपतिष्ठेतैतद्ध्यस्य प्रियं धाम

यविष्ठ इति तद्यदस्य प्रियं धाम तेनास्य तदाप्नोति यदस्य किं चानाप्तमाग्नेय्याग्निकर्म हि गायत्र्या गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तमनिरुक्तया सर्वं वाऽअनिरुक्तꣳ सर्वेणैवास्य तदाप्नोति यदस्य किं चानाप्तं त्वं यविष्ठ दाशुष इति तस्योक्तो बन्धुः पुरीषवतीं चितिं कृत्वोपतिष्ठेत तत्र हि सा सर्वा कृत्स्ना भवति ॥ ११ ॥ ब्राह्मणम् ॥ ३ ॥ ॥

उभयꣳ हैतदग्रे प्रजापतिरास । मर्त्यं चैवामृतं च तस्य प्राणा एवामृता आसुः शरीरं मर्त्यꣳ स एतेन कर्मणैतयावृतैकधाजरममृतमात्मानमकुरुत तथैवैतद्यजमान उभयमेव भवति मर्त्यं चैवामृतं च तस्य प्राणा एवामृता भवन्ति शरीरं मर्त्यꣳ स एतेन कर्मणैतयावृतैकधाजरममृतमात्मानं कुरुते ॥ १ ॥ स प्रथमां चितिं चिनोति । सा हास्यैषा प्राण एव तद्धि तदमृतममृतꣳ हि प्राणः सैषामृतचितिरथ पुरीष निवपति तद्धास्यैतन्मज्जैव तद्धि तन्मर्त्यं मर्त्या हि मज्जा तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ २ ॥ द्वितीयां चितिं चिनोति । सा हास्यैषापान एव तद्धि तदमृतममृतꣳ ह्यपानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतदस्थ्येव तद्धि तन्मर्त्यं मर्त्यꣳ ह्यस्थि तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ ३ ॥ तृतीयां चितिं चिनोति । सा हास्यैषा व्यान एव तद्धि तदमृतममृतꣳ हि व्यानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतत्स्नावैव तद्धि तन्मर्त्यं मर्त्यꣳ हि स्नाव तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ ४ ॥ चतुर्थीं चितिं चिनोति । सा हास्यैषोदान एव तद्धि तदमृतममृतꣳ ह्युदानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतन्माꣳसमेव तद्धि तन्मर्त्यं मर्त्यꣳ हि माꣳसं तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति

॥५॥ पञ्चमीं चितिं चिनोति । सा क्लास्यैषा समान एव तद्धि तदमृतममृतꣳ हि समानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतन्मेद एव तद्धि तन्मर्त्यं मर्त्यꣳ हि मेदस्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥६॥ षष्ठीं चितिं चिनोति । सा क्लास्यैषा वागे वतद्धि तदमृतममृतꣳ हि वाक्सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतदसृगेव ल्गेव तद्धि तन्मर्त्यं मर्त्यꣳ ह्यसृक्मर्त्या वक्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥७॥ ता वा एताः । षडिष्टकाचितयः षट् पुरीषचितयस्तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्प्रजापतिरेकधाजरममृतमात्मानमकुरुत तथैवैतद्यजमान एकधाजरममृतमात्मानं कुरुते ॥८॥ अथ विकर्णीं च स्वयमातृण्णां चोपधाय । हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति रूपमेव तत्प्रजापतिर्हिरण्मयमकृत आत्मनोऽकुरुत यद्वदत्ततस्तस्मादिदमत्यन्यात्मनो रूपं तस्मादाहुर्हिरण्मयः प्रजापतिरिति तथैवैतद्यजमानो रूपमेव हिरण्मयमकृत आत्मनः कुरुते यद्वदत्ततस्तस्मादिदमत्यमात्मनो रूपं तस्माद्ये चैतद्विदुर्ये च न हिरण्मयोऽग्निचिदमुष्मिंल्लोके सम्भवतीत्येवाहुः ॥९॥ तद्धैतच्छाण्डिल्यश्च सात्यरथवाहनिश्च । आचार्यान्तेवासिनौ व्यूदाते रूपमेवास्यैतदिति ह स्माह शाण्डिल्यो लोमानीति सात्यरथवाहनिः ॥१०॥ स होवाच शाण्डिल्यः । रूपं वाव लोमवद्रूपमलोमकꣳ रूपमेवास्यैतदिति तद्धि तत्तथा यथा तच्छाण्डिल्य उवाच संचितेऽग्निः प्रणीयते प्रणीताद्र्ध्वꣳ समिध आहुतय इति हूयन्ते ॥११॥ प्राणेन वै देवा अन्नमदन्ति । अग्निरु देवानां प्राणस्तस्मात्प्राग्देवेभ्यो जुह्वति प्राणेन हि देवा अन्नमदन्त्यपानेन मनुष्या अन्नमदन्ति तस्मात्प्रत्यङ्मनुष्येष्वन्नं धीयतेऽपानेन हि मनुष्या अन्नमदन्ति ॥१२॥ तदाहुः । न वयस्तोऽग्निचिदश्नीयाद्वयो वा एष

रूपं भवति योऽग्निं चिनुतऽईश्वर आर्तिमार्तोस्तस्मान्न वयसोऽग्निचिदश्नीयादिति तद्वै काममेवैवंविदश्नीयादन्नं वाऽएष रूपं भवति योऽग्निं चिनुते सर्वं वाऽइदमग्नेरन्नं सर्वं मऽइदमन्नमित्येवैवंविद्विद्यादिति ॥१३॥ तदाहुः । किं तदग्नौ क्रियते येन यजमानः पुनर्मृत्युमपजयतीत्यग्निर्वाऽएष देवता भवति योऽग्निं चिनुतेऽमृतमु वाऽअग्निः श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य एवं वेद ॥१४॥ ब्राह्मणम् ॥४॥ ॥

सर्वे हैते यज्ञा योऽयमग्निश्चितः । स यत्पशुमालभते तदग्न्याधेयमथ यदुखां सम्भरति तान्यग्न्याधेयहवींष्यथ यद्दीक्षते तदग्निहोत्रमथ यद्दीक्षितः समिधावादधाति तेऽअग्निहोत्राहुती ॥१॥ ते वै सायंप्रातरादधाति । सायंप्रातर्ह्यग्निहोत्राहुती जुह्वति समानेन मन्त्रेण समानेन हि मन्त्रेणाग्निहोत्राहुती जुह्वत्यथ यद्वनीवाहनं च भस्मनश्चाभ्यवहरणं तौ दर्शपूर्णमासावथ यद्गार्हपत्यं चिनोति तानि चातुर्मास्यान्यथ यदूर्ध्वं गार्हपत्यादा सर्वौषधात्ता इष्टयोऽथ यदूर्ध्वं सर्वौषधात्प्राचीनं चितिभ्यस्ते पशुबन्धा यऽएवैतेषु यज्ञेषु विष्णुक्रमास्ते विष्णुक्रमा यज्जप्यं तद्वात्सप्रम् ॥२॥ सौम्योऽध्वरः प्रथमा चितिः । यत्प्राचीनं सर्वेभ्यो राजसूयो द्वितीया वाजपेयस्तृतीयाश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी येश्चितं सामभिः परिगायति तन्महाव्रतमथ यत्तत्रोद्गातुः पुरस्ताज्जप्यं तच्छतरुद्रियं वसोर्धारा महदुक्थमथ यदूर्ध्वं सामभ्यः प्राचीनं वसोर्धाराये यदेव तत्र होतुः पुरस्ताज्जप्यं तत्तदथ यदूर्ध्वं वसोर्धाराये ते गृहमेधा एतावन्तो वै सर्वे यज्ञास्तानग्निनाप्नोति ॥३॥ अथातो यज्ञवीर्याणामेव । सायंप्रातर्ह वाऽअमुष्मिंलोकेऽग्निहोत्रहुदश्नाति तावती ह तस्मिन्यज्ञऽऊर्गर्धमासेऽर्धमासे दर्शपूर्णमासयाजी चतुर्षु-चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु-षट्सु पशुबन्धयाजी संवत्सरे-संवत्सरे सोमयाजी शते-शते संवत्सरेष्वग्निचित्काममश्नाति कामं न तद्वैतस्यावन्तं संवत्सरास्तावदमृतमनन्तमपर्यन्तं स

यो हैतदेवं वेदैवꣳ हैवास्यैतदमृतमनन्तमपर्यन्तं भवति तस्य यद्पीषीकयवोपहन्यात्तदेवास्यामृतमनन्तमपर्यन्तं भवति ॥४॥ ब्राह्मणम् ॥५॥ प्रथमोऽध्यायः [६१.] ॥ ॥

प्रजापतिः स्वर्गं लोकमजिगाꣳसत् । सर्वे वै पशवः प्रजापतिः पुरुषोऽश्वो गौरविरजः स एतै रूपैर्नाशक्नोत्स एतं वयोविधमात्मानमपश्यदग्निं तं व्यधत्त सोऽनुपसमुह्यानुपाधायोदपिपतिषत्स नाशक्नोत्स उपसमुह्योपाधायोदपतत्तस्माद्प्येतर्हि वयाꣳसि यदेव पक्षाऽउपसमूहन्ते यदा पत्राणि विसृजन्तेऽथोत्पतितुꣳ शक्नुवन्ति ॥१॥ तं वाऽअङ्गुलिभिर्मिमीते । पुरुषो वै यज्ञस्तेनेदꣳ सर्वं मितं तस्यैषावमा मात्रा यदङ्गुलयस्तद्यास्यावमा मात्रा तामस्य तदाप्नोति तयैनं तन्मिमीते ॥२॥ चतुर्विꣳशत्याङ्गुलिभिर्मिमीते । चतुर्विꣳशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनं तन्मिमीते ॥३॥ स चतुरङ्गुलमेवोभयतोऽन्तरत उपसमूहति । चतुरङ्गुलमुभयतो बाह्यतो व्युदूहति तद्यावदेवोपसमूहति तावद्व्युदूहति तन्नाह्यैवातिरेचयति नो कनीयः करोति तथा पुच्छस्य तथोत्तरस्य पक्षस्य ॥४॥ अथ निर्णामौ पक्षयोः करोति । निर्णामौ हि वयसः पक्षयोर्भवतो वितृतीये वितृतीये हि वयसः पक्षयोर्निर्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये वयसः पक्षयोर्निर्णामौ भवतः स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलं पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाह्यैवातिरेचयति नो कनीयः करोति ॥५॥ स तस्मिन्निर्णामे । एकामिष्टकामुपदधाति तद्येयं वयसः पततो निर्णामादेका नाड्युपशेते तां तत्करोत्यथोऽइदम् ॥६॥ अथ वक्रौ पक्षौ करोति । वक्रौ हि वयसः पक्षौ भवतः स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलं पुरस्तादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाह्यैवातिरेचयति नो कनीयः करोति ॥७॥ अथ रूपमुत्तमं करोति । अत्रैष

सर्वोऽग्निः संस्कृतस्तस्मिन्देवा एतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधाति स सहस्रमृग्वालिखिता इष्टकाः करोति सहस्रमित्यालिखिताः सहस्रमित्यालिखिताः ॥८॥ अथ पञ्चमीं चितिमुपधाय । त्रेधाग्निं विमिमीते स मध्यमे वितृतीये सहस्रमृग्वालिखिता इष्टका उपदधाति तद्यानीमानि वयसः प्रत्यञ्चि शीर्ष्ण आ पुछादङ्गानि लोमानि तानि तत्करोति ॥९॥ अथ सहस्रमित्यालिखिता दक्षिणत उपदधाति । तद्यानीमानि वयसो दक्षिणतो वक्त्राणि लोमानि तानि तत्करोति ॥१०॥ अथ सहस्रमित्यालिखिता उत्तरत उपदधाति । तद्यानीमानि वयस उत्तरतो वक्त्राणि लोमानि तानि तत्करोति सहस्रेण सर्वं वै सहस्रꣳ सर्वेणैवास्मिन्नेतद्रूपमुत्तमं दधाति त्रिभिः सहस्रैस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमं दधाति ॥११॥ ब्राह्मणम् ॥६ [२. १.] ॥ ॥

यान्वै तान्सप्त पुरुषान् । एकं पुरुषमकुर्वंस्स प्रजापतिरभवत्स प्रजा असृजत स प्रजाः सृष्ट्वोर्ध्व उदक्रामत्स एतं लोकमगछद्यत्रैष एतत्तपति नो ह तर्ह्यन्य एतस्मादत्र यज्ञिय आस तं देवा यज्ञेनैव यष्टुमध्रियन्त ॥१॥ तस्मादेतदृषिणाभ्यनूक्तम् । यज्ञेन यज्ञमयजन्त देवा इति यज्ञेन हि तं यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति ते हि धर्माः प्रथमेऽक्रियन्त ते ह नाकं महिमानः सचन्तेति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गं लोकꣳ सचन्त ये तं यज्ञमयजन्नित्येतत् ॥२॥ यत्र पूर्वे साध्याः सन्ति देवा इति । प्राणा वै साध्या देवास्तऽएतमग्रऽएवमसाधयन्नेतदेव बुभूषन्तस्तऽउऽएवाप्येतर्हि साधयन्ति पश्चेदन्यदभवद्यज्जत्रममर्त्यस्य भुवनस्य भूनेति पश्चाद्धैवेदमन्यद्यज्ञियमास यत्किं चामृतम् ॥३॥ सुपर्णोऽअङ्ग सवितुर्गरुत्मान् । पूर्वो जातः स उऽअस्यानु धर्मेति प्रजापतिर्वै सुपर्णो गरुत्मानेष सवितैतस्य प्रजापतिरनु धर्ममित्येतत् ॥४॥ स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुछानि च-

त्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि ॥५॥ तं वाऽउद्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञस्तेनेदꣳ सर्वं मितं तस्यैषा परमा मात्रा यदुद्बाहुस्तद्यास्य परमा मात्रा तामस्य तदाप्नोति तयैनं तन्मिमीते तत्रोप यत्प्रपदेनाभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्नोति तस्माद्‌ बाह्वेनैव लेखां परिश्रिद्भ्यः खनेत्‌ ॥६॥ अथ पक्षयोररत्नीऽउपादधाति । पक्षयोस्तद्वीर्यं दधाति बाहू वै पक्षौ बाहुभ्यामु वाऽअन्नमद्यतेऽन्नायैव तमवकाशं करोति तद्यत्पक्षयोररत्नीऽउपादधात्यरत्निमात्राद्ध्यन्नमद्यते ॥७॥ अथ पुच्छे वितस्तिमुपादधाति । प्रतिष्ठायां तद्वीर्यं दधाति प्रतिष्ठा वै पुच्छꣳ हस्तो वितस्तिर्हस्तेन वाऽअन्नमद्यतेऽन्नायैव तमवकाशं करोति तद्यत्पुच्छे वितस्तिमुपादधात्यन्नऽएवैनं तत्प्रतिष्ठापयति तद्यत्तत्र कनीय उपादधात्यन्ने ह्येवैनं तत्प्रतिष्ठापयत्यथोऽएतावद्वाऽइदं मितं भवत्येतावदिदं तद्यदेवं मिमीत ऽएतस्यैवास्यै ॥८॥ ब्राह्मणम्‌ ॥७ [२.२.] ॥ ॥

या वाऽइयं वेदिः सप्तविधस्य । एषा हैदर्मात्रा स देवयजनमध्यवसाय पूर्वया द्वारा पत्नीशालं प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्हपत्यस्योद्धतात्सप्त प्राचः प्रक्रमान्प्रक्रामति ततः प्राञ्चं व्यामं विमिमीते तस्य मध्यऽआहवनीयायोद्धत्यावोक्षति पूर्वार्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति स वेद्यन्तः ॥१॥ ॥शतम्‌५२००॥॥ ते वाऽएते । व्यामैकादशाः प्रक्रमा अन्तरा वेद्यन्तं च गार्हपत्यं चैकादशाक्षरा त्रिष्टुब्वज्रो वै त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षाꣳसि नाष्ट्रा अपहन्ति ॥२॥ सैषा वेदेर्योनिः । एतस्यै वै योनेर्देवा वेदिं प्राजनयन्नथ य एष व्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यं प्राजनयन्गार्हपत्यादाहवनीयम्‌ ॥३॥ स वेद्यन्तात्‌ । षट्त्रिꣳशत्प्रक्रमां प्राचीं वेदिं विमिमीते त्रिꣳशतं पश्चात्तिरश्चीं चतुर्विꣳशतिं पुरस्तात्तन्नवतिः सैषा नवतिप्रक्रमा वेदिस्तस्याꣳ सप्तविधमग्निं विदधाति ॥४॥ तदाहुः । कथमेषं सप्तविध एतया वेद्या सम्प-

यतऽइति दश वाऽइमे पुरुषे प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदश एवं द्वितीयऽएवं तृतीये षट्सु पुरुषेषु नवतिरथैकः पुरुषोऽत्येति पाङ्क्तो वै पुरुषो लोम त्वङ्माꣳसमस्थि मज्जा पाङ्क्तोऽइयं वेदिश्चतस्रो दिश आत्मा पञ्चम्येवमेष सप्तविध एतया वेद्या सम्पद्यते ॥५॥ तद्धैके । उत्तरा विधा विधास्यन्त एताꣳश्च प्रक्रमानितं च व्याममनुवर्धयन्ति योनिमनुवर्धयाम इति न तथा कुर्यान्न वै जातं गर्भं योनिरनुवर्धते यावद्वाव योनावन्तर्गर्भो भवति तावदेव योनिर्वर्धतऽएतावत्यु वाऽअत्र गर्भस्य वृद्धिः ॥६॥ ते ये ह तथा कुर्वन्ति । एतꣳ ह ते पितरं प्रजापतिꣳ सम्पदश्च्यावयन्ति तऽइष्ट्वा पापीयाꣳसो भवन्ति पितरꣳ हि प्रजापतिꣳ सम्पदश्च्यावयन्ति स यावत्येषा सप्तविधस्य वेदिस्तावतीं चतुर्दश कृत्वऽएकशतविधस्य वेदिं विमिमीते ॥७॥ अथ षट्त्रिꣳशत्प्रक्रमाꣳ रज्जुं मिमीते । ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्प्राच उपदधाति निःसृजति चतुरः ॥८॥ अथ त्रिꣳशत्प्रक्रमां मिमीते । ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः ॥९॥ अथ चतुर्विꣳशतिप्रक्रमां मिमीते । ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्पुरस्तादुपदधाति निःसृजति चतुर इति नु वेदिविमानम् ॥१०॥ अथाग्नेर्विधाः । अष्टाविꣳशतिः प्राञ्चः पुरुषा अष्टाविꣳशतिस्तिर्यञ्चः स आत्मा चतुर्दश पुरुषा दक्षिणः पक्षश्चतुर्दशोत्तरश्चतुर्दश पुच्छं चतुर्दश[illegible]क्षिणे पक्षऽउपदधाति चतुर्दशोत्तरे चतुर्दश वितस्तीः पुच्छऽइति न्वष्टानवतिः पुरुषाणां मात्रा साधिमानानाम् ॥११॥ अथ त्रिपुरुषाꣳ रज्जुं मिमीते । ताꣳ सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुच्छेषु ॥१२॥ अथारत्निमात्रीं मिमीते । ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्षऽउपदधाति त्रीनेवोत्तरे निःसृजति चतुरः ॥१३॥ अथ वितस्तिमात्रीं [illegible] । ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्पुच्छऽउपदधाति निःसृजति चतुर एवमेष एकशतविध एतया वेद्या सम्पद्यते

॥१४॥ तदाहुः । यत्त्रयोदश पुरुषा अतियन्ति कथमेते सम्पदो न च्यवन्तऽइति या वाऽएतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषाᳩ सर्वेषाᳩ सम्पत् ॥१५॥ अथो ऽआहुः । प्रजापतिरेवात्मानं विधाय तस्य यत्र-यत्र न्यूनमासीत्तदेतैः समापूरयत तेनोऽएवापि सम्पन्न इति ॥१६॥ तद्वैके । एकविधं प्रथमं विदधत्यथैकोत्तरमाऽपरिमितविधान्न तथा कुर्यात् ॥१७॥ सप्तविधो वाऽअग्रे प्रजापतिरसृज्यत । स आत्मानं विदधान ऐत्स एकशतविधेऽतिष्ठत स योऽर्वाचीनᳩ सप्तविधाद्विधत्त ऽएतᳩ ह स पितरं प्रजापतिं विच्छिनत्ति स इष्ट्वा पापीयान्भवति यथा श्रेयाᳩसᳩ छित्त्वा सिवाय य एकशतविधमतिविधत्तेऽस्मात्स सर्वस्माद्बहिर्धा निष्पद्यते सर्वमु ह्येदं प्रजापतिस्तस्मादु सप्तविधमेव प्रथमं विदधीताथैकोत्तरमैकशतविधादेकशतविधं तु नातिविदधीत नाह्येतं पितरं प्रजापतिं विच्छिनत्ति नोऽअस्मात्सर्वस्माद्बहिर्धा निष्पद्यते ॥१८॥ ब्राह्मणम् ॥ ८ [२. ३.] ॥ ॥

संवत्सरो वै प्रजापतिः । अग्निरु सर्वे कामाः सोऽयᳩ संवत्सरः प्रजापतिरकामयताग्निᳩ सर्वान्कामानात्मानमभिसंचिन्वीयेति स एकशतधात्मानं व्यधत्त स एकशतधात्मानं विधायाग्निᳩ सर्वान्कामानात्मानमभिसमचिनुत स सर्वे कामा अभवत्तस्मान्न कश्चन बहिर्धा कामोऽभवत्तस्मादाहुः संवत्सरः सर्वे कामा इति न ह संवत्सरात्कश्चन बहिर्धा कामोऽस्ति ॥१॥ तथैवैतद्यजमानः । एकशतधात्मानं विधायाग्निᳩ सर्वान्कामानात्मानमभिसंचिनुते स सर्वे कामा भवति तस्मान्न कश्चन बहिर्धा कामो भवति ॥२॥ स यः स संवत्सरोऽसौ स आदित्यः । स एष एकशतविधस्तस्य रश्मयः शतं विधा एष एवैकशततमो य एष तपत्यस्मिन्त्सर्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमान एकशतधात्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥३॥ अथ वाऽएकशतविधः । सप्तविधमभिसम्पद्यतऽएकशतधा वाऽअसावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रय

संवत्सरः स आत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते देवा अथ यद्विकर्णी
च स्वयमातृण्णा चाश्मा पृश्निर्यश्चितेऽग्निर्निधीयते सा पञ्चत्रिꣳशी लोकम्पृणायै य-
जुः षट्त्रिꣳशी सोऽस्यैष सर्वस्यान्तमेवात्मा स एष सर्वासामपां मध्ये स एष सर्वैः
कामैः सम्पन्न आपो वै सर्वे कामाः स एषोऽकामः सर्वकामो न ह्येतं कस्य चन
कामः ॥१५॥ तदेष श्लोको भवति । विद्यया तदारोहन्ति यत्र कामाः परागताः
न तत्र दक्षिणा यन्ति नाविद्वाꣳसस्तपस्विन इति न हैव तं लोकं दक्षिणाभिर्न
तपसानेवंविदश्नुतऽएवंविदाꣳ हैव स लोकः ॥१६॥ अन्नं पुरीषम् । चन्द्रमा आ-
हुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे वसत्याहुतिस्तत्समिधि वसत्येतद्वा
ऽआहुतेरन्नमेषा प्रतिष्ठा तस्मादाहुतिर्न क्षीयतऽएतद्ध्यस्या अन्नमेषा प्रतिष्ठाथ
यद्देवा इत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वं देवा इत्येवाख्यायते ॥१७॥
तदेतदृचाभ्युक्तम् । विश्वे देवा अनु तत्ते यजुर्गुरिति सर्वाणि ह्यत्र भूतानि सर्वे
देवा यजुरेव भवन्ति तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद
लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥१८॥ ता वाऽएताः । एकविꣳशतिर्बृ-
हत्य एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभि-
सम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च छन्दः ॥१९॥ ब्राह्मणम् ॥२ [५.४.] ॥॥

कुश्रिर्ह वाजश्रवसोऽग्निं चिक्ये । तꣳ होवाच सुश्रवाः कौष्यो गौतम यद-
ग्निमचैषीः प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीर्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीः ॥१॥
यद्यहैनं प्राञ्चमचैषीः । यथा पराचऽआसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक्तन्न ते
हविः प्रतिग्रहीष्यति ॥२॥ यद्यु वाऽएनं प्रत्यञ्चमचैषीः । कस्मादस्य तर्हि पश्चा-
त्पुच्छमकार्षीः ॥३॥ यद्यु वाऽएनं न्यञ्चमचैषीः । यथा नीचः शयानस्य पृष्ठेऽन्नाद्यं
प्रतिष्ठापयेत्तादृक्तन्नैव ते हविः प्रतिग्रहीष्यति ॥४॥ यद्यु वाऽएनमुत्तानमचैषीः ।
न वाऽउत्तानं वयः स्वर्गं लोकमभिवहति न त्वा स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्य

उ ते भविष्यतीति ॥५॥ स होवाच । प्राञ्चमेनमचैषं प्रत्यञ्चमेनमचैषं न्यञ्चमेनमचैषमुत्तानमेनमचैषꣳ सर्वा अनु दिश एनमचैषमिति ॥६॥ स यत्प्राञ्चं पुरुषमुपदधाति । प्राच्यौ स्रुचौ तत्प्राङ् चीयतेऽथ यत्प्रत्यञ्चं कूर्ममुपदधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयतेऽथ यन्न्यञ्चं कूर्ममुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयतेऽथ यदुत्तानं पुरुषमुपदधात्युत्ताने स्रुचाऽउत्तानमुलूखलमुत्तानामुखां तदुत्तानश्चीयतेऽथ यत्सर्वा अनु दिशः परिसर्पमिष्टका उपदधाति तत्सर्वतश्चीयते ॥७॥ अथ ह कोषा धावयन्तः । निरूꣳशिरसमग्निमुपाधावयां चक्रुस्तेषाꣳ हैक उवाच श्रीर्वै शिरः श्रियमस्य निरौहीत्सर्वज्यानिं ज्यास्यतऽइति स ह तथैवास ॥८॥ अथ हैक उवाच । प्राणा वै शिरः प्राणानस्य निरौहीत्क्षिप्रेऽमुं लोकमेष्यतीति स उ ह तथैवास ॥९॥ ऊर्ध्वो वाऽएष एतच्चीयते । यद्दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्येऽअषाढा कूर्मोऽथ हास्यैतदेव प्रत्यक्षतमाꣳ शिरो यश्चितेऽग्निर्निधीयते तस्मान्न निरूहेत् ॥१०॥ ब्राह्मणम् ॥ ३ [५. ५.] ॥ पञ्चमोऽध्यायः [६५.] ॥ ॥

अथ हैतेऽरुणे । औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो जाबालो बुडिल आश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषाꣳ ह वैश्वानरे न समियाय ॥१॥ ते होचुः । अश्वपतिर्वाऽअयं कैकेयः सम्प्रति वैश्वानरं वेद तं गच्छामेति ते हाश्वपतिं कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्साहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिरऽउप त्वायामेति ॥२॥ स होवाच । यन्नु भगवन्तोऽनूचाना अनूचानपुत्राः किमिदमिति ते होचुर्वैश्वानरꣳ ह भगवान्त्सम्प्रति वेद तं नो ब्रूहीति स होवाच सम्प्रति खलु त्वाऽअहं वैश्वानरं वेदाभ्याधत्त समिध

उपेता स्थेति ॥३॥ स होवाचारुणमौपवेशिम् । गौतम कं त्वं वैश्वानरं वेत्थेति
पृथिवीमेव राजन्निति होवाचोमिति होवाचैष वै प्रतिष्ठा वैश्वानर एतꣳ हि
वै त्वं प्रतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वं प्रतिष्ठितः प्रजया पशुभिरसि यो वाऽएतं
प्रतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति पादौ त्वाऽएतौ वैश्वान-
रस्य पादौ तेऽम्लास्यतां यदि ह नागमिष्य इति पादौ तेऽविदितावभविष्यतां य-
दि ह नागमिष्य इति वा ॥४॥ अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य
कं त्वं वैश्वानरं वेत्थेत्यप एव राजन्निति होवाचोमिति होवाचैष वै रयिर्वैश्वा-
नर एतꣳ हि वै त्वꣳ रयिं वैश्वानरं वेत्थ तस्मात्त्वꣳ रयिमान्पुष्टिमानसि यो वा
ऽएतꣳ रयिं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति वस्तिस्त्वाऽएष वैश्वा-
नरस्य वस्तिस्त्वाहास्यद्यदि ह नागमिष्य इति वस्तिस्तेऽविदितोऽभविष्यद्यदि ह
नागमिष्य इति वा ॥५॥ अथ होवाच महाशालं जाबालम् । औ[illegible] कं
त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुला
वैश्वानर एतꣳ हि वै त्वं बहुलं वैश्वानरं वेत्थ तस्मात्त्वं बहुः प्रजया पशुभिरसि
यो वाऽएतं बहुलं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेत्यात्मा त्वाऽएष
वैश्वानरस्यात्मा त्वाहास्यद्यदि ह नागमिष्य इत्यात्मा तेऽविदितोऽभविष्यद्यदि
ह नागमिष्य इति वा ॥६॥ अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य कं
त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा
वैश्वानर एतꣳ हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मात्त्वां पृथग्रथश्रेणयोऽनु-
यान्ति यो वाऽएतं पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति प्रा-
णस्त्वाऽएष वैश्वानरस्य प्राणस्त्वाहास्यद्यदि ह नागमिष्य इति प्राणस्तेऽविदितो
ऽभविष्यद्यदि ह नागमिष्य इति वा ॥७॥ अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वै-
याघ्रपद्य कं त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष

वै सुततेजा वैश्वानर एतᳪं हि वै त्वᳪं सुततेजसं वैश्वानरं वेत्थ तस्मात्तवैष सुतोऽग्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति यो वाऽएतᳪं सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति चक्षुस्त्वाऽएतद्वैश्वानरस्य चक्षुस्त्वाहास्यद्यदि ह नागमिष्य इति चक्षुस्तेऽविदितमभविष्यद्यदि ह नागमिष्य इति वा ॥८॥ अथ होवाच जनᳪं शार्कराक्ष्यम् । सायवस कं त्वं वैश्वानरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष वाऽअतिष्ठा वैश्वानर एतᳪं हि वै त्वमतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वᳪं समानानतितिष्ठसि यो वाऽएतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति मूर्धा त्वाऽएष वैश्वानरस्य मूर्धा त्वाहास्यद्यदि ह नागमिष्य इति मूर्धा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥९॥ तान्होवाच । एते वै यूयं पृथग्वैश्वानरान्विद्वाᳪंसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥१०॥ स होवाच । मूर्धानमुपदिशन्नेष वाऽअतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाचैष वै सुततेजा वैश्वानर इति नासिकेऽउपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर इति मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति न हास्य ब्रुवाणं चन वैश्वानरो हिनस्ति ॥११॥ ब्राह्मणम् ॥४ [६.१.]॥

द्वयं वाऽइदमत्ता चैवाद्यं च । तद्यदोभयᳪं समागछत्यत्तैवाख्यायते नाद्यम् ॥१॥ स वै यः सोऽत्ताग्निरेव सः । तस्मिन्यत्किं चाभ्यादधत्याहितय एवास्य ता अह्वितयो ह वै ता आहुतय इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥२॥ आदित्यो वाऽअत्ता । तस्य चन्द्रमा एवाहितयश्चन्द्रमसᳪं ह्यादित्यऽआद-

धतीत्यधिदैवतम् ॥३॥ अथाध्यात्मम् । प्राणो वाऽअत्ता तस्यान्नमेवाहितयोऽन्नᳫं हि प्राणऽआदधतीति न्वग्नेः ॥४॥ अथार्कस्य । अग्निर्वाऽअर्कस्तस्याहुतय एव कमाहुतयो ह्यग्नये कम् ॥५॥ आदित्यो वाऽअर्कः । तस्य चन्द्रमा एव कं चन्द्रमा ह्यादित्याय कमित्यधिदैवतम् ॥६॥ अथाध्यात्मम् । प्राणो वाऽअर्कस्तस्यान्नमेव कमन्नᳫं हि प्राणाय कमिति न्वेवार्कस्य ॥७॥ अथोक्थस्य । अग्निर्वाऽउक्तस्याहुतय एव थमाहुतिभिर्ह्यग्निरुत्तिष्ठति ॥८॥ आदित्यो वाऽउक्थ् । तस्य चन्द्रमा एव थं चन्द्रमसा ह्यादित्य उत्तिष्ठतीत्यधिदैवतम् ॥९॥ अथाध्यात्मम् । प्राणो वाऽउक्तस्यान्नमेव थमन्नेन हि प्राण उत्तिष्ठतीति न्वेवोक्थस्य स एषोऽग्निविधोऽर्कविध उक्थविधो यत्पुरुषः स यो हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते विदुषो हैवास्यैवं भ्रातृव्यो म्लायति ॥१०॥ प्राणेन वाऽअग्निर्दीप्यते । अग्निना वायुर्वायुनादित्य आदित्येन चन्द्रमाश्चन्द्रमसा नक्षत्राणि नक्षत्रैर्विद्युदेतावती वै दीप्तिरस्मिंश्च लोकेऽमुष्मिंश्च सर्वाᳫं हैतां दीप्तिं दीप्यतेऽस्मिंश्च लोकेऽमुष्मिंश्च य एवं वेद ॥११॥ ब्राह्मणम् ॥ ५ [६. २.] ॥ ॥

सत्यं ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैत्येवंक्रतुर्हामुं लोकं प्रेत्याभिसम्भवति ॥१॥ स आत्मानमुपासीत । मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसंकल्पᳫं सत्यधृतिᳫं सर्वगन्धᳫं सर्वरसᳫं सर्वा अनु दिशः प्रभूतᳫं सर्वमिदमभ्याप्तमवाक्कमनादरं यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूममेवं ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्त्सर्वेभ्यो भूतेभ्यः स प्राणस्यात्मैष मऽआत्मैतमित आत्मानं प्रेत्याभिसम्भविष्यामीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य एवमेतदिति ॥२॥ ब्राह्मणम् ॥ ६ [६. ३.] ॥ ॥

उषा वाऽअश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वेऽअवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माꣳसान्यूवध्यꣳ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वाऽअश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वाऽअश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्त्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥१॥ ब्राह्मणम् ॥७ [६. ४.]

नैवेह किं चनाग्रऽआसीत् । मृत्युनैवेदमावृतमासीदशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कꣳ ह वाऽअस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥ आपो वाऽअर्कः । तद्यदपाꣳ शर आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निः ॥२॥ स त्रेधात्मानं व्यकुरुत । आदित्यं तृतीयं वायुं तृतीयꣳ स एष प्राणस्त्रेधाविहितस्तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौष्पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥ सोऽकामयत । द्वितीयो मऽआत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनायां मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभर्यावान्त्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्याददात्स भाणकरोत्सैव

वागभवत् ॥४॥ स ऐक्षत । यदि वा ऽ इममभिमꣳस्ये कनीयो ऽन्नं करिष्य ऽ इति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदं किं चर्चो यजूꣳषि सामानि छन्दाꣳसि यज्ञान्प्रजां पशून्स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा ऽ अत्तीति तददितेरदितित्वꣳ सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥ सो ऽकामयत । भूयसा यज्ञेन भूयो यजेयेति सो ऽश्राम्यत्स तपो ऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर ऽ एव मन आसीत् ॥६॥ सो ऽकामयत । मेध्यं म ऽ इदꣳ स्यादात्मन्व्यनेन स्यामिति ततो ऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह वा ऽ अश्वमेधं वेद य एनमेवं वेद ॥७॥ तमनवरुध्येवामन्यत । तꣳ संवत्सरस्य परस्तादात्मन ऽ आलभत पशून्देवताभ्यः प्रत्यौहत्तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त ऽ एष वा ऽ अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति सर्वमायुरेत्येतासां देवतानामेको भवति य एवं वेद ॥८॥ ॥ शतम् ५५००॥॥

अथ वꣳशः । समानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥१॥ ब्राह्मणम् ॥८ [६.५.] ॥ चतुर्थः प्रपाठकः ॥ कण्डिकासंख्या७५ ॥ षष्ठोऽध्यायः [६६.] ॥ अस्मिन्काण्डे कण्डिकासंख्या३६१ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणेऽग्निरहस्यनाम दशमं काण्डं समाप्तम् ॥१०॥॥

## EXTRACTS FROM THE COMMENTARY OF SÂYAṆÂCÂRYA.

षष्ठादिकाण्डचतुष्टये उखासम्भरणादि संचितकर्मान्तमग्निचयनं साङ्गं निरूपितम् तत्र कर्मणां भावनापुरःसरमनुष्ठाने फलविशेषो भविष्यतीति प्रतिपादयितुं दशमकाण्डमारभ्यते । षष्ठादिकाण्डचतुष्टयेन प्रतिपादितकर्मणो भावनोपयोगितया अनुष्ठानाङ्गयुक्तकर्मप्रतिपादकतया च सर्वशेषवादस्य काण्डस्याग्निरहस्यमिति संज्ञा । रहसि भवं रहस्यम् अग्निविषयं रहस्यज्ञानमित्यर्थः । तत्र अग्निशब्देन आहवनीयाधिकरणं सप्तपुरुषाद्येकशतपुरुषपरिमितं चितं क्षेत्रमभिधीयते इष्टकाभिरग्निं चिनोतीति श्रुतेः तथाग्निमारोहति अग्निं प्रोक्षतीति च आरोहणप्रोक्षणे स्थलस्यैवोच्येते  तस्य चित्याग्नेरुपरि निधीयमान आहवनीयोऽग्निस्तत्कर्म चाग्निशब्देनोच्यते  तद्विषयं पूर्वमनुक्तमग्निमानादिकं तद्रहस्यं च ध्यानभागोऽस्मिन्काण्डे वक्ष्यत ऽइति अग्निरहस्यमिति नामधेयं युक्तम् ॥ तत्राग्निं चिनुतऽइत्यनारभ्य-विहितस्य अन्तरोपसदौ चिनोति प्रायणीयेन प्रचर्य सीरं युनक्ति चितो गार्हपत्यो भवत्यचित आहवनीयोऽथ राजानं क्रीणातीत्येवमादिगुणयोगादग्नेः सोमयागाङ्गत्वेऽपि तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थमिति समाम्नानात् महाव्रतस्य क्रतुविशेषे नियमदर्शनादन्यत्र प्रथमज्योतिष्टोमाग्निष्टोमसंस्थाव्यतिरिक्तेऽपोक्थ्यानुष्ठानम् । महाव्रतं नाम संवत्सरसाध्यस्य गवामयनस्योपान्त्यमहः तत्राग्निचयनमहाव्रतसामबृहदुक्थानां नियमेन सहप्रयोज्यत्वात्तानि त्रीण्येवं सहभावीनोति वक्तुमग्निबृहदुक्थे प्रथममनुवदति अग्निरेष इति  आद्यन्तवर्तिचयनोक्थयोर्ग्रहणेन तन्मध्यपतितं महाव्रतसामापि संगृहीतं भवति एषोऽग्निः संवत्सरात्मकः पुरस्तात्पूर्वं चीयते इष्टकाभिः अग्नेः संवत्सरात्मकत्वं षष्ठे काण्डे प्रतिपादितम् उपरिष्टान्मरुत्वतीयशस्त्रादनन्तरं महाव्रतसामोद्गात्रा गीयते तस्मादनन्तरं महदुक्थं नाम बृहतीसहस्रात्मकं शस्त्रं होत्रा शस्यते । संवत्सरात्मकाग्नेः पूर्वं चयनं बृहदुक्थस्यान्ते शंसनमिति यदुक्तं तत्प्रशंसितुमाह प्रजापतेरिति अग्निचयनं नाम प्रजापतिसंधानार्थमिति षष्ठे प्रपञ्चेन प्रतिपादितम् ॥१॥ प्रजापतेः संवत्सररूपतामाह ॥२॥ चीयमानाग्नेः संवत्सरप्रजापतिरूपतामाह । इष्टकाश्च किंचिदधिकैकादशसहस्रसंमिता उपधेयाः अत्र यावत्य इष्टका यजुर्मन्त्रैरुपहिताः तावत्य एव प्रजापत्यवयवात्मना प्रतिसंहिता इत्याह तदेतत्त्रैवेति अत्रैवाग्नौ एतद्यजुश्चितं यजुर्भिर्मन्त्रैरिष्टकाभिश्चयनं कृतं तदत्र प्रजापतौ आप्तं प्रतिसंहितमवयवात्मना युक्तं संवत्सरसम्बन्धिनामहोरात्राणां पर्वरूपाणां यजुष्मतीनामिष्टकानां च संख्यासाम्यात्ताभिरेव कृत्स्नं प्रजापतिशरीरमापद्यत ऽइत्यभिप्रायः ॥३॥ एवं चित्यमग्निं प्रजापत्यात्मना स्तुत्वा स्तोत्रशस्त्रे स्तोतुमाह अथ यो ऽस्येति । अत्रोक्थशब्द स्तुतशस्त्रसाधारणः उत्तरत्र द्वयोरपि स्तूयमानत्वात् ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति ग्रहग्रहणं वा चमसोन्नयनं वा स्तोत्रप्रारम्भकाल(:) स्तुतमनुशंसतीति स्तोत्रादनन्तरं शस्त्रं शसनीयम् अत इदानीं तत्पूर्वभावि ग्रहग्रहणं प्रशंसितुं तत्र ग्रहे सेव्यमानं च संस्तौति तमस्य तं रसमिति । अनुयन्ति अनुगमयन्ति । लोके यथा अमुत्र विप्रकृष्टे प्रदेशे अद इष्टं मे मदीयमेकं वस्तु आहरिष्याम्यहमिति पूर्वं गच्छति यद्यजुर्मन्त्रः ऋक्सामाभ्यां रसानयनाय प्रथमं गतः  तं रसं संवत्सरसाध्यगवामयनोपान्त्यदिवस-

निष्पाद्ये महाव्रते आप्नुवन्ति ॥४॥ तस्मिन्निति निमित्तसप्तमी यजुषा ग्रहे गृहीते । तत्र प्रजननगायत्रबृहद्रथन्तरभद्राख्यानि (!) पञ्च सामानि विद्यन्ते । बृहदुक्थस्य गायत्रौष्णिहबार्हततृचाशीतित्रयात्मकत्वात्सर्वा ऋचो महदुक्थमित्युपपन्नम् ॥५॥ पूर्वं प्रजापते रससंयुक्तता स्यात् अन्यथा रसाभावे शरीरमदृढं भवेदितीमामाशङ्कां रसस्थापनेन व्युदस्यति ते यदेति । यस्मिन्काले स्तुवते उद्गातृप्रस्तोतृप्रतिहर्तारः यदा चानुशंसति स्तोत्रमनुलक्ष्य शस्त्रं पठेत् होता अथ शस्त्रादनन्तरं वषट्कृते शस्त्रयाज्यान्ते वषट्कारे कृते एनं गृहीतं स्तोत्रशस्त्राभ्यां संस्कृतं रसमस्मिन्नग्नौ प्रजापतिरूपे जुहोति तत्तेन होमेन एनं प्रजापतिं एष हुतो रसोऽप्येति अपिगच्छति संयुक्तो भवति । इदानीमस्मिन् चयनप्रदेशे महाव्रतं साम स्तुतं शेते तिष्ठतीति न पश्यन्ति । किं तु अग्निं चितमेव पश्यन्ति अग्निर्हि आत्मा स्थूलं शरीरम् तत्तस्मादेनं चित्याग्निमेतेऽउभे महाव्रतबृहदुक्थे रसो भूत्वापीतः अपिगच्छतः एकीभवतः उभे च ऋक्सामे ग्रहग्रहणयजुरपीतः ऋक्सामाभ्यां पुरस्ताद्यजुर्मन्त्रेण ग्रहणात् ॥६॥ चित्याग्निं मिथुनरूपेण प्रशंसति । चिते चित्याग्नौ योऽग्निराहवनीयो निधीयते । अतः पञ्चमी चितिः तस्या उपरि निधीयमान आहवनीयोऽग्निरिति द्वयमेकं मिथुनम् । अयमात्मा स्थूलं शरीरं मिथुनरूप एव भवति ॥७॥ मिथुनत्वं नाम स्त्रीपुंसयुगलम् तच्छरीरे प्रदर्शयति अङ्गुष्ठा इति । स वषट्कारान्ते हुतो रसः अनेन मिथुनेनात्मना शरीरेण एतं चितिद्वन्द्वमिथुनरूपमग्निमपिगच्छति ॥८॥ उक्तमिथुनरूपेणाप्ययनप्रका प्रदर्शितः पुनश्चित्याग्निं मिथुनरूपेण प्रस्तोतुं प्रकारान्तरेण मिथुनत्वं प्रतिजानीते अप्यहैवमिति ॥९॥ मिथुनपरम्परावेदितुः फलमाह न ह वाऽइति । प्रकारान्तरेणाप्ययप्रकारं वक्तुमात्मनोऽन्नरूपत्वमाह अन्नं ह त्वेवेति अयमात्मा अन्नमेव तत्साध्यत्वात् उक्तार्थे मन्त्रं संवादयति (१०. १०७. ७.) ॥१०॥ भूमावग्निश्चीयते अत आधाराधेययोरभेदोपचारेण भूमेरग्नित्वं सम्पन्नम् । चितोऽग्निर्भूधान्नस्थविष्ठभागात्मना भावनीयः तस्योपरि निहित आहवनीयोऽग्निरन्नस्याणिष्ठभागात्मना ध्येयः ॥११॥१॥१॥

पूर्वं महाव्रतयज्ञे सह प्रयुक्तानि अग्निचयनमहाव्रतसाममहदुक्थशस्त्राणि त्रीण्यपि पक्ष्याकाराणि अधिदेवं पृथिव्यन्तरिक्षद्युलोकात्मकानि अध्यात्मं मनःप्राणवाग्रूपाणि चेति द्वितीयब्राह्मणे प्रतिपाद्यते ज्योतिष्टोमयज्ञऽएवैतेषां त्रयाणां सम्पादनाप्रकारश्चोच्यते ॥ अग्निं चित्याग्निं व्यधत्त । तृतीयं पक्ष्याकारमात्मानं बृहदुक्थं बृहतीसहस्रात्मकं शस्त्रं व्यधत्त ॥१॥ यस्मादिमे त्रयो लोकाः सहासृज्यन्त तस्मादेतानि त्रीणि अग्निमहाव्रतबृहदुक्थानि सहानुतिष्ठेत् ॥२॥ उत्पद्यमानस्य पुरुषस्य प्रथममात्मा मध्यशरीरं सम्भवति ॥४॥ तत्र महदुक्थमाख्यायते तमां सम्पूर्णमुच्यते बृहतीसहस्रात्मकत्वात्सम्पूर्णोक्तिः । सम्यगुक्तौ युक्त्यन्तरमप्याह आत्मा हीति आत्मनस्तु सर्वाङ्गेभ्योऽपि स्थूलत्वात् ॥५॥ अधुना प्रथमसंस्थारूपज्योतिष्टोमाग्निष्टोमं महाव्रतयज्ञात्मना स्तोतुं तत्रैवाग्निचयनादित्रयस्योपादानाद्ब्रह्मवादिप्रश्नोत्तराभ्यां दर्शयति । सह युगपत् उरुपापानि आप्तुमशक्यानि सर्वेषां महाव्रतयज्ञानुष्ठाने प्रयोगबाहुल्येन ऋत्विक्सम्पादनादेः दुष्करत्वेन चानधिकारात् । तत्राग्निष्टोम इति पदेनाग्निस्तवनोक्तेरग्निचयनमुक्तमिति मन्तव्यम् ॥६॥ पक्ष्याकारस्य महाव्रतसाम्नो हि शिरःपक्षमध्यपुच्छात्मकाः पञ्चावयवाः शिरो गायत्रं रथन्तरं दक्षिणः पक्षः बृहदुत्तरः पक्षः भद्रमस्य पुच्छं राजनसाम (!) स्यात्मेति तत्सर्वमग्निष्टोमे सम्पादयति तस्य वाऽइति ऋक्त्रयात्मकमेकं सूक्तं तादृशानि त्रीणि

सूक्तानि त्रिवृतोऽवयवा यस्य स्तोमस्य तदिदं त्रिवृद्बहिष्पवमानम् प्रातःसवनिकं तृचसूक्तत्रयात्मकं बहिष्पवमानं महाव्रतस्य शिरो भवति बहिष्पवमानमपि गायत्रीछन्दस्कैस्तृचैर्गातव्यम् माध्यन्दिन(ः) पञ्चदशस्तोत्रियात्मकः पवमानः तृतीयसवने सप्तदशस्तोत्रियात्मकः आर्भवः पवमानः पक्षस्थानीयौ । होत्रानुशंसनीयं प्रथममाज्यस्तोत्रम् सप्तदशस्तोत्रियात्मकं पृष्ठनामकं होतुः प्रथमं स्तोत्रम् तदुभयं मध्यात्मरूपम् । एकविंशत्यावृत्तिरूपं यज्ञा यज्ञा वोऽग्नय इत्यत्रोत्पन्नं साम पुच्छस्थानीयम् ॥७॥ आज्यं पृष्ठमित्युभयोर्मध्यात्मरूपतामाह । आज्यस्तोत्रं पञ्चदशस्तोत्रियात्मकम् । परिमादः परितो हर्षहेतवः महाव्रते क्रियमाणानि यानि परिमान्नामकानि सामानि तत्स्थानीयास्ताः ॥८॥ महदुकथेऽपि गायत्रबार्हतौष्णिहतृचाशीतयः पक्षमध्यपुच्छात्मकाश्चावयवाः सन्ति तत्सर्वमग्निष्टोमे दर्शयति । प्रातरनुवाके गायत्र्यादीनि सप्त छन्दांसि धाय्यादिषु विराट्छन्दश्चाष्टमं होता शंसति । विराजस्त्रयस्त्रिंशदक्षराणि [५.४.८.] । ता महदुकथगतास्तिस्रोऽशीतयः । बृहदुकथे शिरःपक्षाद्यवयवाः सन्तीत्युक्तं तद्दर्शयति अथ यानि पञ्चचत्वारिंशदिति तत्र यानि पञ्चविंशतिसंख्यान्यक्षराणि तान्यात्मा मध्यशरीरम् अनेन शिरःपक्षद्वयपुच्छान्यवयवा अप्युक्ता वेदितव्याः अथ यान्यवशिष्टानि विंशतिरक्षराणि तदावपनं नाम महदुकथशस्त्रस्योरुभागात्मकत्वेन (शं)सनीयेषु सूक्तेषु वने न वा यो न्यधायि चाकन् (१०.२९.१.) यो जात एव प्रथमो मनस्वान् (२.१२.१.) इत्यनयोः सूक्तयोर्मध्ये आयुष्कामयजमानार्थं तासां कासां चिदृचां शंसनम् ॥१॥२॥१॥

अग्निचयनेष्टकाहेतवो मृदापश्च चित्याग्नेः पञ्चेष्टकाचितयः पञ्च पुरीषचितयः चित्युपस्थानमन्त्रश्च तत्र प्रजापतिरूपेणेष्टकाः पुरीषेष्टकाचितयः प्रजापतेर्मर्त्यामृतशरीरात्मना मन्त्रोपस्थान कृत्स्नशरीरसम्पादकत्वेन च तृतीयब्राह्मणे स्तूयते ॥ मर्त्यप्रजानां भक्षयितारम् ॥१॥ पञ्चम्या इष्टकाचितेरुपरि निहितायाः पञ्चम्याः पुरीषचितेरुपरि विकर्णीनामिकामिष्टकां स्वयमातृण्णानामिकां चोपधाय हिरण्यशकलैः सम्प्रोक्ष्य तत्राहवनीयाग्नेराधानं सप्तमी चितिरिति व्यवह्रियते अतः पञ्चमीसप्तमीभ्यामिष्टकाचितिभ्यां तन्मध्यस्थितायाः पुरीषचितेरमृतीकरणम् ॥७॥ चित्याग्नेर्न्यूनातिरेकपरिहाराय मन्त्रेणोपस्थानं देवाः कृतवन्तः ॥८॥ ऋग्गतमनुष्टुप्छन्दो वाग्रूपेण प्रशंसति धामछदग्निरित्यृगनुष्टुब्वाग्रूपा चतुष्पात्त्वसाम्यात् चत्वारि वाक्परिमिता पदानीति वाचः पादचतुष्टयमाम्नातम् । अन्तिमां पुरीषवतीं चितिं चित्वानेन मन्त्रेणोपस्थानम् ॥१०॥ यविष्ठपदवत्या । अनिरुक्तयास्पष्टाग्निलिङ्गया । निर्वक्तुमनर्हमनिरुक्ताम् । यद्यप्यग्र्यादिपदं स्पष्टतया न प्रतीयते सूक्तस्याग्नेयत्वादस्या अप्याग्नेयत्वं प्रकरणादवसीयते ॥११॥३॥१॥

चतुर्थब्राह्मणे षट्संख्याका इष्टकाचितयः प्रजापतेर्मरणधर्मकस्थूलशरीरगतमज्जास्थिस्नावमांसमेदोऽसृक्त्वग्वाग्रूपत्वेन च एकैकस्या इष्टकाचितेरुपरि निधीयमानाया एकैकस्याः पुरीषचितेरमृतत्वसम्पत्त्यामन्तिमायाश्चितेरुपरि निहितविकर्णीस्वयमातृण्णेष्टकाहिरण्यशकलाहवनीयनिधानं प्रजापतेर्हिरण्यरूपत्वेन प्रणीतेऽग्नौ हूयमानाः समिधो देवानामन्नत्वेन स्तूयन्ते अथाग्निचितः पक्षिभक्षणावर्जनं व्रतं च प्रतिपाद्यते ॥ एतेनाग्निकर्मणा एतयावृता क्रियया एकधा एकप्रकारमात्मानं जरामरणधर्मरहितं कृतवान् ॥१॥ अग्निं चितवान्यजमानोऽमुष्मिन्स्वर्गे लोके हिरण्यसमानवर्णः सम्भवति ॥१॥ चित्याग्निमभिलक्ष्य आहवनीयाग्नेः प्राङ्मुखत्वेन प्र-

णयनम् । संचिते इष्टकाचितेऽग्नौ । प्रणीतादूर्ध्वं प्रणीतेऽग्नौ । इत्येवम् ॥ ११॥ प्राणस्योर्ध्वगतित्वाद्देवेभ्यः प्राक् प्राचा हस्तेनोर्ध्वं होमं कुर्वन्ति । तस्मादग्नेः प्रणयनं देवानां प्राङ्मुखत्वेन हवनमित्यर्थः ॥ १२॥ ४॥ १॥

अग्निचयनकर्म अग्न्याधानाग्न्याधेयहविरग्निहोत्रदर्शपूर्णमासेष्टिपशुचातुर्मास्यसोमाध्वरराजसूयादिसर्वयज्ञात्मकमिति पञ्चमब्राह्मणे स्तूयते यज्ञवीर्याणां मीमांसा च वक्ष्यते ॥ सोऽग्निं चिकीर्षमाणः पशुं पुरुषाश्वादीन्पशूनालभते आधानप्रथमकरणसाम्यात्पश्वालम्भनमेवाधानरूपत्वेन स्तूयते ॥१॥ समानेन मन्त्रेण प्रातःकालीन एक एव मन्त्रः सायंतनोऽप्येक एव रात्रिमप्रयावमिति सायंतनो मन्त्रः अहरहरप्रयावमिति प्रातःकालीनो मन्त्रः । देवयजनं प्रत्यग्नेः प्रणयनम् अप्सूख्यभस्मावपनम् । एतेषु दर्शपूर्णमासादियज्ञेषु ये विष्णुक्रमास्तऽएव अग्निचयने क्रियमाणा विष्णुक्रमाः । यज्ञेषु यज्जप्यं तदात्सप्रं सूक्तम् ॥२॥ चितमग्निं यैः सामभी रथन्तरादिभिः परिगायति तत्सामजातं महाव्रतम् । तत्र महाव्रतयज्ञे सामगानात्प्राङ्गात्रा पुरस्ताज्जप्यो मन्त्रोऽस्ति तदत्र शतरुद्रियम् । वसोर्धारा नाम चमकसूक्तेन (वाजस° स° १८. १-२७.) हूयमानाज्यधारा सा बृहदुकथं बृहतीसहस्रात्मकं शस्त्रम् । गृहमेधाः सत्त्रयागाः ॥३॥ पशुबन्धः षट्सु-षट्सु मासेषु क्रियते । वसन्ते वसन्ते ज्योतिषा यजेतेति सोमयागः संवत्सरे विधीयते । उपहन्यात्पृथक्कुर्यात् ॥४॥५॥१॥

एवं पूर्वाध्यायेन महाव्रतयज्ञे अग्निचयनमहाव्रतबृहदुकथानि सह प्रयोक्तव्यानीत्युक्त्वा तानि च सर्वैरग्निष्टोमऽएवाप्तुं शक्यानीत्यग्निष्टोमगतसामशस्त्राण्येव महाव्रतसाममहदुकथात्मना स्तुत्वा चित्याग्निं प्रजापत्यात्मना प्रस्तुत्य पञ्चेष्टकाचितीः पुरीषचितीश्च प्रजापतेर्मर्त्यामृतशरीरात्मना प्रतिपाद्य हिरण्यशकलप्रोक्षणमाहवनीयस्थापनं हिरण्मयरूपत्वेन स्तुत्वा अग्निचितः वयोभक्षणवर्जननियमादनन्तरमग्निचयनस्य पुनर्मृत्युजयरूपं फलं तस्याग्निकर्मणः सर्वयज्ञात्मना स्तुतिरुक्ता । अथ द्वितीयेऽध्याये चित्याग्निविषयो विचारो वक्ष्यते । तत्र प्रथमब्राह्मणे चित्याग्नेः पक्षिरूपत्वं पक्षपुच्छयोः प्रमाणं च विधीयते ॥ पुरुषादिपञ्चपशवः प्रजापतिः सर्वात्मकत्वात्तस्य । अनुपसमुह्य मध्यप्रदेशे अवष्टम्भमकृत्वा अनुपाधाय कांचिदाधारमकृत्वा यद्वा पक्षाभ्यां मध्यभागमनवष्टभ्य पक्षाग्राणि अविस्तीर्य । यदैव पक्षौ उपसमूहन्ते पक्षाभ्यां मध्यभागं समूहन्ते पक्षमूलभागं मध्यभागसमीपे संकोचयन्ति यदा च पक्षाग्राणि विसृजन्ति विकिरन्ति ॥१॥ चित्याग्नेः अङ्गुलिपरिमाणं दर्शयति ॥२॥ अरत्निपरिमाणं विधत्ते । वितस्तिर्द्वादशाङ्गुलः वितस्तिद्वयमरत्निः सा चतुर्विंशत्यङ्गुलिपरिमाणा तया मिमीते ॥३॥ उभयतः पक्षस्य पार्श्वद्वये अन्तरतः चित्याग्नेर्मध्यदेशे । व्युद्हति अन्ते विवर्धयति ॥४॥ नितरां (!) नामो नमनं निर्नामः । वितृतीयऽइति पक्षभागं त्रेधा विभज्य अन्ते तृतीयभागे ॥५॥ उद्हति विकर्षति समूहति संकर्षति ॥७॥ अथ पञ्चेष्टकाचित्युपधानानन्तरमात्ममध्यपक्षद्वयेन ऋज्वालिखितदक्षिणावृत्सव्यावृतः सहस्रत्रयसंख्याका इष्टका उपधेयाः तदुपधानं प्रशंसति अथ रूपमिति उत्तममन्तिमम् अत्रान्तिमे रूपे एष सर्वोऽग्निः संस्कृतः इष्टकाभिश्चितः । ऋज्वालिखिताः ऋजुलेखा अकुटिलरेखाः इत्यालिखिताः इतिशब्दोऽभिनये एवमालिखिता इत्यनेन दक्षिणावृतः द्वितीयेत्यालिखितशब्देन सव्यावृतः ॥८॥ पञ्चमीमिष्टकाचितिमुपधाय अग्निं स-

[illegible] त्रेधा विभज्य मध्यमे तृतीयभागे अङ्गुलेखा इष्टका उपदध्यात् ॥९॥ अग्नेस्त्रि-वृत्त्वं षष्ठे प्रतिपादितम् (६.१.३.१८.) ॥ ११ ॥ १ ॥ २ ॥

द्वितीयब्राह्मणे चित्याग्नेः सप्तपुरुषप्रमाणतां पक्षपुच्छयोश्च अरत्निवितस्तिप्रमाणतां विधत्ते । वैशब्दः प्रसिद्धिद्योतकः (६.१.१.३.) ॥१॥ स सुपर्णरूपः प्रजापतिः सप्तपुरुषसंमितोऽभवत् ॥५॥ समस्थितेन यजमानेनोर्ध्वबाहुना चित्याग्नेर्मानं कुर्यात् । एवं प्रपदेन पादाग्रेणावस्थानादुन्नतो भवतीति यत्प्रमाणमस्ति तत्परिमितिः शर्कराभिराप्तवान्भवति ॥६॥ चित्याग्निः सार्धसप्तपुरुषप्रमाण इत्यापस्तम्बवचनम् अत्र तु सप्तपुरुषप्रमाणमेवोच्यते अधिकमर्धपुरुषप्रमाणं नोक्तमिति तद्विधत्ते अथ पक्षयोरिति पुरुषः पञ्चारत्निक इत्युक्तम् पक्षद्वये अरत्निद्वयं पुच्छे वितस्तिरिति वक्ष्यते उभयं मिलित्वा सार्धमरत्निद्वयमर्धपुरुषप्रमाणं लभ्यते ॥७॥ मणिबन्धादारभ्य साङ्गुलिरग्रकरो वितस्तिः ॥८॥२॥२॥

प्राकृतस्य सप्तविधाग्नेः वैकृतेष्वन्त्यस्यैकशतविधाग्नेश्च वेदिमानं तृतीयब्राह्मणे विधत्ते ॥ या इयं वेदिः सौमिकी प्रसिद्धा सा सप्तविधस्याग्नेः मात्रा भवति । महावेदेर्मानं विधातुं प्राचीनवंशगतवेदेर्मानं सेतिकर्तव्यताकं विधत्ते स देवयजनमिति सोऽध्वर्युः देवयजनक्षेत्रं निश्चित्य पूर्वद्वारेण पत्नीशालं प्राग्वंशं प्रविश्य गार्हपत्यार्थं खात्वा तत्क्षेत्रं जलेन सिञ्चेत् गार्हपत्यार्थं कल्पितात्प्रदेशात्सप्त प्रक्रमान्प्रागायतान्गृह्णीयात् पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः सप्त प्रक्रमा गार्हपत्याहवनीययोर्मध्यम् ततः सप्त प्रक्रमेभ्यः प्राञ्चं व्यामं विमिमीते व्यामश्चतुररत्निप्रमाणः तस्य व्यामस्य मध्ये आहवनीयस्थानं कल्पयेत् एष आहवनीयो वक्ष्यमाणायाश्चयनमहावेदेर्गार्हपत्यो भवति । स प्रक्रमत्रयात्तप्रदेशो महावेदेः पश्चिमभागस्यान्तः ॥१॥ [illegible]प्रक्रमकृतां वेदिं महावेदेर्योनित्वेन प्रशंसति सैषेति । एतस्या व्यामरूपाया योनेर्गार्हपत्यचित्यात्मकमग्निं जनितवन्तः गार्हपत्यादाहवनीयं महावेदिगतमाहवनीयचित्यात्मकमजनयन् ॥३॥ सप्तविधं सप्तपुरुषप्रमाणम् ॥४॥ अथ यथा सप्तविधस्य प्राकृताग्नेर्व्यामैकादशाः प्रक्रमाः एवमष्टविधनवविधादिपुरुषप्रमाणानामेकशतविधपर्यन्ता[illegible]दशप्रक्रमा प्राकृती वेदिः किं पुरुषसंख्यया वर्धयितव्या आहोस्विन्नेति संशयं व्युदसितुं पूर्वपक्षयति तद्धैकऽइति । उक्ता विधाः अष्टविधाद्येकशतपर्यन्ता अग्निप्रकारान्करिष्यन्त. । अष्टविधाद्यग्निमहावेदीनां योनिभूतवेदिवृद्धिं विना वृद्धिः कर्तुं न युक्ता । अग्निगर्भिः स हि सप्तपुरुषप्रमाणमेव प्राकृतेऽष्टविधादीनामपि भवति जातस्यैव तस्याष्टविधादिरूपेण वृद्धिः अतस्तस्य योनिभूता वेदिर्व्यामैकादशप्रक्रममात्रैव । तस्मादष्टविधाद्येकशतविधान्तासु विकृतिषु प्राग्वंशगता वेदिर्गार्हपत्या चितिश्च प्रकृतिभूतसप्तविधैकपरिमाणैव कार्या अग्निक्षेत्रं महावेदीष्टका इत्येतत्सर्वमुत्तरोत्तरं विवर्धते ॥६॥ प्रथमं वेद्यन्तात्प्रागायतषट्त्रिंशत्प्रक्रमा रज्जुर्मिता तां सप्तधा विभज्य तस्या रज्ज्वाः सप्तसु भागेषु मध्ये प्राचस्त्रीन्भागानुपदधाति इष्टकाभिरुपदध्यात् अवशिष्टांश्चतुरो भागानुपधानार्थं न विनियुञ्जीत किं तु हविर्धानसदःप्रभृत्यर्थं परित्यजेत् ॥८॥ अथ चित्याग्नेः प्रकारान्प्रतिजानीते अथाग्नेरिति विधाः प्रकारा उच्यन्तऽइति शेषः । साधिमानानाम् पक्षपुच्छेष्वाधिक्येन निक्षिप्तारत्निवितस्तिप्रमाणसहितानाम् ॥११॥ सप्तपुरुषाश्चतुर्दशभिर्गुणनेनाष्टानवतिः सम्पद्यते अत्र त्रिपुरुषप्रमाणयोजनेन एकशतविधोऽग्निरुत्पद्यते ॥१२॥ एवमेकशतपुरुषप्रमाणं मध्यपक्षपुच्छेषु दर्शयित्वा

प्राकृताग्निवत्पक्षपुच्छेष्वधिकं योजनीयं प्रमाणमाह ॥१३॥ प्राकृतसप्तविधे सप्तमस्य या संख्या-सम्पत्तिरुक्ता अथैकः पुरुषोऽत्येतीत्यादिना (क° ५.) सा सम्पत्तिरितरेषु त्रयोदशसु पुरुषेषु द्रष्टव्या ॥१५॥ प्रकारान्तरेण सम्पत्तिमाह ॥१६॥३॥२॥

चतुर्थब्राह्मणे एकशतविधस्याग्नेः सर्वकामत्वरूपत्वेन आदित्यात्मना स्तुतिः तस्य सप्तविधप्राकृताग्निसंख्यया सम्पत्तिप्रकारः (४-७.) सप्तविधस्य चैकशतविधसंख्यया सम्पत्तिश्च (८.) प्रदर्श्यते ॥१॥ अधिमासेन सह सप्तर्तवः । सप्तसु स्तोमेषु त्रिवृत्पञ्चदशसप्तदशैकविंशचतुर्विंशत्रिणवत्रयस्त्रिंशेषु । बृहद्रथन्तरवैरूपवैराजशाक्वरादिषु सप्तसु पृष्ठेषु । सप्तसु शीर्षण्येषु प्राणेषु । प्राच्यादयश्चतस्र ऊर्ध्वावाच्यौ द्वे सूर्यमण्डलमेव सप्तमी दिगिति सप्त दिशः ॥५॥४॥२॥

एवं चित्याग्नेर्वेदेश्च मानमुक्तम् अथ चयनविषयविचारो वक्ष्यते । तत्र कालं विधत्ते पौर्वाह्णिक्यापराह्णिक्योरुपसदोर्मध्ये चिनुयात् । तत्र साग्निकप्रकृतावग्निष्टोमे तिस्र उपसदः साग्निकऽऐकाहिके क्रतौ तिस्र उपसदः द्वादशाहगवामयनतापश्चिदादिषु(!) अहीनसत्रसंवत्सरेषु द्वादशचतुर्विंशतिषष्ट्युत्तरत्रिशतसंख्या उपसद इति वक्ष्यते ताश्च त्रित्वादिपक्षेष्वपि एकैकस्मिन्दिने पूर्वाह्णापराह्णयोः उपसदः कार्याः ॥१॥ यावतीरुपसदः कुर्यात्तावद्भिः प्रवर्ग्यैश्चरितव्यम् उपसदः तापश्चिते चयने संवत्सरसंमिताः ॥३॥ उपसत्सु प्रवर्ग्यचरणं प्रशंसति अहोरात्राणि वाऽइति यतः संवत्सरमिता (?रंश्चिता C. रश्चित्तः A.) उपसदः अतोऽहोरात्राणि तत्र चैकैकस्मिन्दिने द्वे-द्वेऽइति तयोरहोरात्रत्वरूपत्वम् ॥४॥ न केवलमत्रैव तापश्चितीषु किं तु यत्र-यत्राधिका न्यूना वाऽउपसदः तत्र-तत्र प्रवर्ग्यचरणेनादित्यस्थापनं कृतं भवति । क्रतुविशेषे चतुर्विंशतिसंख्या उपसदः कार्याः ॥५॥ द्वादशाहे ॥६॥ सामान्येन षट् ॥७॥ प्रकृतौ तिस्रः ॥८॥ तत्रोपसदां मध्येऽनुष्ठातव्यस्य चयनस्येष्टकाचितिपुरीषनिवपनयोरनुष्ठानप्रकारा वक्ष्यन्तऽइति प्रतिजानीते अथात इति । अग्नौ षडिष्टकाचितयः षट् पुरीषचितयः ताश्च तापश्चिते क्रतौ प्रतिमासमेकैका उपधेयाः तथा च वसन्तादिषु षट्स्वृतुषु यो-यः कामः तं सर्वमात्मानमभिलक्ष्य सम्पादितवान्भवति ॥१॥ असपत्नानामधेयाः पञ्च विराट्संज्ञकाश्चवाग्निशादिष्टकाः प्रथमदिवसे उपदध्यात् स्तोमभागा नामेष्टका एकोनत्रिंशत् प्रतिदिवसमेकैकामिष्टकामुपदध्यात् मासान्ते सर्वासामेकवारं सादनं तया देवतयेति मन्त्रेण तथा ता अस्य सूददोहस इत्यनेनैतासां सकृदधिवदनम् ॥१३॥ नाकसत्पञ्चचूडादीष्टकाभिः षष्ठी चितिः सम्पादिता ॥१४॥ द्वादशस्य मासस्याष्टाविंशतिसंख्याकैरहोभिः पुरीषनिवपनम् तत उत्तमे द्वेऽअहनी परिशिष्येते एकमेव सुत्यमहावृत्त्या (?वृत्या) संवत्सरो भवतीति तदेकमहरतिरिच्यते (? तदेकमहरित्युच्यते A. तदेमहरित्यच्यते C1. तदेतदहत्रयमतिरिच्यते C2.) तानि त्रीण्यहानि पुरीषचितेरतिरिक्तानि भवन्ति तान्यहानि विशिनष्टि यदहरिति । तेष्वहस्सु यत्प्रवर्ग्योपसदामनुष्ठानं तेन तस्य संसपर्याहस्पतिसंज्ञकस्य (?) त्रयोदशमासात्मकस्य सम्बन्धिष्वहोरात्रेषु आदित्यात्मकस्य सप्तमर्तोः स्थापनं कृतं भवति ॥१५॥ सुत्यानां संख्यां विधत्ते स संवत्सरमिति संवत्सरपर्यन्तं प्रसुतः सोमयागः स्यात् प्रतिदिवसमेकैकः सोमयाग इति षष्ट्युत्तरत्रिशतसंख्याकाः सोमयागा भवन्ति । तत्र तापश्चिते कर्तव्यमग्निविशेषं प्रदर्शयन्स्तौति

सर्वमेकशतविध इति अतः सर्वेण संवत्सरपर्यन्तं क्रियमाणेन एकशतविधाग्निमता सोमयागेन सर्वमाप्तवान्भवति । अतिरात्रसंस्थेन सर्वपृष्ठवता विश्वजिदाख्येन ॥१६॥५॥२॥

पूर्वं संवत्सररूपप्रजापतेरेकशतविधाग्नित्वमुक्तम् तस्यादित्यरूपत्वं शतसंख्याकरश्मिभिर्मण्डलेनैकशतसंख्यापूरकेण सम्पन्नमिति चोक्तम् अधुना प्रकारान्तरेणैकशतसंख्याकत्वं सप्तविधाग्निना सम्पत्तिश्च वक्ष्यते चयनस्य अमृतत्वप्राप्तिः फलमिति च ॥ मलिम्लुचसाहित्येन त्रयोदश मासाः । द्वौ-द्वावृतू एकीकृत्य त्रय ऋतवः ॥१॥ सप्तविधाद्येकशतपर्यन्ताग्निचयनस्य सूर्यलोकः फलमिति दर्शयति तस्यैतस्येति एतस्य सवितुर्मण्डलस्य परस्तादुपरिभागे सर्वकामपूरकः मरणधर्मरहितो लोकोऽस्ति । यदेतदर्चिस्तेजो दीप्यते सोऽमृतलोकः ॥४॥ अर्चिषोऽमृतफलत्वं सवितृसम्बन्धित्वं च प्रदर्शयति तदेतदिति ॥५॥ एतदर्थजातं पश्यन्ती विचारयन्ती वाक् दीर्घं तऽआयुरस्त्वित्यादिका वदति । शतायुता शतवर्षजीवनं लोक्या लोकहिता पुण्यलोकहेतुः यस्माच्छतायुर्जीवनं लोकहितं तस्मादायुषः पूर्वं स्वकामी स्वहितमिच्छन् स्वेच्छया न म्रियते तन्मरणमलोक्यममृतत्वरूपलोकसाधनं न भवति । शतादर्वाचीनेषु वर्षेषु मरणं पुण्यलोकसाधनं न भवति ॥७॥ ये विंशतिवर्षादर्वाचीनेषु वर्षेषु म्रियन्ते ते अहोरात्ररूपेषु लोकेषु सज्यन्ते सम्बध्यन्ते ॥८॥ एकादिनजीवनमेकरात्रिजीवनमपि बहुयज्ञफलं किमुत शतं वर्षाणि जीवितवतः अमृतत्वप्राप्तिः । यः पुरुषः एनमुख्याग्निं संवत्सरपर्यन्तं बिभर्ति एष एकशतविधं चित्याग्निं विधातुं योग्यः । संवत्सरभृतमिव इवशब्दोऽप्यवधारणे वर्षपर्यन्तं भृतमेवाग्निं चिन्वीत ॥९॥ विधाभिः पुरुषैरेकशतविधः । प्रतिचिति ऋतव्ये ॥१०॥ याः प्रथमाः प्रथमचितावुपहिताः प्राणभृतः पञ्चाशदिष्टकाः याश्चोत्तमचितावुपहिता विराड्नाकसत्पञ्चचूडाख्याः पञ्चाशत् ताः शतम् आसामाद्यन्तोपहितानां मध्ये या इष्टकाः उपधीयन्ते ताः सर्वा अपि एकशततमी विधा ॥११॥ उपधानमन्त्रसंख्ययाप्येकशतविधत्वम् । यजूंष्येव तेजो यस्याग्नेः स तद्यजुर्मन्त्रैरेकशतसंख्याकः ॥१२॥ एवं सप्तविधस्यैकशतसम्पत्तिन्यायवदेकाहाहीनसत्त्रादिकाः अग्निहोत्रावसानाः सर्वेऽपि यज्ञा एकशतविधा भवन्ति एतदेव दर्शयति ऋग्भिर्यजुर्भिरिति एकस्मिन्पक्षे आदितः पञ्चाशदृचः अन्ते च पञ्चाशत्तन्मध्यवर्तिनः सर्वा अप्यृचः एकशततमी विधेति एवमेकस्य यज्ञस्यैकशतविधत्वमेवं सर्वेषां यज्ञानां यजुरादिभिरेकशतविधत्वमूह्यम् । तेषामेवमेकशतविधानां सर्वेषां यज्ञानां पूर्वमुक्तं फलमादिशति स य इति यज्ञेन-यज्ञेनेति वीप्सया सर्वैर्यज्ञैरपि उक्तं फलमाप्नोति ॥१३॥ कल्कुषी मणिबन्धारत्नी । अक्षः अंसाग्रे वर्तमानं ग्रीवायामक्षवत्प्रोतमस्थि । एवमेकस्मिन्हस्ते पञ्चविंशतिः तथान्यस्मिन्हस्ते पादद्वये च । आत्मा मध्यदेहः ॥१४॥ अध्यात्मं प्रकारान्तरेणैकशतविधत्वं निरूपयति ॥१५॥ अधिदैवाधियज्ञाध्यात्मत्रयविषये संवत्सरचित्याग्निपुरुषाणां पञ्चविधत्वमाह ॥१६॥६॥२॥

चयने पक्वेष्टकाः किंचिदधिकैकादशसहस्रसंमिताः उपधेयाः । यद्यपि दर्भस्तम्बपुष्करपर्णरुक्मपुरुषाः स्रुगुलूखलपशुशीर्षकूर्मादयो यजुष्मदिष्टकामध्ये परिगणिताः तथापि ते पक्वेष्टका न भवन्तीति न तेषामत्र परिगणनम् तत्रोक्तसंख्यानां पक्वेष्टकानां मध्ये लोकम्पृणेष्टका अष्टशतोत्तरदशसहस्रसंख्याकाः शिष्टा यजुष्मत्यः । प्रथमा चितिः पञ्चाशदूनद्विसहस्रलोकम्पृणेष्टकायुक्ता एवमुत्तरास्तिस्रो द्वितीयाद्याः एवं चतसृणां चितीनां शतद्वयोनाष्टसहस्राणि पञ्चमी चितिः त्रिसहस्रर्जुसव्यदक्षिणरेखावदिष्टकायुक्ता । ताश्च पञ्चम्यां चितावुपधेयाः त्रिस-

हस्रसंमिताः द्वितीयाध्याये (२. १. ८-११.) सुपर्णचित्याग्नेर्मध्यदक्षिणोत्तरभागत्रये लोमरूपत्वेन स्तुता इति तत्सहस्रत्रयं परित्यज्य अवशिष्टानां सप्तानां सहस्राणां शिरःप्रभृति पादपर्यन्तमुपहितानामेव शत्रुरूपत्वेन (? रशनुरू C1. शरीरू C2. शत्रुरू A.) स्थितानां गायत्र्यादिसप्तच्छन्दोवीर्यत्वेन स्तुतिः तृतीयाध्यायप्रथमब्राह्मणे क्रियते । यद्यप्यष्टौ शतान्यतिरिच्यन्ते तथापि सहस्रत्वेन स्तोतुमयोग्यत्वात्तासां स्तुतिरत्र न क्रियते ॥ यद्वा अष्टमकाण्डे चरमचितौ छन्दस्या उपदधातीति (८. ६. २. १.) सप्तानां छन्दसामुपधानमुक्तं तेषां छन्दसां स्तुतिः क्रियते चित्याग्निरूपस्य प्रजापतेः प्राणो गायत्रीति । प्राणः प्राणसंचारस्थानं नासिकोच्यते शीर्षण्याः प्राणाश्चत्वार उक्ताः द्वाववाञ्चावाह य एवायमिति मनस्तु सर्वेन्द्रियसंगतमेकमिति सप्त प्राणाः पूर्वमपि प्रजापतिः सप्तभिः प्राणैः सप्तपुरुषात्मक एकः पुरुषः सृष्ट इति विवक्षया सप्तावयवा उक्ता इति तात्पर्यम् ॥१॥ एवं छन्दसां प्राणाद्यात्मकत्वमुक्तम् तत्र वियुज्यानुवदति प्राण इति ॥२॥ प्रजननः प्राण आलुम्पेदिति प्रजननशक्तिरहितो भवेत् एषोऽग्निर्न चीयेत नपुंसकस्य कर्मानधिकारात् ॥७॥ अवाङ् प्राण आलुम्पेदिति दुश्चिकित्समूलरोगराजयक्ष्मादिगृहीतः पुरुषः कर्मणि नाधिक्रियते ॥८॥ यतः छन्दांसि परस्परमन्योऽन्यस्मिन्प्रतिष्ठितानि गायत्र्यां तावत्तस्याश्चतुर्विंशत्यक्षराणां सर्वच्छन्दःस्वनुगमात् तथा जगत्यामन्तिमच्छन्दसि सकलच्छन्दोऽक्षरसद्भावात् एवं मध्यमानि छन्दांस्यूह्यानि ॥९॥१॥३॥

एवं चित्याग्नेः चक्षुरादिसप्तावयवानां छन्दोमयत्वमुक्तम् अथ शिरोग्रीवादीनां छन्दोमयत्वं वेदवादिप्रश्नोत्तराभ्यां निरूपयति ॥१॥ यज्ञा यज्ञा वोऽअग्नय इत्यत्रोत्पन्नं यज्ञायज्ञियम् तदेव छन्दः बृहतीत्यर्थः ॥८॥ विविधछन्दस्का ऋक् विछन्दाः ॥१२॥ आत्मविद्या आत्मनः उदीरितछन्दोदेवतासमष्टिरूपविराडात्मकस्य सम्बन्धिनः स्वस्य विद्या । स एतन्मयः अत्रोक्तानि (!) सवित्रादिदेवतास्वरूपः एतमात्मानमेवंविधं छन्दोदेवतारूपावयवयुक्तं शरीरमभिलक्ष्य सम्भवत्युत्पद्यते । अत्राग्नौ लोक्यतायै पुण्यलोकावाप्तये अन्या उक्तव्यतिरिक्ता आशीः प्रार्थना नास्ति ॥१३॥२॥३॥

तृतीयब्राह्मणेऽग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वं (? वाद्या° AC.) धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यां प्रतिपाद्यते ॥ उपोत्ससाद समीपमभ्यागतः तस्मात्सकाशाद्विद्यां ग्रहीतुमुपसत्तिं कृतवान् ॥१॥ वागादिसर्वात्मकमग्निमजानानो महाशालस्तस्माद्धीरात्सकाशादग्निं परिजिज्ञासितुमासनादुपावरूढः भो धीर तं सर्वात्मकमग्निमधीहि अध्यापयेति उपसन्नः ॥५॥ अनुगच्छति नश्यति । वायुमनुलक्ष्य उद्वाति नश्यति वायावधिकं वाति सति अग्निर्विनिष्टो भवति । सा-सा देवता भूत्वा एलयति संचरति चेष्टते ॥८॥३॥३॥

उत्तरब्राह्मणे अग्निवाय्वादित्यपुरुषाणामोषधिवनस्पत्युदकचन्द्रपशूनां बहुविधनामव्यपदेश्यत्वेन स्तुतिः तत्रापि पुरुषस्य अर्करूपतया च स्तुतिरनेकैः प्रश्नप्रतिवचनैः प्रतिपद्यते ॥१॥ महान्ति सर्वेभ्योऽपि महान्ति वस्तूनि कः प्रजापतिः तस्मै हितानि क्यानि । अर्काः अर्चनीयाः ॥२॥ वेत्थार्कमिति श्वेतकेतुपित्रा पृष्टो होता स्वयमर्कस्वरूपमजानानस्तस्मात्पितुः सकाशात्संजिज्ञासुराह अथ वै न इति ॥३॥ अर्ककोश्यौ कोश्याकारे फले (A. पुटके C.) । अर्कसमुद्गाविति अर्ककोशाग्रे विदलितौष्ठभागौ । धानापदेन अर्कबीजानि । अकाष्ठीलामिति अर्ककोशमध्ये विस्तरेण वर्तमाना तूली (C. °ध्ये जिह्वास्ताराणवर्तमानः । A.) ॥५॥४॥३॥

अत्र यजुस्तद्विधायकब्राह्मणयोर्निर्वचनपुरःसरमधिदैवाध्यात्मभेदेनार्थः (? त्मपत्रेनार्थ C1. त्मभेदेनार्थं C2. त्मप्रत्रवेनार्थ A.)  मन्त्रब्राह्मणप्रसङ्गादुपनिषद् स्तुतिः तत्स्वरूपं तद्विदुषः फलमानन्दावाप्तिः फलं यजुषां चोपांश्वनुष्ठानं चेति पञ्चमब्राह्मणप्रतिपादितार्थसंग्रहः ॥ यजुषः शब्देन वायुं निर्ब्रुवन्नधिदैवमर्थमाह अयं वावेति ॥१॥ यजुर्मन्त्रः ऋक्सामयोः प्रतिष्ठितः मध्यस्थितः । अध्वर्युणा याजुषेण समानैरेव ग्रहैः प्रकृतिसोमयागगतैरैन्द्रवायवादिभिर्विकृतिष्वपि कर्म क्रियते सामगबह्वृचैः स्तुतशस्त्राणि स्तोत्रशस्त्राणि अन्यान्यन्यानि प्रकृतिगतव्यतिरिक्तानि क्रियन्ते यथा महाव्रतयज्ञे बृहद्रथन्तरयोर्वैकल्पिकयोः प्राकृतयोः पृष्ठसाम्नोः स्थाने पञ्च सामानि निष्केवल्यस्थाने महदुक्थम् । यथा पूर्वाभ्यामश्वाभ्यां स्यवा (!) गवा श्रान्तौ तौ विमुच्य पराभ्यामन्याभ्यां धावयेत्तादृक्तत् अन्यस्यान्यस्य स्तुतशस्त्रस्य करणम् स्यवेति स्यन्द् प्रस्रवणे क्त्वाप्रत्यये उदित्त्वादिडभावपक्षे (? उदिवादि उभावपक्षे Codd.) रूपम् (पा° ७. २. ५६.) छान्दसो नकारलोपः (पा° ६. ४. ३१.) ॥२॥ अथ ब्राह्मणापरनामधेयस्य पुरश्चरणशब्दस्य पूर्ववन्निर्वचनपुरःसरमधिदैवमर्थमाह अग्निरेवेति ॥३॥ प्रतिबुभूषति प्रातिकूल्यमाचरितुमिच्छति ॥९॥ न हि हिरण्यगर्भसूत्रात्मनः परस्ताज्ज्यायो वस्त्वस्ति तस्यैव सर्वजगदाधारत्वात् ॥१०॥ अपूर्वं तस्मात्पूर्वो न विद्यते कारणरहितम् अपरवत्स्रष्टव्यजगद्रूपापरवत् ॥११॥ यजुर्मन्त्रब्राह्मणप्रसङ्गादुपनिषदोऽर्थं तत्स्वरूपं वेदितुः फलं च दर्शयति तस्य वाऽइति रसः सारः । अवति तर्पयति भोगयोग्यं करोति अनुव्येति व्याप्नोति । अत उपनिषत्सकलं साङ्गं वेदं व्याप्नोति ॥१२॥ अस्य अन्नात्मकस्य यजुषस्तृप्तिरेव गतिः फलावाप्तिः यथा लोके अन्नेन तृप्तः पुरुषः गतः प्राप्तप्रयोजन-इव मन्यते । अस्य उपनिषदात्मकस्य रसस्य आनन्दो विज्ञानमेवात्मा सच्चिदानन्दैकरसमखण्डं वस्तु स्वरूपम् । एषा उपनिषत् श्रद्धा अपरोक्षविद्या साक्षाद्ब्रह्मरसत्वात् ॥१३॥ उक्तां देवानामानन्दात्मत्वमुपजीव्य यजुरात्मकवायोरानन्त्यपरिज्ञानफलं पुरावृत्तकथनेन दर्शयति एतद्ध स्मेति एतद्देवानामानन्दात्मत्वं यजूरसरूपाया उपनिषद आनन्दाविज्ञानरूपं च विद्वान् । स वायुरपि स्वकीयानन्दलक्षणस्वरूपं वेदितुर्वाक्यमनतिलङ्घयन्निदानीमपि तथैव इतस्ततो वाति वायुवशीकरणं तस्य फलम् ॥१४॥ एवं वायुप्राणरूपत्वेन स्तुतस्य यजुष उपांश्वनुष्ठानं विधत्ते तदेतदिति । निर्वक्तुमनर्हमनिरुक्तम् । निर्ब्रुवन्तमुच्चैः पठन्तम् ॥१५॥ अग्नावुपांशु यजुषा कर्तव्यानि संगृह्णाति उपांशु यजुषेति । शृतं पक्वं निष्ठितं प्रयोगार्हमवदानार्हम् । आविदं प्रसिद्धिं गच्छति अयं महान्पुरुष इति ॥१६॥५॥३॥

उत्तरब्राह्मणे आहवनीयाग्निरूपप्रजापतेः (? ग्निरूपप्रक्षिपतेः C1. ग्नेरुषाप्रक्षेपतः C2.) चित्याग्निमन्त्रत्वेन परिकल्प्य (? कल्प Codd.) तयोर्भोक्तृभोग्ययोः अग्निचित्ययोर्द्वन्द्वस्यार्क्यमहाव्रतोक्थनामभिर्ऋग्यजुःसामवेदत्रयपरिभाषासिद्धैर्व्यवहार्यत्वेन स्तुतिः  अथ रुक्मपुरुषयोरिष्टकापुरीषचित्योश्चित्याहवनीययोश्चेन्द्राग्न्यात्मना स्तुतिः  पश्चात्प्रजापतिरूपाहवनीयस्य तत्र हूयमानमहाव्रतीयग्रहरसस्य यद्द्वन्द्वं सम्पद्यते तस्यार्क्यव्रतोक्थनामभिर्व्यपदेश्यत्वम्  कलाभिः सप्तदशात्मकस्य चित्याग्निरूपस्य प्रजापतेः सप्तदशात्मकः सोमयागोऽन्नं तयोरधिदैवमादित्यचन्द्रात्मना अध्यात्मं प्राणान्नात्मना च स्तुतिः त्रिष्वपि (? स्तुतिविष्वपि Codd.) स्थानेष्वर्क्यादिनामत्रयप्रतिपाद्यत्वमिति प्रतिपाद्यसंग्रहः ॥ अथादौ प्रजापतेर्भोक्तृत्वमाहवनीयरू-

हस्रसंमिताः द्वितीयाध्याये (२. १. ८-११.) सुपर्णचित्याग्नेर्मध्यदक्षिणोत्तरभागत्रये लोमरूपत्वेन स्तुता इति तत्सहस्रत्रयं परित्यज्य अवशिष्टानां सप्तानां सहस्राणां शिरःप्रभृति पादपर्यन्तमुपहितानामेव शत्रुरूपत्वेन (? रशनुरू C1. शरीरू C2. शत्रुरू A.) स्थितानां गायत्र्यादिसप्तच्छन्दोवीर्यत्वेन स्तुतिः तृतीयाध्यायप्रथमब्राह्मणे क्रियते । यद्यप्यष्टौ शतान्यतिरिच्यन्ते तथापि सहस्रत्वेन स्तोतुमयोग्यत्वात्तासां स्तुतिरत्र न क्रियते ॥ यद्वा अष्टमकाण्डे चरमचितौ छन्दस्या उपदधातीति (८. ६. २. १.) सप्तानां छन्दसामुपधानमुक्तं तेषां छन्दसां स्तुतिः क्रियते चित्याग्निरूपस्य प्रजापतेः प्राणो गायत्रीति । प्राणः प्राणसंचारस्थानं नासिकोच्यते शीर्षण्याः प्राणाश्चत्वार उक्ताः द्वाववाञ्चावाह य एवायमिति मनस्तु सर्वेन्द्रियसंगतमेकमिति सप्त प्राणाः पूर्वमपि प्रजापतिः सप्तभिः प्राणैः सप्तपुरुषात्मक एकः पुरुषः सृष्ट इति विवक्षया सप्तावयवा उक्ता इति तात्पर्यम् ॥१॥ एवं छन्दसां प्राणाद्यात्मकत्वमुक्तम् तत्र वियुज्यानुवदति प्राण इति ॥२॥ प्रजननः प्राण आलुम्पेदिति प्रजननशक्तिरहितो भवेत् एषोऽग्निर्न चीयेत नपुंसकस्य कर्मानधिकारात् ॥७॥ अवाङ् प्राण आलुम्पेदिति दुश्चिकित्समूलरोगराजयक्ष्मादिगृहीतः पुरुषः कर्मणि नाधिक्रियते ॥८॥ यतः छन्दांसि परस्परमन्योऽन्यस्मिन्प्रतिष्ठितानि गायत्र्यां तावत्तस्याश्चतुर्विंशत्यक्षराणां सर्वछन्दःस्वनुगमात् तथा जगत्यामन्तिमछन्दसि सकलछन्दोऽक्षरसद्भावात् एवं मध्यमानि छन्दांस्यूह्यानि ॥९॥१॥३॥

एवं चित्याग्नेः चक्षुरादिसप्तावयवानां छन्दोमयत्वमुक्तम् अथ शिरोग्रीवादीनां छन्दोमयत्वं वेदवादिप्रश्नोत्तराभ्यां निरूपयति ॥१॥ यज्ञा यज्ञा वोऽग्नय इत्यत्रोत्पन्नं यज्ञायज्ञियम् तदेव छन्दः बृहतीत्यर्थः ॥८॥ विविधछन्दस्का ऋक् विछन्दाः ॥१२॥ आत्मविद्या आत्मनः उदीरितछन्दोदेवतासमष्टिरूपविराडात्मकस्य सम्बन्धिनः स्वस्य विद्या । स एतन्मयः अत्रोक्तानि (!) सवित्रादिदेवतास्वरूपः एतमात्मानमेवंविधं छन्दोदेवतारूपावयवयुक्तं शरीरमभिलक्ष्य सम्भवत्युत्पद्यते । अत्राग्नौ लोक्यतायै पुण्यलोकावाप्तये अन्या उक्तव्यतिरिक्ता आशीः प्रार्थना नास्ति ॥१३॥२॥३॥

तृतीयब्राह्मणेऽग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वं (? वाद्या° AC.) धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यां प्रतिपाद्यते ॥ उपोत्ससाद समीपमभ्यागतः तस्मात्सकाशाद्विद्यां ग्रहीतुमुपसत्तिं कृतवान् ॥१॥ वागादिसर्वात्मकमग्निमजानानो महाशालस्तस्माद्धीरात्सकाशादग्निं परिजिज्ञासितुमासनादुपावरूढः भो धीर तं सर्वात्मकमग्निमधीहि अध्यापयेति उपसन्नः ॥५॥ अनुगछति नश्यति । वायुमनुलक्ष्य उद्वाति नश्यति वायावधिकं वाति सति अग्निर्विनष्टो भवति । सा-सा देवता भूवा एलयति संचरति चेष्टते ॥८॥३॥३॥

उत्तरब्राह्मणे अग्निवाय्वादित्यपुरुषाणामोषधिवनस्पत्युदकचन्द्रपशूनां बहुविधनामव्यपदेश्यत्वेन स्तुतिः तत्रापि पुरुषस्य अर्करूपतया च स्तुतिरनेकैः प्रश्नप्रतिवचनैः प्रतिपद्यते ॥१॥ महान्ति सर्वेभ्योऽपि महान्ति वस्तूनि कः प्रजापतिः तस्मै हितानि क्यानि । अर्काः अर्चनीयाः ॥२॥ वेत्थार्कमिति श्वेतकेतुपित्रा पृष्टो होता स्वयमर्कस्वरूपमजानानस्तस्मात्पितुः सकाशात्संजिज्ञासुराह अथ वै न इति ॥३॥ अर्ककोश्यौ कोश्याकारे फले (A. पुटके C.) । अर्कसमुद्गाविति अर्ककोशाग्रे विदलितौष्ठभागौ । धानापदेन अर्कबीजानि । अर्काष्ठीलामिति अर्ककोशमध्ये विस्तरेण वर्तमाना तूली (C. °ध्ये जिह्वास्तारणवर्तमानः । A.) ॥५॥४॥३॥

अत्र यजुस्तद्विधायकब्राह्मणयोर्निर्वचनपुरःसरमधिदैवाध्यात्मभेदेनार्थः (? त्मपत्रेनार्थं C1. त्मभेदेनार्थं C2. त्मप्रत्रवेनार्थ A.) मन्त्रब्राह्मणप्रसङ्गादुपनिषद् स्तुतिः तत्स्वरूपं तद्विदुषः फलमानन्दावाप्तिः फलं यजुषां चोपांश्वनुष्ठानं चेति पञ्चमब्राह्मणप्रतिपादितार्थसंग्रहः ॥ यजुषः शब्देन वायुं निर्ब्रुवन्नधिदैवमर्थमाह अयं वावेति ॥१॥ यजुर्मन्त्रः ऋक्सामयोः प्रतिष्ठितः मध्यस्थितः । अध्वर्युणा याजुषेण समानैरेव ग्रहैः प्रकृतिसोमयागगतैरैन्द्रवायवादिभिर्विकृतिष्वपि कर्म क्रियते सामगबह्वृचैः स्तुतशस्त्राणि स्तोत्रशस्त्राणि अन्यान्यन्यानि प्रकृतिगतव्यतिरिक्तानि क्रियन्ते यथा महाव्रतयज्ञे बृहद्रथन्तरयोर्वैकल्पिकयोः प्राकृतयोः पृष्ठसाम्नोः स्थाने पञ्च सामानि निष्केवल्यस्थाने महदुकथम् । यथा पूर्वाभ्यामश्वाभ्यां स्यत्वा (!) गत्वा श्रान्तौ तौ विमुच्य पराभ्यामन्याभ्यां धावयेत्तादृक्तात् अन्यस्यान्यस्य स्तुतशस्त्रस्य करणम् स्यत्वेति स्यन्दू प्रस्रवणे क्त्वाप्रत्यये उदित्त्वादिडभावपक्षे (? उदिवादि उभावपक्षे Codd.) रूपम् (पा° ७. २. ५६.) छान्दसो नकारलोपः (पा° ६. ४. ३१.) ॥२॥ अथ ब्राह्मणापरनामधेयस्य पुरश्चरणशब्दस्य पूर्ववन्निर्वचनपुरःसरमधिदैवमर्थमाह अग्निरेवेति ॥३॥ प्रतिबुभूषति प्रातिकूल्यमाचरितुमिच्छति ॥९॥ न हि हिरण्यगर्भसूत्रात्मनः परस्ताज्ज्यायो वस्त्वस्ति तस्यैव सर्वजगदाधारत्वात् ॥१०॥ अपूर्वं तस्मात्पूर्वो न विद्यते कारणरहितम् अपरवत्स्रष्टव्यजगद्रूपापरवत् ॥११॥ यजुर्मन्त्रब्राह्मणप्रसङ्गादुपनिषदोऽर्थं तत्स्वरूपं वेदितुः फलं च दर्शयति तस्य वाऽइति रसः सारः । अवति तर्पयति भोगयोग्यं करोति अनुव्येति व्याप्नोति । अत उपनिषत्सकलं साङ्गं वेदं व्याप्नोति ॥१२॥ अस्य अन्नात्मकस्य यजुषस्तृप्तिरेव गतिः फलावाप्तिः यथा लोके अन्नेन तृप्तः पुरुषः गतः प्राप्तप्रयोजन-इव मन्यते । अस्य उपनिषदात्मकस्य रसस्य आनन्दो विज्ञानमेवात्मा सच्चिदानन्दैकरसमखण्डं वस्तु स्वरूपम् । एषा उपनिषत् अद्धा अपरोक्षविद्या साक्षादन्नरसत्वात् ॥१३॥ उक्तं देवानामानन्दात्मत्वमुपजीव्य यजुरात्मकवायोरानन्तत्वपरिज्ञानफलं पुरावृत्तकथनेन दर्शयति एतद्ध स्मेति एतद्देवानामानन्दात्मत्वं यजूरसरूपाया उपनिषद आनन्दविज्ञानरूपं च विद्वान् । स वायुरपि स्वकीयानन्दलक्षणस्वरूपं वेदितुर्वाक्यमनतिलङ्घयन्निदानीमपि तथैव इतस्ततो वाति वायुवशीकरणं तस्य फलम् ॥१४॥ एवं वायुप्राणरूपत्वेन स्तुतस्य यजुष उपांश्वनुष्ठानं विधत्ते तदेतदिति । निर्वक्तुमनर्हमनिरुक्ताम् । निर्ब्रुवन्नमुच्चैः पठन्नम् ॥१५॥ अग्नावुपांशु यजुषा कर्तव्यानि संगृह्णाति उपांशु यजुषेति । शृतं पक्वं निष्ठितं प्रयोगार्हमवदानार्हम् । आविदं प्रसिद्धिं गच्छति अयं महान्पुरुष इति ॥१६॥५॥३॥

उत्तरब्राह्मणे आहवनीयाग्निरूपप्रजापतेः (? ग्निरूपप्रक्षिपतेः C1. ग्नेरुषाप्रक्षेपतः C2.) चित्याग्निमन्नत्वेन परिकल्प्य (? कल्प Codd.) तयोर्भोक्तृभोग्ययोः अग्निचित्ययोर्द्वन्द्वस्यार्क्यमहाव्रतोक्थनामभिर्ऋग्यजुःसामवेदत्रयपरिभाषासिद्धैर्व्यवहार्यत्वेन स्तुतिः अथ रुक्मपुरुषयोरिष्टकापुरीषचित्योश्चित्याहवनीययोश्चेन्द्राग्न्यात्मना स्तुतिः पश्चात्प्रजापतिरूपाहवनीयस्य तत्र हूयमानमहाव्रतीयग्रहरसस्य यद्द्वन्द्वं सम्पद्यते तस्यार्क्यव्रतोक्थनामभिर्व्यपदेश्यत्वम् कलाभिः सप्तदशात्मकस्य चित्याग्निरूपस्य प्रजापतेः सप्तदशात्मकः सोमयागोऽन्नं तयोरधिदैवमादित्यचन्द्रात्मना अध्यात्मं प्राणान्नात्मना च स्तुतिः त्रिष्वपि (? स्तुतिविष्वपि Codd.) स्थानेष्वर्क्यादिनामत्रयप्रतिपाद्यत्वमिति प्रतिपाद्यसंग्रहः ॥ अथादौ प्रजापतेर्भोक्तृत्वमाहवनीयरू-

पवमाह प्रजापतिमिति । उख्योऽग्निः संवत्सरं धारयितव्यः पश्चादिष्टकाचयनम् ॥१॥ यथा पूर्वं देवैर्विस्रस्तस्य प्रजापतेरुखायां रेतोरूपेण सेकः तस्मै समुत्पन्नाय प्रजापतये चित्याग्नेरन्नत्वेन संस्कारः तस्य चान्नस्य शरीरेण परिहितत्वादात्मत्वम् तत्सर्वमधुनातनानुष्ठातरि योजयति तथैवेति आत्मानं स्वरूपम् ॥२॥ चित्याग्नेरुपरि उख्याग्निनिधानमन्त्रो वौषडिति श्रूयते तस्याक्षरद्वयस्य यथाक्रममग्निचित्याग्निपरतां दर्शयति तमिति वौगिति पूर्वाक्षरेण एषोऽग्निरुच्यते वक्तेर्वौगिति पदनिष्पत्तिरूक्ष्या षडित्यक्षरेण षट्चितिकोऽग्निः तथा सति वौषडित्यस्यायमर्थः सम्पद्यते अस्माऽआहवनीयाग्नये षट्चितिकमग्निमन्नं कृत्वा आत्मसंमितमपि दधाति कृतवान्भवति ॥३॥ अग्निचित्याग्निद्वन्द्वस्य ऋग्यजुःसामवेदत्रयपरिभाषासिद्धोक्थार्क्यमहाव्रतनामभिर्व्यपदेश्यत्वं तत्तन्नामावयवनिर्वचनेन दर्शयति । योऽग्निराहवनीयोऽत्र षट्चितिकेऽग्नावाह्रियते निधीयते स एषोऽर्क आदित्यः यस्योपरि निहितः स हि तस्यान्नं क्यम् कः प्रजापतिः तस्मै हितमन्नं चित्याग्निरूपं क्यं भवतीति कृत्वोक्तम् अत अर्कः क्यमिति पदद्वयं यजुष्टो यजुर्वेदे अर्क्यमिति श्लिष्टोच्चारणेन व्यवहृतमित्यर्थः । सामतः सामवेदे । ऋक्तः ऋग्वेदे । बृहतीसहस्रस्योक्थमिति संज्ञा । तदेतदेकमग्निचित्याग्निद्वन्द्वं सत् त्रेधा वेदत्रये अर्क्यमहाव्रतोक्थनामभिराख्यायते ॥४॥ एतदग्निद्वयेन चेन्द्राग्न्यात्मना (?) स्तोतुमादाविन्द्राग्निसृष्टिमाह ॥५॥ प्रथमेष्टकाचितावुपधेयौ रुक्मपुरुषाविन्द्राग्न्यात्मना स्तौति ॥६॥ इष्टकापुरीषचितिद्वयमिन्द्राग्न्यात्मना स्तौति । ऐष्टकमिष्टकासमूहः ॥७॥ ऐकरूप्यमिष्टकासम्पत्त्या अक्षरसम्पत्त्या चोपपादयति ॥८॥ अक्षरस्यैकत्वं मन्त्रसंवादे दृढयति । इन्द्राग्न्योरवयवशो ब्रह्मक्षत्ररूपत्वात्तदुभयरूपस्याग्नेस्तत्तादात्म्यं तयोर्विश्वदेवात्मकत्वाच्च विड्रूपता इन्द्रः सर्वदेवानां परमः अग्निरवमः तयोराद्यन्तवर्तिनोर्ग्रहणेन सर्वे देवाः संगृहीता इति तयोस्तदात्मकत्वम् विश्वदेवानां विट्त्वमिन्द्रप्रजात्वात् अतस्तदेकमग्न्यात्मकमक्षरं ब्रह्मक्षत्रवैश्यरूपम् ॥९॥ उक्तं वर्णत्रयात्मकत्वमुपजीव्य कर्मण(:) श्रीयशोऽन्नादत्वलक्षणं फलं पुरावृत्तकथनेन दर्शयति । एतदग्न्यात्मकमक्षरं वर्णत्रयात्मकं जानानः । सायकपुत्रः । यदुभयथेति तस्यार्थं श्रुतिः स्वयमाह एषोऽग्निः श्रीरूपः तद्धेतुः यशोऽन्नादरूपः तद्धेतुः ॥१०॥ उक्तं श्रीयशःप्रभृतिकं फलं संवादेन दृढयति ॥११॥ अथ प्रजापतिरूपाहवनीयाग्नेः तत्र हूयमानमहाव्रतीयग्रहरसस्य च यद्द्वन्द्वं तस्य पूर्ववदर्क्यमहाव्रतोक्थनामत्रयेणाभिधेयत्वं वक्तुं ग्रहग्रहणं स्तुतशस्त्रपठनं तस्य रसस्य वषट्कारान्ते होमं च क्रमेण दर्शयति । संवत्सरान्ते संवत्सरसाध्यगवामयनादौ [गवामयनोपान्त्यदिवसे] ॥१२॥ प्रथमाध्याये (१. १. ५.) व्याख्यातम् ॥१३॥ एषोऽग्निराहवनीयः । इदं महाव्रतग्रहरसं मधुरादिभेदेन षट्प्रकारमन्नम् । अस्मै प्रजापतिरूपायाग्नये ॥१४॥ पूर्वमाहवनीयाग्नेरर्कत्वमुक्तम् (क° ४.) अत्र तु विशिष्टस्य चित्याहवनीयस्यार्कत्वमिति विशेषः । तदिदमग्निरसद्वयमेकं सत् ॥१५॥ अधियज्ञं प्रजापतिसौम्याध्वरयोर्द्वन्द्वस्य अधिदैवमादित्यचन्द्रद्वयस्य अध्यात्मं प्राणान्नरूपस्य चार्क्यादिनामत्रयभाक्त्वं (? °भाक्त Codd.) प्रदर्शयिष्यते ॥ स एष प्रजापतिरूपोऽग्निः संवत्सरः सप्तदशावयवः । आदौ युञ्जानः प्रथमं मन इत्यादिभिर्यजुरष्टमाभिर्ऋग्भिः क्रियमाणानि सावित्राण्यष्टौ तदेकमग्नेरर्धम् षोडशगृहीतस्यार्धेन य इमा विश्वा भुवनानीत्यष्टभिर्ऋग्भिरेकाज्ञतिः अवशिष्टेनार्धेन चक्षुषः पिता मनसेत्यष्टभिरपरा अतो ऽष्टशो विगृहीतत्वादष्टावेव वैश्वकर्मणानि तदपरमर्धम् तयोः सावित्रवैश्वकर्मणहोमयोर्मध्ये

उखासम्भरणादि यत्कर्म क्रियते स एष सप्तदशोऽग्निः प्रजापतिः ॥१६॥ षोडशकलः पुरुष इति मनुष्यसंकेते देवैः षोडशाक्षरः पुरुष इति व्यवह्रियते तान्येवाक्षराणि शरीरे दर्शयति ॥१७॥ यदा ताः कलाः अन्नमाहर्तुं न ध्रियन्ते न समर्थाः तदा प्राण एताः कलाः भक्षयित्वा देहान्निर्गच्छति तस्माल्लोके क्षुधितस्य पुरुषस्य तृप्रमिव भवति सं[दीप्त]तममिव (?) तृप्लि (!) संदीपे (धा° ३४. १३.) इति धातुः बुभुक्षितशरीरे धातुसंक्षयेण सदा व्यग्रो दृश्यते । यतः पाणैरचते तस्माल्लोके उपतापो ज्वरार्दितः कृशो भवति ॥१८॥ सप्तदश ऋत्विक् न कर्तव्यः सप्तदशसंख्यापूरकस्तु सोमरसपुरोडाशाज्याङ्गत्यात्मकः ॥११॥ अत्रार्कशब्दो मुख्यः ॥२२॥ अधिदैवाध्यात्मद्वये समुदितमर्थमुपसंहरति स एष एवेति एष संतापक आदित्यो ऽधिदैवतमयं प्राणोऽध्यात्मम् ॥२३॥६॥३॥ [१॥४॥]

चतुर्थाध्याये प्रजापतिरूपचित्याग्नेः कालमन्त्रात्मकत्वं चयनफलं च मृत्युरूपत्वं सकलमुपधेयानामिष्टकानां संख्या तद्विभागश्च प्रतिपाद्यते ॥ तत्र प्रथमब्राह्मणेऽग्नेरिष्टकानां च संवत्सरतदवयवाहोरात्रमुहूर्तात्मकत्वं मन्त्ररूपत्वं च स्पष्टमाम्नायते । अथ प्रथमं संवत्सररूपप्रजापतेरग्नीषोमात्मकत्वमाह । तच्चन्द्रमसो वचनमुत्तरत्र प्रजापतेश्चन्द्रोक्तौ (क° २७.) उपयुज्यते ॥१॥ व्यौहत् व्यभजत् । परिश्रितामपि तया देवतयाङ्गिरस्वदिति मन्त्रेणोपधानादिष्टकाशब्दव्यवहार्यत्वम् ॥४॥ सप्तधाविभागं न कृतवान् ॥८॥ द्वित्रिचतुरादयः चतुर्दश व्यूहाः पूर्वस्त्वेक इति पञ्चदश व्यूहाः ॥१७॥ एकस्याहोरात्रस्य षष्टिर्घटिकाः ते द्वे-द्वे एकैको मुहूर्तः क्षुद्राः अल्पपरिमाणाः ॥१८॥ सूर्य एव प्रथमं सर्वं वस्तु पचति पश्चादयमग्निरमुना सूर्येण पक्वं पचति । पक्वस्य पक्तेति हि भरद्वाजेनाग्निर्व्यवहृतः । अतोऽग्निसूर्ययोः प्रजापत्यात्मनोरभेदादहोरात्रमासादिभिः जगत्परिपाकनिमित्तत्वात्सूर्यगत्यधीनाः संवत्सरावयवा अहोरात्रसम्बन्धिनो मुहूर्ता एव चित्याग्न्यवयवभूतलोकम्पृणेष्टका इति तात्पर्यार्थः ॥११॥ पर्यैक्षत् (°कृत् pr. manu) अन्विवेष व्याप्तुमिति शेषः । अस्ति सर्वदा विद्यते । यच्च मर्त्यं मरणधर्मकं मनुष्यादि तदप्येतत्त्रयीरूपमेव । अतो मर्त्यामृतात्मकं सर्वं जगदत्रान्तर्भूतम् ॥२१॥ एवं त्रय्याः अष्टशताधिकदशसहस्रपङ्क्तिरूपत्वसम्पादनया संवत्सरस्य प्रजापतेर्मुहूर्तसंख्यासाम्येन त्रयीशरीरकत्वमुक्तम् ॥२४॥ पङ्क्तिश्चत्वारिंशदक्षरा पङ्क्तिद्वयमेकाशीतिर्भवति । अत उभयोः संख्यासाम्यान्मुहूर्तानामशीत्यात्मना सम्पत्तिः ॥२५॥ उक्तरीत्या प्रजापतेः संवत्सरात्मत्वं स्पष्टमुक्तमिति दर्शयति । त्रयीविद्यायां छन्दःस्तोमप्राणदेवाः सन्तीति प्रागुक्तम् (क° २१.) तन्मयमात्मानं सिक्तवान् । परोऽन्यः आत्मा दवीयसि दूरतरे मासतिथ्यात्मके वेदत्रयस्य त्रिंशद्विभागे चतुर्विंशतेर्दूरतरे ॥२६॥ यदुक्तं प्रजापतेः संवत्सरस्याहोरात्रमुहूर्तात्मकत्वं वेदत्रयरूपत्वं तत्सर्वं चित्याग्नौ विभज्य प्रजापतिकर्तृकोपधानवचनव्याजेन दर्शयति । परिश्रितं शर्कराम् । एकस्याः परिश्रितो यजुष्मत्याश्चोपधानेन रात्रिमहश्च त्रिंशल्लोकम्पृणोपधानेन तद्गतांस्त्रिंशन्मुहूर्तांस्त्रिंशतमशीतीश्चोपहितवान् एवं षष्ट्युत्तरत्रिशतसंख्याकानां परिश्रितां यजुष्मतीनां चोपधानेन संवत्सरगतानहोरात्रान् लोकम्पृणोपधानेन सर्वान्मुहूर्तान्सकलाशीतीश्च चित्याग्नावुपहितवान् । एवमग्निं चितवतः प्रजापतित्वं निदर्शयति स एतन्मय इति ॥२७॥ रुक्मपुरुषात्मकादेतस्मात्सूर्यादुपर्यध्यचीयत अत एतस्मिन्नेवाधारे सर्वोऽग्निश्चितः ॥२८॥१ [२] ॥४॥

अथ संवत्सररूपप्रजापतेर्मर्त्यत्वतकरूपत्वं तद्रूपोपासनस्य फलम् अग्निचयनस्यामृतलक्षणं फलं परिश्रिद्यजुष्मतीलोकम्पृणेष्टकानां संख्या द्वितीयब्राह्मणे प्रदर्श्यते ॥१॥ गच्छति अन्तर्भावितण्यर्थः गमयति ॥२॥ शरीरेण व्यावृत्य शरीरं विहाय ॥१॥ धिष्ण्या अष्टौ होतृप्रशास्तृब्राह्मणाच्छंस्यच्छावाकपोतृनेतॄणां षट् आग्नीध्रीयमार्जालीयौ द्वौ ॥१३॥ दर्भस्तम्बस्य तूष्णीमुपधानात्कथं यजुष्मदिष्टकानाम्ना व्यपदेशः सत्यम् अस्योपरि समन्त्रहोमकरणादस्य यजुष्मत्वमुच्यते ॥१४॥ अष्टादश स्तोमाख्या इष्टकाः । दश स्पृतः सहश्च सहस्यश्चेति द्वे ऋतव्ये मिलित्वा अथ द्वादशेत्युक्तम् । सप्तदश सृष्टयः ॥१७॥ सुपर्णचिदसीति वषट्कारान्तमन्त्रेण निहितोऽग्निराहवनीयः इष्टका ॥१८॥ प्रतिमा प्रतिकृतयः । इन्द्रं विश्वा अवीवृधन्निति मन्त्रेण पुरीषमुपधीयते अतस्तस्यापि यजुष्मत्वाद्यजुष्मतीष्विष्टकासु मध्ये परिगणनम् ॥१९॥ के चन आहवनीयऽएव सकला अपि लोकम्पृणा उपधेया इत्याहुः । सम्पदं लोकम्पृणानां मुहूर्तरूपाणां सम्पत्तिम् । एते अग्नयः गार्हपत्यधिष्ण्यलक्षणाः । इहाहवनीयेऽग्नौ ॥२१॥ एतानि गार्हपत्यधिष्ण्यलक्षणानि रूपाणि । पृश्न्यश्मेति यजुष्मतीमध्ये परिगणितः तस्याग्नीध्रीयेऽग्नावुपधानम् तं सम्पश्यति यजुष्मतीषु मध्ये सम्भूय जानाति तद्वदितरधिष्ण्यगता अपि लोकम्पृणाः कथं न पश्येत् अन्यत्र स्थितानामपि पृश्न्यश्मवत्सम्पश्यत्यन्तर्भावो न विरुध्यते । येनाग्निना निर्ऋतिं पाप्मानमपहते स एकादशोऽग्निः एकादशसंख्यापूरकः ॥२२॥ यद्येवमन्यचितानामिष्टकानां सम्भूय परिगणनं तर्हि निर्ऋतिदेवत्यानां तिसृणामिष्टकानामप्यत्रैव संदर्शनं कर्तव्यम् तद्दूषयति आहुतिभिरिष्टकाः सम्पद्यन्ते नात्राहुतिरस्तीति इष्टकात्वमेव नास्ति कुतस्तासामिष्टकामध्ये परिगणनम् ॥२३॥ वीर्यं वीर्यरूपाः । अनतिरिक्तं वै पुरुष (!) इति पुरुषस्य वीर्यमनधिकम् ॥२४॥२ [३] ॥४॥

उत्तरेणाध्यायद्वयेन अग्निविषया उपासना वक्ष्यन्ते । तत्र प्रथमब्राह्मणे संवत्सररूपाग्नेः तदवयवानां च सहस्ररूपत्वेनोपासनं तत्फलं च प्रदर्श्यते ॥ सहस्रप्रसङ्गं प्रजापतिवृत्तान्तेन प्रस्तौति । विजिहासन् त्यक्तुमिच्छन् ॥१॥ सर्वोऽत्यपवत अत्यक्षरत् बहु संचरितः ॥३॥ साहस्रीः सहस्रसंमिताः । मुहूर्तभाजमिति लोकम्पृणाभिप्रायम् । मैथुनान्तव्यापारेषु सर्वेष्वपि एतदुपासनं कर्तुं युज्यते ॥४॥ व्यर्धः श्रमो न भवति ॥५॥१॥५॥ [४॥४॥]

एवं प्रजापत्यात्मकसमष्टिरूपोपासनामभिधाय व्यष्टिरूपाग्निविषयामुपासनां (षष्टि° Cod.) प्रतिजानीते अथात इति उपनिषदां रहस्यार्थानामुपदेशः । चित्याग्निम् ॥१॥ संवत्सरे शिरःपक्षपुच्छावयवाद्युपासनां दर्शयति ॥२॥ स्वयमातृण्णा नाम सहजच्छिद्रयुक्तपाषाणेष्टकाः ताश्च तिसृषु प्रथममध्यमोत्तमासु चितिषूपधीयन्ते ॥३॥२॥५॥ [५ ॥४॥]

पूर्वमादित्योऽग्निरित्युक्तम् त(त्र) त्रयीमयादित्येऽग्न्युपासनास्मिन्ब्राह्मणे वक्ष्यते ॥ अथ तस्याग्नेस्त्रयीमयत्वं दर्शयति । उपनिषद्रहस्यं स्वरूपम् ॥१॥ तेनाग्निस्त्रेधा विहितः अग्निवायुसूर्यात्मनेत्यर्थः । पुंलिङ्गशब्दाभिधेयाः स्तोमाख्याः । नपुंसकशब्दाभिधेयाः शीर्षाख्याः ॥२॥ वाचः स्त्रीलिङ्गत्वं स्फुटम् ॥३॥ एवमग्नेर्वाग्रूपत्वमुक्तम् वाच आदित्यरूपत्वं चाह । अतः सूर्यादूर्ध्वं चयने मृत्युकर्तृकाक्रमणस्याभावात्पुनर्मृत्युजयः फलं भवति तत्कथं सूर्यादूर्ध्वं चयनमसम्भवं परिहृतत्वादित्याशङ्क्य तत्राप्युपायं दर्शयति विद्ययाह वाऽइति यद्यपि वस्तुस्थित्या आदित्यस्योपरि चयनाभावः तथापि ज्ञानेनोर्ध्वं चयनं सम्पादयितुं शक्यते ॥४॥ तद्विशदय-

ति । सूर्यमण्डले वाव त्रीणि विद्यते ज्योतिर्मयमण्डलमर्चीर्पि तदन्तर्वर्ती पुरुष इति चयने ऽपि वेदत्रयमस्ति तत्र मण्डलमेव ऋग्रूपत्वेनोपासनीयमर्चिरिव सामरूपत्वेनान्तर्वर्तिपुरुष एव यजूरूपत्वेन ॥५॥३ [१] ॥५॥

सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थ उच्यते । तत्राधिदैवमयमर्थः चयनगतबृहदुक्थमहाव्रताग्नित्रयं क्रमेण मण्डलार्चिःपुरुषरूपत्वेनोपासनीयमिति अधियज्ञ-मयमर्थः चयनगतरुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलादित्रयम् एवं दक्षिणाक्षिगतशु-क्लकृष्णावर्णतदन्तर्वर्तिपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति लोचने हि शुक्लरूपं कृष्ण-रूपं चास्ति तदन्तर्वर्ती पुरुषश्च दृश्यते एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पा-दनम् अथ पुरुषस्य मृत्युत्वमुपजीव्यं मृत्युगतैकत्वबहुत्वात्तिकत्वमीमांसा तस्यैव पुरुषस्य ब्रह्मधोपासनं तत्फलमिति मण्डलब्राह्मणप्रतिपादितार्थसंग्रहः ॥ उक्थमहाव्रतचित्याग्नीनां मण्डलार्चिःपुरुषात्मकत्वेन तस्य मण्डलादित्रयस्य ऋग्यजुःसामरूपत्वम् ॥१॥ उक्तमर्थस्वरूपं पश्यन्तो पर्यालोचयन्तो वाग्वदति त्रय्येव विद्या तपतीति ॥२॥ मण्डलस्थपुरुषस्य मृत्युरू-पत्वमर्चिषोऽमृतरूपत्वं चाह ॥३॥ अमृतममृतरूपार्चिरधिकरणं मण्डलम् । अहोरात्रे विवास-यति इदमहरेषा रात्रिरिति विभजति पुनः-पुनः करोतीति वा विवस्वानादित्यः मण्डलमि-त्यर्थः । वस्ते आच्छादयति सर्वतः स्वतेजसा परिवृणोति । अवरमधस्ताद्भावम् ॥४॥ परस्मै शंसितारं होतारं लोके ब्रह्म निन्दन्ति ॥५॥ तद्रुक्मपुरुषयोरधस्तादुपहितं पुष्करपर्णम् । आ-पो ह्येताः अर्चिषो ह्यापः सूर्यकिरणानामेव वृष्टिकर्तृकत्वात्कार्यकारणयोरभेदेन अर्चिर्वाऽआ-प इत्युक्तम् पुष्करपर्णमपि अद्भ्य उत्पन्नत्वात्तदात्मकम् । एतद्रुक्मादित्रयं मण्डलाद्यात्मना संस्कृत्य भावयित्वा इहाग्नावुपधत्ते तदा यज्ञस्य समाप्तिमनु ऊर्ध्वमुत्क्रामन्यजमानः एतं मण्ड-लादिरूपेण त्रिविधमादित्यमप्येति। यतोऽस्मिन्नग्नि चितवान्परत्रादित्यो भवति अतश्चितमग्नि-मिष्टकाविशेषेण नाशयितुमादरं न कुर्यात् कुतः एषोऽग्निरमुत्र भवति परलोके यजमानशरी-रात्मनोत्पद्यतऽइति यद्वा परिहर्तुं प्राप्तुं स्प्रष्टुम् चित्याग्निस्पर्शने दोषश्रवणात् ॥६॥ स एष सूर्यमण्डलगतपुरुष एव लोकम्पृणा इष्टका (८. ७. २. १.) तामभिलक्ष्य सर्वोऽग्निः सम्पद्यते लोकम्पृणाभिः सर्वोऽग्निः कृत्स्नः सम्पूर्यतऽइत्यर्थः । तस्य सूर्यपुरुषात्मकदक्षिणाक्षिपुरुषस्य सव्याक्षिगतः पुरुषो मिथुनं योषित् मिथुनं हि आत्मनोऽर्धमर्धभागः अर्धो वाऽएष आत्मनो यत्पत्नीति तैत्तिरीयश्रुतेः ॥८॥ विधृतिं व्यवधायकत्वस्थानीयाम् ॥९॥ देवव्रतं देवकल्पितं व्रतम् ॥१०॥ लोके मानुषस्य मैथुनस्यान्ते गवा असंविदा (!) अज्ञानेनैवात्र स्त्री भवति ॥११॥ धुरेव पोडयेव सहसा ॥१२॥ एवं प्रासङ्गिकं परिसमाप्य मण्डलस्य पुरुषात्मनोपास-नीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमाह । अभिहतौ व्याप्तौ कीलितौ । तौ यदा पादावा-क्छिद्योत्क्रामति पुरुषशरीरात् ॥१३॥ प्राणनिर्गमादनन्तरमेव शरीरपात इत्याशङ्क्य तस्यैवाक्षि-पुरुषस्य प्राणात्मकतामाह ॥१४॥ वाचा रसनया प्राणेन नासिकया ॥१५॥ असावमुत्र द्युलो-के आदित्यमण्डलवर्ती पुरुषः एकः ॥१६॥ अपश्रितः स्थितः ॥१७॥ यः पुरुषः परमात्मा ध्ये-यत्वेनोक्तः तस्य प्रशंसार्थं नानारूपैरुपासनं दर्शयति । अध्वर्यवः याजुषाः एतं पुरुषमग्निमिष्ट-काचयनेन दिव्यादित्येऽग्निरित्युपासते यजुरिति च । सर्पविदः आहितुण्डिकाः ॥२०॥ रुक्म-पुष्करपर्णयोः पुरुषाधारत्वमृक्सामयोश्च यजुरधीनत्वं तस्मादेकेष्टकोऽग्निः ॥२२॥४ [२] ॥५॥

उत्तरब्राह्मणे सकलपुरुषवर्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्तिसम्पाद्यचित्याग्निविषया उपासना वक्ष्यन्ते ॥ सर्वेषामिन्द्रियाणां मनसः प्रामुख्यात्तत्सम्पाद्यमग्निं प्रस्तोतुं मनसः स्वरूपं तत्सृष्टिं चाह ॥१॥ तन्मन आत्मानं स्वकारणं परमात्मानं स्वस्वरूपं वा अन्वैक्षत । ततः पर्यालोचनं कृत्वा प्रामूर्छत् मूर्छा मोहसमुच्छ्रययोः (! धा° ७. ३२.) समुच्छ्रितं बभूव । [पुरुषस्य शतसंवत्सरमितेऽआयुषि षट्त्रिंशत्सहस्राणि दिनानि भवन्ति तत्रैकैकस्मिन्नाग्नेया मनोवृत्तिः तासु चाग्नित्वमारोप्यते] तन्मनः कर्तृ एतावत्संख्याकानर्कानर्चनीयान् मनोमयान्मनउपादानकान् मनश्चितः मनसा चीयमानान्मनःसम्पाद्यानात्मनोऽग्नीनपश्यत् । एतस्य मनश्चितोऽग्नेः क्रियामयाग्निप्रकरणमुपमृद्य (? मृद्य Cod.) स्वातन्त्र्यं प्रतिपत्तुं मनोव्यापारक्रियावयवमनुबध्नाति त मनसेत्यादिना तेऽग्नयो मनसैवाधीयन्त आधाने मनोव्यापार एव कारणम् एवं चयनग्रहणास्तुतशस्त्रादिकरणं केवलं मनोव्यापारसिद्धम् । तेषामग्नीनां सा कृतिः तत्करणं भवति तानग्नीनेवादधति भूतानीति सर्वत्र सम्बध्यते । एतावती वै मनस इति मनोमयषट्त्रिंशत्सहस्रसंख्याकाग्नय एव मनसो विभूतिः महिमा विसृष्टिर्विविधा विभक्ता सृष्टिः । पुनरप्यस्य मनश्चितोऽग्नेः (ग्निः Cod.) केवलविद्यामयत्वेन स्वातन्त्र्यं वक्तुं क्रियामयस्याग्नेर्माहात्म्यं (त्म्य Cod.) मनोमयेऽतिदिशति तेषामेकैक एवेति असौ पूर्व इति पदाभ्यामिष्टकाचितोऽग्निर्विवक्ष्यते स यावान् परिश्रिद्यजुष्मतीलोकम्पृणाभेदेनाहोरात्रतन्मुहूर्तध्यानेन च यत्परिमाणः तेषां षट्त्रिंशत्सहस्रसंमितानामग्नीनां मध्ये एकैकोऽग्निरपि तावान् तत्परिमाणो ध्येयः अनेन क्रियामयस्याग्नेर्माहात्म्यस्य ज्ञानं (न Cod.) यत्तन्मनोमयऽएवेति सूत्रितम् (सूचितम् ?) । एवमुत्तरे वाक्चिदादयोऽग्निचित्पर्यन्ताः षट् पर्याया व्याख्येयाः तत्र वागादिसम्पाद्यानग्नीन्दर्शयितुं तत्तत्पर्यायादौ तस्य-तस्योत्पत्तिरुक्ता ॥९॥ श्रोत्रेण सृष्टं कर्म प्राणानभिसममूर्छत् अभिव्याप्नोत् इदं संदेह्यमन्नप्राणाश्रयं शरीरमुद्दिश्य समुच्छ्रितं बभूव स्वयमसंदेह्यमशरीरं सत् कर्मप्राणयोरन्योऽन्यसाहचर्यादभिवृद्धिं व्यतिरेकमुखेनाह अकृत्स्नं वा ऽइति ॥८॥ कर्मसकाशादाविस्तरां स्पष्टः ॥१०॥ एतेषां मनश्चित्प्रमुखाग्नीनां सर्वेषां स्वतन्त्रविद्यामयत्वोपोद्बलकानि श्रुतिलिङ्गवाक्यान्युदाहरति । विद्याचित एव विद्ययैव धीयमानाः एवकारश्रुतिः कर्माङ्गत्वं व्यावर्तयति ॥१२॥५[३]॥५॥

उत्तरब्राह्मणे भूम्यादिलोकत्रयादित्यनक्षत्रछन्दःसंवत्सरात्मा[पः] चित्याग्निरूपत्वेनोपासनीया उच्यन्ते । अत एव लोकादेः परिश्रिद्यजुष्मतीपशुपुरीषसमिदादिसामान्यधर्मवर्णनम् । अत्र केवलविद्याविधित्वे शब्दस्य तात्पर्यं लक्ष्यते न शुद्धकर्माङ्गविधित्वे तथा हि अस्मिन्नेव ब्राह्मणे विद्यया तदारोहन्तीत्यनेन श्लोकेन (क° १६.) केवलकर्मनिन्दापुरःसरं विद्याप्रशंसा ॥ अग्निना सर्वे सम्पन्नाः स्वव्यापारदक्षा भवन्ति यथा चित्याग्निर्लोकम्पृणेष्टकाभिः सम्पूर्णः । य एवं भूलोकं चित्याग्निरूपं वेद स लोकम्पृणाभूतमेनं लोकाधिष्ठातारमग्निमेव सम्पद्यते तदात्मको भवति ॥१॥ अन्तरिक्षं परेण परस्तादन्तऽइत्यर्थः द्यावापृथिवी संयुक्तौ (!) भवतः ॥२॥ कोशः पेटिका समुब्जितः सम्पिहितः ॥३॥ त्रिंशन्नक्षत्रः स आत्मा मध्यदेहः । द्वे नक्षत्रे प्रतिष्ठा पादरूपेण । द्वे नक्षत्रे प्राणाः चक्षुरादिप्राणानां द्वन्द्वशोऽवस्थानात् । द्वे नक्षत्रे शिरोरूपम् षट्त्रिंश्याविति स्त्रीलिङ्गवचनमिष्टकाभिप्रायेण ॥५॥ नक्षत्रोपनक्षत्रसंख्यां बृहत्यात्मना स्तौति । स्वर्गस्त्वादित्य इति गम्यते एकविंशतिसंख्यापूरकः । एकविंशतिस्तोत्रि-

यात्मकः एकविंश उच्यते ॥६॥ एवमधिकानां षट्त्रिंशदक्षराणां विभागमुक्त्वा तावद्भिरक्षरैर्बृहतीसम्पाद्यतां नानाछन्दोमयत्वेन सम्पादयति ॥८॥ अथोपासकेन स्वशरीरमेवाग्निरूपत्वेनोपासनीयमिति विधत्ते ॥१२॥ अथाप्सु अग्नित्वेनोपासनं विधित्सुरपां सर्वदेवभूतात्मकत्वमाह । आदित्यमण्डलं परिसरवर्तिन्यो नाव्या नावा तार्याः । अयं हिरण्मयः पुरुषः अधिदैवं मण्डलान्तर्वर्ती पुरुषोऽधियज्ञं प्रथमचितावुपहितः पुरुषोऽग्निरूपाणामपामात्मा ॥१४॥ तद्विभागमाह तस्याधियज्ञं रुक्मपुष्करपर्णाख्ये अधिदैवमापश्चादित्यमण्डलात्मके (!) द्वे इष्टके प्रतिष्ठे पादरूपेण ध्येये । बाहुरूपेण ध्येये द्वे स्रुचौ । भूम्यन्तरिक्षात्मके द्वे स्वयमातृण्णे इष्टके । अग्निवाय्वादित्यात्मना ध्येयास्तिस्रो विश्वज्योतिषः । द्वादशसंख्या ऋतव्येष्टकाः संवत्सररूपात्मत्वेन ध्येयाः । यज्ञात्मना देवात्मना च स्तुताः पञ्च नाकसदः पञ्च पञ्चचूडाः । एवमेकत्रिंशज्जाताः । एवं षट्त्रिंशदिष्टकामयो हिरण्मयः पुरुष आत्मा सर्वभूतदेवात्मनामपामग्न्यात्मना ध्येयानां मध्ये वर्तत इत्याह सोऽस्यैष सर्वस्येति । सर्वात्मनामपां मध्यवर्ती आत्मा सर्वकामसम्पन्नः स्वयमकामः ॥१५॥ तादृग्रूप आत्मा सर्वैर्ज्ञानेन लभ्यो न कर्मशतैरिति मन्त्रसंवादेन प्रतिपादयति ॥१६॥ अब्रूपाग्नेः पुरीषाङ्गतिसमिह्लोकम्पृणाः सम्पादयति । सर्वाणि भूतानि सर्वे देवा एषोऽग्निश्चित इत्यस्य पर्यायस्यादौ (क° १४) उक्तम् अतो देवा इत्याख्यातं लोकम्पृणेष्टका अतः सर्वं परिश्रिद्यजुष्मत्यादिकं देवा इत्युच्यत इत्यर्थः ॥१७॥ अधिदैवाध्यात्मादिभेदेन यद्यजुरात्मकं ब्रह्म प्रागुक्तमतस्तदात्मकाः सर्वे देवाः भवन्ति ॥१८॥ ६ [४] ॥५॥

उत्तरब्राह्मणे चित्याग्नेः सर्वदिगभिमुखत्वं (तिमुखत्व Cod.) पृथक् शिरसो निरूहणाभावः (पणा° Cod.) प्रतिपाद्यते ॥ तत्रैकैकदिगभिमुखत्वे दोषमुद्भावयितुं तान्पक्षान्पुरावृत्तेनानुवदति । कौश्यः कुशगोत्रजः ॥१॥ पक्षिरूपस्य चित्याग्नेरिष्टकोपधानक्रमेण कूर्मपशुशिरोऽपरोक्षमाहवनीयाग्निरिव प्रत्यक्षं शिरः न तु पक्षपुच्छवत्पृथक् शिरसः करणम् । कोषा नामऽर्षयः धावयन्तः आविर्भ्याय गच्छन्तः याजयन्तः अग्निं निरूढशिरसमुपाधावयां चक्रुः यस्य कस्य चन यजमानस्य गृहे शिरः पृथक् चितवन्तः ॥८॥ शिरोरहितः स्यादिति मीमांसाशङ्कां परिहर्तुमिष्टकाभिरेव परोक्षं शिरः सम्पादयति । एता इष्टकाः यथावयवरूपाः कल्पनीयाः कूर्मो मूर्धस्थानीयः ॥१०॥७ [५] ॥५॥

षष्ठाध्यायप्रथमब्राह्मणे वैश्वानरविद्या द्वितीयब्राह्मणे पुरुषस्याग्निविधार्कविधोक्थविधनिरूपणा तृतीये शाण्डिल्यविद्या चतुर्थेऽउषा वाऽअश्वस्येत्यस्मिन्नश्वस्योपासनम् एवमर्काग्न्युक्थोपासना (? मकश्युक्थो° Cod.) विद्यासम्प्रदायप्रवर्तकमुनिवंशकथनमिति प्रतिपाद्यसंग्रहः ॥ न समियाय संगतः शक्तो नाभवत् ॥१॥ सम्प्रति इदानीम् । आवसथान्गृहान् अपचितीः पूजाः । सहस्रदक्षिणाकेषु सोमयज्ञेषु युष्मानृत्विजो वृत्वा तत्रैकैकस्य ऋषेः सहस्रं ददामीत्यर्थः । असंविदानाः संकेतमकुर्वाणाः राज्ञे स्वाशयमनाविष्कुर्वन्त एव ॥२॥ अनूचानाः साङ्गवेदाध्यायिनोऽनुष्ठातारः तादृशानां पुत्राः । त्वा इति समुदाय एकार्थवाची तु वा ऽइति तुशब्दस्योकारं वैशब्दे परतो याजुषा लुम्पन्ति (? नु वा इति नु वा स्योभारं वैश प- रतो याकुषा लुयंति Cod.) ॥३॥ ओमित्यङ्गीकारः । वा इति निपातद्वयं तुशब्दोकारं वैशब्दे त्वचोतो यजुषा लुम्पति (!) । म्लानौ गमनासमर्थावभविष्यताम् । पादौ ते विदिताविति

वैश्वानरस्य पादमात्रं त्वया विदितं न तु कृत्स्नो वैश्वानरः ॥४॥ एष रयिरूपोऽन्नात्मको वैश्वानरः वैश्वानरस्यावयविन ईश्वरस्य वस्तिर्मूत्राशय एव न समस्तमित्यर्थः ॥५॥ आत्मा मध्यशरीरम् ॥६॥ नाना वर्त्म मार्गो यस्य वायोः आवहोद्वहादिभेदेन वर्तमानस्य सोऽयं पृथग्वर्त्मा । रथश्रेण्यो रथपङ्क्तयः ॥७॥ सुततेजा इति सुतमभिषुतसोमरूपं तेजो यस्य । सुतोऽभिषुतः सोमरसोऽग्यमानः एतद्रूपलक्षणं पुरोडाशादि पच्यमानः सर्वदा विनाशरहितस्तिष्ठति ॥८॥ अतीत्य सर्वमतिक्रम्य तिष्ठतीत्यतिष्ठाः । समानान्ज्ञातीन् ॥९॥ यदेवं यथोक्तावयवैः पृथिवीपादादिभिः मुमूर्धान्तैरवयवैः विशिष्टमेकं वस्तु तत्प्रादेशमात्रं प्रादेशप्रमाणमिव देवाः सुविदिताः सम्यक् ज्ञातवन्तोऽभिसम्पन्नाः प्राप्तफला बभूवुः । एनान्वैश्वानरावयवान् ॥१०॥ अस्य वैश्वानराग्नेः व्यत्ययेन कर्मणि षष्ठी ब्रुवाणमुपदेष्टारम् ॥१२॥१॥६॥

द्वितीये पुरुषस्यैवाग्निविधत्वमर्कविधत्वमुकथविधत्वमुच्यते ॥ समागच्छति युक्तमेकीभूतं भवति ॥१॥ कं सुखहेतवः ॥५॥ वायुनादित्योऽवष्टम्भमात्रेण तद्दीपनम् ॥११॥२॥६॥

तृतीये शाण्डिल्यविद्योच्यते ॥ सत्यं ब्रह्मेति वक्ष्यमाणैर्मनोमयत्वादिभिर्गुणैरुपेतमात्मानमुपासीत । क्रतुर्निश्चयोऽध्यवसायः ॥१॥३॥६॥

उषा वाऽइत्यादिकमश्वावयवेषु विराडवयवोपासनापरं ब्राह्मणम् नैवेह किं चनाग्रऽआसीदित्यादिकमुपास्यहिरण्यगर्भस्वरूपप्रतिपादनपरं ब्राह्मणं चेत्येतद्द्वयं काण्वशाखानुसारेण बृहदारण्यकोपनिषदादौ प्रपञ्चेन वार्त्तिककारेणोपबृंहितं व्याख्यातमिति नेह पुनरुच्यते पाठसाम्यात् ॥ उत्तरत्र बृहदारण्यके वंशब्राह्मणसमाम्नास्यमानानां विद्यासम्प्रदायप्रवर्तकानामृषीणां मध्येऽग्निरहस्यविद्याप्रवर्तकमृषिप्रवाहमनुक्रामति अथ वंश इति ॥१॥५॥६॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डव्याख्या समाप्ता ॥१०॥ ॥

---

## VARIOUS READINGS.

*Adhyâya* १. २. १ बृहदुक्थं Sây. (and thus often alternately with महदुक्थ). — २ अधिदेवतं Sây. (thus also २, ६, १. १६. - ३, ३, ७. - ४, १, २३.).— ४. २ Read. तदमृतममृत०. - ४ द्वि स्राव A. - १० सामरथवाहणि° A. B1. B2. see पाणि° ८. ४. ८. - १४ पुनर्मृत्युमपजयतीत्य° A. —

*Adhy.* २. १. १ विसृजन्ति Sây. - ६ निर्नाम° Sây. - ८ अथ रूपमुपमं करोति A.— २. २ लोक० सचंते ये A. pr. m. B1. pr. m. - ६ तत्रोप यन्प्रप° A. यत्प्रप°

B1. पत्प्रप° B2. — ४. ८ पञ्चाशदिष्टकाः पञ्चाश° A. - ibid. इति नु विधानामथा-८ श्चयनस्यैव ॥ ८ ॥ निरवसामब्राह्मणं ॥ ९ ॥ B1. B2. Thus also in A., at the margin. the end of this brahmana and the beginning of the next are joined together: इति नु विधानामथातश्चयनस्यैव. — ६. ७ °विधं विधत्ते A. - ibid. चैतद्विदुर्ये च न लोक्या A. - ९ य एवैकशतविधं विधत्ते A. - ibid. संवत्सर-भृतमिव Say. - १२ यजुरेकशतविधो A. - १३ Read: यज्ञेन-यज्ञेन. —

*Adhy.* ३. ३. १ °साद् स होवाच Sây. — ५. २ स्यवा A. B1. B2. According to Sâyana's explanation read स्यवा. - ibid. पराभ्यां Sây. - ३ °यजुः पुरश्चरणा° Sây. - ९ स्वेषु प्रतिबुभूषति Sây. - १६ यजुषैवैनमाचक्षते Sây. - Sâyana closes this adhyâya with the next brâhmana. —

*Adhy.* ४. १. १६ प्रजापतिर्यो वै A. - १८ आर्त्तुं न ध्रियन्ते Sây. - १९ एतत्सप्तदशमन्नं सम - here B1. ends. — २. १३ अष्टाचत्वारिंशदिष्ट° A. - १४ पञ्चचत्वरिंशदिष्ट° A. - १५ °कान्नविंशतिधा A. B2. - १८? °न्मुक्त त्रायन्ते A. मुक्तत्रायन्ते B.2. मुक्तस्त्रायन्ते Sây. - २१ °मेतद्वाऽअस्त्येतद्यमृतं यद्यमृतं तद्य-स्त्येतद्ध A. - २८ एवैनं तंनिरमि° A. — ३. ६? त्रूपाण्युपधत्ताति A. B.2. Sây. - १० ते सम्भवन्त एवामृ° A. - १४ लोकेष्टकाः Sây. - १५ [illegible]ारिंशद्वितीया A. - १६ एकसप्ततिस्तृतीया A. - १७ सप्तचत्वारिंशच्चतुर्थी A. - २४ पुरुषे Sây. (? पुरुष इति). - ibid. Sâyana closes here the fourth adhyâya. — ४. २ स-कृत्स्नसंवत्सरस्य A. - ३ सकृत्स्नसंवत्सरमवरुंधीत A. —

*Adhy.* ५. २. १३ अभिकृती Sây. - २१ त्रीष्टकः ॥ A. - २२ यजुरपीत A. — ३. ८ ? °दिमं संदे ग्रमसंदे ग्रमकृत्स्नं Sây. — ४. १६ तपसानेवंविद्° A. — ५. १ कौश्यो Sây. - ३ °त्पुरुमकार्षीः A. —

*Adhy.* ६. १. ४-६ अविदित° Sây. against the accent. - ८ चक्षुस्त्वा° and चक्षुस्ते A. — ३. २ सत्यधृति A. - ibid. विचिकित्सास्तीति A. — ५. ५ इममभिमऽस्ये A. - ६ समानमा A. M. - ibid. ब्रह्मणे नमः A. M. The accentuation of the proper names too shows some irregularities: we read here कुश्रि instead of कुश्रि (१०. ५. ५. १.), कावषेय instead of कावषेय (६. ५. २. १५.), गाज्ञस्तम्बायन instead of गाज्ञस्तम्बायन (१०. ४. २. १.), वामकक्षायण instead of वामकक्षायण (७. १. २. ११. १०. ४. १. ११.).

ओम् । संवत्सरो वै यज्ञः प्रजापतिः । तस्यैतद्द्वारं यदमावास्या चन्द्रमा एव द्वारपिधानः ॥१॥ स योऽमावास्यायामग्नीऽआधत्ते । यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स तत एव स्वर्गं लोकमियादेवं तद्योऽमावास्यायामाधत्ते ॥२॥ अथ यो नक्षत्रऽआधत्ते । यथापिहितायां द्वार्यद्वारा पुरं प्रपित्सेत्स जिह्मः पुरः स्यादेवं तद्यो नक्षत्रऽआधत्ते तस्मान्न नक्षत्रऽआदधीत ॥३॥ यदहरेवैषः । न पुरस्तान्न पश्चाद्ददृश्येत तदहरुपवसेत्तर्हि ह्येष इमं लोकमागच्छति तस्मिन्निह वसति ॥४॥ सर्वे देवा वसन्ति । सर्वाणि भूतानि सर्वा देवताः सर्वऽऋतवः सर्वे स्तोमाः सर्वाणि पृष्ठानि सर्वाणि छन्दांसि ॥५॥ सर्वेषु ह वाऽअस्य देवेषु । सर्वेषु भूतेषु सर्वासु देवतासु सर्वेष्वृतुषु सर्वेषु स्तोमेषु सर्वेषु पृष्ठेषु सर्वेषु छन्दःस्वग्नीऽआहितौ भवतो योऽमावास्यायामाधत्ते तस्मादमावास्यायामग्नीऽआदधीत ॥६॥ योऽसौ वैशाखस्यामावास्या तस्यामादधीत सा रोहिण्या सम्पद्यतऽआत्मा वै प्रजा पशवो रोहिण्यात्मन्येवैतत्प्रजायां पशुषु प्रतितिष्ठत्यमावास्या वाऽअग्न्याधेयरूपं तस्मादमावास्यायामेवाग्नीऽआदधीत पौर्णमास्यामन्वारभेतामावास्यायां दीक्षेत ॥७॥ ब्राह्मणम् ॥१॥ ॥

घ्नन्ति वाऽएतद्यज्ञम् । यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुं संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति ॥१॥ तं हत्वा यज्ञम् । अग्नावेव योनौ रेतो भूतं सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते तद्दश ता आहुतीः सम्पादयेद्याभ्यो वषट्क्रियते ॥२॥ अयं वै यज्ञो योऽयं पवते । सोऽयमेक-इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो

दशधाविहितः स एवं कृतैः प्राणैरग्नेर्योनेरधिजायते सैषा दशाक्षरा विराट् सैषा सम्पत्स यज्ञः ॥३॥ अथो ऽअपि नव स्युः । तन्न्यूनां विराजं करोति प्रजननाय न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते सैषा सम्पत्स यज्ञः ॥४॥ अथो ऽअप्येकातिरिक्ता स्यात् । सा प्रजापतिमभ्यतिरिच्यते सैषा सम्पत्स यज्ञः ॥५॥ अथो ऽअपि द्वेऽअतिरिक्ते स्याताम् । द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते सैषा सम्पत्स यज्ञः ॥६॥ अथो ऽअपि तिस्रो ऽतिरिक्ताः स्युः । द्वन्द्वमह मिथुनं प्रजननमथ यज्जायते तत्तृतीयᳪ सैषा सम्पत्स यज्ञः ॥७॥ अथो ऽअपि चतस्रो ऽतिरिक्ताः स्युः । चतस्रो वा ऽइमे ऽवयथैकैवं चतसस्त्रयो वा ऽइमे लोकास्तदिमानेव लोकांस्त्रिभिराप्नोति प्रजापतिर्वा ऽअतीमांल्लोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति सैषा सम्पत्स यज्ञः ॥८॥ स यद्द्वाभ्यामूनं तदूनᳪ । सो ऽयज्ञो यत्पञ्चभिरतिरिक्तं तदतिरिक्तᳪ सो ऽयज्ञः सैषैव दशत्यधि सम्पदेषा विᳪशत्यामेषा सहस्रात् ॥९॥ आजिं वा ऽएते धावन्ति । ये दर्शपूर्णमासाभ्यां यजन्ते स वै पञ्चदश वर्षाणि यजेत तेषां पञ्चदशानां वर्षाणां त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयस्तद्रात्रीराप्नोति ॥१०॥ अथापराणि पञ्चदशैव वर्षाणि यजेत । तेषां पञ्चदशानां वर्षाणां त्रीणि चैव शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति तद्वै संवत्सरमाप्नोति ॥११॥ मर्त्या ह वा ऽअग्रे देवा आसुः । स यदैव ते संवत्सरमापुरथामृता आसुः सर्वं वै संवत्सरः सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यᳪ सुकृतं भवत्यक्षय्यो लोकः ॥१२॥ स आजिसृतामिकः । य एवं विद्वांस्त्रिᳪशतं वर्षाणि यजते तस्मात्तु त्रिᳪशतमेव वर्षाणि यजेत यद्यु दाक्षायणयज्ञी स्यादथो ऽअपि पञ्चदशैव वर्षाणि यजेतात्र ह्येव सा सम्पत्सम्पद्यते द्वे हि पौर्णमास्यौ यजते द्वे ऽअमावास्ये ऽअत्रो ऽएव खलु सा सम्पद्भवति ॥१३॥ ब्राह्मणम् ॥२॥

पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्ट्यैवं यजतऽआमावास्ये-नेष्ट्वादित्यै चरुमनुनिर्वपति तेन यथेष्ट्यैवं यजति ॥१॥ स यत्पौर्णमासेनेष्ट्वा । इ-न्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवताग्निद्ग्नीषोमीयं पौर्णमासꣳ हविर्भ-वति तत्र नेन्द्राय वेति किं चन क्रियतऽएतेनो हास्यैतत्सेन्द्रꣳ हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ यद्विमृधे वेति सर्वा उ हि मृधो नाष्ट्राः पौर्णमासेन हन्ति ॥२॥ अथ यदामावास्येनेष्ट्वा । अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्न यच्चन्द्रमाः स यत्रैष एताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तेनैतदनद्धेव हविर्भव-ति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिः सेयमद्धा सेयं प्रतिष्ठितैतेनो हास्यैतदद्धेव हविर्भवत्येतेन प्रतिष्ठितमेतन्नु तद्यस्मादनुनिर्वपत्यथ यस्मान्नानुनिर्वपेत् ॥३॥ स यत्पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपति सेन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ इन्द्रस्यैव स यत्सर्वो यज्ञ इन्द्रस्यैवैतेनो हास्यैतत्सेन्द्रꣳ हविर्भवत्येतेन सेन्द्रो यज्ञः ॥४॥ अथ यदामावास्येनेष्ट्वा । अदित्यै चरुमनुनिर्वपत्यामावास्यं वा ऽअनुनिर्वाप्यं पौर्णमासेन वाऽइन्द्रो वृत्रमहंस्तस्माऽएतद्वृत्रं जघ्नुषे देवा एतद्ध-विरनुनिरवपन्यदामावास्यं किमनुनिर्वाप्येऽनुनिर्वपेदिति तस्मान्नानुनिर्वपेत् ॥५॥ स यत्पौर्णमासेनेष्ट्वा । अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वप-ति द्विषन्तꣳ ह स भ्रातृव्यं प्रत्युद्यच्छतेऽथ यः पौर्णमासेनैव पौर्णमासीं यजतऽआ-मावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा श्रीर्भवति ॥६॥ पौर्णमासेन वै दे-वाः । पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्रऽएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान्पौर्णमासेनैव पौर्णमासीं यजतऽआमावास्येना-मावास्यां क्षिप्रऽएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनुनिर्वपेद्दद्याद्दक्षिणां नादक्षिणꣳ हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य इति न्वनुनिर्वाप्यस्याथाभ्युदितस्य ॥७॥ ब्राह्मणम् ॥३॥

तद्धैके दृष्ट्वोपवसन्ति । श्वो नोदेतेत्यभ्रस्य वा हेतोरनिर्ज्ञाय वाथोतोपवस-न्त्यथैनमुताभ्युदेति स यद्यगृहीतꣳ हविरभ्युदियात्प्रज्ञातमेव तदेषैव व्रतचर्या य-त्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति प्रतिप्रमुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्ति ॥१॥ तानपराह्णे पर्णशाखयापाकरोति । तद्यथैवादः प्रज्ञातमामावास्यꣳ हविरेव-मेव तद्यद्यु व्रतचर्यां वा नोदाशꣳसेत गृहीतं वा हविरभ्युदियादितरथो तर्हि कुर्यादेतानेव तण्डुलान्त्सुफलीकृतान्कृत्वा स ये ऽणीयाꣳसस्तानग्नये दात्रे ऽष्टाकपा-लं पुरोडाशꣳ श्रपयति ॥२॥ अथ यत्पूर्वेद्युः । -दुग्धं दधि तदिन्द्राय प्रदात्रे ऽथ तदानींदुग्धे विष्णवे शिपिविष्टायैतांस्तण्डुलाञ्छृते चरुꣳ श्रपयति चरुरु ह्येव स यत्र क्व च तण्डुल[illegible]न्ति ॥३॥ तद्यदेवं भवति । एष वै सोमो राजा देवा-नामन्नं यच्चन्द्रमास्तमेतदुपैत्सीत्तमपारात्सीत्तमस्मा ऽअग्निर्दाता ददातीन्द्रः प्रदाता प्रयच्छति तमस्मा ऽइन्द्राग्नी यज्ञं दत्तस्तेनेन्द्राग्निभ्यां दत्तेन यज्ञेन यजते ऽथ यद्विष्णवे शिपिविष्टायेति यज्ञो वै विष्णुरथ यच्छिपिविष्टायेति यमुपैत्सीत्तमपारात्सीत्तच्छि-तमिव यज्ञस्य भवति तस्माच्छिपिविष्टायेति तन्नो यद्धकुर्यात्तद्[illegible]न्नाद[illegible]णꣳ हविः स्यादिति ह्याहुरथ यदेव नोदियादथोपवसेत् ॥४॥ ब्राह्मणम् ॥४॥ ॥

अद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे स ह्येष दिव्यः श्वा स यज[illegible]ानस्य पशूनभ्यवेक्षते तदपशव्यꣳ स्यादप्रायश्चित्तिकृत एतस्माद्ध हैतद्भीषा-वचन्द्रमसादिति ॥१॥ छायामुपसर्पन्ति । एतेनो हैतदुपतपदाचक्षते श्वलुचितमि-त्येतमु हैवैतदाचक्षते ॥२॥ शशश्चान्द्रमस इति । चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति सो ऽपरपक्षे ऽप ओषधीः प्रविशति पशवो वा ऽअप ओषधीरदन्ति तदेनमेताꣳ रात्रिं पशुभ्यः संनयति ॥३॥ सो ऽद्यामावास्येति मन्य-मान उपवसति । अथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथं कुर्या-दित्वा यज्ञपथाद्यजेता३ न यजेता३ इति यजेत हैव न ह[illegible]णां भवति श्वः-श्व

एवैष ज्यायानुदेति स आमावास्यविधेनैवेष्टयेष्टिमनुनिर्वपति तदहर्वैव श्वो वा ॥४॥ तस्य त्रीणि हवीꣳषि भवन्ति । अग्नये पथिकृतेऽष्टाकपालं पुरोडाशमिन्द्राय वृत्रघ्नऽएकादशकपालमग्नये वैश्वानराय द्वादशकपालं पुरोडाशꣳ ॥५॥ स यदग्नये पथिकृते निर्वपति । अग्निर्वै पथः कर्ता स यस्माद्वादो यजमानो यज्ञपथादेति तमग्निः पन्थानमापादयति ॥६॥ अथ यदिन्द्राय वृत्रघ्ने । पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रꣳ हन्ति तस्मादिन्द्राय वृत्रघ्ने ॥७॥ अथ यदग्नये वैश्वानराय । द्वादशकपालं पुरोडाशं निर्वपति यत्र वाऽइन्द्रो वृत्रमहꣳस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानꣳ समदहत्तथोऽएवैष एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रꣳ हत्वा तमग्निना वैश्वानरेण संदहति तदस्य सर्वं पाप्मानꣳ संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्चन पाप्मा परिशिष्यते ॥८॥ तस्यै सप्तदश सामिधेन्यो भवन्ति । उपाꣳशु देवता यजति याः कामयते ता याज्यानुवाक्याः करोत्येवमाज्यभागाविवꣳ संयाज्ये ॥९॥ तिसृधन्वं दक्षिणां ददाति । धन्वना वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यत्तिसृधन्वं दक्षिणां ददाति ॥१०॥ दण्डं दक्षिणां ददाति । दण्डेन वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यद्दण्डं दक्षिणां ददात्येषा न्वादिष्टा दक्षिणा दद्याद्विस्यामप्यन्यथाऽइतरा दक्षिणास्तासां यत्सम्पश्येत सा हैषा पशव्येष्टिस्तयाप्यनभ्युदृष्टो यजेतैव ॥११॥ ब्राह्मणम् ॥५॥ ॥

आपो ह वाऽइदमग्रे सलिलमेवास । ता अकामयन्त कथं नु प्रजायेमहीति ता अश्राम्यंस्तास्तपोऽतप्यन्त तासु तपस्तप्यमानासु हिरण्मयमाण्डꣳ सम्बभूवाजातो ह तर्हि संवत्सर आस तदिदꣳ हिरण्मयमाण्डं यावत्संवत्सरस्य वेला तावत्पर्यप्लवत ॥१॥ ततः संवत्सरे पुरुषः समभवत् । स प्रजापतिस्तस्माडु संवत्सर ऽएव स्त्री वा गौर्वा वडबा वा विजायते संवत्सरे हि प्रजापतिरजायत स इदꣳ

हिरण्मयमाण्डं व्यरुजन्नाह तर्हि का चन प्रतिष्ठास तदेनमिदमेव हिरण्मयमाण्डं यावत्संवत्सरस्य वेलासीत्तावद्विभ्रत्पर्यप्लवत ॥२॥ स संवत्सरे व्याजिहीर्षत् । स भूरिति व्याहरत्सेयं पृथिव्यभवद्भुव इति तदिदमन्तरिक्षमभवत्स्वरिति सासौ द्यौरभवत्तस्मादु संवत्सरऽएव कुमारो व्याजिहीर्षति संवत्सरे हि प्रजापतिर्व्याहरत् ॥३॥ स वाऽएकाक्षरद्व्यक्षराण्येव । प्रथमं वदन्प्रजापतिरवदत्तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन्कुमारो वदति ॥४॥ तानि वाऽएतानि । पञ्चाक्षराणि तान्पञ्चऽर्तूनकुरुत तऽइमे पञ्चऽर्तवः स एवमिमांल्लोकाञ्जातान्संवत्सरे प्रजापतिरभ्युदतिष्ठत्तस्मादु संवत्सरऽएव कुमार उत्तिष्ठासति संवत्सरे हि प्रजापतिरुदतिष्ठत् ॥५॥ स सहस्रायुर्जज्ञे । स यथा नद्यै पारं परापश्येदेवꣳ स्वस्यायुषः पारं पराचख्यौ ॥६॥ सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः । स आत्मन्येव प्रजातिमधत्त स आस्येनैव देवानसृजत ते देवा दिवमभिपद्यासृज्यन्त तद्देवानां देवत्वं यद्दिवमभिपद्यासृज्यन्त तस्मै ससृजानाय दिवेवास तद्वेव देवानां देवत्वं यदस्मै ससृजानाय दिवेवास ॥७॥ अथ योऽयमवाङ् प्राणः । तेनासुरानसृजत तऽइमामेव पृथिवीमभिपद्यासृज्यन्त तस्मै ससृजानाय तमऽइवास ॥८॥ सोऽवेत् । पाप्मानं वाऽअसृक्षि यस्मै मे ससृजानाय तमऽइवाभूदिति तांस्तत एव पाप्मनाविध्यत्ते तत एव पराभवंस्तस्मादाहुर्नैतदस्ति यद्दैवासुरं यदिदमन्वाख्याने त्वदुद्यतऽइतिहासे त्वत्ततो ह्येव तान्प्रजापतिः पाप्मनाविध्यत्ते तत एव पराभवन्निति ॥९॥ तस्मादेतदृषिणाभ्यनूक्तम् । न त्वं युयुत्से कतमच्चनाहर्न तेऽमित्रो मघवन्कश्चनास्ति मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा युयुत्सऽइति ॥१०॥ स यदस्मै देवान्त्ससृजानाय । दिवेवास तदहरकुरुताथ यदस्माऽअसुरान्त्ससृजानाय तमऽइवास ताꣳ रात्रिमकुरुत तेऽअहोरात्रे ॥११॥ स ऐक्षत प्रजापतिः । सर्वं वाऽअत्सारिषं य इमा देवता असृक्षीति स सर्वत्सरोऽभवत्सर्वत्सरो ह वै ना-

ता वाऽएताः । पञ्च देवता एतेन कामप्रेण यज्ञेनायजन्त ता यत्कामा अयजन्त स आभ्यः कामः समार्ध्यत यत्कामो ह वाऽएतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते ॥२०॥ तऽइष्ट्वा प्राचीं दिशमपश्यन् । तां प्राचीमेवाकुर्वत सेयं प्राच्येव दिक्तस्मादिमाः प्रजाः प्राच्यः सर्पन्ति प्राचीᳯ ह्येतामकुर्वतोपिनामितः कुर्वीमहीति तामूर्ध्वमकुर्वतेमां खलूर्ध्वं पश्येमेति सासौ द्यौरभवत् ॥२१॥ अथ दक्षिणां दिशमपश्यन् । तां दक्षिणामेवाकुर्वत सेयं दक्षिणैव दिक्तस्माद्ध दक्षिणत एव दक्षिणा उपतिष्ठन्ते दक्षिणतोऽभ्यवाजन्ति दक्षिणाᳯ ह्येतामकुर्वतोपिनामितः कुर्वीमहीति तं लोकमकुर्वतेमं खलु लोकं पश्येमेति तदिदमन्तरिक्षमभवदेष वै लोकः स यथा हैवेयं प्रतिष्ठाविरस्मिंल्लोके पृथिव्येवमु हैवैषा प्रतिष्ठाविरमुष्मिंल्लोकऽइदमन्तरिक्षᳯ स यदिह सन्नमुं लोकं न पश्यति तस्मादाहुः परोऽक्षमसौ लोक इति ॥२२॥ अथ प्रतीचीं दिशमपश्यन् । तामाशामकुर्वत तस्माद्यत्प्राङ् सृत्वा विन्दतऽएतामिव तेन दिशमेत्याशाᳯ ह्येतामकुर्वतोपिनामितः कुर्वीमहीति ताᳯ श्रियमकुर्वतेमां खलु श्रियं पश्येमेति सेयं पृथिव्यभवच्छ्रीर्वाऽइयं तस्माद्योऽस्यै भूयिष्ठं विन्दते स एव श्रेष्ठो भवति ॥२३॥ अथोदीचीं दिशमपश्यन् । तामपोऽकुर्वतोपिनामितः कुर्वीमहीति तं धर्ममकुर्वत धर्मो वाऽआपस्तस्माद्यदेमं लोकमाप आगच्छन्ति सर्वमेवेदं यथाधर्मं भवत्यथ यदावृष्टिर्भवति बलीयानेव तर्ह्यबलीयस आदत्ते धर्मो ह्यापः ॥२४॥ ता वाऽएताः । एकादश देवताः पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत्त्रयोऽनुयाजाः ॥२५॥ ता एकादशाहुतयः । एताभिर्वाऽआहुतिभिर्देवा इमांल्लोकानजयन्नेता दिशस्तथोऽएवैष एताभिराहुतिभिरिमांल्लोकाञ्जयत्येता दिशः ॥२६॥ चतस्रोऽवान्तरदिशः । तऽएव चत्वारः पत्नीसंयाजा अवान्तरदिशो वै देवाश्चतुर्भिः पत्नीसंयाजैरजयन्नवान्तरदिश उऽएवैष एतैर्जयति ॥२७॥ अथेडा । अन्नाद्यमेवैतया देवा अजयंस्तथोऽएवैष एतयान्नाद्यमेव

त्यत्येषा नु देवत्रा दर्शपूर्णमासयोः सम्पत् ॥२८॥ अथाध्यात्मम् । पञ्चेमे पुरुषे प्राणा ऋते चक्षुर्भ्यां तऽएव पञ्च प्रयाजा चक्षुषीऽआज्यभागौ ॥२९॥ अयमेवावाङ् प्राणः स्विष्टकृत् । स यत्तमभ्यर्धऽइवेतराभ्य आहुतिभ्यो जुहोति तस्मादेतस्मात्प्राणात्सर्वे प्राणा बीभत्सन्तेऽथ यत्स्विष्टकृते सर्वेषाᳪ हविषामवद्यति तस्माद्यत्किं चेमान्प्राणानापद्यतऽएतमेव तत्सर्वᳪ समवैति ॥३०॥ त्रीणि शिश्नानि । तऽएव त्रयोऽनुयाजाः स योऽयं वर्षिष्ठोऽनुयाजस्तदिदं वर्षिष्ठमिव शिश्नं तं वाऽअनवानन्यजेदिति जुहुयात्तथो हास्यैतदमृध्रं भवतीति ॥३१॥ स वै त्र्यङ्गुलमन्यात् । एकᳪ ह्येतस्य पर्वाथ यदपर्वकᳪ स्यात्प्रतृण्णं वैव तिष्ठेल्लम्बेत वा तस्मादेतदुच्च तिष्ठति पद्यते च तस्मात्त्र्यङ्गुलमन्यात् ॥३२॥ द्वौ बाहू द्वाऽऊरू । तऽएव चत्वारः पत्नीसंयाजाः प्रतिष्ठायामेव प्राण इडा यत्तां नाश्नीयाज्जुहोति यत्प्रदह्येव तस्मादयमनवतृण्णः प्राणः ॥३३॥ अस्थ्येव याज्यानुवाक्याः । माᳪसᳪ हविस्तन्मितं छन्दो याज्यानुवाक्यास्तस्मादु समावन्त्येवास्थीनि मेद्यतश्च कृशतश्च भवन्त्यथ यद्भूयऽइव च हविर्गृह्णाति कनीयऽइव च तस्मादु माᳪसान्येव मेद्यतो मेद्यन्ति माᳪसानि कृशतः कृश्यन्ति तेनैतेन यज्ञेन यां कामयते देवतां तां यजति यस्यै हविर्भवति ॥३४॥ ता वाऽएताः । अनपोद्धार्या आहुतयो भवन्ति स यद्धैतासामेकामप्युद्धरेदथैकमङ्गᳪ शृणीयात्प्राणं वा निर्हण्यादेवं हविष्यान्येव हवीᳪष्युप चाक्रियन्तेऽप च क्रियन्ते ॥३५॥ ता वाऽएताः । षोडशाहुतयो भवन्ति षोडशकलो वै पुरुषः पुरुषो यज्ञस्तस्मात्षोडशाहुतयो भवन्ति ॥३६॥ ब्राह्मणम् ॥६॥ ॥

तद्धाऽअदो व्रतोपायनऽउच्यते । यदि नाश्नाति पितृदेवत्यो भवति यद्युऽअश्नाति देवानत्यश्नातीति तदु ह्यश्नीयादिति तत्र स्थापयन्ति ॥१॥ स यदि ग्राम्या ओषधीरश्नाति । पुरोडाशस्य मेधमश्नाति यद्यारण्या ओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सांनाय्यस्य

त्यस्य च मेधमश्नाति यदपः पिबति प्रणीतानां मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति ॥२॥ तदाहुः । किमयनमिति स्वयꣳ हैवैते रात्रीऽअग्निहोत्रं जुहुयात्स यद्धुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्वाऽएषा स यदेवैतामात्मन्नाहुतिं जुहोति तेनोऽएतेषां मेधानां नाश्नाति ॥३॥ एते ह वै रात्री । सर्वा रात्रयः समवयन्ति या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीꣳ समवयन्ति या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावास्याꣳ समवयन्ति स यो हैवं विद्वान्त्स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयꣳ हुतं भवति ॥४॥ ब्राह्मणम् ॥७॥

देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः ॥१॥ अथ देवाः । अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नꣳ ॥२॥ स देवेभ्य आत्मानं प्रदाय । अथैतमात्मनः प्रतिमामसृजत यद्यज्ञं तस्मादाहुः प्रजापतिर्यज्ञ इत्यात्मनो ह्येतं प्रतिमामसृजत ॥३॥ स एतेन यज्ञेन । देवेभ्य आत्मानं निरक्रीणीत स यद्व्रतमुपैति यथैव तत्प्रजापतिर्देवेभ्य आत्मानं प्रायच्छदेवमेवैष एतद्देवेभ्य आत्मानं प्रयच्छति तस्माद्उ संयत एवैताꣳ रात्रिं चिचरिषेद्यथा हविषा चरेदेवꣳ हविर्ह्येष देवानां भवति ॥४॥ अथ यद्यज्ञं तनुते । यज्ञेनैवैतद्देवेभ्य आत्मानं निष्क्रीणीते यथैव तत्प्रजापतिर्निरक्रीणीतैवमथ यद्धविर्निर्वपति हविषैवैतद्यज्ञं निष्क्रीणाति हविरनुवाक्ययानुवाक्यामवदानेनावदानं याज्यया याज्यां वषट्कारेण वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति ॥५॥ स यथाग्रप्रशीर्णो वृक्षः । एवमस्यैष यज्ञो भवत्याहुतिमेवान्वाहार्येण निष्क्रीणाति तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्यो नामैवमु हास्यैष सर्व

एव यज्ञो निष्क्रीतो भवत्येष ह वै यजमानस्यामुष्मिँल्लोकऽआत्मा भवति यद्यज्ञ
स ह सर्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते
॥६॥ ब्राह्मणम् ॥८॥ प्रथमोऽध्याय [६७.] ॥ ॥

त्रिर्ह वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायतेऽथ यं यज्ञ उ-
पनमति स यद्यजते तद्द्वितीयं जायतेऽथ यत्र म्रियते यत्रैनमग्नावभ्यादधति स य-
त्ततः सम्भवति तत्तृतीयं जायते तस्मात्त्रिः पुरुषो जायतऽइत्याहुः ॥१॥ ता वा
ऽएताः । एकादश सामिधेनीरन्वाह दश वाऽइमे पुरुषे प्राणा आत्मैकादशो य-
स्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषस्तदेनं कृत्स्नं जनयत्यथ यदूर्ध्वं सा-
मिधेनीभ्यः सा प्रतिष्ठा तदेनं जनयित्वा प्रतिष्ठापयति ॥२॥ नव प्रसवस्य व्या-
हृतयः । नवेमे पुरुषे प्राणास्तदेनं द्वितीयं जनयत्याश्रावणं प्रत्याश्रावणं सा
प्रतिष्ठाथ यदेवादः सृष्टौ जन्मोच्यते तदेनं तृतीयं जनयति पत्नीसंयाजा एव तत्र
प्रतिष्ठा ॥३॥ त्रिर्हि वै पुरुषो जायते । एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेका-
दशानां त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ॥४॥ ताः पञ्चदश सामिधेन्यः । द्वावाघा-
रौ पञ्च प्रयाजा इडा त्रयोऽनुयाजाः सूक्तवाकश्च शम्योर्वाकश्च तास्त्रयोदशाहुत-
योऽथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥५॥ ताः पञ्चदशाहुतयः
। तासां पञ्चदशानामाहुतीनामेता अनुवाक्या एताः पञ्चदश सामिधेन्य एतासा-
मनुवाक्यानामेता याज्या य एवात्र मन्त्रो यो निगदस्तद्याज्यारूपमेतेनो हास्यैता
आहुतयोऽनुवाक्यवत्यो भवन्त्येताभिः सामिधेनीभिरेताभिराहुतिभिरेता अनुवा-
क्या याज्यवत्यश्चाहुतिमत्यश्च भवन्ति ॥६॥ ब्राह्मणम् ॥ १ [२. १.] ॥ ॥

गायत्रीमनुवाक्यामन्वाह । त्रिपदा वै गायत्री त्रय इमे लोका इमानेवैत-
ल्लोकान्देवाः प्रत्यष्ठापयन् ॥१॥ अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप्चतु-
ष्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥२॥ अ-

ज्ञरो वषट्कारः । द्विपद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्रतिष्ठितेषु प्रत्यष्ठापयन् ॥३॥ सोऽयं द्विपात्पुरुषः । पशुषु प्रतिष्ठित एवमेवैष एतल्लोकान्प्रतिष्ठापयति लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्रतिष्ठितेष्वात्मानं प्रतिष्ठापयत्येवमेष पुरुषः पशुषु प्रतिष्ठितो यऽएवं विद्वान्यजते ॥४॥ अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य एष तपति स एष मृत्युस्तदेनमुपरिष्टान्मृत्योः संस्करोति तदेनमतो जनयति स एतं मृत्युमतिमुच्यते यज्ञो वाऽअस्यात्मा भवति तद्यज्ञ एव भूत्वैतन्मृत्युमतिमुच्यतऽएतेनो हास्य सर्वे यज्ञक्रतवऽ एतं मृत्युमतिमुक्ताः ॥५॥ ॥शतम्५६०० ॥ ॥ अथ यामेतामाहुतिं जुहोति । एषा ह वाऽअस्याहुतिरमुष्मिंल्लोकऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयत्येह्यहं वै तऽइहात्मास्मीति तद्यदाह्वयति तस्मादाहुतिर्नाम ॥६॥ ब्राह्मणम् ॥१० [२. २.] ॥ ॥

ब्रह्म वाऽइदमग्रऽआसीत् । तद्देवानसृजत तद्देवान्त्सृष्ट्वैषु लोकेषु व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे दिव्येव सूर्यम् ॥१॥ अथ येऽत ऊर्ध्वा लोकाः । तद्या अत ऊर्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा हैवेमऽआविर्लोका इमाश्च देवता एवमु हैव तऽआविर्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत् ॥२॥ अथ ब्रह्मैव परार्धमगच्छत् । तत्परार्धं गत्वैक्षत कथं न्विमांल्लोकान्प्रत्यवेयामिति तद्द्वाभ्यामेव प्रत्यवैद्रूपेण चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्योऽअपि नाम नास्ति यद्वेद रूपेणेदꣳ रूपमिति तद्रूपमेतावद्वाऽइदं यावद्रूपं चैव नाम च ॥३॥ ते हैते ब्रह्मणो महतीऽअभ्वे । स यो हैते ब्रह्मणो महतीऽअभ्वे वेद महद्धैवाभ्वं भवति ॥४॥ ते हैते ब्रह्मणो महती यक्षे । स यो हैते ब्रह्मणो महती यक्षे वेद महद्धैव यक्षं भवति तयोरन्यतरज्ज्यायो रूपमेव यद्ध्यपि नाम रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्यायान्ह तस्माद्भवति

यस्माज्ज्यायान्बुभूषति ॥५॥ मर्त्या ह वाऽअग्रे देवा आसुः । स यदेव ते ब्रह्म-
णापुरथामृता आसुः स यं मनसऽआधारयति मनो वै रूपं मनसा हि वेदेदं
रूपमिति तेन रूपमाप्नोत्यथ यं वाचऽआधारयति वाग्वै नाम वाचा हि नाम
गृह्णाति तेनो नामाप्नोत्येतावद्वाऽइदं सर्वं यावद्रूपं चैव नाम च तत्सर्वमाप्नो-
ति सर्वं वाऽअक्षय्यमेतेनो हास्याक्षय्यं सुकृतं भवत्यक्षय्यो लोकः ॥६॥ तद्वा
ऽअद आग्नेय्यामिष्टाऽउच्यते । यथा तदृषिभ्यो यज्ञः प्रारोचत तं यथातन्वत तद्यज्ञं
तन्वानानृषीन्गन्धर्वा उपनिषेदुस्ते ह स्म संनिदधतीदं वाऽअत्यरीरिचन्निदमून-
मक्रन्निति स यदेषां यज्ञः संतस्थेऽथैनांस्तद्दर्शयां चक्रुरिदं वाऽअत्यरीरिचतेदमून-
मकर्तेति ॥७॥ स यदतिरेचयां चक्रुः । यथा गिरिरेवं तदासाथ यदूनं चक्रुर्यथा
श्वभ्राः प्रदरा एवं तदास ॥८॥ स यत्र शम्योराह । तदभिमृशति यज्ञ नमश्च त
ऽउप च यज्ञस्य शिवे संतिष्ठस्व स्विष्टे मे संतिष्ठस्वेति स यदतिरेचयति तन्नम
स्कारेण शमयत्यथ यदूनं करोत्युप चेति तेन तदन्यूनं भवति यज्ञस्य शिवे संति-
ष्ठस्वेति यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयं शमयति स्विष्टे मे संति-
ष्ठस्वेति यद्वै यज्ञस्यान्यूनातिरिक्तं तत्स्विष्टं तेनो तदुभयं शमयत्येवमु हास्यैतेन
यज्ञेनान्यूनातिरिक्तेनैवेष्टं भवति य एवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृ-
शेत्ते ह ते गन्धर्वा आसुः शूर्पं यवमान्कृषिरुद्वालवान्धानान्तर्वान् ॥९॥ ब्राह्म-
णम् ॥११ [२. ३.] ॥ ॥

एष वै पूर्णमाः । य एष तपत्यहरहर्ह्येवैष पूर्णोऽथैष एव दर्शो यच्चन्द्रमा
ददृशऽइव ह्येषः ॥१॥ अथोऽइतरथाहुः । एष एव पूर्णमा यच्चन्द्रमा एतस्य
ह्यनु पूरणं पौर्णमासीत्याचक्षतेऽथैष एव दर्शो य एष तपति ददृशऽइव ह्येषः
॥२॥ इयमेव पूर्णमाः । पूर्णेव हीयमसावेव द्यौर्दर्शो ददृशऽइव ह्यसौ द्यौः
॥३॥ रात्रिरेव पूर्णमाः । पूर्णेव हीयं रात्रिरहरेव दर्शो ददृश इव हीदमहरेषा

नु देवत्रा दर्शपूर्णमासयोर्मीमाᳪसा ॥४॥ अथाध्यात्मम् । उदान एव पूर्णमा उदानेन ह्ययं पुरुषः पूर्यतऽइव प्राण एव दर्शो ददृशऽइव ह्ययं प्राणस्तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्णमासौ ॥५॥ प्राण एवान्नादः । प्राणेन ह्रीदमन्नमद्यतऽउदान एवान्नप्रद उदानेन ह्रीदमन्नं प्रदीयते स यो हैतावन्नादं चान्नप्रदं च दर्शपूर्णमासौ वेदान्नादो हैव भवति प्र ह्यस्माऽअन्नाद्यं दीयते ॥६॥ मन एव पूर्णमाः । पूर्णमिव ह्रीदं मनो वागेव दर्शो ददृशऽइव ह्रीयं वाक्तदेतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ स यदुपवसथे व्रतोपायनीयमश्नाति तेनैतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ प्रीणाति यज्ञेन प्रातर्दैवौ ॥७॥ तदाहुः । यन्न पूर्णमासायेति हविर्गृह्यते न दर्शायेति हविर्गृह्यते न पूर्णमासायानुब्रूहि न दर्शायानुब्रूहि न पूर्णमासं यजन्न दर्शं यजेत्यथ केनास्य दर्शपूर्णमासाविष्टौ भवत इति स यं मनसऽआघारयति मनो वै पूर्णमास्तेन पूर्णमासं यजत्यथ यं वाचऽआघारयति वाग्वै दर्शस्तेनो दर्शं यजत्येतेनो हास्य दर्शपूर्णमासाविष्टौ भवतः ॥८॥ तद्धैके । चरू निर्वपन्ति पौर्णमास्याᳪ सरस्वतेऽमावास्यायाᳪ सरस्वत्याऽएतत्प्रत्यक्षं दर्शपूर्णमासौ यजामहऽइति वदन्तस्तदु तथा न कुर्यान्मनो वै सरस्वान्वाक्सरस्वती स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्णमासाविष्टौ भवतस्तस्मादेतौ चरू न निर्वपेत् ॥९॥ तदाहुः । आगूर्तो वाऽएष भवति यो दर्शपूर्णमासाभ्यां यजते पौर्णमासेन हीष्ट्वा वेदामावास्येन यक्ष्यऽइत्यामावास्येनेष्ट्वा वेद पुनः पौर्णमासेन यक्ष्यऽइति स आगूर्त्येवामुं लोकमेति यदामुं लोकमेति कथमनागूर्ती भवतीति स यदेवैता ऽउभयत्राघारावाघारयति तदेवास्य दर्शपूर्णमासौ संतिष्ठेते स सᳪस्थितयोरेव दर्शपूर्णमासयोरथामुं लोकमेति तथानागूर्ती भवति ॥१०॥ ब्राह्मणम् ॥ १२ [२.४.]

॥ प्रथमः प्रपाठकः ॥ कण्डिकासंख्या ११९ ॥ ॥

अपि ह वाऽएतर्हि । देवेभ्योऽश्वमेधमालभन्ते तदाहुः प्राकृतोऽश्वमेध इती-

तर इत्यूनं स तद्वाऽएष एवाश्वमेधो यच्चन्द्रमाः ॥१॥ तदाहुः । पदे-पदेऽश्वस्य मेध्यस्याहुतिं जुह्वतीति स यत्सायंप्रातरग्निहोत्रं जुहोति द्वे सायमाहुती जुहोति द्वे प्रातस्ताश्चतस्र आहुतयश्चतुष्पाद्वाऽअश्वस्तदस्य पदे-पदऽएवाहुतिर्हुता भवति ॥२॥ तदाहुः । विवृत्तेऽश्वस्येष्टिं निर्वपेदिति वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति सोऽस्मिँल्लोके विवर्तते ॥३॥ स यदामावास्येन यजते । विवृत्तऽएवास्यैतदिष्टिं निर्वपत्यथ यत्पौर्णमासेन यजतेऽश्वमेधमेवैतदालभते तमालभ्य देवेभ्यः प्रयच्छति संवत्सरे वाऽइतरमश्वमेधमालभन्तऽएष वै मासः परिप्लवमानः संवत्सरं करोति तदस्य संवत्सरे-संवत्सरऽएवाश्वमेध आलब्धो भवति ॥४॥ तं वाऽएतम् । मासि-मास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते मासि-मासि हैवास्याश्वमेधेनेष्टं भवत्येतद्ध स्माग्निहोत्रं च दर्शपूर्णमासौ चाश्वमेधमभिसम्पद्येते ॥५॥ ब्राह्मणम् ॥१ [२. ५.] ॥ ॥

शिरो ह वाऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति शिर एवैतद्यज्ञस्य संस्करोति स विद्याच्छिर एव मऽएतत्संस्क्रियतऽइति ॥१॥ प्राण एवास्येध्मः । प्राणेन हीद्ध सर्वमिद्धं यत्प्राणभृन्निमिषद्यदेजति स विद्यादहमेवैष इध्म इति ॥२॥ अनूकमेवास्य सामिधेन्यः । तस्मात्ता ब्रूयात्संतन्वन्निव मेऽनुब्रूहीति संततमिव हीदमनूकं मनश्चैवास्य वाक्चाघारौ सरस्वांश्च सरस्वती च स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वांश्च सरस्वती चेति ॥३॥ पञ्च प्रयाजाः । इमऽएवास्य ते शीर्षण्याः पञ्च प्राणा मुखमेवास्य प्रथमः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः कर्णः पञ्चमोऽथ यच्चतुर्थे प्रयाजे समानयति तस्मादिद्ध श्रोत्रमन्ततः संतृणं चक्षुषीऽआज्यभागौ स विद्याच्चक्षुषीऽएव मऽएतावितिः ॥४॥ अथ य आग्नेयः पुरोडाशः । अयमेवास्य स

दक्षिणोऽर्धो हृदयमेवास्योपाꣳशुयाजः स यत्तेनोपाꣳशु चरन्ति तस्मादिदं गुह्येव हृदयम् ॥५॥ अथ योऽग्नीषोमीयः पुरोडाशः । अयमेवास्य स उत्तरोऽर्ध ऐन्द्रं वा सांना[illegible]राꣳसमेवास्य स्विष्टकृद्विषं प्राशित्रꣳ ॥६॥ स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धं निरकृन्तन्नेवमेवैतस्यैतद्यद्विष्टितं यद्ग्रथितं यद्रूण्यं तन्निष्कृन्तन्ति स [illegible] तत्प्रजापतेराविद्धं निरकृन्तन्नेवमेव मऽइदं यद्विष्टितं यद्ग्रथितं यद्रूण्यं तन्निष्कृन्तन्तीति ॥७॥ उदरमेवास्येडा । तद्यथैवाद इडायाꣳ समवद्यन्त्येवमेवेदं विश्वरूपमन्नमुदरे समवधीयते ॥८॥ त्रयोऽनुयाजाः । इमऽएवास्य तेऽवाञ्चस्त्रयः प्राणा बाहूऽएवास्य सूक्तवाकश्च शम्योर्वाकश्च चत्वारः पत्नीसंया[illegible]ो वै प्रतिष्ठा ऊरू द्वावष्ठीवन्तौ द्वौ पादाविवास्य समिष्टयजुः ॥९॥ ता एकविꣳशतिराहुतयः । द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय उपाꣳशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्ट[illegible] त्रयोऽनुयाजाः सूक्तवाकश्च शम्योर्वाकश्चाथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥१०॥ ता एकविꣳशतिराहुतयः । द्वादश वै मासाः संवत्सरस्य पञ्चऽर्तवस्त्रयो लोकास्तद्विꣳशतिरेष एवैकविꣳशो य एष तपति सैषा ग[illegible] प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति ॥११॥ तद्ध स्मैतदारुणिराह । अर्धमासशो वाऽअहममुनादित्येन सलोको भवामि तामहं दर्शपूर्णमासयोः सम्पदं वेदेति ॥१२॥ तदाहुः । आत्मयाजी श्रेया३न्देवयाजी३ऽइत्यात्मयाजीति ह ब्रूयात्स ह वाऽआत्मयाजी यो वेदेदं मेऽनेनाङ्गꣳ संस्क्रियतऽइदं मेऽनेनाङ्गमुपधीयतऽइति स यथाहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसम्भवति ॥१३॥ अथ ह स देवयाजी यो वेद । देवानेवाहमिदं यजे देवान्त्सपर्यामीति स यथा श्रेयसे पापीयान्बलिꣳ हरेद्वैश्यो वा राज्ञे बलिꣳ हरेदेवꣳ स स ह न तावन्तं लोकं जयति या-

वत्समितरः ॥१४॥ ब्राह्मणम् ॥२ [२. ६.] ॥ ॥

संवत्सरो यज्ञः । स यो ह वै संवत्सरो यज्ञ इति वेदान्ते हैवास्य संवत्सरस्येष्टं भवत्यथो यत्किं च संवत्सरे क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥१॥ ऋतव ऋत्विजः । स यो ह वाऽऋतव ऋत्विज इति वेदान्ते हैवास्यर्तूनामिष्टं भवत्यथो यत्किं चर्तुषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥२॥ मासा हवीꣳषि । स यो ह वै मासा हवीꣳषीति वेदान्ते हैवास्य मासानामिष्टं भवत्यथो यत्किं च मासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥३॥ अर्धमासा हविष्यात्राणि । स यो ह वाऽअर्धमासा हविष्यात्राणीति वेदान्ते हैवास्यार्धमासानामिष्टं भवत्यथो यत्किं चार्धमासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥४॥ अहोरात्रे परिवेष्ट्री । स यो ह वाऽअहोरात्रे परिवेष्ट्रीऽइति वेदान्ते हैवास्याहोरात्रयोरिष्टं भवत्यथो यत्किं चाहोरात्रयोः क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥५॥ इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया वायुस्तृतीयान्तरिक्षं चतुर्थी द्यौः पञ्चम्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वाऽइदꣳ सर्वꣳ समिन्धतऽएताभिरिदꣳ सर्वꣳ समिद्धं तस्मात्सामिधेन्यो नाम ॥६॥ स वै त्रिः प्रथमामन्वाह । स यत्प्रथममन्वाह प्राचीं तेन दिशं जयति यद्द्वितीयं दक्षिणां तेन दिशं जयति यत्तृतीयमूर्ध्वामेव तेन दिशं जयति ॥७॥ त्रिर्वेवोत्तमामन्वाह । स यत्प्रथममन्वाह प्रतीचीं तेन दिशं जयति यद्द्वितीयमुदीचीं तेन दिशं जयति यत्तृतीयमिमामेव तेन प्रतिष्ठां जयत्येवमु हाभिरिमांल्लोकाञ्जयत्येता दिशः ॥८॥ ऋतमेव पूर्व आघारः । सत्यमुत्तरोऽव ह वाऽऋतसत्ये रुन्द्धेऽथो यत्किं चर्तसत्याभ्यां जय्यꣳ सर्वꣳ हैव तज्जयति ॥९॥ त्विषिरेव प्रथमः प्रयाजः । अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसं चतुर्थोऽन्नाद्यं पञ्चमः ॥१०॥ स प्रथमं प्र-

याजमनुमन्त्रयेत । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयं ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमं त्विषिमान्ह वाऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य एवमेतद्वेद ॥११॥

एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कᳪ स्विदेवापरीषु महानागमिवाभिसᳪसारं दिदृक्षितारो य एवमेतत्प्रयाजानां यशो वेदितेति ॥१२॥ भूतमेव पूर्व आज्यभागः । भविष्यदुत्तरोऽव ह वै भूतं च भविष्यच्च रुन्द्धेऽथो यत्किं च भूतेन च भविष्यता च जय्यᳪ सर्वᳪ हैव तज्जयति ॥१३॥ ब्रह्माग्नेयः पुरोडाशः । स यो ह वै ब्रह्माग्नेयः पुरोडाश इति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किं च ब्रह्मणा जय्यᳪ सर्वᳪ हैव तज्जयति ॥१४॥ क्षत्रमुपाᳪशुयाजः । स यो ह वै क्षत्रमुपाᳪशुयाज इति वेदाव ह क्षत्रᳪ रुन्द्धेऽथो यत्किं च क्षत्रेण जय्यᳪ सर्वं हैव तज्जयति तद्यदुपाᳪशुयाजं कुर्वन्त्येके नैके तस्मादुच्चैश्चोपाᳪशु च क्षत्रायाचक्षते ॥१५॥ विडुत्तरः पुरोडाशः । स यो ह वै विडुत्तरः पुरोडाश इति वेदाव ह विशᳪ रुन्द्धेऽथो यत्किं च विशा जय्यᳪ सर्वᳪ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश उपाᳪशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते ॥१६॥ राष्ट्रᳪ सांनाय्यᳪ । स यो ह वै राष्ट्रᳪ सांनाय्यमिति वेदाव ह राष्ट्रᳪ रुन्द्धेऽथो यत्किं च राष्ट्रेण जय्यᳪ सर्वᳪ हैव तज्जयति तद्यत्संनयन्त्येके नैके तस्माद्राष्ट्रᳪ सं चैति वि च ॥१७॥ तपः स्विष्टकृत् । स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किं च तपसा जय्यᳪ सर्वᳪ हैव तज्जयति ॥१८॥ लोकः प्राशित्रᳪ । स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकᳪ रुन्द्धेऽथो यत्किं च लोकेन जय्यᳪ सर्वᳪ हैव तज्जयति नो ह लवेन लोकाच्च्यवते लवेन ह वाऽअमुष्मिँल्लोके लोकाच्च्यवतेऽथ य एवं वेद न ह बहु चन पापं कृत्वा लोकाच्च्यवते ॥१९॥ इडा । स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धाᳪ रुन्द्धेऽथो यत्किं च श्रद्धया

न्नाद्य सर्वꣳ हैव तज्जयति ॥२०॥ अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय उल्कुषी तृतीयः ॥२१॥ स प्रथममनुयाजमनुमन्त्रयेत । अशन्यमुं जहीति यं द्विष्याद्ध्रादुन्यमुं जहीति द्वितीयमुल्कुष्यमुं जहीति तृतीयम् ॥२२॥ स य एष द्विषं म्रियते । अशनिर्ह तमनुयाजो हन्त्यथ यो विस्रवन्निवाऽइव ह्रादुनिर्ह तमनुयाजो हन्त्यथ योऽभ्युष्टमिवाऽइवोल्कुषी ह तमनुयाजो हन्ति ॥२३॥ सैषा यज्ञमेनिः । एतया वै मेन्या देवा असुरान्पराभावयां चक्रुस्तथोऽएवैवंविद्यजमानः पाप्मानं द्विषन्तं भ्रातृव्यं पराभावयति ॥२४॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्यन्तः स्याद्ध्रादुन्यन्त उल्कुष्यन्तस्तस्माद्धि देवानां यज्ञ इडान्तो वैव शम्य्वन्तो वा ॥२५॥ प्रयाजैर्वै देवाः । स्वर्गं लोकमायंस्तानसुरा अन्वाजिगाꣳसंस्ताननुयाजैः प्रत्यौहंस्तद्यदनुयाजा इज्यन्ते पाप्मानमेव तद्द्विषन्तं भ्रातृव्यं यजमानः प्रत्यूहति ॥२६॥ प्राणा वै प्रयाजाः । अपाना अनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपं प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्तऽउपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥२७॥ सꣳस्था सूक्तवाकः । स यो ह वै सꣳस्था सूक्तवाक इति वेदाव ह सꣳस्थाꣳ रुन्द्धेऽथो यत्किं च सꣳस्थया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति वयसः सꣳस्थाम् ॥२८॥ प्रतिष्ठा शम्योर्वाकः । स यो ह वै प्रतिष्ठा शम्योर्वाक इति वेदाव ह प्रतिष्ठाꣳ रुन्द्धेऽथो यत्किं च प्रतिष्ठया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति प्रतिष्ठाम् ॥२९॥ ते देवाः । एतान्पत्नीः याजान्पश्चात्पर्यौहन्त मिथुनमेवैतदुपरिष्टाद्दधत प्रजात्यै तद्यत्पत्नीसंयाजा इज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाꣳ ह वै प्रजातिमनु प्रजायते मिथुनेन-मिथुनेन ह प्रजायते य एवमेतद्वेद ॥३०॥ अन्नꣳ समिष्टयजुः । स यो ह वा ऽअन्नꣳ समिष्टयजुरिति वेदाव हान्नꣳ रुन्द्धेऽथो यत्किं चान्नेन जय्यꣳ सर्वꣳ हैव तज्जयति ॥३१॥ संवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त आग्नीध्रस्तस्मा-

द्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपं ग्रीष्मोऽध्वर्युस्तप्त-इव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रा-
मति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न-इवोपब्दिः क्रियते शरद्ब्रह्मा त-
स्माद्यदा सस्यं पच्यते ब्रह्मण्वत्यः प्रजा इत्याहुर्हेमन्तो होता तस्माद्धेमन्वषट्कृ-
ताः पशवः सीदन्त्येता ह वाऽएनं देवता याजयन्ति स यद्येनमेषावीरा याजयेयु-
रेता एव देवता मनसा ध्यायेदेता ह्येवैनं देवता याजयन्ति ॥३२॥ अथ ह्येषैव
तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि
तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायां ह वाऽअमुष्मिंल्लोकऽआदधति
यतरद्यंस्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य एवं वेदास्मिन्हैव लोके
तुलामारोहत्यत्यमुष्मिंल्लोके तुलाधानं मुच्यते साधुकृत्या हैवास्य यच्छति न पा-
पकृत्या ॥३३॥ ब्राह्मणम् ॥३ [२. ७.] ॥ द्वितीयोऽध्यायः [६८.] ॥ ॥

वाग्घ वाऽएतस्याग्निहोत्रस्याग्निहोत्री । मन एव वत्सस्तदिदं मनश्च वाक्च
समानमेव सन्नानेव तस्मात्समान्या रज्ज्वा वत्सं च मातरं चाभिदधति तेज एव
श्रद्धा सत्यमाज्यम् ॥१॥ तद्धैतज्जनको वैदेहः । याज्ञवल्क्यं पप्रच्छ वेत्थाग्निहोत्रं
याज्ञवल्क्या३ऽइति वेद सम्राडिति किमिति पय एवेति ॥२॥ यत्पयो न स्यात् ।
केन जुहुया इति व्रीहियवाभ्यामिति यद्व्रीहियवौ न स्यातां केन जुहुया इति
या अन्या ओषधय इति यदन्या ओषधयो न स्युः केन जुहुया इति या आरण्या
ओषधय इति यदारण्या ओषधयो न स्युः केन जुहुया इति वानस्पत्येनेति यद्वा-
नस्पत्यं न स्यात्केन जुहुया इत्यद्भिरिति यदापो न स्युः केन जुहुया इति ॥३॥
स होवाच । न वाऽइह तर्हि किं चनासीदथैतदहूयतैव सत्यं श्रद्धायामिति
वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशतं ददामीति होवाच ॥४॥ तदप्येते श्लोकाः ।
किं स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः कथं स्विदस्य काव्यं कथं संततो
ऽग्निभिरिति कथं स्विदस्यानपप्रोषितं भवतीत्येवैनदाह ॥५॥ यो जविष्ठो भु-

वनेषु । स विद्वान्प्रवसन्विदे तथा तदस्य काव्यं तथा संततोऽग्निभिरिति मन एवैतदाह मनसैवास्यानपप्रोषितं भवतीति ॥६॥ यत्स दूरं परेत्य । अथ तत्र प्रमाद्यति कस्मिंस्तास्य हुताहुतिर्गृहे यामस्य जुह्वतीति यत्स दूरं परेत्याथ तत्र प्रमाद्यति कस्मिन्नस्य साहुतिर्हुता भवतीत्येवैतदाह ॥७॥ यो जागार भुवनेषु । विश्वा जातानि योऽबिभः तस्मिंस्तास्य हुताहुतिर्गृहे यामस्य जुह्वतीति प्राणमेवैतदाह तस्मादाहुः प्राण एवाग्निहोत्रमिति ॥८॥ ब्राह्मणम् ॥ ४ [३. १.] ॥॥

यो ह वाऽअग्निहोत्रे । षणिमथुनानि वेद मिथुनेन-मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिर्यजमानश्च पत्नी च तदेकं मिथुनं तस्मादस्य पत्नीवदग्निहोत्रं स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकं मिथुनं तस्मादस्य पुंवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकं मिथुनं स्रुक्च स्रुवश्च तदेकं मिथुनमाहवनीयश्च समिच्च तदेकं मिथुनमाहुतिश्च स्वाहाकारश्च तदेकं मिथुनमेतानि ह वाऽअग्निहोत्रे षणिमथुनानि तानि य एवं वेद मिथुनेन-मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥१॥ ब्राह्मणम् ॥५ [३. २.] ॥॥

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिं समिधं नाहराताऽइति तस्माद्यां रात्रिं ब्रह्मचारी समिधं नाहरत्यायुष एव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥१॥ दीर्घसत्त्रं वाऽएष उपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया यां स्नास्यन्त्सोदयनीयाथ या अन्तरेण सत्त्या एवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन् ॥२॥ चतुर्धा भूतानि प्रविशति । अग्निं पदा मृत्युं पदाचार्यं पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥३॥ स यदग्नये समिधमाहरति । य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति ॥४॥ अथ यदात्मानं दरिद्रीकृत्येव । अह्रीर्भूत्वा

भिक्षते य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति ॥५॥ अथ यदाचार्यवचसं करोति । यदाचार्याय कर्म करोति य एवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति ॥६॥ न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षां जयत्यप ज्ञातीनामशनायामप पितॄणां स एवं विद्वान्यस्या एव भूयिष्ठं श्लाघेत तां भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यां भिक्षितव्यां न विन्देदपि स्वामेवाचार्यजायां भिक्षेताथो स्वां मातरं नैनं सप्तम्यभिक्षितातीयात्तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा आविशन्ति यथा ह वाऽअग्निः समिद्धो रोचतऽएवं ह वै स स्नात्वा रोचते य एवं विद्वान्ब्रह्मचर्यं चरति ॥७॥ ब्राह्मणम् ॥ ६ [३. ३.] ॥ तृतीयोऽध्यायः [६१.] ॥ ॥

उद्दालको हारुणिः । उदीच्यान्वृतो धावयां चकार तस्य निष्क उपाहित आसैतद्ध स्म वै तत्पूर्वेषां वृतानां धावयतामेकधनमुपाहितं भवत्युपवल्हाय बिभ्यतां तान्होदीच्यानां ब्राह्मणान्भीर्विवेद ॥१॥ कौरुपञ्चालो वाऽअयं ब्रह्मा ब्रह्मपुत्रः । यद्वै नोऽयमर्धं न पर्याददीत हन्तैनं ब्रह्मोद्यमाह्वयामहाऽइति केन वीर्येणेति स्वैदायनेनेति शौनको ह स्वैदायन आस ॥२॥ ते होचुः । स्वैदायन त्वया वीर्येणेमं प्रतिसंयतामहाऽइति स होवाचोपात्र खलु रमताहं न्वेनं वेदानीति तं हाभिप्रपेदे तं हाभिप्रपन्नमभ्युवाद स्वैदायना३ऽइति हो३ गौतमस्य पुत्रेतीतरः प्रतिशुश्राव तं ह तत एव प्रष्टुं दध्रे ॥३॥ स वै गौतमस्य पुत्र वृतो जनं धावयेत् । यो दर्शपूर्णमासयोः पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान्षट् प्राजापत्यानष्टाऽउपरिष्टादाज्यभागान् ॥४॥ स वै गौतमस्य पुत्र वृतो जनं धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा अदन्तका जायन्ते यस्माद्दासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संतिष्ठन्ते यस्मादासां पुनरुत्तमे

स्मादाप्रियो नाम तस्माद्ध पशुं संज्ञप्तं ब्रूयाद्ध्रितां नु मुहूर्तमिति स यावन्तमश्वमे-
धेनेष्ट्वा लोकं जयति तावन्तमेतेन जयति ॥५॥ तं प्राची दिक् । प्राणेत्यनुप्राणा-
त्प्राणमेवास्मिंस्तद्दधात्तं दक्षिणा दिग्व्यानेत्यनुप्राणाद्व्यानमेवास्मिंस्तद्दधात्तं प्रती-
ची दिगपानेत्यनुप्राणादपानमेवास्मिंस्तद्दधात्तमुदीची दिगुदानेत्यनुप्राणादुदानमेवा-
स्मिंस्तद्दधात्तमूर्ध्वा दिक्समानेत्यनुप्राणात्समानमेवास्मिंस्तद्दधात्तस्माद्ध पुत्रं जात-
मकृत्तनाभिं पञ्च ब्राह्मणान्ब्रूयादित्थेनमनुप्राणितेति यद्यु तान्न विन्देदपि स्वय-
मेवानुपरिक्राममनुप्राण्यात्स सर्वमायुरेत्या हैव जरसो जीवति ॥६॥ स प्राणमे-
वाग्नेरादत्त । तस्मादेष नानुपध्मातो नानुपज्वलितो ज्वलत्यात्तो ह्यस्य प्राण आ
ह वै द्विषतो भ्रातृव्यस्य प्राणं दत्ते य एवं वेद ॥७॥ रूपमेव वायोरादत्त । त-
स्मादेतस्य लेलायत इवैवोपशृण्वन्ति न त्वेनं पश्यन्त्यात्तं ह्यस्य रूपमा ह वै
द्विषतो भ्रातृव्यस्य रूपं दत्ते य एवं वेद ॥८॥ चित्तमेव पुरुषस्यादत्त । तस्मादा-
हुर्देवचित्तं त्वावतु मा मनुष्यचित्तमित्यात्तं ह्यस्य चित्तमा ह वै द्विषतो भ्रातृ-
व्यस्य चित्तं दत्ते य एवं वेद ॥९॥ चक्षुरेव पशूनामादत्त । तस्मादेते चाकश्य-
माना इवैव न जानन्त्यथ यदैवोपजिघ्रन्त्यथ जानन्त्यात्तं ह्येषां चक्षुरा ह वै द्वि-
षतो भ्रातृव्यस्य चक्षुर्दत्ते य एवं वेद ॥१०॥ भामेव चन्द्रमस आदत्त । तस्मादे-
तयोः सदृशयोः सतोर्नितरां चन्द्रमा भात्यात्ता ह्यस्य भा आ ह वै द्विषतो भ्रा-
तृव्यस्य भां दत्ते य एवं वेद त्विषिमादत्त तस्मादादित्यः ॥११॥ ब्राह्मणम् ॥१३
[८. ३.] ॥ ॥

केशिगृहपतीनामु ह । सम्राड्दुघां शार्दूलो जघान स ह सत्त्रिण आ-
मन्त्रयां चक्रे केह प्रायश्चित्तिरिति ते होचुर्नेह प्रायश्चित्तिरस्ति खण्डिक एवौ-
द्भारिरस्य प्रायश्चित्तिं वेद स उ तऽएतादृक्चैव कामयतेऽतश्च पापीय इति ॥१॥
स होवाच । संयन्तोतर्युङ्क्ष्व मे स्यत्स्यामि स यद्यदह मे वक्ष्यति समाप्स्यामि यद्यु

मा मारयिष्यसि यज्ञं विकृष्टमनु विक्रन्त्यऽइति ॥२॥ स ह युक्त्वा ययावाजगाम । तꣳ ह प्रतिख्यायोवाच यन्न्वेतान्येवाजिनानि मृगेषु भवन्त्यथैषां पृष्टीरपिशीर्य पचामहे कृष्णाजिनं मे ग्रीवास्वाबद्धमित्येव मेदमधृषोऽभ्यवस्यन्त्तू३मिति ॥३॥ नेति होवाच । सम्राड्दुघां वै मे भगवः शार्दूलोऽवधीत्स यद्यह मे वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञं विकृष्टमनु विक्रन्त्यऽइति ॥४॥ स होवाच । ग्रामन्त्रणीयान्वामन्त्रयाऽइति तान्हामन्त्र्योवाच यद्यस्मै वक्ष्याम्यमुष्यैवेदं प्रजा भविष्यति न मम लोकी वहं भविष्यामि यद्यु वाऽग्रस्मै न वक्ष्यामि ममैवेदं प्रजा भविष्यति नामुष्य लोकी वसी भविष्यतीति ते होचुर्मा भगवो वोचोऽयं वाव क्षत्रियस्य लोक इति स होवाच वक्ष्याम्येवामूर्वै रात्रयो भूयस्य इति ॥५॥ तस्माऽउ हैतदुवाच । स्पृतीर्हैवान्यामाजतेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्यात्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहाद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेत्यथान्यामाजतेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति ततो हैव स उत्ससाद केशिनीर्हैवेमा ग्रप्येतर्हि प्रजा जायन्ते ॥६॥ ब्राह्मणम् ॥१४ [८.४.] ॥ चतुर्थः प्रपाठकः ॥ कण्डिकासंख्या१०२ ॥ ग्रष्टमोऽध्यायः [७४.] ॥ ॥ ग्रस्मिन्काण्डे कण्डिकासंख्या४३७ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणेऽष्टाध्यायीनामेकादशं काण्डं समाप्तम् ॥११॥॥

## EXTRACTS FROM THE COMMENTARY OF SÂYANÂCÂRYA.

इत्थं काण्डदशात्मकः शतपथपूर्वभागो व्याख्यातस्तत्र प्रथमद्वितीयकाण्डाभ्यां दर्शपूर्णमासाधानाग्निहोत्रतदुपस्थानादीनि चातुर्मास्यान्तानि प्रतिपादितानि तृतीयचतुर्थाभ्यामेकाहाहीनसत्त्रात्मकसकलसोमयागप्रकृतिभूतश्चतुःसंस्थो ज्योतिष्टोमः प्रत्यपादि पञ्चमेन वाजपेयराजसूयौ षष्ठादिकाण्डचतुष्टयेन प्रकृतिविकृतिभूतसोमयागाश्रितमग्निचयनाख्यं (? योमिया Cod.) कर्म विस्तरेण प्रतिपादितम् दशमे तत्प्रशंसार्थमुखेन तदाश्रितान्युपशमनानि विहितानीति

पूर्वभागार्थसंक्षेपः ॥ उत्तरभागे अष्टाध्यायिसौत्रामण्यश्वमेधाख्यास्त्रयः काण्डाश्चतुर्थस्तु ब्रह्मप्रतिपादको बृहदारण्यकाख्यः (कार्थः Cod.) ॥ तत्र प्रथमे काण्डे पूर्वोक्तमाधानादिकं कर्मानूद्य प्रागविहितकालाद्यवशिष्टाङ्गकलापविधिः तत्प्रशंसा च क्रियते । तत्र तावदग्निहोत्रदर्शपूर्णमासाग्निष्टोमानां मूलप्रकृतीनां तद्विकृतीनां मासाग्निहोत्रसौर्ययागविश्वजिदादीनां सर्वेषां श्रौतकर्मणां गार्हपत्याद्यग्निसाध्यत्वात्तस्य चाधानपवमानेष्टिभ्यामग्निसिद्धिरिति न्यायेन अनाधानानिष्पाद्यत्वादाधानमेवादौ वक्तव्यम् । तस्य च स्वाभिमतं कालं विवृण्वन्यज्ञादीन्संवत्सराद्यात्मना निरूपयति । दर्शपूर्णमासादियज्ञात्मकः प्रजापतिः । ओश्रावयेत्यादिसप्तदशाक्षरसाध्यत्वाद्यज्ञस्य प्रजापतित्वम् संवत्सरस्यापि सप्तदशावयवत्वं यस्मात् प्रजापतेस्तस्य च तादात्म्यम् । प्रतिपदादिषु तिथिषु मध्ये यस्यां तिथौ अमा सूर्येण सह चन्द्रो वसति सामावास्या ॥१॥ गार्हपत्याहवनीयाख्यौ अग्नी आदधीत आयतनेषु विधानेन स्थापयेत् । तदपिधायकचन्द्रादर्शनेन विवृतत्वात् । स्वर्गं लोकम् लोक्यतऽइति लोकः सुष्ठु अर्ज्यते शोभनेनार्जनेन गम्यतऽइति वा स्वर्गः ॥२॥ चन्द्रदर्शनेनामावास्यारूपस्य द्वारस्य पिहितत्वात् ॥३॥ तस्मिन्भूम्यां वसति सति तदुपजीविनो देवाद्याः इमं लोकमधिवसन्ति ॥४॥ विशाखानक्षत्रयुक्ता पौर्णमासी यस्मिन्मासे स वैशाखः । रोहिण्या सम्पद्यते रोहिणीनक्षत्रयुक्ता भवति । वैशाख्यां पौर्णमास्यां तावद्विशाखा नक्षत्रं ततः पञ्चदशसु नक्षत्रेषु परिगणितेषु अमावास्यायां रोहिणी भवति । अमावास्यायां पवमानेष्टिभिः सहाधाने परिसमाप्ते यद्यपि दर्शयागः प्राप्तावसरस्तथाप्यागामिन्यां पौर्णमास्यामन्वारभेत अन्वारम्भणीयेष्टिं कृत्वा पूर्णमासयागेनेष्ट्वा आगामिन्याममावास्यायां दर्शयागमपि कृत्वा तस्यामेवामास्यायां दीक्षेत सोमयागं प्रारभेत ॥७॥१॥१॥

एवमाधानस्य अमावास्यालक्षणं प्रारम्भकालं नियम्य (? लानेमम्य Cod.) दर्शपूर्णमासयोरप्युपवसथकालं निर्णेष्यन् आदौ च तत्रत्यानामाहुतीनां संख्याविशेषमुपजीव्य स्तोतुमुपोद्घातयति (ठयति Cod.) ॥१॥ दशसंख्यापन्नो वर्गो दशत् वषट्कारप्रदानास्ता आहुतीर्दशतः दशकसंघातरूपाः सम्पादयेत् न न्यूनाधिकसंख्याः ॥२॥ तत्र दर्शपूर्णमासयोः प्रथमं पञ्च (यत्र Cod.) प्रयाजास्ततो द्वावाज्यभागौ आग्नेयोऽग्नीषोमीय उपांशुयाजश्चेति पौर्णमास्यां त्रीणि दर्शे तु (दर्शो नु Cod.) आग्नेयोऽष्टाकपालो वैष्णव उपांशुयाज ऐन्द्रं पय इति त्रीणि एवं दश वषट्कारप्रदाना आहुतयः पशुसोमयोरित्यनेन न्यायेन दशसंख्यासम्पत्तिर्द्रष्टव्या । असोमयाजिनस्तु पौर्णमासे अग्नीषोमीययागो नास्ति अतस्तदपेक्षया नवसंख्योपजीवनेन स्तौति ॥४॥ प्रधानानन्तरभाविस्विष्टकृद्यागापेक्षया स्तौति । वषट्काराहुतिदशकानन्तरं स्विष्टकृद्यागरूपा एका स्विष्टकृदाहुतिरूपा अतिरिक्ता ॥५॥ इत्थमिष्टिविषये स्विष्टकृतः सम्पत्तिमभिधाय पशुयागविषयो विशेषो विद्यतऽइत्यभिप्रेत्य प्रतिपादयति । तत्र हि वनस्पतियागः स्विष्टकृद्यागश्चेति द्वे आहुती अधिके स्याताम् ॥६॥ दर्शपूर्णमासयोरनुयाजसंख्योपजीवनेन सम्पत्तिमाह अनुयाजयागरूपास्तिस्र आहुतयः प्रकृतादाहुतिदशकादधिकाः ॥७॥ स्विष्टकृदनुयाजान्सम्भूय चतस्र आहुतयोऽतिरिक्ता भवेयुः । यद्वा सोमः त्वष्टा देवपत्न्योऽग्निर्गृहपतिरिति चत्वारः पत्नीसंयाजास्तेऽप्युक्ताद्दशकादतिरिच्यन्ते ॥८॥ विंशतिप्रभृतिषु दशकेषु आ सहस्रात् एकैकं दशकं विभज्य एषा विराट्सम्पत्तिर्ज्ञातव्या ॥९॥ यावज्जीवं दर्शपूर्णमासाभ्यां

यजेतेत्येकः पक्षः त्रिंशतं वा वर्षाणीति पक्षान्तरम् तदिदानीं प्रतिपाद्यते ॥१०॥ अतः संवत्सरप्राप्तिरेवामृतत्वप्राप्तिः ॥११॥ स च आग्निसृतां जगद्व्यापारनिर्वाहार्थमुदयाचलादिस्थानविशेषं नियमेन प्राप्नुवतां सूर्यादीनां मध्ये स्वयमप्येको भवति । संवत्सररूपप्राप्तिजननाय त्रिंशद्वर्षपर्यन्तं यजेत । दर्शपूर्णमासारम्भकाले आवृत्तिगुणविशिष्टौ तावारभमाणो दाक्षायणयज्ञयाजी । एवं प्रतिपर्व द्विरावृत्त्यानुष्ठिते सति त्रिंशद्वर्षानुष्ठानेन या सम्पद्भवति अत्र दाक्षायणयज्ञयागे पञ्चदशवर्षानुष्ठानेऽपि सा सम्पत्सिध्यति ॥१३॥२॥१॥

पौर्णमासयागे दर्शयागे च वृत्तक्रमेणानुनिर्वाप्यं हविर्विधत्ते ॥ अनु पौर्णमासयागानन्तरमैकादशकपालं पुरोडाशं निर्वपेत् तेन हविषा यथेष्टि येन प्रकारेण प्रयोगकलापेन पूर्णमासेष्टिः क्रियते एवमनेनैव प्रकारेण यजेत ॥१॥ अथानुनिर्वाप्याभावपक्षमभिधत्ते अथ यस्मादिति ॥३॥ उक्तस्य प्रयोजनस्यानुनिर्वाप्यमन्तरेणापि सिद्धिं वक्तुं तदनुवदति स यदिति ॥४॥ इममेव पक्षमुपोद्बलयितुमनुनिर्वाप्यपक्षे दोषमाह ॥६॥ इत्थं पक्षद्वयप्रतिपादनेनानुनिर्वाप्यस्य हविषो विकल्पोऽयं षोडशिग्रहणवत्सिद्धः स यदीति । दर्शपूर्णमासयोरेव दक्षिणा न त्वनुनिर्वाप्यस्य हविषः तस्य बहिस्तन्त्रवर्तित्वेन प्रयाजादिवैलक्षण्यात् । वर्तिष्यमाणप्रयोगजातस्य हविषो नैमित्तिकप्रयोग इतः परं विक्रियतऽइति वृत्तवर्तिष्यमाणसौकर्यपरिहारार्थो विभागनिर्देशः ॥७॥३॥१॥

अभ्युदयनिमित्तं कर्म विधित्सुस्तस्य निमित्तस्य सम्भवमादौ कथयति । चतुर्दशीमिश्रितपर्वणि प्रभातसमये प्राच्यां दिशि चन्द्रं दृष्ट्वा । श्वः परस्मिन्दिवसे यागकाले चन्द्रो नोदेष्यति । मेघचरणनिमित्तात् तिथिनिर्णयमज्ञात्वा वा अकाले यथोपवसथं कर्माग्न्यन्वाधानादिकं कोति अथानन्तरं यागदिवसे एनं यजमानं चन्द्रोऽभ्युदेति चतुर्दशीमिश्रतया चन्द्रकलादर्शनं तस्य भवति । परदिवसे हविर्निर्वापात्पूर्वमकाले कर्म प्रक्रान्तमिति यदि जायेत तदा प्रज्ञातमेव तावत्तं प्रयोगजातं कृतमिति निश्चित्य ततस्तूष्णीमासीत एषा वक्ष्यमाणैव व्रतचर्या व्रतस्य नियमस्याचरणं कार्यम् । प्रातर्दोहार्थं येऽपाकृता वत्सास्तान्पुनर्मातृभिः संसृजेयुः एवं कृत्वा पुनः सायंदोहार्थे तान्मातृभ्यः पृथक्कुर्युः ॥१॥ उक्तव्रतचर्याकरणाशक्तौ हविर्निर्वापोत्तरकाले च कर्तव्यमुपदिशति यद्यु इति । नेङ्केत् आङः शसिरिक्रायाम् (धा° १६. २८.) ॥२॥ यस्मिन्कस्मिन्दधनि चोरे वा तण्डुलाः प्रक्षिप्यन्ते चरुरेव स भवति ॥३॥ उपाधुमैकत् । तमपारात्सीत् अकाले कर्मणः प्रारम्भादपराद्धं (भातपराधं Cod.) प्रच्युतमकार्षीत् । तेनान्नभूतस्य चन्द्रमसो ग्रहणाभावान्निरुप्तं हविर्विकलमेव स्यात् तं तथाविधमन्नरूपं चन्द्रमसं दातृगुणविशिष्टोऽग्निरस्मै यजमानाय ददाति । अकाले निरुप्तं हविः शिपितं तदाश्रितो (? °तस्तदा° Cod.) दोषविशेषः तद्युक्तमिव यज्ञस्य शरीरं भवति । यदा चन्द्रो नोदियात् पूर्वस्यां दिशि नाविर्भवति चतुर्दशीसंस्पर्शो यस्मिन्दिने नास्ति तस्मिन्दिवसे ॥४॥४॥१॥

दर्शयागे पुरस्ताच्चन्द्रदर्शनप्र[यो]श्चित्तेष्टिरुक्ता अथ पश्चात्तद्दर्शने नैमित्तिकामिष्टिं विधित्सुराह । अथानन्तरं सायंकाले एष चन्द्रमाः पश्चात्प्रतीच्यां दिशि ददृशे दृश्यते । अभ्यवेक्षते अभ्यवहर्तुं पश्यति यथा शालावृको वने संचरतो मेषादीन्पशूनभ्यवजिहीर्षति । एतस्मादेव खलु चन्द्रसम्बन्धिस्वरूपेण पूर्वोक्तात् अतयेनाकारः (?) °समासान्तः तस्माच्चन्द्रादिति भीषा

उक्तान्तरूपया भीत्या छायामुपगच्छन्ति गवाद्याः पशवः तिरोहिता यजमानस्य भवन्तीत्यर्थः पशूनामुपतापकारि यदेतच्चन्द्रदर्शनं तत् खलुचितं शुना रिक्तीकृतमित्याचक्षते ॥२॥ एतमेव चन्द्रगतं दोषमेवमाचक्षते चन्द्रमसः सम्बन्धी तन्मण्डलमध्यवर्ती शश इति अत एव तस्य शशाङ्क इति प्रसिद्धिः । उपवसथकाष्ठां गतं देवान्नरूपं चन्द्रमसं पौर्णमासीकाले द्रवीकुर्वन्ति । पशव ओषधीर्जग्ध्वा अपश्च पीत्वात्मनि नं चान्द्रमसं कृत्स्नं रसममावास्यायां धारयन्ति तत एनं रसममावास्यासम्बन्धिन्यां रात्रौ पशुभ्यः सकाशात्संनयति सम्यक्प्रापयति तत्संनयनं प्रतिपच्चन्द्रदर्शने सति नोपपद्यते ॥३॥ दर्शयागस्यातिक्रमणकाले दोषमुपन्यस्य तत्रानुष्ठानप्रकारमाह । प्रकृतो दर्शयागः शीघ्रं समापनीयः अनन्तरमेवं[illegible] प्रायश्चित्तेष्टिः कर्तव्या । स आमावास्यविधेनैवेति यथोदितकालेऽनुष्ठितोऽमावास्यायागस्तत्प्रकारेणैव प्रतिपदि प्रक्रान्तां दर्शेष्टिं समाप्य ॥४॥ अथास्यामिष्टौ प्रकृतिवद्विकृतिः कर्तव्येति चोदकप्राप्तेष्वङ्गेषु विशेषं विधत्ते । प्रकृतौ पञ्चदश अत्र चोदकप्राप्तास्ताः पृथुपाजवत्यौ धाय्ये द्वेऽइति सप्तदश भवन्ति । प्रकृतौ प्रधानयागे उच्चैस्त्वधर्मः । प्रकृतदेवतालिङ्गयुक्ताश्चतुःषष्ट्यां दाशतय्यां समाम्नाता या ऋचः कामयते । आज्यभागयोः स्विष्टकृद्यागे च याथाकाम्यम् ॥९॥ तिसृभिरिषुभिर्युक्तं धन्व तिसृधन्वम् पूर्ववदकारः समासान्तः । एत चन्द्रात्मकं दिव्यं श्वानम् ॥१०॥ अदृश्यमानचन्द्रोऽपि ॥११॥५॥१॥

अथ दर्शपूर्णमासयोः सर्वात्मकलक्षणवैराजपदप्राप्तिसाधनतां वक्ष्यन् तदुपोद्घातत्वेनाख्यायिकया सृष्टिं प्रतिपादयति ॥१॥ विजायते विविधशरीरद्वयरूपेणोत्पद्यते । तस्य प्रजापतेः आस्पदं किमपि न बभूव स (!) च निराधारत्वात्स्थातुमशक्नुवन्निदमेव भिन्नं हिरण्मयाण्डं पुनः संवत्सरपर्यन्तं बिभ्रज्जारयन् (!) तास्वेवाप्सु पर्यप्लवत् ॥२॥ आण्डं विहाय इमान्सृष्टान्पृथिव्यादिलोकान्विलङ्घ्य ऊर्ध्वं स्थितवान् ॥५॥ पारमवसानं पराचख्यौ परागतेन दूरगमनशीलेन मनसा ददर्श ॥६॥ द्युलोकमभिपद्यावष्टभ्य । दिवेवास आकाश-इव बभूव ॥७॥ यत एवं प्रजापतिना सृष्टिसमयऽएव तिरस्कृता असुरास्तस्माद्भिज्ञा एव कथयन्ति नैतदस्तीति यद्दैवासुरं देवांश्चासुरांश्चाधिकृत्य प्रवृत्तं (कृतप्रवृत्त Cod.) युद्धादिकं यदस्ति तन्नैवास्ति ॥९॥ उक्तार्थदार्ढ्याय ऋचमपि संवादयति । हे इन्द्र युद्धं न कृतवान् प्रतिभटानामसुराणामभावात् किमपि शत्रुसैन्यं नाहः नावधीः तव शत्रुः कोऽपि नास्ति वृत्रादिभिरसुरैः सह यानि तव युद्धान्याहुः तन्मायामात्रं न तु पारमार्थिकम् ॥१०॥ त्सर छद्मगत्याम् त्सरति कौटिल्येन गच्छति ॥१२॥ अधिदेवताः आधिक्यगुणोपेताः सर्वोत्कृष्टा देवताः ॥१४॥ ता आपो यस्मात्परमे उत्कृष्टे स्थाने व्योम्नि तिष्ठन्ति । परमात्स्थानात्खल्वेष (!) पर्जन्यो वर्षति ॥१६॥ कामान्पूरयतीति कामप्रः पृ प्रापण (! धा° २४. ५३.) ऽइति आतोऽनुपसर्गे कः (पा° ३. २. ३.) । प्राणो वाऽइदं सर्वमिति सूत्रात्मतया सर्वाधारत्वात्तस्य सर्वात्मकत्वम् । तस्य प्रजापतेर्दृष्टिः प्राणवायुः शब्दस्पर्शादिविषयसाक्षात्कारहे[तु]त्वात् । यत्खलु वस्तु इत्थात् अनेन प्रकारेणासौ प्राणो वायुर्वाति वर्ततऽइति जानाति किमपि तत्सर्वं प्राणवद्भवति अतः प्राणिसंघः प्रजापतिः । आविर्भवति प्रकाशतऽएव ॥१७॥ प्राच्यः पूर्वदिगभिमुखाः स्वस्तिपुरःसरा एव सर्पन्ति गच्छन्ति । एनां प्राचीं दिशमुपेत्य इतः परं कुर्वीमहि कार्यान्तरं सृजेमहि । पश्येम साक्षात्कुर्याम ॥२१॥ आर्त्विक्परिक्रियहेतुतया गन्तव्या गावो दक्षिणाशब्देनाभिधेयाः

॥२२॥ अप्राप्तफलविषयोऽभिलाष आशा । यस्मात्प्राङ्मुखो गत्वा इष्टं फलं लभते तस्मात्प्रतीच्यां दिशि यथास्थानमवस्थितस्य फलप्राप्तिविरहादाशैव केवलम् । उपकुर्वीमहि उपेत्य रूपान्तरेण कुर्याम । अस्याः (!) पृथिव्याः सम्बन्धि बङ्गतरस्थानं यो लभते ॥२३॥ यदा भूर्लोकमापः वृष्ट्यात्मना प्राप्नुवन्ति ॥२४॥ ता अनुक्रान्ताः प्राची दिग्द्युलोकः दक्षिणा दिगन्तरिक्षलोकः प्रतीची दिगाशा श्रीः पृथिवी च उदीची दिगापो धर्म इत्येकादशसंख्याका देवताः एता एव प्रयाजाख्या एकादशात्मतया वर्तन्ते ॥२५॥ आग्नेय्याद्यवान्तरदिशां जयोपायः ॥२७॥ इतराभ्य आहुतिभ्यः प्रधानहविर्भ्यः सकाशादभ्यर्धे अभिगतो अर्धो देशः यथा प्रधानहविर्भिः संसर्गो न भवति तथाभूतदेशे ॥३०॥ आण्डाभ्यां सह त्रिवम् । तं वाऽअनवानमिति (!) अनवानमनुच्छ्वसयन् । अमृध्रमविच्छिन्नम् ॥३१॥ प्रतृष्णमूर्ध्वमुखमेवावतिष्ठेत् । यस्मादेतत्सुपर्वकम् तदात्मकस्य तृतीयानुयाजस्य याज्यामध्ये विच्छेदः अवसानं कृतम् ॥३२॥ अप्रदग्धेव प्रदाहरहितेव । अनवतृषः अविच्छिन्नः ॥३३॥ याज्यानुवाक्या ऋच इति यत् तन्मितं परिमितं छन्दः कदाचिदपि न्यूनाधिकभावो न भवति । समावन्ति समपरिमाणानि ॥३४॥ एषां प्रयाजादीनामध्यात्ममुक्तेष्वङ्गेषु मध्ये यथैकमङ्गं (यद्येक° Cod.) हिंस्यात् । तस्मादेतानि प्रयाजानुयाजादीनि प्राच्योदीच्यान्यङ्गजातानि तत्प्रतिनियतावयवरूपतया यज्ञशरीरनिष्पादकानीति सर्वेष्टि[षु] तत्र साधारणानि । अन्यप्रधानहविषामावापोद्धारयोग्यतां (वायावायोद्धार) चाह अन्यान्येवेति उपाह्रियन्ते आज्यभागानन्तरं स्विष्टकृद्यागात्पूर्वं प्रधानयागस्थाने प्रक्षिप्यन्ते प्रयोगान्तरे अपह्रियन्ते च उद्धार्यन्ते ॥३५॥ पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृदिडा त्रयोऽनुयाजाः चत्वारः पत्नीसंयाजा इति षोडश सर्वत्र साधारण्येन भवन्ति ॥३६॥६॥१॥

अथ तत्रैव दर्शपूर्णमासयोः (योङ्गे Cod.) व्रतोपायनविषयां मीमांसां कर्तुं प्रतिजानीते । अदः अमुष्मिन्व्रतमुपैष्यन्नित्यादौ (१. १. १. १.) । स्थापयन्ति केचिन्निर्णयं कुर्वन्ति ॥१॥ एतदारण्याशनं पूर्वपक्षीकुर्वन्सम्भवत्पक्षान्तराण्युपन्यस्य दूषयति । मेध्यं यज्ञियं सारम् ॥२॥ पर्वरात्रौ यजमानः स्वयमेवाग्निहोत्रं जुहुयात् ॥३॥ समवयन्ति सम्प्राप्नुवन्ति एकीभवन्ति । एवंविदुषः स्वयं पर्वणि जुह्वतो यजमानस्य अन्यासु रात्रिषु ऋत्विजा क्रियमाणोऽपि होमः स्वयंहोमः सम्पद्यते ॥४॥७॥१॥

उक्तविधं व्रतमुपेयुषो यजमानस्य हविरुपब्रुवंस्तस्मिन्निष्क्रयणहेतुतां (°पलब्रुवंस्तस्मिन्निश्रय° Cod.) दर्शपूर्णमासयागस्य प्रतिपादयितुमाख्यायिकया यज्ञोत्पत्तिमाह ॥ ५. १. १. १. ॥१॥ एतामौपवसथीयदिवसस्य रात्रिं संयत एव संयतेन्द्रियव्यापार एव सन् वर्तितुमिच्छेत् । व्रतमुपेयिवान्यजमानः औपवसथदिवसे देवानां स्वयमेव हविर्भवति ॥४॥ अथानन्तरं परस्मिन्दिवसे यदा दर्शपूर्णमासादियज्ञं तनुते ॥५॥ भग्नाग्रो वृक्ष-इव यज्ञो भवति उपर्यवस्थिताया आहुतेरनिष्क्रीतत्वात् । अन्वाहरति पुनः संदधाति दोषजातमनेन शमयतीति करणसाधनो ण्यत् । आत्मा देहो भवति । सर्वतनूरेव सर्वावयवसम्पूर्ण एव । निष्क्रीत्या निष्क्रयणेन दर्शपूर्णमासाभ्याम् ॥६॥८॥१॥

अथ विशिष्टजन्महेतुतया सामिधेनीः प्रशिष्यन् (?) पुरुषस्य जन्मत्रयमाह ॥१॥ त्रीणि जन्मानि प्रदर्श्य यज्ञादेव पुनर्जन्मत्रयं प्रदर्शयन् (? °दर्शन Cod.) सामिधेनीसंख्याद्वारा प्रथमं जन्म समर्थयति । ताः प्रसिद्धाः प्र वो वाजा इत्याद्याः । सप्त शीर्षण्याः द्वाववाञ्चौ

नाभिर्दशमीति दश शरीरे प्राणाः तेषामात्मा मन (!) एव एकादशसंख्यापूरकः । प्रतिष्ठा जीवनास्पदम् ॥२॥ द्वितीयं जन्म प्रतिपादयति । प्रसवः सामिधेन्यनुवचनप्रेरणम् तच्चे-न समिध्यमानायानुब्रूहीत्येवंरूपेण वाक्येन क्रियते तदत्र प्रसवशब्दाभिधेयम् तस्य न-वाक्षराणि भवन्ति । यद्वा अग्निं होतावे अग्नेरिति (!) प्रयाजाङ्गभूतो यः स्रुगादापननिगदः सो ऽत्र प्रसवशब्दाभिधेयः तत्र विद्यमानानि नव वाक्यानि नव व्याहृतयः । अदःशब्देन प्र-थमकाण्डे प्रस्तरप्रहरणविधायकं (८. ३. ११.) ब्राह्मणं परामृश्यते तत्र सृष्टौ यजमानसंस्तु-तस्य प्रस्तरस्य स्वर्गलोकात्मके आहवनीये प्रहरणविधानाद्यज्जन्म प्रतिपाद्यते तत्तृतीयं जन्म ॥३॥ एतद्यज्ञसम्बन्धि जन्मत्रयं पूर्वोक्तजन्मत्रयदृष्टान्तेन निगमयति ॥४॥ इडोपह्वानमपि याग इडाया देवतासम्बन्धिप्रतिपादकवादाहुत्यात्मकः । तच्छंयोरावृणीमहऽइति शम्युवाको ऽपि परिधिप्रहरणसमकालीनत्वात् (लीमनत्वात्त) आहुतिरूपः । अदः प्रथमकाण्डे पत्नीसंया-जेषु कर्तव्येषु सत्सु यदाहवनीयस्योपरि स्रुचोः सम्प्रग्रहणं विहितं सा संस्रवरूपा एका आहुतिः ॥५॥ तासां पञ्चदश सामिधेन्यः क्रमेणानुवाक्यास्थानीयाः । अत्राऽयाज्ञातषु य एव करणमन्त्रो यश्चेडोपह्वानादिनिगदः ता एवासां याज्याः तथा सति आज्याहुतिषु याज्यानुवा-क्यवत्त्वं लक्षणं रूपमितरयागवत्सम्पन्नम् । एता[स्व]नुवाक्या एताः (सुताः Cod.) सामि-धेन्यः एताभिः करणमन्त्रनिगदसिद्धाभिराहुतिभिः याज्योपेता आहुत्युपेताश्च भवन्ति ॥६॥१॥२॥

अथ प्रसङ्गादनुवाक्यायाज्ययोश्छन्दोविशेषं विधाय स्तौति ॥१॥ वषट्कारानन्तरभाविनं होमविधिमनूद्य प्रशंसति अथ यदिति । अतोऽस्माद्धोमाज्जनयति । आत्मा शरीरम् । यतः स-र्वेषु यज्ञक्रतुषु वषट्कृते होमः तेनैव हेतुना अस्य यजमानस्य सर्वे यज्ञक्रतवः वषट्का-रात्मकं मृत्युमतिक्रम्यावस्थिताः ॥५॥ पृष्ठे पश्चाद्भागे ॥६॥२॥२॥

इत्थं सामिधेनीप्रसङ्गेनागतानानुवाक्या[याज्या]वषट्काराहुतिरूपान्पदार्थानुक्त्वा (? नु वा Cod.) सामिधेन्यनन्तरं भाविनावाघारौ नामरूपात्मकत्वेन (कान Cod.) स्तोतुं तत्सृष्टिमा-ख्यायिकया प्रतिपादयति ॥ तानेषु पृथिव्यादिलोकेषु विभज्यारोहयत् ॥१॥ एवमुपरितनदे-वानामप्यधिष्ठातृदेवतासम्बन्धसद्भावात् लोकत्रयवत्प्रकाशमानत्वं साधारणमित्याह स यथा हैवेति यथैव खल्वेते पृथिव्यादिलोकाः इमा अग्न्यादयो देवता आविः प्रकाशमाना अस्मा-कमपरोऽक्षा भवन्ति एवमेव खल्वेते ऊर्ध्वादिलोकाः ता अधिष्ठातृदेवताश्च आविः प्रकाशन्त ॥२॥ परार्धम् उत्कृष्टसर्वलोकावधिभूतं सत्यलोकाख्यं स्थानम् । प्रत्यवेया प्रत्येकं प्राप्नुयाम् ॥३॥ ब्रह्मणा नामरूपाभ्यामापुर्व्याप्ताः ॥६॥ अदः अमुत्राधानकाण्डे (१. ६. २. ३.) । संनिदध-ति स्म संनिधानं प्रत्यवेक्षणं कृतवन्तः ॥७॥ ततस्ते ऋषयः एतस्य न्यूनातिरिक्तस्य दोषश-मनाय यदभिमर्शनं कृतवन्तः तदिदानीमपि कर्तव्यमिति विधत्ते ॥१॥३॥२॥

अथेमावाघारौ दर्शपूर्णमासनामात्मना स्तोष्यन् अधिदैवमध्यात्मं च दर्शपूर्णमासौ प्र-तिपादयति । य एष सूर्यस्तपति एष खलु पूर्णमाः संपूर्णमानः । ददृशऽइव अमावास्याया-मविद्यमानः प्रतिपदि पश्चाद्दृश्यमान-इव भवति ॥१॥ एतस्य पूरणमनुलक्ष्य तं कालं पौर्ण-मासीत्याचक्षते ॥२॥ अध्यात्ममात्मनि शरीरमध्ये ॥५॥ एतौ मनोवाग्रूपौ अपरोक्षेण भास-मानौ दर्शपूर्णमासौ । तेनाशनेन एतावध्यात्ममवस्थितौ मनोवाग्रूपौ अपरोक्षौ (अपण्येनोपक्षौ Cod.) दर्शपूर्णमासौ तर्पयति परेद्युः प्रातःकाले (लंनिन) क्रियमाणेन यज्ञेन दैवौ अधिदैवं

प्रागुतौ दर्शपूर्णमासौ तर्पयति ॥७॥ आगूर्तीव आगूर्तमागुरणं संकल्पः तद्वानिव । उभयत्र दर्शपूर्णमासयोः । संतिष्ठेते समाप्तौ भवतः ॥१०॥४॥२॥

अथ दर्शपूर्णमासयागमश्वमेधात्मना स्तौति ॥ एतर्हि एतस्मिन्समये । आलभन्ते दर्शपूर्णमासयाजिन इति शेषः । अयमेव दर्शपूर्णमासयागः प्राकृतः प्रकृतिभूतोऽश्वमेधः प्रसिद्धो ऽश्वमेधस्तु इतर इत् वैकृत एव नूनमित्यवधारणे । दर्शपूर्णमासकालविभागनिमित्तभूतश्चन्द्रमाः ॥१॥ मेध्याश्वसादृश्यं चन्द्रमसः प्रश्नपूर्वकं सम्पादयति ॥२॥ अश्वस्य विवृत्ते निवर्तने सति । विवर्तते स्थानान्तरं प्राप्नोति ॥३॥ चन्द्रात्मकमश्वमेधमश्वरूपं पशुमुपवसथे दिवसे आलभ्य संज्ञप्य हवीरूपेण देवेभ्यः प्रातः प्रयच्छति । दीक्षानन्तरमश्वमुत्सृज्य संवत्सरपरिमितकाले समाप्ते इतरं प्रसिद्धमश्वमेधमारभन्ते (!) ॥४॥ मासि-मासि प्रतिपौर्णमासम् ॥५॥५॥२॥

अथोपासनार्थं यज्ञशरीरावयवत्वेन प्रणीतादीनामनुष्ठेयपदार्थानामधियज्ञमध्यात्मं च सम्पत्तिं कथयति ॥१॥ हे होतः त्वं ताः सामिधेनीः परस्परं संयोजयन्निव मह्यमनुब्रूहि । इदं शरीरमध्यावयवसम्बन्धि अनूकं परस्परं संसक्तमिव दृश्यते ॥३॥ समानयति औपभृतमाज्यस्यार्धं जुह्वामानयति । मध्ये संतृषं सच्छिद्रम् ॥४॥ सांनाय्यं दधिपयोलक्षणम् । अन्तरांसमंसमध्यम् । द्विषन् (!) शत्रुरेव प्राशित्रं प्राशित्रे शत्रुबुद्धिः कार्या ॥६॥ अतस्तदवदानं शत्रुनिरसनार्थमिति प्रतिपादयति । आविद्धं शल्यं निरगमयन् । यद्वेष्टितं द्वेषणशीलम् (!) ॥७॥ यथैव खल्विडायां चरुपुरोडाशादीनि सांनाय्यादीनि सर्वाणि हवींषि सहावद्यन्ति । समवधीयते सह धार्यते ॥८॥ अवाङ्मुखास्त्रयः प्राणाः नाभिपायुगुदरूपाः । इदं द्यावापृथिवी भद्रमभूदित्यादि सूक्तवाकः । सोमत्वष्टृदेवपत्न्यग्निगृहपतिदेवताश्चत्वारः पत्नीसंयाजाः । ऊर्वधोभागावष्ठीवच्छब्दवाच्यौ । चरमवर्ती समिष्टयजुराख्यो होमः कृत्स्नाधारत्वं तस्य पादयोश्च साम्यम् ॥९॥ तत्संख्याद्वारेण सूर्यलोकप्राप्तिरूपं फलं वक्ष्यन् ता आहुतीः परिगणयति । अदः अमुत्र पौरोडाशिककाण्डे [१.१.२.११] पत्नीसंयाजेषु कर्तव्येषु सत्सु शम्युवाकानन्तरं यत्स्रुचोः सम्प्रग्रहणं विहितं सा संस्रवाहुतिः परिगणनीया ॥१०॥६॥२॥

अथ यज्ञादीनां संवत्सराद्यात्मनोपासनं विधाय एतद्वैशिष्ट्येन (द्वैतन्नद्वै Cod.) दर्शपूर्णमासयागस्य विशिष्टफलसाधनतां प्रतिपादयति ॥१॥ परिवेषणसाधने धृष्टी ॥४॥ त्विषिः शरीरकान्तिः । ब्रह्मवर्चसं श्रुताध्ययनजनितसम्पत्तिः ब्राह्मं तेजः ॥१०॥ वेदिता वेदिष्यति । कंस्विदेव किंचिदेव [ब]ह्वनां (ह्वमां) मध्ये ज्ञानप्रभावेनासाधारणं सन्तं महानागमभ्युद्धृतं (त्युद्धुतं) महासर्पमिव (सयमिव) अभिसंसारमभिगम्याभिगम्य दिदृक्षितारः दिदृक्ष्यन्ते ॥१२॥ उत्तरः अग्नीषोमीयः ॥१६॥ दधिपयोलक्षणं सांनाय्यम् । परस्परं संगच्छति विश्लेष्यति च ॥१७॥ कृच्छ्रचान्द्रायणादि अन्यमदष्टं (!) तपः ॥१८॥ लवो लेशः अल्पीयस्त्वम् । लोकात् लोक्यमानात्कर्मफला... । व्यथते कम्पते बिभेति ॥१९॥ अशनिर्दम्भोलिः ह्रादुनिर्विद्युत् उल्कुषी उल्का ॥२१॥ विश्ववन्मिश्र-इव (!) विश्वन् (!) भयकम्पादिभिर्मिश्र-इव । अभ्युष्टमिश्र-इव अभित ओषणमभ्युष्टं सर्वतो दाहः तेन मिश्र-इव ॥२३॥ यज्ञरूपा मेनिः आयुधम् ॥२४॥ अनुयाजान्तत्वं यज्ञस्य निषेधन्ति ॥२५॥ अन्वाजिवांसन् (!) देवाननुहिंसितुमैच्छन् । प्रत्यौहन् प्रत्यक्षिपन् ॥२६॥ अग्निसोमविष्णुदेवताकाः तिस्र उपसदः सोमयागे

प्रसिद्धाः ॥२७॥ संस्था समाप्तिः । वयसः आयुषः ॥२८॥ पश्चात् प्रतीच्यां दिशि गार्हपत्य-समीपे पर्याहृत्य परिप्रापयन् एतेन उपरिष्टात् यज्ञस्योपरिभागे मिथुनं स्त्रीपुंसात्मकं प्रजाति-हेतुं स्थापितवन्तः । वीप्सया गवाश्वादिसर्वमिथुनस्वीकारः ॥३०॥ अध्वर्युरपि व्यापारबाहु-ल्यात् अग्निसमीपे संचरन् तापयुक्तं यथा भवति तथा विहारान्निर्गच्छति । साम्र-इवोपघोषः । अन्नवत्वहेतुना ब्रह्मण्वत्यः ब्राह्मणजातिविदा वा (?) तद्वत्यो भवन्ति । वषट्कृताः वष-ट्कारवत् परुषस्वनयुक्ताः (पुरु° Cod.) सन्तः सीदन्ति विशीर्णाङ्गा भवन्ति । ऐषावीराः एष-वीरो नाम निन्दितो ब्राह्मणजातिविशेषः तत्सम्बन्धिन ऋत्विजः । वसन्ताद्या देवता ऋत्वि-ग्लेन मनसा ध्यायेत् ॥३२॥ अथ यजमानस्य वेदेर्दक्षिणभागे उपवेशनं विधित्सुः दक्षिणवे-द्यन्तस्य तुलादण्डरूपतामाह । तत्र स्थितो यजमानो यत्साधु शोभनं विहितं कर्म करोति । सुकृतदुःकृतयोराधिक्यज्ञानार्थम् । यतरत् अनयोर्मध्ये एकतरं यंस्यति उत्थवेन नियमनं क-रिष्यति तदनुगमिष्यति । दक्षिणवेद्यन्तस्य तुलारूपतां जानतो यजमानस्य तु नैतदित्याह अथ य एवं वेदेति ॥३३॥७॥२॥

इत्थं दर्शपूर्णमासावनूद्य (चलव्य Cod.) तत्प्रशंसाव्याजेन तदङ्गावबद्धान्युपासनानि विहितानि ॥ अग्निहोत्रमिति कर्मनामधेयम् अग्नये होत्रं होमोऽस्मिन्निति तद्व्युत्पत्तिः उप-चारात्तदर्थं पयोऽप्यग्निहोत्रं तस्य दोग्ध्री धेनुरपि अग्निहोत्रीत्युच्यते । अभिदधाति बध्नन्ति । दामाधिकरणभूतं यन्त्रेजः तद्रूपात्मकत्वेन ध्यातव्यम् ॥१॥ अथ प्रवसद्विषयेऽग्निहोत्रहोमस्य मनःप्राणात्मना सांतत्यं श्लोकमन्त्रैः प्रतिपादयति । तत् तस्मिन्नग्निहोत्रविषये । अग्निहोत्री यावज्जीवं संकल्पिताग्निहोत्रवान्यजमानः । काव्यं कविकर्म यावज्जीवमग्निहोत्रं जुहुयादिति वाक्यम् । अग्निभिः गार्हपत्यादिभिः संततः सम्बन्धः (°म्बद्धः?) । अनपप्रोषितं प्रवासदो-षाभावः ॥५॥ यो यजमानः भुवनेषु लोकेषु अनुष्ठेयपदार्थेषु जविष्ठः अतिशयेन जववान् यः कृत्स्नं (मसा कृत्स्न Cod.) दूरवर्त्यपि (त्यमपि Cod.) प्रयोगजातमनुसंधातुं कुशल इ-त्यर्थः । स विद्वान् विदे लाभाय प्रवसन् प्रवासकारी भवति तथा तेन वेदनेन अस्य त-द्यावज्जीववाक्यमपि सार्थकं भवति संततः अव्यवहितसम्बन्धः ॥६॥ प्रमाद्यति अनवधा-नयुक्तो भवति । यजमानस्य गृहे यामाहुतिमृत्विजो जुह्वति ॥७॥१॥३॥

अथ तस्मिन्नेवाग्निहोत्रे मिथुनवेदनं विधत्ते ॥ पत्नीयुक्तमेव स्यात् न कदाचित्तया वि-रहितम् । उपाप्नवानि उपगच्छानि ॥१॥२॥३॥

अथाग्निहोत्रादिनियमप्रसङ्गादागतं ब्रह्मचारिधर्मं निरूपयितुमाख्यायिकामाह ॥१॥ दीर्घ-श्चिरकालसाध्यः सत्रयागो दीर्घसत्रः । ब्रह्मचार्याश्रमविहितं कर्म ब्रह्मचर्यम् । उपयन् गुरुस-मीपमुपगच्छन् उपनयनकाले । ताः सत्रियाः (!) सत्रयागसम्बन्धिन्यः ॥२॥ आचार्यं सावि-त्रीप्रदानपुरःसरमध्यापयितारम् ॥३॥ भिक्षेत (!) वृत्त्यर्थं याचेत ॥५॥ स्नात्वा स्नानेन गुरुकु-लात्प्रतिनिवृत्य । यद्वि भूयिष्ठमन्नं भिक्षातो लब्धं तदेव हि स्नानाद्धर्मनिबद्धं (!) सत् लोक्यं लोकहितं भवति । सप्तमी रात्रिः भिक्षाचरणरहिता नातिक्रामेत् । स्नात्वा समावर्तनं कृत्वा ॥७॥३॥३॥

इत्थं तृतीयेऽग्निहोत्रं प्रशस्य तत्प्रसङ्गाद्ब्रह्मचारिधर्माश्च निरूपिताः अथ चतुर्थे दर्शपू-र्णमासयागस्यैव भावनाविशिष्टाः के चन धर्माः मित्रविन्देष्ट्यादयश्च प्रतिपाद्यन्ते । तत्र प्र-

थमं विजिगीषुकथारूपेण प्रश्नप्रतिवचनाभ्यां दर्शपूर्णमासकर्मैव (? कामेव) सर्वोत्पत्तिनिमित्तत्वेन स्तोतुकामस्तत्र प्रतिप्रश्नोपायिकां (? पग्निनां Cod.) आख्यायिकामवतारयति ॥ आर्विज्याय वृतः सन् उदग्देशाञ्जगाम । तस्य निष्कः हिरण्मयो दीनारः उपायनत्वेन क्षिप्तो (? क्षिता Cod.) बभूव । पुरातनानामार्विज्याय वृतानां जनपदं गच्छतां ब्राह्मणानां ग्रीष्मपरीक्षार्थं (?) एकधनं मुख्यं धनं निक्षिप्तं भवति स्म । बहूनां मध्ये कस्यचिज्ज्ञानाधिक्यतारतम्येन जयपराजयाध्यवसानहेतुकं प्राधान्यमुपवल्हः तत्कर्तुं बिभ्यतां भीतिं प्राप्नुवतामुदीच्यानां केवलं निष्क एवोपहित आस तद्ग्रहणाय परस्परं विवदमानानां ज्ञानाधिक्यं स्वयमेव ज्ञास्यतऽइत्यनेनाभिप्रायेण ॥१॥ अस्मत्समीपदेशं प्राप्य निष्कं न पर्याददीत ॥२॥ उपपत्तौ बाहुमूलं तत्सम्बन्धीनि । दुर्वीरणानि (!) वीरणास्तृणविशेषः लुप्तोपमानमेतत् दुष्टानि वीरणानीव ॥६॥ स्वस्योपायनत्वेन कल्पितं निष्कं तस्मै स्वैदायनाय प्रददौ । सुष्ठु वर्णनीयमर्थं जानते पुरुषाय । उपगृह्य (!) आलिङ्ग्य ॥८॥ उपवल्हेत प्रधानश्रैष्ठ्यं कुर्यात् वर्ह वल्ह प्राधान्ये (धा° १६. ३८.) ॥९॥१॥४॥

इत्थं दर्शपूर्णमासयोः प्रयाजादियागान् (प्रयजातिता° Cod.) शरीरोत्पत्तिनित्यत्वेन प्रतिपाद्य अथ तेषां यागानां स्रुगादानप्रभृतिहोमान्ताः के चन धर्माः विचार्यन्ते । तत्र स्रुगादानस्य प्रकारविशेषं दर्शयितुं प्रस्तौति ॥ दक्षिणवामहस्ताभ्यां युगपज्जुहूपभृतौ गृह्णन्ति । एनमध्वर्युम् । प्रति[प्रतिं] प्रतिकूलाचरणेन प्रतिपदम् । अकृत (!) कृतवान् ॥१॥ उपमीमांसा उदीरितदोषोक्तिः नास्ति अपि तु तदादानं पशुवृद्धिकरमायुःकरम् । शिजि अव्यक्तशब्दे परस्परं संघटनजनितं शब्दमकुर्वन् ॥२॥ अतिक्रमणविचारं प्रस्तौति । विधमति विगमयति यजमानादियोजयति । उपसमूहति समीपं प्रापयति । दक्षिणेन पदा । सव्येन पादेन ॥३॥ अथ स्रुग्धारणविषयं धर्मविशेषं विधातुं प्रस्तौति । प्रगृह्य प्रकर्षेण समुद्यम्य (? प्रकामेणार्धमुग्नस्य Cod.) । अतो यजमानः शूलबाहुर्भविष्यति । वाय्वाधारत्वात् (? वाद्याथार° Cod.) प्राणो नाभिः । नीचैःकृत्येव तं मध्यमधा[र]णामुप तस्य मध्यमप्राणस्य समीपे धारयेत् ॥४॥ उच्चैः ऊर्ध्वस्वरेणादाय आश्रावणं प्रारभ्य शनैर्नीचैःस्वरेण निदधाति परिसमापयति । पापीयान् अतिशयेन दरिद्रः ॥६॥ यावत्परिमाणेन स्वरेण ॥७॥ अणु अल्पं कण्ठस्याल्पता यथा भवति तथा । अस्वरं स्वररहितं क्षीणस्वरम् । कृपणं नु वै कृपणं दीनमिव । अकृत (!) कृतवान् ॥९॥ अस्वरमुदात्तादिस्वररहितम् केवलमुच्चैर्घोषेण । उदात्तादिलक्षणो यः स्वरः स श्रीः वेदवाक्यस्य सम्पद्रूपः ॥१०॥ स्वरवत् उदात्तादिविविक्तस्वरयुक्तम् ॥११॥ अस्मिन्नेवाश्रावणे स्वरविशेषं विधत्ते । उरःप्रदेशे मन्द्रमिव परास्तभ्य गम्भीरध्वनियुक्तमिव पराचीनं (वानं Cod.) संस्तभ्य (स्तंन्य Cod.) । उभयतः आद्यन्तयोः बार्हतं बृहत्सामसम्बन्धी मध्यमस्वरो यथा भवति तथा अन्ततः आश्रावणस्यावसाने उच्चैर्निदध्यात् निक्षिपेत् । त्रीणि हि वाचः स्थानानि मन्द्रमध्यताराख्यानि तत्र मन्द्रस्वरेण (मंण्डलस्व° Cod.) आश्रावणं प्रारभ्य मध्यमस्वरगर्भितेन (!) तारस्वरेण परिसमापयेत् ॥१२॥ जुह्वं प्रागग्रामुपभृतोऽग्रदेशात्प्रागवरोप्य । पर्याहृत्य उपभृन्मूलदेशादुपरि नीत्वा । अनुयुवत्वा (!) इति तुशब्द (!) उपमार्थः (उपसायार्थः Cod.) अनुयुयन्निव (!) भ्रातृव्येण संमिश्रयन्निव (यतिच Cod.) अयमध्वर्युः शत्रोः अनुगमनशीलं यजमानमकत् (!) अकार्षीत् ॥१३॥ पार्श्वतः उपभृतः पार्श्वदेशा-

देव शुष्कमवरोप्य आहवनीये हुत्वा पुनस्तेनैव पर्याहृत्य । अतीर्थेन अमार्गेण । संशीर्णो वा भविष्यति घ्रणिर्वा (!) आर्त्तो वा भविष्यति ॥१४॥ तेनैव उपभृतोऽग्रदेशेनैव अधिहृत्य ॥१५॥ प्रकर्षेण दग्धा भस्मसात्कृता आहुतयो येन स । पूर्वमिवाज्यस्य हुतवाक्कुष्कस्यैव पुरोडाशादेः प्रकर्षेण दह्यमानत्वात् । वाग्देवता स्व[य]मदृश्यमाना सती ॥१६॥ अपस्थूणा (!) गृहपतिर्येषां ते ॥१७॥ हीनद्रव्यकत्वाद्गृहपत्यधिक्षेपः ॥१८॥ आक्रुक्षः आक्रोशं कृतवानसि । ईदृशं स्वदोषमपश्यन्किमित्यस्मदीयं सत्रं निन्दसि ॥१९॥ अर्हसि विद्योपदेशार्हो भवसि ॥१०॥२॥४॥

अथ मित्रविन्दाख्यां काम्यामिष्टिं विधास्यन् तत्र हविरुत्पत्तिक्रममन्नाद्यादिकामेन [त]स्यामधिकारिविशेषं च दर्शयिष्यन् आख्यायिकां रचयन् (? ख्यत् Cod.) आदौ श्रिय उत्पत्तिमुत्पन्नायाश्च तस्या देवैरभिधानमाह (नं वाह Cod.) ॥ श्रीः सौभाग्यलक्ष्मीः ॥१॥ आददामहै स्वीकरवाम ॥२॥ भगं सौभाग्यम् ॥३॥ अग्न्यादयो देवाः मदीयैर्यज्ञैः यज्ञसाधनैर्हविर्भिः प्रीताः सन्तः अन्नाद्यादिभिर्मां प्रत्येकं समनक्तु संयोजयतु । सहस्री सहस्रसंख्याकधनवान् । पशुसम्बन्धीनि रूपाणि विद्धार्वन् वष्टा ॥६॥ परस्तादन्ततस्त्वष्टारमारभ्य प्रतिलोमं प्रातिलोम्येन अवरोहक्रमेण अग्निपर्यन्तं प्रत्यैत् प्रत्यगच्छत् । ददती पुष्टेः पुनर्दात्री भवतु । पुनः प्रदानायाश्रियन्त अङ्गीकृतवन्तः ॥७॥ प्रधानयागसमीपे स्विष्टकृतः पूर्वं होतव्या होमा उपहोमाः ॥८॥ दशंदशिनीति प्रतिपादं दशभिरक्षरैर्दशसंख्यावती विराट् ॥१८॥ तस्यामिष्टौ चोदकप्राप्तेष्वङ्गेषु क्वचिद्विशेषं दर्शयितुं तान्यनुक्रामति । विकृतिषु अनारभ्याधीतेन सप्तदश सामिधेनीरित्यादिना (दिति Cod.) वाक्येन सामिधेनीसाप्तदश्यं नियमितम् तस्य साप्तदश्यस्य नियमे पाञ्चदश्यमेव प्रतिप्रसवार्थं निधीयते । तद्वाचिनोऽग्न्यादिशब्दानुपांशूच्चरेत् । संयाज्ये स्विष्टकृद्यागस्य याज्यानुवाक्ये ॥११॥ विदां चकार प्रथमं ददर्श । उत्ससाद उत्सन्ना बभूव । तां वेदाङ्गाभिज्ञेषु (°ङ्गानिज्ञेयु Cod.) ब्राह्मणेषु अन्विष्टवान् ॥२०॥३॥४॥

दाहविपतनादिदोषदुष्टस्यापि हविषः समृद्ध्युपायमुपासनां (? यमुपासां Cod.) विधित्सुः प्रतिजानीते ॥ ब्रह्मणो ब्रह्मलोकस्य द्वाराणि ॥१॥ उपरत्तेन उपात्तस्थितरक्तिमगुणेन ॥५॥ लोहितेन सर्वतो रक्तवर्णेन ॥६॥ सुश्रु सम्यक् शृतेन ॥७॥ अथ तत्साध्यस्य यज्ञस्यापि न्यूनत्वादिदोषपरिहाराय समृद्धिं वक्तुं प्रतिजानीते । सम्पन्नं सम्यगनुष्ठितम् ॥८॥५॥४॥

इत्थं दर्शपूर्णमासौ प्रशस्य तद्विकृतिभूतांश्चातुर्मास्यादीन्प्रशसिष्यन् तत्राग्निमन्थनसद्भावात्तत्साधनभूतयोररण्योरश्वत्थविकृतित्वं विधित्सुस्तदर्थमाख्यायिकां रचयति ॥ शापवशान्मानुषीभावं प्राप्ता उर्वश्याख्या देवस्त्री । दिवसस्य त्रिर्वारं मां वैतसेन दण्डेन पुव्यञ्जनस्य नाम । अकामां कामरहितां सुरताभिलाषरहितां च मां मा (मस Cod.) निपद्यासै निगृह्य मा प्राप्नुयाः । अस्माकं खलु नोऽस्माकं स्त्रीणां परिचर्या ॥१॥ द्वावुरणौ बालकौ मेषौ उर्वश्या पुत्रत्वेन पालितौ । प्रमेयुः अपजह्रुः ॥२॥ सा खलूर्वशी । वीरपुरुषरहिते देशे यथा चोरादयो गवादिधनमपहरन्ति तथा मदीयं पुत्रत्वेन स्वीकृतमुरणद्वयं गन्धर्वा अपजह्रुः ॥३॥ पुनरैम्यागवनमिति (?) वाचा (? वाणां Cod.) एत् (यन् Cod.) स्वर्गलोकमागच्छत् (छेत् Cod.) । विरहजनिता मनःपीडा आधिः तया प्रलपन् कुरुक्षेत्रस्य समीपे उवर्शीं द्रष्टुकामो भ्रमणं कृतवान् । विसवती पद्मिनी (ह्मीना Cod.) सरसी तस्यै हाथि तस्याः समीपदेशे

अन्तेन अन्तिकेन तटदेशे (? तटशेदेने) गतवान् । आतयः जलचरपक्षिविशेषस्यैषा संज्ञा तद्रूपा भूत्वा जलक्रीडां कृतवत्यः ॥४॥ आविरासुः पक्षिरूपं विहाय स्वकीयेन रूपेण प्रादुर्बभूवुः ॥५॥ तामभिलक्ष्य परावृत्तः सन्नुवाद ॥६॥ एता एतया त्वदीयया अर्थशून्यया वाचा । समयभङ्गान्निमित्तात्प्रस्थानमकार्षम् सूर्योदये निवर्त्यानामुषसां (नविर्त्या° Cod.) मध्ये अग्र्या (!) अग्रे भवा पूर्वा उषाः यथा प्रक्रामति न पुनरावर्तते ॥७॥ परिखूनः प्राप्तपरिदेवनः (? वेदनाः Cod.) । सुदेवो सुक्रीडोऽयं जनः देहत्यागार्थं पाशेन (? वाशेन Cod.) उद्बन्धनं वा कुर्यात् प्रपतेद्वा प्रपतनं (प्रयपंतनं Cod.) महाप्रस्थानं वा कुर्यात् ॥८॥ एता एतदीयानि स्त्रीसम्बन्धीनि मनांसि शालावृकानां (!) हृदयानि तद्वत्क्रूराणि ॥९॥ इत्थं सहसा प्राप्तुकामं पुरूरवसं निराकृत्य उर्वशी स्वप्राप्त्युपायान्तरमुपदेष्टुं तत्कृतमुपकारमाविः-करोति । विरूपा मानुषसंसर्गाद्विगतदेवरूपा सती । लवमप्यल्पभूतं घृतमपिबम् । इदमिदानीं देवान्तेऽपि सति तात् वर्णलोपश्छान्दसः तस्मादेव घृतस्तोकात् तृप्ता सती वसामि अतस्त्वां न विस्मरामि । आव्ययां चकार विगतकाठिन्यं बभूव ॥१०॥ हिरण्यनिर्मितानि सद्मानि (साधानि Cod.) आगमत् तत एनं तत्रत्या जना इदमेकमूचुः तत्सद्म (? त्स्कद्यं Cod.) आरोहेति । तत्र तस्य एतामुर्वशीमुपप्रजिग्युः (!) प्रेषितवन्तः हि गतौ वृद्धौ ॥११॥ आवव्राज स्वस्थानमाजगाम । अन्तर्हितमग्निमा इत् (मा पत् Cod.) आगछत् । तमश्वत्थमपश्यत् ॥१३॥ घृतेनाभ्यज्य (!) मूलादारभ्याग्रपर्यन्तमाज्येनाक्त्वा ॥१४॥ ते पुनर्गन्धर्वा विचार्योचुः । यदेतदश्वत्थसमिदाधानेनाग्नेः पुनःसम्पादनम् एतत्परोऽक्षमिव व्यवहितमिव खलु भवति तस्मादन्य उपायः कथ्यते ॥१५॥१॥५॥

यथा ह दर्शपूर्णमासयाजिनः आत्मयाजित्वं देवयाजित्वं वेति (वेदिति Cod.) द्वैविध्यं दर्शितमेवं चातुर्मास्ययाजिनोऽपि तथात्वं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनमाख्यायिकया रचयति ॥ इदं सौम्यमित्यादिना अङ्गुलीनामभिनयेन निर्देशः ॥१॥ तृतीयस्य हविषो मध्यमाङ्गुलेश्च सारूप्यमाह । द्वादशसु कपालेषु संस्कार्यतया संख्याधिक्यात् इदं कूर्पस्थानं वैश्वदेवं सप्तमं हविः । तदुपरि दोर्दण्डः ॥२॥ ऊरुशब्दः कृत्स्नस्य पादस्योपलक्षकः । समायीनि पर्वचतुष्टयसंचारीणि आग्नेयादीनि पञ्च हवींषि । जङ्घापादतलयोः संधिः गुल्फः । इदं जङ्घारूपमङ्गं वारुणम् ऊर्वात्मकमिदमङ्गं मारुतम् ॥३॥ साकमेधेषु । अण्डौ लिङ्गं चेति त्रीणि शिश्नानि ॥४॥ महाहविरिति वैश्वदेववरुणप्रघासशब्दवत् साकमेधाख्यस्य प्रधानस्य पर्वणो नामधेयम् ॥५॥ त्रयः संधयोऽन्तरालकालाश्चत्वारश्चत्वारो मासा येषां तानि त्रिसंधीनि (!) । द्विसमस्तानि शुनासीरीयवैश्वदेवयोः फाल्गुनशुक्लचतुर्दश्यां पौर्णमास्यां च पौर्वापर्येणाव्यवहितानुष्ठानात् द्वाभ्यां पर्वभ्यां समस्तानि संश्लिष्टानि (? स्तिष्ठानि) पादतलादधस्तनोपरितनसंध्ययोरुभयोः (?) प्रत्यासन्नत्वाद् द्विसमस्तत्वम् । वरुणप्रघाससाकमेधयोः त्रीणि-त्रीणि हवींषि उपांशुप्रचरणीयानि भवन्ति वैश्वदेवशुनासीरीययोः आद्यन्तपर्वणोः द्वे-द्वे हविषी अनिरुक्ते चतुर्ष्वपि पर्वसु एककपालस्य हविषः सावित्रस्य चोपांशु[त्वं] सिद्धम् मध्यमयोः पर्वणोरन्यदप्येकं हविः उपांशु प्रचरितव्यम् ॥७॥ चतुर्भिः हस्तपादलक्षणैरङ्गैः आयुते समानपरिमाणैः संयुज्यते यु मिश्रणामिश्रणयोः वैश्वदेवशुनासीरीययोर्द्वयोः पर्वणोरुत्तरवेदिनिवपनं परित्यज्य केवलमग्निमेव प्रणयन्ति ॥८॥ अथ गायत्र्यादिसम्पत्तिमेषु पर्वसु दर्शयितुं पूर्वपक्षयति

। सर्वगायत्रम् सर्वैर्याज्यानुवाक्यादिभिर्मन्त्रैर्गायत्रीछन्दस्कैरेव कार्यम् । चतुष्टोमस्य त्रिवृदादिस्तोमचतुष्टयोपेतस्य सोमयागस्य प्राप्त्यै सम्पत्तये । यद्वै (!) यस्मात्खल्वेतानि क्रमेण गायत्र्यादिसूक्तेन सम्पद्यन्ते तस्मात्तेषां सर्वगायत्र्यादिकं न कार्यम् ॥९॥ अथ चातुर्मास्येषु संख्याविशेषवादिना (वदित Cod.) बृहतीसम्पत्तिं दर्शयन् संवत्सरात्मकचित्याग्नेः महाव्रतसाम्नश्च प्राप्तिरूपफलं दर्शयति । द्वाषष्टानि द्विषष्ट्यधिकानि । षष्ट्युत्तरत्रिशतयजुष्मतीष्टकात्मकं संवत्सररूपं चित्याग्निम् ॥१०॥२॥५॥

अथ प्रश्नप्रतिवचनाभ्यां अग्निहोत्रहोमस्य सर्वदेवतातृप्तिकरत्वं प्रतिपादयिष्यन् प्रष्टृप्रतिवक्तारौ दर्शयति । शुचिनाम्नः पुत्रः ॥१॥ उपसृष्टा दोहनार्थं वत्सेन संगता धेनुः । संयोजनं वत्सबन्धनार्थं दाम । गोष्ठाद्गार्हपत्यसमीपं प्रति ष्टभ्यस्य (? दुग्धस्य ?) पयस आनयनमाहरणम् । गार्हपत्यसमीपादुद्यतम् । निगृहीतमाहवनीयस्य पश्चात्सादितम् ॥२॥ यां समिधं होमात्पूर्वमग्नावादधासि सा किमर्था । या पूर्वाहुतिरग्निर्ज्योतिरिति हूयमाना सा कस्य देवस्य प्रीत्यर्था । उपासीषदः पूर्वाहुत्यनन्तरं स्रुचमुपसादितवानसि । अपैक्षिष्ठाः गार्हपत्यस्येक्षणं कृतवानसि ॥३॥ द्वितीयामाहुतिं हुत्वा किंकारणं स्रुचं दोलयसि (वोल Cod.) । स्रुङ्मुखलेपस्य परिमार्जनं कृत्वा कुशमयकूर्चे निमृष्टवानसि । दक्षिणावेदेः दक्षिणभागे हस्तमुपसादितवानसि । उत्सृप्य वेदिसमीपादुत्सर्पनं कृत्वापां पानं कृतवानसि । निरौक्षीः निष्कृष्योक्षणं सेचनं कृतवानसि ॥४॥ वायव्यो वायुदेवताकः । सन्नूर्वायुना संसृष्टा द्यौः । दशाक्षरा विराट् । महादेवो रुद्रः ॥५॥ प्रतिष्ठा आधारः समिदभावे स्याहुतिद्रव्यं भूमौ पतेत् । अप्रैषं तृप्तानकार्षम् ॥६॥ सर्पदेवजनान् सर्पणशीलानां प्राणिनां मध्ये ये देवजनाः उत्कृष्टाः तान् । एतामुदीचीं दिशम् ॥७॥ उक्ताग्निहोत्रप्रश्ने ज्ञप्तो (ज्ञमे Cod.) विषये बोधितः । गार्हपत्यादुद्धृताः । पात्राणि स्रुक्स्रुवादीनि उपाहृतानि (!) स्वस्वस्थाने आसादितानि । अनुगच्छेत् शाम्येत् । पुरा आगामिनि काले अचिरात् (!) अचिरलंनैवव (° रंतनेऽवसरे ?) । आगोऽपराधम् ॥८॥ पुरा पूर्वस्मिन् आगामिनि काले अचिरात् (!) क्षिप्रं भस्मसमारोपणपूर्वमग्निं मथित्वा । तां दिशमभिलक्ष्य आहवनीयमुद्धृत्य ॥११॥ निवाते वातरहिते देशे । एनत् अग्निहोत्रार्थं पयः ॥१२॥ शोकतरणसमर्थाम् ॥१३॥३॥५॥

तं होपनिन्यऽइत्युपनयनस्य प्रस्तुतत्वात् तद्धर्मा अस्मिन्ब्राह्मणे निरूप्यन्ते ॥ तत्र गुरुं प्रत्युपनयनप्रार्थनपरमुपनेतव्यस्य मन्त्रं विधाय स्तौति । उपनयते स्वसमीपं प्रापयति ॥१॥ असाविति मन्त्रगतादःशब्दस्थाने सम्बुद्धान्तं ब्रह्मचारिणो नाम ग्राह्यम् ॥२॥ सावित्रीं सवितृदेवताकाम् तत्सवितुर्वरेण्यमित्यादिना गायत्रीमाचार्योऽनुब्रूयात् । पुरा पूर्वस्मिन्नुपनयनादूर्ध्वं भाविनि संवत्सरकालेऽतीते सति ॥६॥ तत् तत्र त्र्यहपक्षे श्लोकरूपमन्त्रमपि पठन्ति । तृतीयस्यां रात्रौ । सद्यो ह त्वेवेति तुशब्दः प्रागुक्तं कालं च व्यावर्तयति । सद्य उपनयनानन्तरमेव ॥१२॥ अयमाचार्य इमं शिष्यमथ बुल्वं तिरश्चीनं (श्चीनं Cod.) प्राङ्मुखमासीनम् तथा चायमुल्वः (!) पराङ्मुखो भविष्यतीति । आचार्यात्पूर्वभागे प्रत्यङ्मुखायोपविष्टाय आचार्यं समीक्षमाणाय ॥१४॥४॥५॥

अथ शतातिरात्रं सत्रं विधास्यन्नाख्यायिकामाह ॥१॥ शतसंख्याकाः अग्निष्टोमसंज्ञाः सोमयागा यस्मिन् तच्छताग्निष्टोमं सत्रम् । अग्निष्टोमादप्यधिकसंख्यारूपेण शतोक्थ्यं सत्रम्

॥२॥ अग्निष्टोमोक्थ्यसंज्ञौ सोमयागौ असर्वक्रतू अधिकयोः षोडश्यतिरात्रयोरविद्यमानत्वात् (!) ॥५॥ रात्रिसामानि रात्रौ प्रयोज्यानि बहिष्पवमानादीनि । अतिरात्रसंस्थे हि सोमयागे परदिवसे सूर्योदयादनन्तरमेवाश्विनशस्त्रपरिसमाप्तिः ततस्तिरोऽह्न्यसोमयागः ततो यज्ञपुच्छमिति त्रिचतुर्मुहूर्तकर्तव्यं प्रयोगजातं भवति तथा चैकस्मिन्नहन्यभावात्कालोत्कर्षे सति अहःकर्तव्यं रात्रिं प्राप्नोति रात्रिकर्तव्यमहः ॥६॥ आश्विनेन प्रातरनुवाकस्य स्वस्थानात्प्रच्यावितत्वात्कालोत्कर्षात् युष्माकं सत्रं न विस्तार्यते अतः सत्रवर्तिनामङ्गानां परस्परसांतत्यविरहात्कालोत्कर्षेण भवतामहोरात्रकर्तव्यविपर्ययो जात इति भावः ॥८॥ तं प्रातरनुवाकं होत्राश्विनशस्त्रे शस्यमानऽएव प्रशास्त्रा मैत्रावरुणेन उपगछत शनैः नीचैःस्वरेण अप्रतिशंसता आश्विनस्य प्रतिशंसनं प्रतिध्वनि[:] पराहति[:] यथा न भवति तथा ॥९॥ परस्याह्नः सोमाभिषवार्था वसतीवर्याख्या आपः । अध्वर्योराश्विनशस्त्रप्रतिगरे व्यापृतत्वात्प्रतिप्रस्थातृग्रहणम् । होता उच्चैराश्विनं शस्त्रं शंसति इतरो मैत्रावरुणः अत्यर्थं जपन्निव उपांशुस्वरेण अन्वाह प्रातरनुवाकम् तथा सति तत्र मैत्रावरुणः स्वकीयया वाचा ध्वनिना होतुर्वाचं ध्वनिं न प्रतिगछति तथा छन्दसा स्वप्रयोज्येन गायत्र्यादिना होत्रा प्रयुज्यमानं छन्दो न प्रत्येति होतुर्गायत्रस्य छन्दसः परिसमाप्तावुष्णिकछन्दःप्रारम्भे सत्येव मैत्रावरुणस्य प्रातरनुवाकादिभूतस्य गायत्रछन्दसः प्रारम्भविधानात् ॥१०॥ तिरोऽह्न्यैः तिरोऽहसम्बन्धिभिः सोमैश्चमसगणैः आश्विनशस्त्रानन्तरं भाविभिः । तिरोऽह्न्यान् हुतशिष्टान्पात्रे पर्युषितान्सोमान्भक्षयत । अथानन्तरमनुपूर्वं प्रकृतिवत् यज्ञपुछं पूर्वस्याह्नः शेषं समाप्य ऐन्द्रवायवादीन्ग्रहान्गृहीत्वा विप्रुड्ढोमं प्रकृतिवदेव कृत्वा अग्निः (!) प्रातःसवने संतन्याख्यं होमं कुर्यात् अथ बहिष्पवमानाख्येन स्तोत्रेण स्तुत्वा उत्तरमहरेव प्रतिपद्यध्वम् एवं पूर्वोत्तरयोरह्नोः आद्यन्तवर्तिनामसपाठान (?) व्यतिषज्य सत्रानुष्ठाने सति अहरभि रात्रिसामानि पर्यीयुरिति प्रागुक्तो दोषो न प्रसज्यते ॥११॥ चतुर्भिः सैन्धवैः होत्रध्वर्युप्रशास्तृप्रतिप्रस्थातृलक्षणैरश्वैः धीरा देवाः तमो विशेषेण त्यक्तवन्तः । शतं क्रतवः सोमयागा यस्मिन् तथाविधं सत्रं समतन्वत (!) अन्ततः परस्परसम्बन्धैरहोभिरकुर्वत ॥१२॥ पवेर्वज्रस्य शक्त्येव प्रहरणशक्त्यां (!) प्रातर्वर्तिनीधीमिव (!) हनूनि हनुवदहःपार्श्ववर्तीनि प्रातरनुवाकाश्विनादीनि कल्पयन् विभक्तिव्यत्ययः कल्पयन्तः कर्तर्येव (!) सह (संह Cod.) प्रयुञ्जानाः पूर्वापरवर्तिनोरह्नोरन्तौ धीमन्तो देवाः व्यतिषक्तौ परस्परं संसृष्टावकुर्वन् । देवानां वाक्यम् यज्ञसम्बन्धं विस्तृतमेषामह्नां परस्परसंतानप्रकारं प्रजापत्युपदेशाद्वयमिदानीं विशेषेण जानीमः अस्मान्दनोः पुत्रा असुरा इतः परं न मोहयन्ति । एकविधान् आजिधावनं कृतवतोऽश्वान्यथा सदा सिञ्चन्ति जनमेजयो नाम राजा तस्य गृहे परिस्रवणशीलस्य मधुनः कुम्भान् । अयमभिप्रायः यद्यत्कृतकार्या अश्वाः स्वादुभिः मधुकुम्भैरासिच्यमानाः स्वाभीष्टं लभन्ते एवं देवा अपि शतातिरात्रं प्रजापत्युपदिष्टमार्गेण सम्यगनुष्ठाय स्वर्लोकान्तरायमासुरं तमो निरस्य अमृतसेवारूपं स्वर्गफलं प्रापुः ॥१३॥५॥५॥

अथ सत्रप्रस[ङ्गा]द्यावज्जीवमनुष्ठेयान्पञ्च महायज्ञान्महासत्रत्वेन निरूपयितुं प्रस्तौति ॥१॥ उद[यनं पर्यन्त]म् । प्रत्यहं स्वाहाकारेण देवानुद्दिश्य यत्कामपर्यन्तं (!) विदध्यात् (? °दधान) तेनैनं देवयज्ञमाप्नोति ॥२॥ स्वाध्यायः स्वशाखाध्ययनम् । उदयनं यज्ञस्य समापनम् ॥३॥ सर्वश्चासावात्मा च सर्वात्मा चक्षुरादीन्द्रियसहितः कृत्स्नो देहः । प्रशस्याभिः धनसम्पद्भिः

। स्वधारूपेण वहन्ति अन्नात्मना प्रवहन्ति ॥४॥ अथर्वणा ऋषिणा अङ्गिरसा च दृष्टाः शाखा अथर्वाङ्गिरसः ॥७॥ अनुशिष्यते व्युत्पाद्यतऽएभिरिति अनुशासनानि व्याकरणनिरुक्तादीनि षडङ्गानि न्यायमीमांसादयो विद्याः उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् इति (!?) इतिहासः पुरावृत्तप्रतिपादकं पुराणं वैष्णवादि नरा मनुष्याः तत्प्रशंसा[प्रति]-पादकाः श्लोकाः (का श्लोको Cod.) नाराशंस्यो गाथाः । अन्ये त्वेवं व्याकुर्वन्ति मन्त्रब्राह्मणवेदभागो द्विविधः तत्र ऋगादिशब्दैर्मन्त्रभागस्याध्ययनं प्रतिपादितम् अधुना ब्राह्मणभागस्याध्ययनं प्रतिपाद्यते तत्र स वै सम्भारान्त्सम्भरतीत्यादीनि विधिवाक्यान्यनुशासनानि उपासनविधिवाक्यानि विद्याः स वै गौतमस्य पुत्र वृतो ऽग्नं धावयेदित्युक्तिप्रत्युक्तिरूपं ब्राह्मणं वाकोवाक्यम् आपो ह वाऽइदमग्रे सलिलमेवासेत्यादिकं सृष्टिप्रतिपादकं ब्राह्मणमितिहासः उर्वश्यप्सराः पुरूरवसमैडं चकमऽइत्यादीनि पुरातनपुरुषवृत्तान्तप्रतिपादकानि पुराणम् महाहिमिव वै ह्रदादित्यादयो मन्त्रा गाथाः समानात्सदमुन्नन्ति हयानित्यादिका मनुष्यप्रशंसापरा नाराशंस्यः ॥८॥ विद्योतनं विद्युत् स्तनयित्नुर्मेघगर्जनम् अवस्फूर्जनसानिः (?) । एषां वषट्कारणां वषट्कारं (?) वैयर्थ्यं (र्थ्ये Cod.) तत्परिहाराय । स चाधीयानः पुरुषो यदि प्रबलमिव अधिकमध्येतुं न शक्नुयात् तथापि देवतावाच्येकं वैदिकपदमधीयीतैव न तूष्णीमासीत ॥१॥६॥५॥

अथास्मिन्ब्रह्मयज्ञस्वाध्याये पुरुषाणामादरातिशयं ज्ञनयितुं प्रशंसां कर्तुं प्रतिजानीते । फलान्यनुक्रामति । स्वाध्यायः स्वाध्ययनम् प्रवचनमन्यस्याध्ययनम् । युक्तमविक्षिप्तमेकाग्रं मनो यस्य स युक्तमनाः । आत्मनः स्वस्य परमचिकित्सको भवति अन्ये हि भिषज ओषध्यादिना शरीरस्यैव तात्कालिकोमेव उदरशिरोरोगादिपीडां निवर्तयन्ति विद्वांस्तु देहव्यतिरिक्तस्यात्मन उक्तेन स्वाध्यायेन पुनर्मृत्युरूपां पीडां सर्वदैव निवर्तयति । एक एव सन् आ समन्ताद्भवतीत्येकारामस्तस्य (°द्रूम°?) भावः । यशः कीर्तिः तद्युक्तो यो लोकः तस्य पक्तिः परिपाको भवति । ब्राह्मण्यं ब्राह्मणभावम् प्रतिरूपचर्या तदनुरूपमाचरणम् । पच्यमानः यशसा युक्तः । भुनक्ति पालयति । अर्चा अर्चनं पूजनम् इष्टसाधनादेः समर्पणं दानम् ज्यानिर्हानिस्तद्विषयत्वमज्येयता । वधं हननमर्हतीति वध्यः ॥१॥ श्रमाः श्रमसाध्यास्तपोविशेषाः । परमता परमत्वमुत्कर्षः तस्यावधिभूमिः ॥२॥ वेदाध्ययनशीलस्य कायिकव्यापारं निवर्त्य यागहोमादिफलमप्ययत्नतः सिध्यति । यद्यत् यस्य-यस्य यज्ञक्रतोः प्रतिपादकं (क Cod.) छन्दसो वेदस्य सम्बन्धिनं स्वाध्यायं स्वशाखासम्बन्धिस्वाध्यायानुवाकादिकमधीते ॥३॥ अध्ययनं कृच्छ्रचान्द्रायणादितपोरूपत्वेन स्तौति । सुहितो यथेष्टभोजनेन तृप्तः सुखे सुखकरे शयने शय्यायां शयानः ॥४॥ क्षीरमिश्रमोदनं क्षीरौदनम् मांसेन मिश्रं शाल्योदनं मांसौदनम् ॥५॥ इतिशब्दः प्रकारवाची कार्यादीनां (?) संग्रहार्थः ॥१॥ कंग्याशब्देन (?) एकार्थस्य प्रतिपादकं (परिपदकं Cod.) विध्यर्थवादात्मकं ब्राह्मणवाक्यमुच्यते ॥१०॥७॥५॥

इत्थं सत्रप्रसङ्गात्तत्सारभूताभिर्व्याहृतिभिः सर्वप्रायश्चित्तहोमं विधास्यन् तासामुत्पत्तिमाख्यायिकया प्रतिपादयति ॥१॥ शुक्राणि व्याहृतिरूपाणि तेजांसि । हौत्रं होतृकर्म सामिधेन्यनुवचनयाज्यानुवाक्यापाठशस्त्रसंशनादिकम् (शस्त्रशंस°?) आध्वर्यवं हविःप्रचारादिकम् उद्गीथमुद्गातृकर्म । वेदत्रयस्य यदेव शुक्रं निर्मलं रूपं सारन्वतांशः (?) तेन ब्रह्मणः कर्माकुर्वत ।

अनन्तरं कृत्स्नयज्ञात्मकः सन्प्रजापतिरुत्क्रान्तवान् ॥४॥ सर्वाण्येतान्यनुद्रुत्य उच्चार्य । शीर्णेन भग्नेन ॥६॥ अत एव यजुर्वेदः अवत्सर्वसूत्रेषु परस्परानैरपेक्ष्येण तद्वेदोक्तं ब्रह्मत्वं सूत्रितम् ॥७॥८॥५॥

अथांश्वदाभ्याख्यौ सोमग्रहौ विधित्सुस्तयोरा[त्मवागा]दिरूपतया समुचित्यानुष्ठानं प्रतिपादयति ॥ आत्मैव मध्यशरीरमेव ॥१॥ प्रावृहन्त असुरेभ्यः सकाशात्स्वीकृतवन्तः ॥४॥ अदभाम अहिंसिष्म ॥५॥ निग्राभ्या इति वसतीवरीणां सोमासेकार्थानामपां (सोमसका°) ग्रहणाम् । अंशून् सोमलतासंज्ञान् (? सज्ञान् Cod.) ॥६॥ त्रिभ्यः सवनेभ्य ऊर्ध्वमुक्थ्यषोडशिसंस्थादिरूपम् । ग्रहान्तरवत्प्राप्तमभिषवं निषेधति ॥७॥ अभिषवस्थाने आधूननं विधत्ते । ग्रहस्योपरि निहितांस्त्रीनंशूनेवाधूनोति कम्पयति । व्रेश्यादयः शब्दा देवलोकस्थानामपां संज्ञाः वृश्यते सिच्यते आभिरिति व्रेश्यः तासां पतने मार्गे हे सोम कम्पयामि कुत्सितं कूनन्ति शब्दायन्तऽइति कुकूननाः भन्दन्ते भद्रा भवन्तीति भन्दनाः अत्यर्थं मादयन्ति तर्पयन्तीति मादयितृतमा मदिन्तमाः अतिशयेन मा[धु]र्योपेता मधुन्तमाः । तथा सति दैवीभिरद्भिः पात्रगृहीताभिर्मानुषीभिरद्भिश्च एतस्मिन्ग्रहे रसं स्थापयति ॥८॥ सूर्यास्तमयात्पूर्वमेवोपवसथ्ये अहनि वसतीवरीणां ग्रहणादेवमुच्यते ॥९॥ ककुभं प्रशस्यम् । शुक्रो दीप्यमानः सोमः शुक्रस्य दीप्यमानस्य सूर्यस्य पुरोगाः पुरतो गन्ता तथानन्तरं सोमः अमृतेयो (!) भूत्वा सोमस्य दिवि चन्द्रात्मना वसानस्य पुरोगामी भवति ॥१०॥ हविर्धानान्निर्गत्याहवनीयदेशं गत्वाहवनीये जुहुयात् । न प्रवृणक्ति न दहति । अथास्य ग्रहस्य होमकाले क्रियमाणस्य प्रमाणवायो (?) यदि बलान्निःक्रमणं स्यात्तदा हिरण्यस्योपरि प्रश्वासः कार्यः अभिव्यनिति उपर्युपस्थानं करोति । यश्चतुर्थकाण्डे (६.१.६.) हिरण्यस्योपर्युच्छ्वसनस्य स्तावको वाक्यशेषः सोऽत्रापि द्रष्टव्यः । तावतीर्वत्सतर्यः ॥११॥ होमानन्तरमेनानंशून्प्रतिमन्त्रं राजाशंसगते (नाराशं°?) सोमे पुनः संसृजेत् । अदः अदाभ्यग्रहस्य ग्रहणकाले अंशुत्रयरूपेण त्रीण्येव सवनानि प्रवृहति आदत्ते ॥१२॥१॥५॥

अथ समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनतां विवक्षुराख्यायिकां रचयति ॥१॥ इत् उ इकब्दो (? इतनुद्रकब्दो Cod.) ऽवधारणे उशब्दश्चार्थे । एषां पुरुषाणां सम्बन्धीनि पर्वाणि वपूंषि अवयवसंधीन् पर्वशः संव्रश्च पर्वणि-पर्वणि संवृश्च्य संछेद्य पर्वश एकैकं पर्व तवेदं ममेदमित्यन्यैः पुरुषैः विभजमानान्पुरुषान् । भीष्मं भयंकरं खल्वेतत् भो पुरुषाः यूयं अन्यान्पुरुषान्पर्वशः विभक्तवन्तः स्थ एषां पुरुषाणां पर्वाणि पर्वशः संवृश्च्य । सर्वे ते विभक्तार ऊचुः इमे विभज्यमानाः पुरुषाः इत्थमेवास्मान्परस्मिन्लोके सम्प्राप्तवन्तः अतस्तान्वै निर्यातनार्थमिदानीं वयमिहास्मिन्लोके प्रतिसचामहे कृतसंव्रश्चनप्रत्यर्पणेन सम्प्राप्नुमः । पुनः पृच्छति कातीति ॥३॥ कृती छेदने पर्वणि-पर्वणि सम्यक्कर्तनं कृत्वा ॥४॥ आक्रन्दनमाक्रोशनम् ॥६॥ कल्याणीं शोभनाम् अतिकल्याणीमशोभनाम् । पितृगृहं प्राप्य संवेशनं कृतवान् । कस्य वेदस्याध्ययनं करिष्यामि किमपि अनधीतमध्येतव्यं मम नास्ति । विदां चकार ज्ञातवान् । अदृष्टः आश्रितः (?) खलु त्वमसि ॥७॥ पयसाग्निहोत्रं जुहोति यत् ॥९॥ स यजमानः अग्निहोत्रे कर्मणि तत्साधनं द्रव्यं तृणेन दर्भात्मकेनावज्योतयति (°द्योत° Cod.) अवाङ्मुखं हविष उपरि द्योतनं (!) करोति ॥१०॥ अग्निहोत्रहोमसाधने तप्ते पयसि

उदकमुपर्यासिञ्चति यत् ॥११॥ श्रद्धा श्रुतिस्मृत्युदितकर्मस्वभिरतिरूपा देवता । अग्निहोत्रकर्मणि या पूर्वा आहुतिः । निन्दितकर्मविषयामश्रद्धाम् ॥१२॥ अग्निहोत्रकर्मणि आहवनीयहोमानन्तरमग्निहोत्रहवण्यामप आसिच्य निनयति सिञ्चति यत् ॥१३॥१॥६॥

तथा अग्निहोत्रहोमे पूर्वोक्तयोराहुत्योरुत्क्रान्तिगत्यादिविषये (? त्योरूर्ध्वगत्या° Cod.) विद्यां वक्तुमाख्यायिका प्रस्तूयते ॥ धावयद्भिर्देशान्तराद्गतैः ॥१॥ विष्पन्दमानौ कृत्स्नं जगद्व्याप्नुवन्तौ ॥२॥ नूनमसावग्निहोत्रं होष्यतीत्यभिप्रायेण पुनरावर्तन्ते । निर्णिज्य प्रक्षाल्य उपवाप्य निधाय । अग्निहोत्रस्य स्वरूपं विचारितवानसि ॥४॥ अस्योक्तार्थजातस्य अवगमनकारणं ज्ञातवन्तः ॥५॥ एते सायम्प्रातःकालीने अग्निहोत्राहुती । शुक्रां निर्मलाम् ॥६॥ उपस्थं स्त्रीसम्बन्धि यत्प्रजननमाहवनीयोऽग्निः तस्य प्रजननस्य धारका श्रोणिः तां समिधं कुर्वीत । एषेत्यभिनयोक्तिः । कामप्रश्नः यथाकामं प्रश्नः । ततो याज्ञवल्क्यवरप्रदानादनन्तरं स जनको ब्रह्मा ब्रह्मिष्ठः सम्बभूव ॥१०॥२॥६॥

अथाग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्वतः प्राणशब्दाभिधेयपरमात्मरूपतां विजिगीषुकथामुखेन विवक्षुराख्यायिकां प्रस्तौति ॥१॥ अर्वाचीरस्मदभिमुखीरिता गा उदजतामित्यनुषङ्गः ॥२॥ प्रतिख्याय प्रत्यवेक्षया । अर्धदग्धकाष्ठमुल्मुकम् तस्य वहिर्निरसनमवक्षयणं विनाशः ॥३॥३॥६॥

अथ दर्शपूर्णमासवन्नित्यं प्रतिसंवत्सरमेष्टव्यं पशुयागं (प्रतियागं Cod.) विधत्ते । शोभनानि यवसानि तृणानि यस्मिन्नृतौ स कालः सुयवसः ॥१॥ मांसीयन्ति मांसं खादितुमिच्छन्ति । संकल्पयन्ति भक्षयितुमध्यवस्यन्ति । वृथामांसेनैव क्रयलब्धेनाग्नयः न तोषणीयाः । अन्येषु लौकिकाग्निषु वृथामांसं अवैधहिंसायां (?) सम्पादितं मांसं पचन्ति तेन लौकिकाग्नयस्तृप्ता भवन्ति एतेषां तु गार्हपत्यादीनां वैदिकानामग्नीनामतोऽस्माद्वैवाकहविषो (?) ऽन्या मांसकामना न भवति अतस्तं यजमानं हविर्द्वेन स्वीकर्तुमुत्सुका भवन्ति ॥२॥१॥७॥

अथेष्टिविधत्वं सोमविधत्वं चेति पशुबन्धस्य द्वैविध्यं दर्शयति । हविर्यज्ञः दर्शपूर्णमासेष्टिः तत्प्रकारः । सवः अभिषवयुक्तः सोमयागस्तत्प्रकारः ॥१॥ सवविधत्वं सिद्धान्तयितुं मीमांसामाह । महायज्ञः सोमयागः । तर्हि पशुबन्धस्येष्टिरूपत्वे पशुबन्धं पशुयागं चरुपुरोडाशसाध्यामिष्टिमेव अकः कृतवान्भवसि उतशब्दस्तुशब्दार्थे (!) अपि त्वेनं पशुबन्धमकृक्षथाः (!) आकृष्टवानसि इति एवमेव खलु एनमिष्टिविधं पशुबन्धं कुर्वाणं ब्रूयात् अतो महायज्ञ एव पशुबन्ध इति साधीयान्पक्षः ॥२॥ एकादश प्रयाजाः पशुयागात्पुरस्तादनुष्ठीयन्ते । एकादशानुयाजाः पशुयागस्योपरिष्टात् । प्रयाजादनन्तरमनूयाजात्पूर्वं क्षिप्र.विधानार्थं यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः कार्यः ॥३॥ वपायां हुतायां सत्यां मार्जनं कृत्वा पशुपुरोडाशनिर्वापात्प्रागेव ॥४॥ वपायागानन्तरं क्षिप्रविधानार्थोऽनिरुक्तो यः पुरोडाशस्तस्य या इडा तस्यामेवोपहूतायां मार्जनान्ते ॥५॥ अथ षड्ढोतृहोमं विधित्सुस्तस्य दीक्षान्वयतां (? क्षान्यतां Cod.) सम्पादयितुं प्रश्नमुद्भावयति । हे अध्वर्यो दीक्षया संस्कृतस्य अवभृथाभावो नावकल्पते अवभृथस्य दीक्षामोचनार्थत्वात् (? नयत्वात् Cod.) एनं पशुबन्धयाजिनं च कुत्र दीक्षया संस्कृतवानसि यस्मादेव पशुबन्धयाजिनोऽध्वर्युकृता दीक्षा नास्ति (? दीनस्ति Cod.) तस्मात्तन्मोचनं क्व (? नक्व Cod.) षड्विर्भिः (? षड्भविद्भिः) एष वक्ष्यमाणो मन्त्रः षड्ढोता षट् य-

अहोतारो होमनिष्पादका यस्मिन्नियान् (त् Cod.) अवभृथादेनमनूद्द्हेयुः सर्वे जना इति शेषः । अनुद्रुत्य पठित्वा । पञ्चगृहीतेनाज्येन एकैकेन स्रुवेणैकैका आज्ञतिरिति पञ्च वा आज्याज्ञतयो होतव्याः । एषैवाज्ञतिः पशुबन्धस्य दीक्षा अतः पशुबन्धात्मकस्य महायज्ञस्य दीक्षाभावादवभृथो न युक्त इति न चोद्यमित्यर्थः ॥६॥ कः पुनरवभृथ इत्याशङ्क्य उद्भावयति । हृदयलक्षणमवदानं यस्मिन्काष्ठे प्रतृद्य पच्यते तद्धृदयशूलं तेन चरन्ति तस्योद्वासनं कुर्वन्ति ॥७॥ निरूढपशुबन्धयूपस्य पलाशवृक्षत्वं विधित्सुरुपोद्घातयति । पलाशवृक्षस्य सोमविकृतित्वम् । एवमेव खलु पुरा एतद्ब्राह्मणं पलाशोत्पत्तिप्रतिपादकं वाक्यमुच्यते (!) पठ्यते (१. ७. १. १. ३. ३. ४. १०.) ॥८॥२॥७॥

इत्थं यूपस्य पालाशत्वं प्रतिपाद्य तत्रापि बङ्गसारस्य पशुविरोधित्वमल्पसारस्य पशुसमृद्धिकरणत्वं क्रमेण प्रतिपादयति । प्रकर्षेण सहते अभिभवतीति प्रसहो बलम् फल्गिवति (? फलाति) नुकनाम (?) अल्पवाचक इत्यर्थः । वक्रः सन्नतीक्ष्णाग्रश्च भवति स कपोती कपोताव्यस्त्रीपक्षिसंनिवेशसाम्यात् ॥ २ ॥ ३ ॥ ७ ॥

इत्थं यूपार्हत्वाजीतस्वरूप (?) चाभिधायाथ यूपप्रमाणमाह ॥१॥ आज्यभागयोरवश्यकर्तव्यतामाह । पशुविशसनप्रैषमध्ये अस्ना रक्षः संसृजतादिति यः प्रैषभागस्तेन रक्षोभ्यः स्वभागप्रदानं कृतं भवतीति लोकदृष्टान्तेन दर्शयति ॥२॥ पश्ववयवपाकविषयकं विधिविशेषमाह । शुक् मरणजन्यः शोकः ॥३॥ वपावदानस्य पञ्चावत्तत्वप्रकारं सम्पादयति । धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः लोमत्वङ्मांसास्थिमज्जाख्यपञ्चधातुमयत्वात्पशुः पाङ्क्तः ॥ ४ ॥ ४ ॥ ७ ॥

अग्निहोत्रे कर्मणि मह इत्युपस्थानं तदार्त्याय (? र्थय Cod.) कर्तव्यनिमित्तं विधातुमाख्यायिकामाह । यथा लोके रथादिचक्रं आलम्बनकाष्ठादिराहित्येन भूमावस्थितं (!) सद्धूलति (? सद्दलति Cod.) ॥ १ ॥ एनमग्निमायतनात्स्थानात् बाधेरन् किंचिदुपद्रवं कुर्युः प्र वा यापयेयुः यजमानादन्यत्र गमयेयुर्वा ॥ ३ ॥ १ ॥ ८ ॥

अथाहवनीयात्प्राक् प्रह्वते (? त्प्राकपह्वते Cod.) औत्तरवेदिकेऽग्नौ (उत्तर° Cod.) पशुयागः कर्तव्य इति विधातुमग्नेराहितादिभेदेन चातुर्विध्यं दर्शयति ॥ १ ॥ २ ॥ ८ ॥

अथास्य पशोः प्रजापतिः सूर्य इन्द्राग्नी वेति त्रयो देवा विकल्पिता इति दर्शयित क्रमेण तं-तं पक्षं सोपपत्तिकमाह ॥ १ ॥ पशुबन्धस्य (? पशुबस्य Cod.) प्राणात्मकतां तत्परिज्ञातुः पशुनार्तिरहितुतां (?) समर्थयते ॥४॥ विहितस्य पशोरुक्तप्राणरूपतोपपादनाय तस्यैवाग्न्या[ग्ना]दित्यान्तषड्देवतामयत्वोपपादनायाख्यायिकामाह । तमुक्तूनं पशुमेताभिः प्रसिद्धाभिः समिद्धोऽअग्नेत्यादिभि[राप्रीभि]राप्रीणात् अतर्पयत् ॥५॥ तं निःप्राणत्वेनोक्तूनमादित्यलक्षणं पशुं प्राची दिक् हे गतप्राण पशो प्राणेत्युक्त्वानुप्राणत् । नाभिच्छेदादूर्ध्वं पञ्च ब्राह्मणानेनमनुप्राणितेति ब्रूयात् इतिशब्देन दिक्ाश्रितप्रकारः (? क्त्रितप्र° Cod.) प्रदर्श्यते पञ्च ब्राह्मणान्पञ्चदिक्षुव्यवस्थाप्य प्रागादिक्रमेण प्राणेत्येवमादिकमुक्त्वा शिशोरुपरि सम्प्रक्षिपतेत्यर्थः (?) । अनेन प्राण एव पशुबन्ध इत्यस्य वासना प्रदर्शिता भवति ॥ ६ ॥ यद्यत्कामयेथा इति [क° ५.] प्रजापतिना यदुक्तं तस्य स्वीकारं दर्शयति ॥ ७ ॥ लेलयतश्चपलस्य ॥ ८ ॥ चाकश्यमानाः भृशं पश्यन्त-इव वर्तमाना अपि ॥ १० ॥ ३ ॥ ८ ॥

लक्षणानि भवन्तीत्यभिप्रायः । रथन्तरं पृष्ठसाधनं तच्च प्रथमेऽहनि भवति न बृहदिति नियमवचनम् राथन्तरं च शस्त्रम् रथन्तरपृष्ठसम्बन्धं यादृशं निष्केवल्यं शस्त्रं तादृशमत्र भवति अग्निष्टोमसंस्थोऽयं यज्ञो भवति नोक्थ्यादिसंस्थः ॥२॥ एकविंशतिः सवनीया आग्नेयाः समानकर्मणात्र प्रथमेऽहनि भवन्तीत्येकऽआङ्गः । आश्वमेधक(धकाकि)खिलपरिपठिते एकादशिन्यौ आग्नेयः कृष्णग्रीवः अग्नयेऽनीकवते रोहिताञ्जिरनड्वानित्येते (वाज° सं° २१. ५८-१.) ॥३॥ क्रमार्थमिदं पुनर्वचनम् (see २. १. १.) । अध्वर्युग्रहणमौद्गात्रव्यवधानार्थम् ॥४॥ एतद्दर्शनार्थं पुनरुच्यते । स्वायां देवतायामादित्ये ॥५॥ अनेन एकविंशतिविभागेनात्मना प्राणेन तमेतस्मिन्नादित्ये ॥६॥ उच्चावचं नानारूपम् ॥७॥ तस्य मध्यमाङ्गः हैत्रे प्रातःसवनं विशेषेण कल्पयिष्यऽइति शेषः । अग्निं तमित्येतत्सूक्तं पाङ्क्तं पङ्क्तीनां समूहः आज्यमाज्यशस्त्रात्मकमाश्वमेधिकं शस्त्वा ऐकाहिकं ज्यौतिष्टोमिकमाज्यमाज्यसूक्तमुप उपचिन्वन् स एकाहादपूर्वेणाश्वमेधिकेन (!) शंसति एष तावदाज्ये प्रथमे शस्त्रे विशेषः । अथ द्वितीये शस्त्रे विशेषमाह बार्हतं च आ नो यज्ञं दिविस्पृशम् बृहतीनां समूहं प्रउगं प्रशस्त्रात्मकम् माधुछन्दसं मधुछन्दस आर्षं ज्यौतिष्टोमिकं प्रउगं वायुरग्रेगा इत्येतत् तृचं (!) शंसति माधुछन्दसे हि वायव्यादयः सप्त तृचाः सप्तैव बार्हतास्तेषामेकं बार्हतमेकं च माधुछन्दसं समानेन शंसत्येवं सर्वान् यश्च बार्हते प्रउगे कामो ब्राह्मणे पठितः यश्च माधुछन्दसे तयोरुभयोराप्त्यै । क्लृप्तं प्रातःसवनम् एतावानेवात्र विशेषो नान्योऽस्ति इत्यर्थः ॥८॥ मरुत्वतीयस्य शस्त्रस्य त्रिकद्रुकेषु महिष इत्येषातिछन्दाः प्रतिपत्प्रथमा च वयति (?) इदं वसो सुतमन्ध इत्यनुचरस्तृचः प्राकृत एव एष एव नित्यः एकाहातानः एकाहोऽतः —ते (!) इन्द्र दीयतऽइत्यादि एकाहातानादूर्ध्वं पङ्क्तीः शंसति ततः षट्पदाः तत ऐकाहिकं सूक्तं शंसति तत्र च प्रागुत्तमायाः ऋचः निविदं दधाति ॥९॥ निष्केवल्यं माहेन्द्रशस्त्रम् । महानाम्न्यः शक्वर्यः ताभिः शाक्वरं लक्ष्यते शाक्वरं मध्यमेऽहनि पृष्ठं भवति ताः महानाम्नीः स्तोत्रियाः सह अनुरूपेण तृचेन स्वादोरित्था विषूवत इति सह च प्रगाथेन होता शंसति । ऐकाहिके इन्द्रस्य नु वीर्याणि प्रवोचमित्येतस्मिन्सूक्ते निविदं दधाति ॥१०॥ इत्यनुचरस्तृचः शत्रूनामभिभवस्य रूपम् । उदु ष्य देव इत्यादीनि च चत्वार्याश्वमेधिकानि (?चार्याश्व° C.) सूक्तानि ऐकाहिकानां (एकानां C.) पुरस्ताच्छंसनीयान्येव ॥११॥ सप्ताग्निमारुतैर्निर्ह्लादीनि (?समा° C.) त्रीण्याश्वमेधिकान्यैकाहिकेनैव निविद्धानीयैः (? विद्धा°) समुच्चिनोति ॥१२॥ तेनाश्वेन सह सर्पन्ति । स्तुते बहिष्पवमाने उद्गातृभिः ॥१६॥ स्तृत्यः हिंसनीयः शत्रुः स्तर्तवै स्तरीतुं हन्तुम् ॥१७॥ एतत्सूक्तं होता आवपति अध्रिगो शमीध्वमित्यस्मात्प्राक् । अत्र सूक्ते उपमामे (?) चतुस्त्रिंशद्वाजिन इत्येतामृचं (१. १६२. १८.) अन्ये स्वस्थानादपनीय वङ्क्रीणां वङ्क्रीवचनस्य पुरस्ताद्दधाति । नेदनायतने अस्थाने प्रणवं दधामित्यनेनाभिप्रायेण यदि किलैषा स्वक्रमऽएव सूक्तान्तर्गता पुरस्तात्कृतः (? न्तत: Cod.) प्रणवोऽस्या अन्ते कृतेन प्रणवेनार्थो[त]: संदध्यात् तस्य च प्रणवस्यानायतनमस्थानमेषा प्रैषात्मिका ह्येषा यथान्यानि प्रैषवचनानि प्रणवस्यानायत[न]मेवमेषा अपीत्यभिप्रायः (मपी° C.) । अथो अपि नेत् एकवचनेन एकस्याश्वस्य (स्वस्य C.) वङ्क्रीवचनमेकवचनम् चतुर्विंशति (!) वाजिन इत्येतत् [ति]नैकवचनेन बहूनां पशूनां वङ्क्रीवचनं बहुवचनम् षट्त्रिंशतिः (!) षट्त्रिंशतिरेषा (!)

वङ्क्रयः (बहवः C.) ता अनुद्धयोच्यावयतादिति एतत् तन्मा (?एतत्रं ता Cod.) व्यवायाम (विक्रीयाम Cod.) व्यवहितं विछिन्नं करवाम वङ्क्रीयता(?)प्रकाशनमेकदेशमे[व] भवति यद्येषा ऋग्वङ्क्रीवचनस्य पुरस्ताडीयते तद्विप्रकृतौ (?) कृतदेशम् एषा तु ऋगपूर्वा (°देशमेषानुरूगपूर्वा Cod.) अकृतस्थाना तस्यास्तद्देशता (? स्तदेशता Cod.) युक्ता न विपर्यय इत्यभिप्रायः । न तथा कुर्यात् चतुस्त्रिंशद्वाजिन इत्येतां न सूक्तादपनयेन्न च वङ्क्रीणां पुरस्ताद्ध्यात् सार्धमेव सकलमेव सह तया ऋचा आवपेत् स्थाने प्रसिद्धेऽधीयीत । अत्र प्रैषद्रूपैषा ऋगनायतनं प्रणवस्येति ऋक्त्वादायतनं (? ऋत्कदो° Cod.) प्रवोकश्चात (?) इति वचनादभविष्यत् (? इति चताभवि Cod.) यदप्युक्तं (? यदस्युक्ता Cod.) वङ्क्रीप्रकाशनं समानदेशं युक्तमिति तदपि वचनाद्भिन्नदेशं भविष्यतीति श्रुतेरभिप्रायः । एतच्च मा नो मित्र इति सूक्तं परिसमाप्य उप प्रागादित्येवैते च तत्रैवाध्रिगावावपेत् (? °त्येवैत[illegible] गावावयेत Cod.) ॥१८॥१॥५॥

उपप्रागादित्येतेऽउक्ता अध्रिगो शमीध्वमित्येतदाह ॥१॥ निरायत्य बहिः आयम्य ॥२॥ हयेशब्दस्य अपूज्यामन्त्रणार्थस्य कुत्सायां द्विर्वचनम् । मेथत्याक्रोशति ॥३॥ यद्यस्यायतनं स तत्रोपविशति न चात्र देशे पूर्वकल्पितान्यायतनानि सन्तीति यथार्थमत एव वचनात्कल्पनीयानि ॥१६॥२॥५॥

एकविंशतिं चातुर्मास्यदेवताः पितृत्र्यम्बकपुनरुक्तावर्जिताः अनुद्रुत्य अनुपूर्वमनुद्दिश्य एकविंशतिं च वपाराशीः कृत्वा एकैकां राशिं एकैकाः चातुर्मास्यदेवताः संकीर्त्य जुहुयात् ॥४॥ नाना पृथक्पृथक् यथाप्राप्तमेव चरेयुः ॥५॥ तेदनी लोहितम् ॥८॥ अप उत् इत्यम् उत्कर्षेण अपक्रमितव्यम् । उक्थ्यो यज्ञ इति एतदेकविंशं मध्यमम[illegible] कथसर्थं भवति ॥१॥ चतुर्विंशतिम् आग्नेयः कृष्णग्रीव इत्यादीन्द्वाविंशतिं च द्वौ च प्राजापत्यौ ॥ ११ ॥ ३ ॥ ५ ॥

आसन्दीवति नगरे धान्याशनं बलिनम् रुक्मिणं रुक्मललाटम् हरितस्त्रजं सुवर्णमालिनम् ॥२॥ एते एव अत आरभ्य तृतीयस्य दिवसस्येदानीं कल्पान्तराण्युच्यन्ते । एते भीमसेनादयः पारिक्षितीयाः परोक्षितस्येमे (!) भ्रातरः पारिक्षितीयाः अश्वमेधविशेषा इत्यपरे । परोऽवरं परे-परे त(त): अवरेऽवरे सततम् ॥३॥ मंहतिर्दानकर्मा ऋत्विग्भ्यो दत्तवान् ॥४॥ दैर्ग्रहा (!) नाम दैर्ग्रहेणाश्वेन (!) संहतेन क्रतुना ईजे अश्वमेधेनेजे इत्यर्थः । तेऽस्माकं पूर्वजाः गोतमादयः अत्र स्थाने आसन् दैग्रहे (!) अश्वे बध्यमाने पुरुकुत्सेन । ते आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् आभिमुख्येन यातितवन्तः त्रसदस्युं नाम राजानमस्याः पृथिव्या अर्धदेवं पूर्वदेवं नाभागानां देवं ईश्वरं वृत्रस्य च पाप्मनो हन्तारं इन्द्रं न इन्द्रमिव तुरम् (!) ॥५॥ भोजयितारः । क्षत्ता संनिधाता कोशाध्यक्षः । अवसन् उषिताः गृहे ॥६॥ परिचक्रायां (!) नगर्याम् ॥७॥ सहस्रमयुतानि गवां कोटी । विभक्तवन्तः स्वैः स्वैः पुरुषैः सह ॥८॥ अत्र त्रिष्वपि दिवसेषु स्तोमान्तराण्युच्यन्ते । षोडशिस्तोत्रं चैकविंशम् संधिस्तोत्रं त्रिवृत् । एष अश्वमेधः स्तोत्रियाणामनुष्टुब्भिः पञ्चविंशत्या सम्पन्नः अत्र हि सर्वा एव स्तोत्रियाः पि (!) गण्यमानाः सप्तशतान्यष्टानवत्यधिकानि भवन्ति तासां-तासां द्वात्रिंशता भागेऽपहृते पञ्चविंशतिरनुष्टुभो लभ्यन्ते अन्या नु (!) तत (!) द्वाभ्यामूनानुष्टुब्भवति (!)

तत्रापि नान्तराच्छन्दो व्येत्येकस्मान्न द्वाभ्यामित्यभिप्रायः (७. १. २. २२.)। ध्वसा पापध्वंसनः ॥१॥ कल्पान्तरम्। तत्र प्रथमे तावदहनि त्रयोऽपि पवमानाश्चतुर्विंशाः यत्तु अभ्यावर्तयन्ति अभ्यावर्तं धुर्यैः स्तुवते (see ४. २. ५. ८.) तत्त्रिवृत् पवमानव्यतिरिक्तान्यावृत्तिस्तोत्राणि त्रिवृन्ति भवन्तीत्यर्थः द्वितीये ह्रहनि चतुश्चत्वारिंशाः पवमानाः तृतीये ह्रहनि अष्टाचत्वारिंशाः पवमानाः ॥१०॥ एतन्नस्थमविशेषो (!) वि[ष्णोः] क्रान्तं विक्रमणं विप्रकृष्टान्तरत्वसामान्यात् यथा हि विष्णोः क्रममाणस्य महान्तराणि पदान भवन्त्येवं (त्योच Cod.) महान्तराः स्तोमाः। यमुनामनु तीरे। गङ्गायां तु गङ्गातीरे पञ्चपञ्चाशतम् ॥११॥ प्रज्ञावत्तरः अप्रज्ञान् ॥१२॥ शकुन्तला नामाप्सरा नाडपिति (? तामुपलि Cod.) स्थाने कण्वाश्रमे ॥१३॥ तत्र त्रिष्वपि दिवसेषु एकविंशस्तोमेन ऋषभ इष्टवान् ॥१५॥ त्रिष्वपि दिवसेषु त्रयस्त्रिंश स्तोमोऽस्येति त्रयस्त्रिंशस्तोमस्तेन। तौर्वशाः अश्वाः। वर्मिणां राजपुत्राणां कवचिनामश्वपालानाम् ॥१६॥ गोविनतो नाम वक्ष्यमाणस्तोमविशेषोऽश्वमेधः। काशयः काशिवास्या राजानः ॥१९॥ तस्य गोविनतस्य विधा विधानं स्तोमप्रकारो वक्ष्यतऽइति शेषः। चतुर्विंशाः पवमाना इत्यादि प्रथमेऽहनि चतुश्चत्वारिंशा इत्यादि द्वितीये षट्त्रिंशा इति तृतीये ॥२०॥ भरतः सत्वतामिव सत्वतो यद्वचः (?) यथा स्वभूतमश्वं भरतः अपहृतवान् एवं शतानीकः काशीनाम् ॥२१॥ वशं वशीनं (!) कामिकं कामतश्चरन्तम्। सह्वा अभिभविता परेषाम् ॥२२॥ तृतीयामपठित्वा चतुर्थी अतिद्रष्टव्या तु तृतीयापि ॥२३॥ होतृकाः महर्त्विग्भ्योऽन्यपुरुषाः मैत्रावरुणादयः होत्रादीननु आभक्ताः ॥२४॥ जाया महिष्यादिकाः। यथासमुदितम् येन सह ययामिमेथिकाकामुकासंवादः (? ययामिमिथिकामुका° Cod.) कृतः। वचनाच्च भार्याणां सानुचरीणां दानम् पालागली तु जन्तुः प्राप्ता वचनान्तरेणाध्वर्यवे दीयते ॥२७॥४॥५॥

अत्राध्याये पुरुषमेध उच्यते ॥१॥ दशतः दशकवर्गाः ॥३॥ काण्डिकाद्वये अङ्गं संस्था आध्यात्माधिदैवोपासना उच्यन्ते। उभयतोज्योतिरिति अग्निसम्बन्धादग्निष्टोमो ज्योतिरित्यभिप्रायः उभयतउक्थ्य इति मध्यापेक्षया ॥८॥ यवमध्यः यवस्येव गुरुर्मध्योऽस्येति। इमे वै लोकाः पुरुषमेध इति (आधि)दैववचनम् अन्नमुक्थ्य आत्मातिरात्र इत्याध्यात्मवचनम् अन्नमुक्थ्यः परिबृंहणभूतत्वात् आत्मातिरात्रः मध्यत्वान्महत्वाच्च ॥१॥१॥६॥

ये दश-दशैकैकस्यां काण्डिकायां ब्राह्मणादयः पठ्यन्ते तानालभत इत्यर्थः न पुनरयमर्थः दशदशैकस्मिन्यूपऽआलभतऽइति कुतः अष्टशतं मध्यमयूपऽआलभतऽएकादशैकादशेतरेष्वित्यनेन विरोधात् ॥३॥ सरोभ्यो धैवरमित्येतस्याः काण्डिकायाः (वा° सं° ३०. १६.) प्राग्या दशतः तासामयं दर्शनार्थोऽनुवादः एतस्यां तु द्वादश पुरुषाः पठ्यन्ते परासु पुनर्दश दश अन्त्यायां तु अष्टौ पठिताः ॥४॥ अष्टौ विरूपानुत्तमानालभतऽइति दर्शनार्थोऽनुवादः ॥७॥ मागधादयस्तु पूर्वोक्ता एव गुणार्थं पुनः पठिताः पूर्वाः ते वै प्राजापत्या इति मन्त्रपाठात्प्राप्तानामनुवादो दर्शनार्थः ॥८॥ यदा नारायणः पुरुषमेधेनायजत तदा पर्यग्निकृतेषु पुरुषपशुषु तं नारायणमशरीरा वागुक्तवती ॥१३॥ आत्मनि शरीरे अग्नी समारोप्य (!) अयं ते योनिरित्यनेन मन्त्रेणाघ्माणास्ये (?) क्रोष्ठे वावेश्य। नारायणार्थः अद्भ्यः सम्भृत इत्यनुवाको नारायणः स पूर्वस्मान्नारायणादुत्तर इत्युत्तरनारायणः ॥२०॥२॥६॥

परस्मिन्नर्धे भागे भवः परार्ध्यः एकशतविधोऽग्निः ॥१॥ अग्निष्टुन्नामैकाहः अग्निष्टोमसंस्थः

। ग्रहाः उपयामगृहीतोऽस्यग्नये वा जुष्टं गृह्णामि एष ते योनिरग्नये वेत्येवं यज्जुष्टः । आग्नेय्यः पुरोरुचः अस्याजरासो दमामरित्रा इत्यादयः (वा॰ सं॰ ३३. १.) ॥३॥ अप्तोर्यामो नाम क्रतुर्यस्मिन्नतिरोऽह्नोयेभ्य ऊर्ध्वं रात्रिपर्याय उत्तमो भवति । सर्वेषां यज्ञक्रतूनामिति सर्वाण्यग्निष्टोमोकथ्यषोडश्यतिरात्रनामिं (?) स्तोत्रशस्त्राणि चाप्तोर्यामेऽन्तर्भवन्तीत्यभिप्रायः । तस्मिन्सत्रान्मेध्यान्यज्ञार्हानालभते होमार्थमुपकल्पयति न वालभतऽइति चोदनासामान्यात्पशुप्रकृतयो यागा एते चोद्यन्ते । उभयोरपि सवनयोर्वपा एव होतव्या न हृदयादीन्यवदानानि । अन्नमन्नं यवादि । सर्वं सर्वजातीयम् । सर्वस्मै सर्वात्मने प्रधानपुरुषहिरण्यगर्भाय ॥९॥ त्रिणवं सप्तविंशस्तोमकम् ॥१०॥ विश्वजिन्नाम एकाहः । सर्वाणि पृष्ठसाधनानि रथन्तरादीनि यस्य सन्ति स सर्वपृष्ठः तेषां तु पवमाने रथन्तरं कुर्वन्त्यार्भवे बृहत् मध्यऽइतराणि ॥१२॥ अस्मै च विश्वकर्मा भूमिं दातुमियेष तत्र च काले भूमिरपीमं श्लोकं गीतवती । त्वं तु मन्दः मन्दमतिर्जनः आसिथ बभूविथ जात इत्यर्थः । उपशब्दो निशब्दस्यार्थे । यस्माशक्यं प्रतिजानीते मन्द इत्यभिप्रायः ॥१५॥१॥७॥

अथशब्दोऽधिकारार्थः नानन्तर्यार्थः कुतः सर्वमेधेन श्मशानकरणस्यानन्तर्यानुपपत्तेः कथम् सर्वमेधानन्तर्ये हि गृह्यमाणेऽस्मा इति सर्वमेधयाजी परामृष्टव्यः न च सर्वमेधयाजिने सर्वमेधानन्तरं क्रियते । अस्मै इति मृतः प्रतिनिर्दिश्यते न सर्वमेधयाजी । श्मशानं प्रसिद्धमस्थिसंरक्षपास्तु (? °वास्तु ?) । प्रेतस्य गृहान्[illegible] यथैवेह (°वेद Cod.) तेनास्थीनि (?) रक्ष्यन्ते एवम[य]मत्र तदपूर्वेण आतो (? त्तो ?) रक्ष्यते गृहैरिवेत्यभिप्रायः । प्रज्ञानं वा अमुष्य देवदत्तादेरत्रास्थीनि गुप्तानीत्येतत्प्रज्ञायते येन तत्प्रज्ञानं च कीर्तिवर्धनं करणीयमित्यभिप्रायः । यो वै कश्च म्रियतऽइति प्रयोजनान्तरम् । श्मशा नाम पितॄणां दण्डपाशिकस्यनूपा (? °पाणि° ?) अत्तारः ते चाकृतश्मशानस्यामुष्मिंलोके पुण्यकृत्यामुपहिंसन्ति ॥१॥ चिरप्रमचिरमृते । प्रत्यग्रे हि अघे स्मर्यमाणे महद्दुःखं भवतीत्यभिप्रायः । समाः संवत्सरान् ॥२॥ यदि चिरादपि कुर्वतः स्मरेयुरेव समास्ततः अयुग्मेषु संवत्सरेषु । एकनक्षत्रे एकं च नक्षत्रं च (? त्र Cod.) एकनक्षत्रं पुष्यः स्वाति — here the ms. stops.

---

## VARIOUS READINGS.

A. Cod. Mill. — B. Bodl. Wils. 365. — C. Bodl. Wils. 453. — D. Chambers 22. — P. Paris Dev. 160.

*Adhyâya* १. ४. २ सविता यो AP. - ५. ५ The last इति belongs to the beginning word of the next ka*nd*ikâ, which is accordingly left unaccented: see ४, २, ८. ३, ५. - ६. ३ Read: घोऽबलो. - ७. १ सप्तऽआत्मनो A. - ४ Read: शीर्षण्याः. - ८. ७ The Sa*m*hitâ (२२, २०.) reads तुरीपाय. —

*Adhyâya* २. १. ६ Read: नैकशतमत्येति. - २. ४ °स्ताड्वन्वोः । त्रीरेव A. see १२. ७. १. ६. - ११ त्रिंश एतद्रूपं AP. - ५. ४ Read: एकादश दशत. - ६. ६ परिविित्ता Harisv. - ७. ६ सर्वैः पड्भिः A. B prima manu. - १० Mahîdhara at Vâj. S. २३. १४. reads सोमपुरोगमं — गमयन्ति. - १२ तद्देवां३ऽइदेषि A. °वां३ऽइ° B. °वा३ऽइ° C. °वां६ऽइ° P. - १५ प्रोक्षणीभिः Harisv. (?). - ८. ४ परियन्त्यप कुवत A. P. - ५ अपक्रामन्त्याक्रमणानि A. P. —

*Adhyâya* ३. १. ५ सक्थिन Harisvâmin. - ४. २ °मवदानाय कृत्वा A prima manu. अवदानानि Harisv., but see Pâ*n*. ५. ४. ६५-६७, where however a different accent (डाच्) is postulated. - ५. २ एकस्मिन्नेव एतामाहुतिं (?) Harisv. - ४ मुडिंभ A. - ibid. उदमस्यापत्यं (?) Harisv. - ६. ४ होतव्यां३ AP. - ७. ३ व्यष्टं A. P. - ८. ६ विदेरन्यदि A. —

*Adhyâya* ४. १. १२ चात्संबद्धाराय P., see ११. ५. ६. १. - १३ The word सद्वती is a most remarkable one, as it implies for the time of its formation the then existence of the grammatical identification of the roots भू and अस्, for the verse is called सद्वती on account of its containing the word भुवस्, as if it were formed from √ अस्! - १४ °ह्रोप्त्रीं करोति B.C.P. °त्त्रीन्क° A. - १५ पयन्वत्यन्या ABC. P. - २. २ यस्त्रवत्मृद्धो वीर्यं AB.P. °द्धो वी° C. - ५ क्षात्रसंग्रह्री° A. त्तात्रसं° BCP. - १७ I should prefer to read ये व (वः), supported by the explanation of Harisv. युष्माकं मध्ये, but the mss. agree in reading ये वाऽएतस्यो°. - ibid. अकृतान्न (?) and स्तुतं (?) Harisv. - ३. ६ °ध्वर्युः संप्रेष्यति A. - १० सेलागाः C. - १२ मत्स्याह्न° A. - १३ वायोविय्यिकाश्चो° A. - ४. ६ एतद्रूपाणां A prima manu. - ८ °त्यन्तरे

(plur.) पैतुदारवौ भवतो (dual.)! - ११ एकविंशत्यरत्नय A. P. —

*Adhyâya* ५. १. १२ °मुखर्बुधमिति A. - २. ८ त्नात्रसंग्र° ABCP. - १० आ-युर्देवताः, see आयुः प्रमायुको यजमानः स्यात् १४. २. २. ४५. - ३. १ जाबालो मनो वै सर्वे A prima m. - ४. २ अबध्ना° A. P. - ५ दौर्ग्रह्णेण Harisv. - ६ °न्गृह्णे ABCP. - ७ परिचक्रा° Harisv. - १५ श्विल्का॰ A. prima m. - १६ and १८ Read: सात्रासाह्रे. - २७ Read: ददाति. —

*Adhyâya* ६. १. २ °द्रात्रः स दीक्षोपसत्कश्च° A. - २. २० ह्माराेप्य Harisv. - ibid. स्यान्नित्वेव AP. —

*Adhyâya* ७. १. ३-६ We expect यक्षा भव°, but the mss. agree in reading भव°. - १५ मँच्यति P. मंत्तति स्या B. मंच्यति तस्या C. —

*Adhyâya* ८. १. १ अथास्मै कल्याणं कुर्वन्ति is wanting in BCD. P., but is given in A prima and tertia manu (obliterated sec. m.) and in the Ṛishitarpaṇa (as the beginning of this adhyâya); from the latter also the accents have been taken, as they are wanting in A. - लोके कृतश्मशानस्य Codd. - ibid. तस्मात्स्मशा° A. secunda manu, तस्मास्मशा° prima manu. - २ कुर्यात् । here the accentuation stops in P. - समा is everywhere else paroxytonon. - ५ द्वारेवैनं D. - ९ साव्य्स्थाप्रश्नत्य ADP. - १५ बीरिणामि° A. - ibid. तद्वंढ्ढ P. ढ्वधृ A. prima manu ढ्वघ्धृ A. secunda manu. ढ्ढ BC. ढ्ढ D. - १६ नाश्मगंधान्ना° D. P. - ibid. बिभीत° P. - १८ नेन्मस्हृदघं AD. - २. ६ दक्षिणतोऽर्श्ना° Mahîdhara at Vâj. S. ३५. २. - ३. ४ अनवानंतत्त्वा A. P. °नंतत्त्वा D. and Kâty. २१. ४. ६, where explained by गत्वा. - १० तद्वधृ A. ढ्ढ P.D. - ११ नेन्मस्हृदघं A. D. - १२ अ-

धोधोज्ञानु D. अधोज्ञानु A. prima manu. - ibid. न्यस्येधृत्वा ABC. - ४. २. लोके द्विकुल्पे D. - ४ तद्पमृज्ञतित्यपा° A. - ६ °य्यथाभिगोपायेद्° ABCD.

१० सोपबर्ह्णीषान्वादिष्टा AD. - ११ अथानाग्निचितः ABCD. - ibid. शवारा A. - १२ अर्थमेतं ABCD.



ओम् । देवा ह वै सत्त्रं निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा अन्यत्रैवाश्विभ्याम् ॥१॥ तेषां कुरुक्षेत्रं देवयजनमास । तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यतऽइदं देवयजनमिति तद्धि देवानां देवयजनम् ॥२॥ तऽआसत । श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तथोऽएवेमे सत्त्रमासते श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचं पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाᳬ सहेति तथेति ॥४॥ तद्विष्णुः प्रथमः प्राप । स देवानाᳬ श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाᳬ श्रेष्ठ इति ॥५॥ स यः स विष्णुर्यज्ञः स । स यः स यज्ञोऽसौ स आदित्यस्तद्धेदं यशो विष्णुर्न शशाक संयन्तुं तदिदमप्येतर्हि नैव सर्वऽइव यशः शक्नोति संयन्तुम् ॥६॥ स तिसृधन्वमादायापचक्राम । स धनुरार्त्न्या शिरऽउपस्तभ्य तस्थौ तं देवा अनभिधृष्णुवन्तः समन्तं परिण्यविशन्त ॥७॥ ता ह वम्र्य ऊचुः । इमा वै वम्र्यो यदुपदीका योऽस्य ज्यामप्यद्यात्किमस्मै प्रयच्छेतेत्यन्नाद्यमस्मै प्रयच्छेमापि धन्वन्नपोऽधिगच्छेत्तथास्मै सर्वमन्नाद्यं प्रयच्छेमेति तथेति ॥८॥ तस्योपपरासृत्य । ज्यामपिजक्षुस्तस्यां छिन्नायां धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्रचिच्छिदतुः ॥९॥ तद्घृङ्ङिति पपात । तत्पतित्वासावादित्योऽभवदथेतरः प्राङेव प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्माद्घर्मोऽथ यत्प्रावृज्यत तस्मात्प्रवर्ग्यः ॥१०॥ ते देवा अब्रुवन् । महान्बत नो वीरोऽपादीति तस्मान्महावीरस्तस्य यो रसो व्यक्षरत्तं पाणिभिः संममृजुस्तस्मात्सम्राट् ॥११॥

तं देवा अभ्यमृज्यन्त । यथा वित्तिं वेत्स्यमाना एवं तमिन्द्रः प्रथमः प्राप तमन्वङ्ग-मनुन्यपद्यत तं पर्यगृह्णात्तं परिगृह्येदं यशोऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य एवं वेद ॥१२॥ स उ एव मखः स विष्णुः । तत इन्द्रो मखवानभवन्मखवान्ह वै तं मघवानित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥१३॥ ताभ्यो वम्रीभ्योऽन्नाद्यं प्रायच्छन् । आपो वै सर्वमन्नं ताभिर्हीदमभिक्नूयमिवादन्ति यदिदं किञ्चादन्ति ॥१४॥ अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त । वसवः प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्यास्तृतीयसवनम् ॥१५॥ अग्निः प्रातःसवनम् । इन्द्रो माध्यन्दिनꣳ सवनं विश्वे देवास्तृतीयसवनम् ॥१६॥ गायत्री प्रातःसवनम् । त्रिष्टुम्माध्यन्दिनꣳ सवनं जगती तृतीयसवनं तेनापशीर्ष्णा यज्ञेन देवा अर्चन्तः श्राम्यन्तश्चेरुः ॥१७॥ दध्यङ् ह वाऽआथर्वणः । एतꣳ शुक्रमेतं यज्ञं विदां चकार यथा-यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥१८॥ स हेन्द्रेणोक्त आस । एतं चेदन्यस्माऽअनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति ॥१९॥ तद्ध हाश्विनोरनुश्रुतमास । दध्यङ् ह वाऽआथर्वण एतꣳ शुक्रमेतं यज्ञं वेद यथा-यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥२०॥ तौ हेत्योचतुः । उप त्वायावेति किमनुवक्ष्यमाणावित्येतꣳ शुक्रमेतं यज्ञं यथा-यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥२१॥ स होवाच । इन्द्रेण वाऽउक्तोऽस्म्येतं चेदन्यस्माऽअनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यान्न वामुपनेष्यऽइति ॥२२॥ तौ होचतुः । आवां त्वा तस्मात्त्रास्यावहऽइति कथं मा त्रास्येथेऽइति यदा नाऽउपनेष्यसेऽथ ते शिरश्छित्वान्यत्रापनिधास्यावोऽथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः शिरश्छेत्स्यत्यथ ते स्वꣳ शिर आहृत्य तत्ते प्रतिधास्याव इति तथेति ॥२३॥ तौ होपनिन्ये । तौ यदोपनिन्येऽथास्य शिर-

श्छित्त्वान्यत्रापनिदधतुरथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच स यदाभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वꣳ शिर आहृत्य तद्धास्य प्रतिदधतुः ॥२४॥ तस्मादेतदृषिणाभ्यनूक्तम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेत्ययं तदुवाचेति हैवैतदुक्तम् ॥२५॥ तन्न सर्वस्मा ऽअनुब्रूयात् । एनस्यꣳ हि तदथो नेन्म ऽइन्द्रः शिरश्छिनददिति यो न्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्न त्वेव सर्वस्मा ऽइव ॥२६॥ संवत्सरवासिनेऽनुब्रूयात् । एष वै संवत्सरो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्संवत्सरवासिनेऽनुब्रूयात् ॥२७॥ तिस्रो रात्रीर्व्रतं चरति । त्रयो वा ऽऋतवः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्तिस्रो रात्रीर्व्रतं चरति ॥२८॥ तन्नमाचामति । तपस्व्यनुब्रवा ऽइत्यमाꣳसाश्यनुब्रूते तपस्व्यनुब्रवा ऽइति ॥२९॥ अमृन्मयपायी । अस्ति वा ऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतं वदति तस्मादमृन्मयपायी ॥३०॥ अशूद्रोच्छिष्टी । एष वै घर्मो य एष तपति सैषा श्रीः सत्यं ज्योतिरनृतꣳ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत नेच्छ्रियं च पाप्मानं च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सꣳसृजानीति ॥३१॥ अथैष वाव यशः । य एष तपति तद्यत्तदादित्यो यशो यज्ञो हैव तदयशस्तद्यत्तद्यज्ञो यशो यजमानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्यामस्मै दक्षिणामानयेयुर्न ता इतस्ततोऽन्यस्मा ऽअतिदिशेन्नेद्यन्मेदं यश आगंस्तत्ततोऽन्यस्मा ऽअतिदिशानीति श्वो वैव भूते द्व्यहे वा तदात्मन्येवैतद्यशः कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यं गां वासोऽश्वं वा ॥३२॥ अथैतद्वा । ऽआयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या नातपति प्रक्षादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठीवेन्नेदेतमभिनिष्ठीवानीति नातपति

प्रस्नावयेत नेदेतमभिप्रस्नावयाऽइति यावद्वाऽएष आतपति तावानेष नेदेतमेतैर्हिनसानीत्यवज्योत्य रात्रावश्नीयात्तदेतदस्य रूपं क्रियते य एष तपति तद्ध स्माहासुरिरेकꣳ ह वै देवा व्रतं चरन्ति यत्सत्यं तस्माद्ध सत्यमेव वदेत् ॥३३॥ ब्राह्मणम् ॥१॥

स वै सम्भारान्त्सम्भरति । स यद्वाऽएनानितश्चेतश्च सम्भरति तत्सम्भाराणाꣳ सम्भारत्वꣳ स वै यत्र-यत्र यज्ञस्य न्यक्तं ततस्ततः सम्भरति ॥१॥ कृष्णाजिनꣳ सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञऽएवैनमेतत्सम्भरति लोमतश्छन्दाꣳसि वै लोमानि छन्दःस्वेवैनमेतत्सम्भरत्युत्तरत उदीची हि मनुष्याणां दिक्प्राचीनग्रीवं तद्धि देवत्रा ॥२॥ अभ्रिः । वज्रो वाऽअभ्रिर्वीर्यं वै वज्रो वीर्येणैवैनमेतत्समर्धयति कृत्स्नं करोति ॥३॥ औदुम्बरी भवति । ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति ॥४॥ अथो वैकङ्कती । प्रजापतिर्या प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो विकङ्कतः समभवद्यज्ञो वाऽआहुतिर्यज्ञो विकङ्कतो यज्ञेनैवैनमेतत्समर्धयति कृत्स्नं करोति ॥५॥ अरत्निमात्री भवति । बाहुर्वाऽअरत्निर्बाहुना वै वीर्यं क्रियते वीर्यसंमितेव तद्भवति वीर्येणैवैनमेतत्समर्धयति कृत्स्नं करोति ॥६॥ तामादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नारिरसीत्यसावेव बन्धुः ॥७॥ ताꣳ सव्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्य जपति युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिरित्यसावेव बन्धुः ॥८॥ अथ मृत्पिण्डं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो देवी द्यावापृथिवीऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवीऽअगच्छद्यन्मृदियं तद्यदापोऽसौ तन्मृदश्चापां च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति तस्मादाह देवी द्यावापृथिवी

ऽइति मखस्य वामद्य शिरो राध्यासमिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह देवयजने पृथिव्या इति देवयजने हि पृथिव्यै सम्भरति मखाय त्वा मखस्य त्वा शीर्ष्णऽइति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णऽइत्येवैतदाह ॥ ९ ॥ अथ वल्मीकवपाम् । देव्यो वम्र्य इत्येता वाऽएतदकुर्वत यथा-यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्धयति कृत्स्नं करोति भूतस्य प्रथमजा इतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्धयति कृत्स्नं करोति मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १० ॥ अथ वराहविहतम् । इयत्यग्रऽआसीदितीयती ह वाऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्धयति कृत्स्नं करोति मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ ११ ॥ अथादारान् । इन्द्रस्यौज स्थेति यत्र वाऽएनमिन्द्र ओजसा पर्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदादर्येव बत मऽएष रसो ऽस्तौषीदिति तस्मादादारा अथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्माद्ग्रावाङ्कीरिवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता अथ यदेनं तदिन्द्र ओजसा पर्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १२ ॥ अथाजालोमीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्तयैवैनमेतच्छुचा समर्धयति कृत्स्नं करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १३ ॥ तान्वाऽएतान्पञ्च सम्भारान्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रजापतिस्तदेतमेवैतत्प्रीणाति तान्सम्भृतानभिमृशति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १४ ॥ अथोत्तरतः प-

रिश्रितं भवति । तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरित्येष वै ब्रह्मणस्पतिर्
एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मणस्पतिरिति प्र
देव्येतु सूनृतेति देवी ह्येषा सूनृताछा वीरं नर्यं पङ्क्तिराधसमित्युपस्तौत्येवैनमे-
तन्महयत्येव देवा यज्ञं नयन्तु न इति सर्वानेवास्माऽएतद्देवानभिगोप्तॄन्करोति
॥१५॥ परिश्रितं भवति । एतद्धि देवा अबिभयुर्यद्वै न इमानि रक्षाꣳसि नाष्ट्रा
न हन्युरिति तस्माऽएतां पुरं पर्यश्रयंस्तथैवास्माऽअयमेतां पुरं परिश्रयति ॥१६॥
अथ खरे सादयति । मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरथ मृत्पिण्ड-
मपादाय महावीरं करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः प्रा-
देशमात्रं प्रादेशमात्रमिव हि शिरो मध्ये संगृहीतं मध्ये संगृहीतमिव हि शिरो
ऽथास्योपरिष्टात्त्र्यङ्गुलं मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तं वि[illegible]भिमृ-
शति मखस्य शिरोऽसीति मखस्य ह्येत[illegible]स्य शिर एवमितरौ तूष्णीं पिन्वने
तूष्णीꣳ रौहिणकपाले ॥१७॥ प्रजापतिर्वाऽएष यज्ञो भवति । उभयं वाऽएतत्प्र-
जापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य नि-
रुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ
रूपं तदस्य तेन संस्करोति स ह वाऽएतꣳ सर्वं कृत्स्नं प्रजापतिꣳ संस्करोति य
एवं विद्वानेतदेवं करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥१८॥ अथ
गवेधुकाभिर्ह्लिन्वति । यज्ञस्य शीर्षछिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे
तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसा-
वेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीꣳ रौहिणकपाले ॥१९॥ अथैनान्धूपय-
ति । अश्वस्य त्वा वृष्णः शक्ना धूपयामीति वृषा वाऽअश्वो वीर्यं वै वृषा वीर्येणै-
वैनमेतत्समर्धयति कृत्स्नं करोति देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शी-
र्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीꣳ रौहिणकपाले ॥२०॥ अथै-

नाञ्छ्रपयति । शृतꣳ हि देवानामिष्टकाभिः श्रपयत्येता वाऽएतदकुर्वत यथा-य-ज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्धयति कृत्स्नं करोति तद्व येनैव सु-शृताः स्युस्तेन श्रपयेदथ पचनमवधाय मखाय त्वेति दधाति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसाविव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीꣳ रौहिणकपाले तान्दि-ववोपवपेद्दिवोद्वपेद्दिवो हि देवानाम् ॥२१॥ स उद्वपति । ऋजवे त्वेत्यसौ वै लोक ऋजुः सत्यꣳ ह्यृजुः सत्यमेष य एष तपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्जवे त्वेति ॥२२॥ साधवे त्वेति । अयं वै साधुर्योऽयं पवतऽएष ह्री-मांलोकान्त्सिद्धोऽनुपवतऽएष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥२३॥ सुक्षित्यै त्वेति । अयं वै लोकः सुक्षितिरस्मिन्हि लोके सर्वाणि भूतानि क्षियन्त्यथोऽअग्निर्वै सुक्षितिरग्निर्ह्येवास्मिंलोके सर्वाणि भूतानि क्षियन्त्येष उ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीं पिन्वने तूष्णीꣳ रौहिणकपाले ॥२४॥ अथैनानाक्षणात्ति । अग्नये पयसा मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसाविव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीꣳ रौहिण-कपाले ॥२५॥ अथैतद्वै । आयुरेव ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥२६॥ ब्राह्मणम् ॥२॥ ॥

स यदेतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन्पुरस्ताद्दोऽग्रेण गार्हपत्यं प्राचः कुशान्त्स्तीर्य द्वन्द्वं पात्राण्युपसादयत्युपयमनीं महावीरं परीशासौ पि-न्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यद्व चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वं द्वन्द्वं वै वीर्यं यदा वै द्वौ सꣳरभेतेऽअथ तौ वीर्यं कुरुतो द्वन्द्वं वै मिथुनं प्रजननं मिथुनेनैवैनमेतत्प्र-जननेन समर्धयति कृत्स्नं करोति ॥१॥ अथाध्वर्युः । [illegible] ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहीति ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता

तमेवैतदाहाप्रमत्त आस्स्व यज्ञस्य शिरः प्रतिधास्याम इति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्रतिधेहीति प्रतिपद्यते होता ॥२॥ ब्रह्म जज्ञानं प्रथमं पुरस्तादिति । असौ वाऽआदित्यो ब्रह्माहरहः पुरस्ताज्जायतऽएष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह ब्रह्म जज्ञानं प्रथमं पुरस्तादित्यथ प्रोदत्यसावेव बन्धुः ॥३॥ स प्रोक्षति । यमाय त्वेत्येष वै यमो य एष तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह यमाय त्वेति ॥४॥ मखाय त्वेति । एष वै मखो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह मखाय त्वेति ॥५॥ सूर्यस्य त्वा तपसऽइति । एष वै सूर्यो य एष तपत्येष प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सूर्यस्य त्वा तपसऽइति ॥६॥ पूर्वया द्वारा स्थूणां निर्हृत्य । दक्षिणतो निमिन्वन्ति यथैनाꣳ होताभिष्टुवन्परापश्येद्यज्ञो वै होता स एवास्यामेतद्यज्ञं प्रतिदधाति तथैषा घर्मं पिन्वते ॥७॥ अग्रेणाहवनीयꣳ । सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तराꣳ राजासन्द्यै ॥८॥ औदुम्बरी भवति । ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति ॥९॥ अꣳसदघ्ना भवति । अꣳसयोर्वाऽइदꣳ शिरः प्रतिष्ठितं तदꣳसयोरेवैतच्छिरः प्रतिष्ठापयति ॥१०॥ बाल्वजीभी रज्जुभिर्व्युता भवति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति ॥११॥ अथ यदुत्तरत आसादयति । यज्ञो वै सोमः शिरः प्रवर्ग्य उत्तरं वै शिरस्तस्मादुत्तरत आसादयत्यथो राजा वै सोमः सम्राट् प्रवर्ग्य उत्तरं वै राज्यात्साम्राज्यं तस्मादुत्तरत आसादयति ॥१२॥ स यत्रैताꣳ होतान्वाह । अञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं [illegible] महावीरमाज्येन समनक्ति देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानां प्रसविता सर्वं वाऽइदं मधु यदिदं किं च तदेनमनेन सर्वेण समनक्ति तदस्मै सविता प्रसवि-

ता प्रसीति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति ॥१३॥ ॥ शतम् ६१०० ॥ ॥
अथोत्तरतः सिकता उपकीर्णा भवन्ति । तद्रजतं हिरण्यमधस्तादुपास्यति पृथिव्याः संस्पृशस्पाहीत्येतद्धि देवा अबिभयुर्यद्वै न इममधस्ताद्रक्षांसि नाष्ट्रा न हन्युरित्यग्निर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणां रक्षसामपहत्या अथो पृथिव्यु ह वा एतस्माद्बिभयां चकार यद्वै मायं तप्तः शुशुचानो न हिंस्यादिति तदेवास्या एतदन्तर्दधाति रजतं भवति रजतेव हीयं पृथिवी ॥१४॥ स यत्रैतां होतान्वाह । संसीदस्व महाँ२॥ असीति तदुभयत आदीप्ता मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति ॥१५॥ अथ यदुभयत आदीप्ता भवन्ति । सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा अपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्रोर्णुते तप्तो वा एष शुशुचानो भवति नेन्मेऽयं तप्तः शुशुचानश्चक्षुः प्रमुष्णादिति ॥१६॥ स प्रवृणक्ति । अर्चिरसि शोचिरसि तपोऽसीत्येष वै घर्मो य एष तपति सर्वं वा एतदेष तदेवैतत्प्रीणाति तस्मादाहार्चिरसि शोचिरसि तपोऽसीति ॥१७॥ अथास्यामाशिष आशास्ते । इयं वै यज्ञोऽस्यामेवैतदाशिष आशास्ते ता अस्मा इयं सर्वाः समर्धयति ॥१८॥ अनाधृष्टा पुरस्तादिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्नाष्ट्राभिरग्नेराधिपत्य इत्यग्निमेवास्या अधिपतिं करोति नाष्ट्राणां रक्षसामपहत्या आयुर्मे दा इत्यायुरेवात्मन्धत्ते तथो सर्वमायुरेति ॥१९॥ पत्रवती दक्षिणत इति । नात्र तिरोहितमिवास्तीन्द्रस्याधिपत्य इतीन्द्रमेवास्या अधिपतिं करोति नाष्ट्राणां रक्षसामपहत्यै प्रजां मे दा इति प्रजामेव यजमान आत्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥२०॥ सुषदा पश्चादिति । नात्र तिरोहितमिवास्ति देवस्य सवितुराधिपत्य इति देवमेवास्यै सवितारमधिपतिं करोति नाष्ट्राणां रक्षसामपहत्यै चक्षुर्मे दा इति चक्षुरेवात्मन्धत्ते तथो ह

चक्षुष्मान्भवति ॥२१॥ आश्रुतिरुत्तरत इति । आश्रावयन्नुत्तरत इत्येवैतदाह धातुराधिपत्यऽइति धातारमेवास्याऽअधिपतिं करोति नाष्ट्राणाᳬ रक्षसामपहत्यै रायस्पोषं मे दा इति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥२२॥ विधृतिरुपरिष्टादिति । विधारयन्नुपरिष्टादित्येवैतदाह बृहस्पतेराधिपत्यऽइति बृहस्पतिमेवास्याऽअधिपतिं करोति नाष्ट्राणाᳬ रक्षसामपहत्याऽओजो मे दा इत्योज एवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥२३॥ अथ दक्षिणत उत्तानेन पाणिना निह्नुते । विश्वाभ्यो मा नाष्ट्राभ्यस्पाहीति सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्ष्णश्छिन्नस्य [रसो व्यक्षरत्स] पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्धयति कृत्स्नं करोति ॥२४॥ अथेमामभिमृश्य जपति । मनोरश्वासीत्यश्वा ह वाऽइयं भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्धयति कृत्स्नं करोति ॥२५॥ अथ वैकङ्कतौ शकलौ परिश्रयति प्राञ्चौ । स्वाहा मरुद्भिः परिश्रीयस्वेत्यवरᳬ स्वाहाकारं करोति परां देवतामेष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादवरᳬ स्वाहाकारं करोति परां देवताम् ॥२६॥ मरुद्भिः परिश्रीयस्वेति । विशो वै मरुतो विशैवैतत्क्षत्रं परिबृᳬहति तदिदं क्षत्रमुभयतो विशा परिबृढं तूष्णीमुदञ्चौ तूष्णीं प्राञ्चौ तूष्णीमुदञ्चौ तूष्णीं प्राञ्चौ ॥२७॥ त्रयोदश सम्पादयति । त्रयोदश वै मासाः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्त्रयोदश सम्पादयति ॥२८॥ अथ सुवर्णᳬ हिरण्यमुपरिष्टान्निदधाति । दिवः सᳬस्पृशस्पाहीत्येतद्वै देवा अबिभयुर्यद्वै न इममुपरिष्टान्नाᳬसि नाष्ट्रा न हन्युरित्यग्निर्वाऽएतद्रेतो यद्धिरण्यं नाष्ट्राणाᳬ रक्षसामपहत्याऽअथो द्यौर्ह वाऽएतस्माद्विभयां चकार यद्वै मायं तप्तः शुशुचानो न हिᳬस्यादिति तदेवास्याऽएतदन्तर्दधाति हरितं भवति हरिणीव हि द्यौः ॥२९॥ अथ धवित्रैराधूनोति । मधु मध्विति त्रिः प्राणो वै

मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति ॥३०॥ अथापसलवि त्रिर्धून्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य [रसो व्यक्षरत्स] पितॄनगच्छत्तया वै पितरस्तेऽवैमेतत्समीरयन्ति ॥३१॥ अप वा एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे धुवनं तन्वते पुनः प्रसलवि त्रिर्धून्वन्ति षट् सम्पद्यन्ते षड्वाऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति अपयन्ति रौहिणौ स यदर्चिर्जायतेऽथ हिरण्यमादत्ते ॥३२॥ स यत्रैतांछ होताह्वाह । अग्रस्वतीमश्विना वाचमस्मेऽइति तदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्यतीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्यादथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापीयान्भविष्यतीति विद्याद्यथा न्वेव रुचितः स्यात्तथा धवितव्यः ॥३३॥ अथैतद्वै° ॥३४॥ ब्राह्मणम् ॥३॥ ॥

स यदैतदध्वर्युः । उपोत्तिष्ठन्नाह रुचितो घर्म इति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वाऽअवकाशाः प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वाऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥१॥ गर्भो देवानामिति । एष वै गर्भो देवानां य एष तपत्येष हीदंछ सर्वं गृह्णात्येतेनेदंछ सर्वं गृभीतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह गर्भो देवानामिति ॥२॥ पिता मतीनामिति । पिता ह्येष मतीनां पतिः प्रजानामिति पतिर्ह्येष प्रजानांछ ॥३॥ सं देवो देवेन सवित्रागतेति संछ हि देवो देवेन सवित्रागत संछ सूर्येण रोचतऽइति संछ हि सूर्येण रोचते ॥४॥ समग्निरग्निनागतेति । संछ ह्यग्निरग्निनागत सं देवेन सवित्रेति संछ हि देवेन सवित्रागत संछ सूर्येणारोचिष्टेति संछ हि सूर्येणारोचिष्ट ॥५॥ स्वाहा समग्निस्तपसागतेति संछ ह्यग्निस्तपसागतावरंछ स्वाहाकारं करोति परां देवतामसावेव बन्धुः सं दैव्येन सवित्रेति संछ हि दैव्येन सवित्रागत संछ सूर्येणारुरुचतेति संछ हि सूर्येणारुरुचत ॥६॥ ते वाऽएते त्रयोऽवकाशा भवन्ति । त्रयो

वै प्राणाः प्राण उदानो व्यानस्तेनैवास्मिन्नेतद्दधाति ॥७॥ धर्ता दिवो विभाति तपसस्पृथिव्यामिति । धर्ता ह्येष दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजा इति धर्ता ह्येष देवो देवानाममर्त्यस्तपोजा वाचमस्मे नियच्छ देवायुवमिति यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह ॥८॥ अपश्यं गोपामनिपद्यमानमिति । एष वै गोपा य एष तपत्येष हीद्ᳬ सर्वं गोपायत्यथो न निपद्यते तस्मादाहापश्यं गोपामनिपद्यमानमिति ॥९॥ आ च परा च पथिभिश्चरन्तमिति । आ च ह्येष परा च देवैः पथिभिश्चरति स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मीनावरीवर्त्ति भुवनेष्वन्तरिति पुनः-पुनर्ह्येष एषु लोकेषु वरीवर्त्यमानश्चरति ॥१०॥ विश्वासां भुवां पते । विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पतऽइत्येतस्य सर्वस्य पतऽइत्येतद्देवश्रुत्त्वं देव घर्म देवो देवान्पाहीति नात्र तिरोहितमिवास्ति ॥११॥ अत्र प्रावीरनु वां देववीतयऽइति । अश्विनावेवैतदाहाश्विनौ वाऽएतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहात्र प्रावीरनु वां देववीतयऽइति ॥१२॥ मधु माध्वीभ्यां मधु माधूचीभ्यामिति । दध्यङ् ह वाऽआभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मादाह मधु माध्वीभ्यां मधु माधूचीभ्यामिति ॥१३॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वोऽअध्वरं दिवि देवेषु धेहीति नात्र तिरोहितमिवास्ति ॥१४॥ पिता नोऽसि पिता नो बोधीति । एष वै पिता य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति नमस्तेऽअस्तु मा मा हिᳬसीरित्याशिषमेवैतदाशास्ते ॥१५॥ अथ पत्न्यै शिरोऽपवृत्य । महावीरमीक्षमाणां वाचयति त्वष्टृमन्तस्त्वा सपेमेति वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१६॥ अथैतद्धि° ॥१७॥ ब्राह्मणम् ॥४॥ प्रथमोऽध्यायः [१२]॥

अथातो रौहिणौ जुहोति । अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे-
त्युभावेतेन यजुषा प्राता रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहेत्युभावे-
तेन यजुषा सायम् ॥१॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह वाऽआदित्यश्च रौ-
हिणावेताभ्याꣳ हि देवताभ्यां यजमानाः स्वर्गं लोकꣳ रोहन्ति ॥२॥ अथोऽअहो-
रात्रे वै रौहिणौ । आदित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति त-
स्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥३॥ अथोऽइमौ वै लोकौ रौहिणौ । आदि-
त्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोका-
भ्यां परिगृहीतः ॥४॥ अथो चक्षुषी वै रौहिणौ । शिरः प्रवर्ग्यः शीर्षंस्तच्चक्षुर्द-
धाति ॥५॥ अथ रज्जुमादत्ते । देवेभ्यस्त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यामाददे रास्नासीत्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति । जघनेन गार्ह-
पत्यं यन्निडऽएह्यदितऽएहि सरस्वत्येहीतीडा हि गौरदितिर्हि गौः सरस्वती हि
गौरथो तेराह्वयति नाम्नासाविह्यसावेहीति त्रिः ॥७॥ तामागतामभिदधाति । अ-
दित्यै रास्नासीन्द्राण्या उष्णीष इतीन्द्राणी ह वाऽइन्द्रस्य प्रिया पत्नी तस्या उ-
ष्णीषो विश्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥८॥ अथ वत्समुपार्ज-
ति । पूषासीत्ययं वै पूषा योऽयं पवतऽएष हीदꣳ सर्वं पुष्यत्येष उ प्रवर्ग्यस्तदे-
तमेवैतत्प्रीणाति तस्मादाह पूषासीति ॥९॥ अथोन्नयति । घर्माय दीष्वेत्येष वा
ऽअत्र घर्मो रसो भवति यमेषा पिन्वते तस्मै दयस्वेत्येवैतदाह ॥१०॥ अथ पि-
न्वने पिन्वयति । अश्विभ्यां पिन्वस्वेत्यश्विनावेवैतदाहाश्विनौ वाऽएतद्यज्ञस्य
शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहाश्विभ्यां पिन्वस्वेति ॥११॥ सरस्व-
त्यै पिन्वस्वेति । वाग्वै सरस्वती वाचा वाऽएतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तां
तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्वस्वेति ॥१२॥ इन्द्राय पिन्वस्वेति ।
इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः

प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्वस्वेति ॥१३॥ अथ विप्रुषोऽभिमन्त्रयते । स्वाहेन्द्रवत्स्वाहेन्द्रवदितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व आह त्रिवृद्धि यज्ञोऽवरᳮ स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१४॥ अथास्यै स्तनमभिपद्यते । यस्ते स्तनः शशयो यो मयोभूरिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह यो रत्नधा वसुविद्यः सुदत्र इति यो धनानां दाता वसुवित्पणाय्य इत्येवैतदाह येन विश्वा पुष्यसि वार्याणीति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह सरस्वति तमिह धातवेऽकरिति वाग्वै सरस्वती सैषा घर्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्धमेत्युर्वन्तरिक्षमन्वेमीत्यसावेव बन्धुः ॥१५॥ अथ शफावादत्ते । गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसीति गायत्रेण चैवैनावेतत्त्रैष्टुभेन च छन्दसादत्ते द्यावापृथिवीभ्यां त्वा परिगृह्णामीतीमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णात्यथ मौञ्जेन वेदेनोपमार्ष्ट्यसावेव बन्धुः ॥१६॥ अथोपयमन्योपगृह्णाति । अन्तरिक्षेणोपयच्छामीत्यन्तरिक्षं वाऽउपयमन्यन्तरिक्षेण हीदᳮ सर्वमुपयतमथोऽउदरं वाऽउपयमन्युदरेण हीदᳮ सर्वमन्नाद्यमुपयतं तस्मादाहान्तरिक्षेणोपयच्छामीति ॥१७॥ अथाजाक्षीरमानयति । तप्तो वाऽएष शुशुचानो भवति तमेवैतच्छमयति तस्मिञ्छान्ते गोक्षीरमानयति ॥१८॥ इन्द्राश्विनेति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वाऽएतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥१९॥ मधुनः सारघस्येति । एतद्वै मधु सारघं घर्मं पातेति रसं पातेत्येवैतदाह वसव इत्येते वै वसव एते हीदᳮ सर्वं वासयन्ते यजत वाडिति तद्यथा वषट्कृतᳮ हुतमेवमस्यैतद्भवति ॥२०॥ स्वाहा सूर्यस्य रश्मये वृष्टिवनय

ऽइति । सूर्यस्य ह वाऽएको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्यस्य रश्मये वृष्टिवनयऽइत्यवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै° ॥२२॥ ब्राह्मणम् ॥५ [२. १.] ॥ प्रथमः प्रपाठकः ॥ कण्डिकासंख्या१३२ ॥ ॥

स यत्रैताः होतान्वाह । प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृतेति तदध्वर्युः प्राङुदायन्वातनामानि जुहोत्येतद्वै देवा अबिभयुर्यद्वै न इममन्तरा रक्षांसि नाष्ट्रा न हन्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुस्तं हुतमेव सन्तमग्नावजुहवुस्तथोऽएवैनमेष एतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तं हुतमेव सन्तमग्नौ जुहोति ॥१॥ समुद्राय त्वा वाताय स्वाहेति । अयं वै समुद्रो योऽयं पवतऽएतस्माद्धि समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्माऽएवैनं जुहोति तस्मादाह समुद्राय त्वा वाताय स्वाहा ॥२॥ सरिराय त्वा वाताय स्वाहेति । अयं वै सरिरो योऽयं पवतऽएतस्माद्धि सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरते तस्माऽएवैनं जुहोति तस्मादाह सरिराय त्वा वाताय स्वाहा ॥३॥ अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहेति । अयं वाऽअनाधृष्योऽप्रतिधृष्यो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाहानाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहेति ॥४॥ अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेति । अयं वाऽअवस्युरशिमिदो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाहावस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेति ॥५॥ इन्द्राय त्वा वसुमते रुद्रवते स्वाहेति । अयं वाऽइन्द्रो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवतऽइति तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजत्यथो प्रातःसवनस्य चैवैतन्माध्यन्दिनस्य च सवनस्य रूपं क्रियते ॥६॥ इन्द्राय त्वादित्यवते स्वाहेति । अयं वाऽइन्द्रो योऽयं पवते तस्मा

ऽएवैनं जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवतऽइति तदिन्द्रमेवान्वादित्यानाभजत्यथो तृतीयसवनस्यैवैतद्रूपं क्रियते ॥७॥ इन्द्राय त्वाभिमातिघ्ने स्वाहेति । अयं वाऽइन्द्रो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न इति सपत्नो वाऽअभिमातिरिन्द्राय त्वा सपत्नघ्नऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऋते देवेभ्यः ॥८॥ सवित्रे त्वऽऋभुमते विभुमते वाजवते स्वाहेति । अयं वै सविता योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाह सवित्रे त्वेत्यृभुमते विभुमते वाजवतऽइति तदस्मिन्विश्वान्देवानन्वाभजति ॥९॥ बृहस्पतये त्वा विश्वदेव्यावते स्वाहेति । अयं वै बृहस्पतिर्योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाह बृहस्पतये त्वेति विश्वदेव्यावतऽइति तदस्मिन्विश्वान्देवानन्वाभजति ॥१०॥ यमाय त्वाङ्गिरस्वते पितृमते स्वाहेति । अयं वै यमो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाह यमाय त्वेत्यङ्गिरस्वते पितृमतऽइति यज्ञस्य शीर्षछिन्नस्य [रसो व्यक्षरत्स] पितॄनगछत्तया वै पितरस्तानेवैतदन्वाभजति ॥११॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति ॥१२॥ अथोपयमन्या महावीरऽआनयति । स्वाहा घर्मायेत्येष वै घर्मो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह स्वाहा घर्मायेत्यवर७ स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१३॥ आनीते जपति । स्वाहा घर्मः पित्रऽइति यज्ञस्य शीर्षछिन्नस्य [रसो व्यक्षरत्स] पितॄनगछत्तया वै पितरस्तानेवैतत्प्रीणात्यवर७ स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१४॥ नानुवाक्यामन्वाह । सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाहातिक्रम्याश्राव्याह घर्मस्य यजेति वषट्कृते जुहोति ॥१५॥ विश्वा आशा दक्षिणसदिति सर्वा आशा दक्षिणसदित्येवैतदाह विश्वान्देवानयाडिहेति सर्वान्देवानयाक्षीदित्येवैतदाह

स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विनेत्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणात्यवरु स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१६॥ अथ स्रुवोर्ध्वमुत्कम्पयति । दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यसौ वाऽआदित्यो घर्मो यज्ञो दिवि वाऽएष हितो दिवि प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यनुवषट्कृते जुहोति ॥१७॥ स्वाहाग्नये यज्ञियायेति । तत्स्विष्टकृद्भाजनमग्निर्हि स्विष्टकृछं यजुर्भ्य इति यजुर्भिर्ह्येषोऽस्मिंल्लोके प्रतिष्ठितस्तान्येवैतत्प्रीणात्यवरु स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१८॥ अथ ब्रह्मानुमन्त्रयते । ब्रह्मा वाऽऋत्विजां भिषक्तमस्तस्य एवऽर्त्विजां भिषक्तमस्तेनैवैनमेतद्यज्ञं भिषज्यति ॥१९॥ अश्विना घर्मं पातमिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति ॥२०॥ हार्द्वानमहर्दिवाभिरूतिभिरिति । अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति ॥२१॥ तन्त्रायिणऽइति । एष वै तन्त्रायो य एष तपत्येष हीमांल्लोकांस्तन्त्रमिवानुसंचरत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिणऽइति ॥२२॥ नमो द्यावापृथिवीभ्यामिति । तदाभ्यां द्यावापृथिवीभ्यां निह्नुते ययोरिदरु सर्वमधि ॥२३॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञं भिषज्यति ॥२४॥ अपातामश्विना घर्ममिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति ॥२५॥ अनु द्यावापृथिवीऽअमरुसातामिति । तदिमे द्यावापृथिवीऽआह ययोरिदरु सर्वमधीहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाह ॥२६॥ अथ पिन्वमानमनुमन्त्रयते । इषे पिन्वस्वेति वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यूर्जे पिन्वस्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ब्रह्मणे पिन्वस्वेति तद्ब्रह्मणऽआह क्षत्राय पिन्वस्वेति तत्क्षत्रायाह द्यावापृथिवीभ्यां पिन्वस्वेति तदाभ्यां द्यावापृथिवीभ्या-

ऽएवैनं जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवतऽइति तदिन्द्रमेवान्वादित्यानाभजत्ययो तृतीयसवनस्यैवैतद्रूपं क्रियते ॥७॥ इन्द्राय त्वाभिमातिघ्ने स्वाहेति । अयं वाऽइन्द्रो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न इति सपत्नो वाऽअभिमातिरिन्द्राय त्वा सपत्नघ्नऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऋते देवेभ्यः ॥८॥ सवित्रे त्वऽऋभुमते विभुमते वाजवते स्वाहेति । अयं वै सविता योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाह सवित्रे त्वेत्यृभुमते विभुमते वाजवतऽइति तदस्मिन्विश्वान्देवानन्वाभजति ॥९॥ बृहस्पतये त्वा विश्वदेव्यावते स्वाहेति । अयं वै बृहस्पतिर्योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाह बृहस्पतये त्वेति विश्वदेव्यावतऽइति तदस्मिन्विश्वान्सर्वान्देवानन्वाभजति ॥१०॥ यमाय त्वाङ्गिरस्वते पितृमते स्वाहेति । अयं वै यमो योऽयं पवते तस्माऽएवैनं जुहोति तस्मादाह यमाय त्वेत्यङ्गिरस्वते पितृमतऽइति यज्ञस्य शीर्षच्छिन्नस्य [रसो व्यक्षरत्स] पितॄनगच्छ[त्त]या वै पितरस्तानेवैतद[न्वा]भजति ॥११॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति ॥१२॥ अथोपयमन्या महावीरऽआनयति । स्वाहा घर्मायेत्ये[ष] वै घर्मो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणा[ति] तस्मादाह स्वाहा घर्मायेत्यवरु[द्ध] स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१३॥ आनी[तं] जपति । स्वाहा घर्मः पित्रऽइति यज्ञस्य शीर्षच्छिन्नस्य [रसो व्य[क्षरत्स]] पितॄनगच्छत्तया वै पितरस्तानेवैतत्प्रीणात्यवरु[द्ध] स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१४॥ नानुवाक्यामन्वाह । सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाहातिक्रम्याश्राव्याह घर्मस्य यजेति वषट्कृते जुहोति ॥१५॥ विश्वा आशा दक्षिणासदिति सर्वा आशा दक्षिणासदित्येवैतदा[ह] विश्वान्देवानयाडिहेति सर्वान्देवानयाक्षीदिहेत्येवैतदाह

स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विनेत्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणात्यथ स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१६॥ अथ स्रुचावूर्ध्वमुत्कम्पयति । दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यसौ वाऽआदित्यो घर्मो यज्ञो दिवि वाऽएष हितो दिवि प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यनुवषट्कृते जुहोति ॥१७॥ स्वाहाग्नये यज्ञियायेति । तत्स्विष्टकृद्भाजनमग्निर्हि स्विष्टकृच्छं यजुर्भ्य इति यजुर्भिर्ह्येषोऽस्मिँल्लोके प्रतिष्ठितस्तान्येवैतत्प्रीणात्यथ स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥१८॥ अथ ब्रह्मानुमन्त्रयते । ब्रह्मा वाऽऋत्विजां भिषक्तमस्तस्य एवऽर्त्विजां भिषक्तमस्तेनैवैनमेतद्यज्ञं भिषज्यति ॥१९॥ अश्विना घर्मं पातमिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति ॥२०॥ हार्द्वानमहर्दिवाभिरूतिभिरिति । अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति ॥२१॥ तन्त्रायिणऽइति । एष वै तन्त्रायी य एष तपत्येष हीमाँल्लोकांस्तन्त्रमिवानुसंचरत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिणऽइति ॥२२॥ नमो द्यावापृथिवीभ्यामिति । तदाभ्यां द्यावापृथिवीभ्यां निह्नुते ययोरिदꣳ सर्वमधि ॥२३॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञं भिषज्यति ॥२४॥ अपातामश्विना घर्ममिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति ॥२५॥ अनु द्यावापृथिवीऽअमꣳसातामिति । तदिमे द्यावापृथिवीऽआह ययोरिदꣳ सर्वमधीहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाह ॥२६॥ अथ पिन्वमानमनुमन्त्रयते । इषे पिन्वस्वेति वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यूर्जे पिन्वस्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ब्रह्मणे पिन्वस्वेति तद्ब्रह्मणऽआह क्षत्राय पिन्वस्वेति तत्क्षत्रायाह द्यावापृथिवीभ्यां पिन्वस्वेति तदाभ्यां द्यावापृथिवीभ्या-

माह ययोरिदꣳ सर्वमधि ॥२७॥ स यदूर्ध्वः पिन्वते । तद्यजमानाय पिन्वते यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजायाऽअनपराद्धं न्वेव यजमानस्योर्ध्वो ह्येव पिन्वत्याथ यां दिशं पिन्वते तां पिन्वते यदा शाम्यन्ति विप्रुषः ॥२८॥ अथ प्राङिवोदङ्ङुत्क्रामति । धर्मासि सुधर्मेत्येष वै धर्मो य एष तपत्येष हीदꣳ सर्वं धारयत्येतेनेदꣳ सर्वं धृतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह धर्मासि सुधर्मेति ॥२९॥ अथ खरे सादयति । अमेन्यस्मे नृम्णानि धारयेत्यक्रुध्यन्तो धनानि धारयेत्येवैतदाह ब्रह्म धारय क्षत्रं धारय विशं धा[illegible] धारयेत्येवैतदाह ॥३०॥ अथ शाकलैर्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥३१॥ स्वाहा पूष्णे शरसऽइति । अयं वै पूषा योऽयं पवतऽएष हीदꣳ सर्वं पुष्यत्येष उ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरसऽइत्यवरꣳ स्वाहाकारं करोति परां देवताम[illegible]विव बन्धुर्हुत्वा मध्यमे परिधाऽउपश्रयति ॥३२॥ स्वाहा ग्रावभ्य इति । प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥३३॥ स्वाहा प्रतिरवेभ्य इति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वं प्रतिरतं प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥३४॥ स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्य इति । अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्धे बर्हिष उपगूहति यज्ञस्य शीर्षच्छिन्नस्य [रसो व्यक्षरत्स] पितॄनगच्छत्त्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्रेक्षते सकृदु ह्येव पराञ्चः पितरः ॥३५॥ स्वाहा द्यावापृथिवीभ्यामिति । प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥३६॥ स्वाहा विश्वेभ्यो देवेभ्य इति । प्राणा वै विश्वे देवाः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥३७॥ स्वाहा रुद्राय रुद्रहूतयऽइति । अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति तꣳ स उत्तरतः शालायाऽउदञ्चं निरस्यत्येषा ह्येतस्य देवस्य

दिक्स्वायमेवैनमेतद्दिशि प्रीणात्यथ यन्न प्रेक्षते नेन्मा रुद्रो हिनसदिति ॥३८॥ सप्तैता आहुतयो भवन्ति । सप्त वाऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥३९॥ अथ महावीराद्रुपयमन्यां प्रत्यानयति । स्वाहा सं ज्योतिषा ज्योतिरिति ज्योतिर्वाऽइतरस्मिन्पयो भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी संगच्छेतेऽअवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः ॥४०॥ ॥ शतम् ७००० ॥ ॥ अथ रौहिणौ जुहोति । अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धू रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धुः ॥४१॥ अथ यजमानाय घर्मोच्छिष्टं प्रयच्छति । स उपहवमिष्ट्वा भक्षयति मधु हुतमिन्द्रतमेऽअग्नाविति मधु हुतमिन्द्रियवत्तमेऽग्ना[illegible] ते देव घर्म नमस्तेऽअस्तु मा मा हिंसीरित्याशिषमेवैतदाशास्ते ॥४२॥ अथ दक्षिणतः सिकता उपकीर्णा भवन्ति । तन्मार्जयन्ते य एव मार्जालीये बन्धुः सोऽत्रानुप्रहरति शाकलानथोपसदा चरन्त्येतद्वै यज्ञस्य शिरः संस्कृतं यथा-यथैनं तदश्विनौ प्रत्यधत्ताम् ॥४३॥ तं न प्रथमयज्ञे प्रवृञ्ज्यात् । एनस्यं हि तदथो नेन्मऽइन्द्रः शिरश्छिनददिति द्वितीये वैव तृतीये वापशीर्ष्णा ह्येवाग्रे यज्ञेन देवा अर्चन्तः श्राम्यन्तश्चेरुस्तस्माद्द्वितीये वैव तृतीये वाथो तप्तो वाऽएष शुशुचानो भवति ॥४४॥ तं यत्प्रथमयज्ञे प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्रजां च पशूंश्च प्रदहेदथोऽआयुः प्रमायुको यजमानः स्यात्तस्माद्द्वितीये वैव तृतीये वा ॥४५॥ तं न सर्वस्माऽइव प्रवृञ्ज्यात् । सर्वं वै प्रवर्ग्यो नेत्सर्वस्माऽइव सर्वं करवाणीति यो न्वेव ज्ञातस्तस्मै प्रवृञ्ज्याद्यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनं प्राप्नुयात् ॥४६॥ सहस्रे प्रवृञ्ज्यात् । सर्वं वै सहस्रं सर्वमेष सर्ववेदसे प्रवृञ्ज्यात्सर्वं वै सर्ववेदसं सर्वमेष विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राजसूये प्रवृञ्ज्यात्सर्वं हि तत्सत्त्रे प्रवृञ्ज्यात्सर्वं वै सत्त्रं सर्वमेष एतान्यस्य प्रवर्जनान्यतो

ऽलिङ्गा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवति ॥१७॥ ते यऽएवमेतद्विदुः । ये चामीऽअरण्ये श्रद्धाꣳ सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्याꣳषण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति ॥१८॥ अथ ये यज्ञेन दानेन । तपसा लोकं जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिꣳ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमꣳ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्तऽआकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति तऽएवमेवानुपरिवर्तन्तेऽथ यऽएतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥१९॥ ब्राह्मणम् ॥२ [९. १.] ॥ ॥

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥१॥ यो ह वै वसिष्ठां वेद । वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवति य एवं वेद ॥२॥ यो ह वै प्रतिष्ठां वेद । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥३॥ यो ह वै सम्पदं वेद । सꣳ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः सꣳ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥४॥ यो ह वाऽआयतनं वेद । आयतनꣳ स्वानां भवत्यायतनं जनानां मनो वाऽआयतनमायतनꣳ स्वानां भवत्यायतनं

जनानां य एवं वेद ॥५॥ यो ह वै प्रजातिं वेद । प्रजायते प्रजया पशुभी रेतो वै प्रजातिः प्रजायते प्रजया पशुभिर्य एवं वेद ॥६॥ ते हेमे प्राणाः । अहꣳश्रेयसे विवदमाना ब्रह्म जग्मुः को नो वसिष्ठ इति यस्मिन्व उत्क्रान्त इदꣳ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥७॥ वाग्घोच्चक्राम । सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कडा अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥८॥ चक्षुर्होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथान्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥९॥ श्रोत्रꣳ होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥१०॥ मनो होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥११॥ रेतो होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥१२॥ अथ ह प्राण उत्क्रमिष्यन् । यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवꣳ हैवेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्य वै मे बलिं कुरुतेति तथेति ॥१३॥ सा ह वागुवाच । यद्वा अहं वसिष्ठास्मि त्वं तद्व-

सिष्ठोऽसीति चक्षुर्यद्वाऽग्रहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति श्रोत्रं यद्वाऽग्रहᳬ सम्पदस्मि त्वं तत्सम्पदसीति मनो यद्वाऽग्रहमायतनमस्मि त्वं तदायतनमसीति रेतो यद्वाऽग्रहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति तस्यो मे किमन्नं किं वास इति यदिदं किं चा श्वभ्य श्रा क्रिमिभ्य श्रा कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वाऽग्रस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद ॥१४॥ तद्विद्वाᳬसः श्रोत्रियाः । अशिष्यन्त श्राचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्नं कुरुते ॥१५॥ ब्राह्मणम् ॥ ३ [९. २.] ॥ ॥

स यः कामयते । महत्प्राप्नुयामित्युदगयनऽश्रापूर्यमाणपक्षे पुण्याहे द्वादशाह-मुपसद्व्रती भूत्वौदुम्बरे कᳬसे चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमुह्य परिलिप्याग्निमुपसमाधायावृताज्यᳬ संस्कृत्य पुᳬसा नक्षत्रेण मन्थᳬ संनीय जुहो-ति ॥१॥ यावन्तो देवास्त्वयि जातवेदः । तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् तेभ्यो ऽहं भागधेयं जुहोमि ते मा तृप्ताः कामैस्तर्पयन्तु स्वाहा ॥२॥ या तिरश्ची निप-द्यतेऽहं विधरणीऽइति । तां त्वा घृतस्य धारया यजे सᳬराधनीमहᳬ स्वाहा । प्रजापते न त्वदेतान्यन्य इति तृतीयां जुहोति ॥३॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वा-हेति । अग्नौ हुत्वा मन्थे सᳬस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ॰ चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ॰ श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ॰ मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ॰ रेतसे स्वाहेत्यग्नौ॰ ॥४॥ भूताय स्वाहेति । अग्नौ॰ भविष्यते स्वा-हेत्यग्नौ॰ विश्वाय स्वाहेत्यग्नौ॰ सर्वाय स्वाहेत्यग्नौ॰ ॥५॥ पृथिव्यै स्वाहेति । अ-ग्नौ॰ अन्तरिक्षाय स्वाहेत्यग्नौ॰ दिवे स्वाहेत्यग्नौ॰ दिग्भ्यः स्वाहेत्यग्नौ॰ ब्रह्मणे स्वा-हेत्यग्नौ॰ क्षत्राय स्वाहेत्यग्नौ॰ ॥६॥ भूः स्वाहेति । अग्नौ॰ भुवः स्वाहेत्यग्नौ॰ स्वः

स्वाहेत्यग्नौ° भूर्भुवः स्वः स्वाहेत्यग्नौ° ॥७॥ अग्नये स्वाहेति । अग्नौ° सोमाय
स्वाहेत्यग्नौ° तेजसे स्वाहेत्यग्नौ° श्रियै स्वाहेत्यग्नौ° लक्ष्म्यै स्वाहेत्यग्नौ° सवित्रे
स्वाहेत्यग्नौ° सरस्वत्यै स्वाहेत्यग्नौ° विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ° प्रजापतये
स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥८॥ अथैनमभिमृशति । भ्रमसि ज्वल-
दसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमस्युद्गी-
यमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरसि ज्यो-
तिरस्यन्नमसि निधनमसि संवर्गोऽसीति ॥९॥ अथैनमुद्यच्छति । आमोऽस्यामꣳ हि
ते मयि स हि राजेशानोऽधिपतिः स मा राजेशानोऽधिपतिं करोत्विति ॥१०॥
अथैनमाचामति । तत्सवितुर्वरेण्यम् मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः
माध्वीर्नः सन्त्वोषधीः भूः स्वाहा ॥११॥ भर्गो देवस्य धीमहि । मधु नक्त-
मुतोषसो मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तु नः पिता भुवः स्वाहा ॥१२॥
धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाꣳ२ऽअस्तु सूर्यः माध्वीर्गा-
वो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीः स-
र्वाश्च व्याहृतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य प्रक्षाल्य
पाणी जघनेनाग्निं प्राक्शिराः संविशति ॥१३॥ प्रातरादित्यमुपतिष्ठते । दिशामे-
कपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमा-
सीनो वꣳशं जपति ॥१४॥ तꣳ हैतमुद्दालक आरुणिः । वाजसनेयाय याज्ञव-
ल्क्यायान्तेवासिनऽउक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः
प्ररोहेयुः पलाशानीति ॥१५॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो । मधुकाय
पैङ्ग्यायान्तेवा° ॥१६॥ एतमु हैव मधुकः पैङ्ग्यः । चूडाय भागवित्तयेऽन्तेवा° ॥१७॥
एतमु हैव चूडो भागवित्तिः । जानकयऽआयस्थूणायान्तेवा° ॥१८॥ एतमु हैव
जानकिरायस्थूणः । सत्यकामाय जाबालायान्तेवा° ॥१९॥ एतमु हैव सत्यकामो

जाबालो । ऽन्तेवासिभ्य उक्त्वोवाचापि य एनᳪं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥२०॥ चतुरौदुम्बरो भवति । औदुम्बरश्चमस औदुम्बरः स्रुव औदुम्बर इध्म औदुम्बर्या उप मन्थन्यौ ॥२१॥ दश ग्राम्याणि धान्यानि भवन्ति । व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्त्सार्धं पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चत्याज्यस्य जुहोति ॥२२॥ ब्राह्मणम् ॥४ [९. ३.] ॥ ॥

एषां वै भूतानां पृथिवी रसः । पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥१॥ स ह प्रजापतिरीक्षां चक्रे । हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियᳪं ससृजे ताᳪं सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत श्रीर्ह्येषा स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥२॥ तस्या वेदिरुपस्थो । लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्या स स्त्रीणाᳪं सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते ॥३॥ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वाᳪंसोऽधोपहासं चरन्तीति ॥४॥ बहु वा इदᳪं सुप्तस्य वा जाग्रतो वा रेत स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्नयो धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥५॥ अथ यद्युदक आत्मानं पश्येत् । तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणᳪं सुकृतमिति ॥६॥ श्रीर्ह वा एषा

स्त्रीणाम् । यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामपक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आददऽइत्ययशा एव भवति ॥७॥ स यामिच्छेत् । कामयेत मेति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ संधायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधि जायसे स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति ॥८॥ अथ यामिच्छेत् । न गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आददऽइत्यरेता एव भवति ॥९॥ ॥ शतम् ७६०० ॥ ॥ अथ यामिच्छेत् । गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥१०॥ अथ यस्य जायायै जारः स्यात् । तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिः स्तीर्त्वा तस्मिन्नेतास्तिस्रः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीराशापराकाशौ तऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः पुत्रपशूꣳस्तऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः प्राणापानौ तऽआददेऽसाविति नाम गृह्णाति स वाऽएष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंवि[illegible]श्रोत्रियस्य जायाया उपहासं नेच्छेदुत ह्येवंवित्परो भवति ॥११॥ अथ यस्य जायामार्तवं विन्देत् । त्र्यहं कꣳसे न पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्तऽआप्लुत्य व्रीहीनवघातयेत् ॥१२॥ स य इच्छेत् । पुत्रो मे गौरो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१३॥ अथ य इच्छेत् । पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा॰ ॥१४॥ अथ य इच्छेत् । पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं

पाचयित्वा° ॥१५॥ अथ य इच्छेत् । दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा° ॥१६॥ अथ य इच्छेत् । पुत्रो मे पण्डितो विजिगीथः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवाऽऔक्ष्णेन वार्षभेण वा ॥१७॥ अथाभिप्रातरेव । स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणीऽउदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रफर्व्यम् सं जायां पत्या सहेति ॥१८॥ अथैनामभिपद्यते । ऽमोऽहमस्मि सा त्वꣳ सा त्वमस्यमोऽअहम् सामाहमस्मि ऽऋक्त्वं द्यौरहं पृथिवी त्वम् तावेहि सꣳरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तयऽइति ॥१९॥ अथास्याऽऊरू विहापयति । विजिहीथां द्यावापृथिवीऽइति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं तेऽअश्विनौ देवावाधत्तां पुष्करस्रजौ ॥२०॥ हिरण्ययीऽअरणी । याभ्यां निर्मन्थतामश्विनौ देवौ तं ते गर्भं दधामहे दशमे मासि सूतवे ॥ यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति नाम गृह्णाति ॥२१॥ सोष्यन्तीमद्भिरभ्युक्षति । यथा वातः पुष्करिणीꣳ समीङ्गयति सर्वतः एवा ते गर्भ एजतु सहावैतु जरायुणा ॥ इन्द्रस्यायं व्रजः कृतः सार्गडः सपरिश्रयः तमिन्द्र निर्जहि गर्भेण सावरꣳ सहेति ॥२२॥ जातेऽग्निमुपसमाधाय । अङ्कऽआधाय कꣳसे पृषदाज्यमानीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वगृहे अस्योपसद्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा मयि प्राणांस्त्वयि मनसा

जुहोमि स्वाहा ॥२३॥ यत्कर्मणात्यरीरिचम् । यद्वा न्यूनमिहाकरम् अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳ सुहुतं करोतु स्वाहेति ॥२४॥ अथास्यायुष्यं करोति । दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथास्य नामधेयं करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम स्यादथ दधि मधु घृतꣳ सꣳसृज्यानन्तर्हितेन जातरूपेण प्राशयति भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥२५॥ अथैनमभिमृशति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव आत्मा वै पुत्रनामासि स जीव शरदः शतमिति ॥२६॥ अथास्य मातरमभिमन्त्रयते । इडासि मैत्रावरुणी वीरे वीरमजीजनथाः सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदिति ॥२७॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति । यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकरिति ॥२८॥ तं वाऽएतमाहुः । अतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्राप श्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायतऽइति ॥२९॥ अथ वꣳशः । तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्गीपुत्राद्गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥३०॥ काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्यामाठरीपुत्रः कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रो शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्र आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागी-

पुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्रः ॥३१॥ आलम्बीपुत्रात् । आलम्बीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥३२॥ प्राश्नीपुत्रात् । आसुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावा बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥३३॥ ब्राह्मणम् ॥५ [१. ४.] ॥ ॥ सप्तमः प्रपाठकः ॥ कण्डिकासंख्या१०१ ॥ नवमोऽध्यायः [१००.] ॥ ॥ अस्मिन्काण्डे कण्डिकासंख्या७१६ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणेऽउपनिषन्नाम चतुर्दशं काण्डं समाप्तम् ॥१४॥ ॥

## EXTRACTS FROM THE COMMENTARY OF DVIVEDAGANGA.

द्वया ह प्राजापत्या इत्येवमाद्या षडध्यायी माध्यन्दिनीयब्राह्मणोपनिषत् तस्या इयमल्पग्रन्था वृत्तिरारभ्यते ॥ उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैव वाच्या उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणां सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्थकत्वेनोपचाराउपनिषदित्युच्यते । बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशात् अर्थतो ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् ॥ ॥ अथ कर्मकाण्डज्ञानकाण्डयोर्नियतपौर्वापर्ये सम्बन्धोऽभिधीयते नित्यानित्यवस्तुविवेकवैराग्यशमादिमुमुक्षुत्वसम्पत्तिहेतुसत्त्वशुद्धिसम्प

दकतया (°त्तुर्वं स° Cod.) कर्मकाण्डस्य प्राथम्यम् [illegible] तत्वज्ञानजनकत्वा-
ऽज्ञानकाण्डस्य नियतमुत्तरभावित्वमित्युपायोपेयभावः काण्डयोः सम्बन्ध इति ब्रूमः ॥ ॥ पू-
र्वमग्निरहस्यकाण्डसमाप्तावश्वमेधाग्निब्राह्मणाभ्यां (१०. ६. ४-५.) समुच्चितयोः केवलयोर्वा ज्ञा-
नकर्मणोर्मृत्य्वात्मभावः परं फलमित्युक्तम् अथेदानीं मृत्य्वात्मभावसाधनभूतयोः कर्मज्ञान-
योर्यत उद्भवस्तस्योद्भावकस्योपास्यस्य प्राणस्य स्वरूपनिर्णयार्थमुद्गीथब्राह्मणमारभ्यते । प्राणो-
पास्तिर्हि ज्ञानकर्मोत्पत्तिप्रतिबन्धकीभूतरागाद्यपध्वस्तिहेतुः । तस्याः पाप्ममृत्य्वतिक्रमणावा-
न्तरफलत्वात् । कोऽसौ पाप्मा मृत्युः कुतो वा तस्योद्भवः केन वा तस्यातिक्रमणं कथं चेति
वीक्षायामेतत्सर्वं स्पष्टयितुमाख्यायिकामनुसृत्य द्वया हेत्यादिश्रुतिः प्रवर्तते ॥ कानीयसा
एव अल्पीयांस एव स्वार्थे वृद्धिः । ज्यायसाः ज्यायांसो बहुतराः ॥१॥ हन्तेदानीमस्मिन्यज्ञे
ज्योतिष्टोमाख्ये उद्गीथेनोद्गीथकर्मपदार्थकर्तृप्राणस्वरूपाश्रयणेनासुरानतिगच्छाम । उद्गीथकर्म-
पदार्थकर्तृस्वरूपाश्रयणं च ज्ञानकर्मभ्यां भवति तत्र कर्म तदेतानि जपेदिति (क° ३०.)
विधास्यमानं मन्त्रजपलक्षणम् ज्ञानं विहाख्याधिकया परीक्ष्यमाणमशुद्धवागादिप्रत्याख्यानेन
विशुद्धप्राणोपासनरूपमित्यर्थः ॥२॥ इह शुद्धादिगुणविशिष्टप्राणविज्ञानस्य विधित्सितत्वात्तस्य
स्वरूपनिर्धारणाय परीक्षाप्रकार आरभ्यते ते ह वाचमित्यादि कण्डिकाषट्केन । ते ह वाचं
वागभिमानिनीमग्न्याख्यामेवोद्गानकर्त्रीमसतो मा सद्गमयेत्यादिमन्त्रप्रकाश्यां (क° ३०.) च दे-
वतां मत्वा त्वं नोऽस्मभ्यमुद्गाय औद्गात्रं कर्म कुर्वित्युक्तवन्तः । यथा प्रकृते ज्योतिष्टोमे द्वाद-
शस्तोत्रात्मके उद्गात्रा त्रिषु पवमानाख्येषु स्तोत्रेषु यजमानार्थमुद्गानं क्रियतेऽवशिष्टेषु नवसु
स्तोत्रेषु वाचनिकार्त्विज्यफलकं स्वार्थम् तद्वदत्रापि द्विविधमुद्गानम् यो वाचि निमित्तभूतायां
सत्यां वागादिसमुदायस्य भोगः सुखविशेषस्तं देवेभ्योऽर्थिभ्योऽर्थाय आगायदागानेन प्रापि-
तवती यत्पुनः कल्याणं शोभनं वदति यथाशास्त्रं वर्णानभिनिर्वर्तयति तदात्मने स्वार्थ-
मेव । तच्चासाधारणं वाग्देवतायाः कर्म यत्सम्यग्वर्णोच्चारणम् । एवं वाग्देवतायाः कल्या-
णवदनरूपासाधारणविषयासङ्गलक्षणं रन्ध्रस्यावसरं (रन्ध्रं स्वाव° ?) प्रतिलभ्यासुराः स्वका-
र्योद्युक्ता जाता इत्याह तेऽविदुरिति । तमुद्गातारं वाग्रूपमभिद्रुत्य वेगेनाभिगम्य स्वेनासङ्गल-
क्षणेन पाप्मनाविध्यन् ताडितवन्तः संयोजितवन्त इति यावत् । यः स पाप्मा साधकावस्थस्य
प्रजापतेर्वाचि प्रक्षिप्तः स एषोऽनुमानेन प्रत्यक्षीक्रियते कोऽसौ यदेव येनैव प्रयुक्ता
सतीयं वागिदमप्रतिरूपमननुरूपं शास्त्रप्रतिषिद्धमसभ्यस्त्रीवर्णनप्रेतादिवर्णनानृतादि वदति
स एव ॥३॥ आस्नि आस्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यं प्राणम् । ते च दोषासंसर्गिणं
सन्तं मुख्यं प्राणं स्वेनासङ्गदोषेण संस्रक्ष्यमाणाः सन्तो विष्वञ्चो नानागतयो विनेशुर्विनष्टा
विध्वस्ताः । यथा लोके पाषाणचूर्णनाय प्रक्षिप्तो लोष्टः पांसुपिण्डोऽश्मानं पाषाणमृत्वा गत्वा
प्राप्य स्वयं विध्वंसेत विस्रंसेत विचूर्णीभवेत् ॥४॥ ते वागादयः प्रजापतिप्राणाः मुख्येन
प्राणेन परिप्रापितदेवस्वरूपाः फलावस्थाः सन्तः । यो नोऽस्मानित्थमसक्त सक्तिवान् (!)
देवभावायात्मत्वेनोपगमितवान् । लोकवद्देवोपकारिणं स्मरन्तो विचारयमाणाः सन्तः । यस्मा-
देवं वागादयः प्राणमास्येऽन्तरुपलभ्यायमास्येऽन्तरिति व्याजह्रुस्तस्मात्स अयास्यः । यस्माद-
ङ्गानां कार्यकरणानां रसः सार आत्मा तस्मादाङ्गिरसः ॥५॥ प्राणस्य स्वतः शुद्धत्वेऽप्यशुद्धवा-
गादिसम्बन्धादशुद्धत्वं स्यादिति शङ्कां वारयितुं पाप्महानिफलासाधारणगुणकं विशिष्टोपासन-

माह सेति यां प्राप्यासुरा विनष्टाः वै इति अयमास्येऽन्तरिति निर्धारिता सा वै एषा वर्तमानोपासकशरीरस्था प्राणरूपा देवता, दूर्नाम दूरित्येवं ख्याताऽतः शुद्धा ॥१०॥ शास्त्रीयज्ञानकर्मसंस्कृतजनाधिष्ठितो देशो मध्यदेशस्तस्मादितिरिक्तो देशो दिशां प्राच्यादीनामन्तः परा काष्ठा तत् तत्र दिशामन्ते अन्तस्थे जने च गमयां चकार । तस्मात्तमन्त्यजनं न इयात् दर्शनसम्भाषणादिभिर्न संसृज्येत तथा अन्तं तज्जननिवासस्थानं नेयात् न गच्छेत् ॥११॥ प्राणं नासिकान्तःसंचारिणम् घ्राणम् ॥१४॥ य उपासक एवमध्यात्मकवागादिपञ्चकविशिष्टं प्राणमात्मत्वेन वेद प्राणोऽहमित्युपास्ते तमेवमेवैषा प्राणदेवता मृत्युमतीत्य वहति वैराजं पदं प्रापयतीति यावत् ॥१७॥ उपास्यस्य प्राणस्य कार्यकरणसंघातविधारकत्वं नामगुणान्तरं वक्तुमाह अथेति यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योऽपि प्राणस्त्रिषु पवमानेषु सर्वप्राणसाधारणमागानं कृत्वाथानन्तरं शिष्टेषु नवसु स्तोत्रेष्वात्मने आत्मार्थमन्नाद्यमागायत् आगीतवान् अन्नं च तदाद्यं चान्नाद्यमद्यमानमन्नमित्यर्थः । अनेनैवाद्यते अन इति प्राणस्याख्या प्रसिद्धा अनःशब्दः सान्तः शकटवाची यस्त्वन्यः स्वरान्तः स प्राणपर्यायः अनितेर्धातोर्व्युत्पन्नत्वात् एतेन इदंशब्दशङ्काप्यपास्ता ।' इहान्ने देहाकारपरिणते ॥१८॥ आगासीरागीतवानसि आगानेन आत्मसात्कृतवानसि । आभजस्व आभाजयस्व णिचो लोपश्छान्दसः । तस्माल्लोको यदन्नमनेन प्राणेनात्ति भक्षयति तेनैव प्राणान्नेनैवैता वागाद्यो देवतास्तृप्यन्ति न स्वातन्त्र्येण वागादीनामन्नसम्बन्धः अतोऽनेनैवेत्यवधारणं (क° १८) सार्थकम् ॥१९॥ सम्प्रति प्राणविद्यां स्तोतुं तद्विद्यावद्विद्वेषिणो दोषमाह य उ हेति । य एवंविदं प्राणविदं प्रति स्वेषु ज्ञातिषु मध्ये प्रतिः प्रतिकूलो बुभूषति प्रतिस्पर्धी भवितुमिच्छति । अथ प्राणविदनुरक्तस्य लाभं दर्शयति अथेति । एतमेवंविदमन्वेव अनुवर्तयन्नेव ॥२०॥ पूर्वोक्तायास्यत्वेन (°क्तोपा° ?) प्रतिज्ञातं यदाङ्गिरसत्वं तदेव सोऽयास्य इत्यनूद्य प्राणो वाऽइति प्रतिज्ञायते । रसः सार आत्मा । तस्मादुपास्य वागादीन्प्राण एवोपास्य इति समुदायार्थः ॥२१॥ अथ बृहस्पत्यादिनामराशिधर्मकं प्राणोपासनं वक्तुमेष उ एवेत्यादि कण्डिकाचतुष्टयम् । उत्पर्थः एष प्रकृत आङ्गिरसः प्राणो बृहस्पतिरपि । प्रसिद्धं देवपुरोहितत्वं व्यावर्तयितुमाह वाग्वै बृहतीति । सप्त गायत्र्यादीनि प्रधानानि छन्दांसि तेषां मध्यमं छन्दो बृहतीत्युच्यते सा च बृहती षट्त्रिंशदक्षरा प्रसिद्धा वाग्वाऽअनुष्टुबिति चयनप्रकरणऽउक्तत्वादनुष्टुभोऽपि वाक्त्वं प्रसिद्धम् सा द्वात्रिंशदक्षरा षट्त्रिंशदक्षरायां बृहत्यामन्तर्भवति एवं वागनुष्टुभोरनुष्टुब्बृहत्योश्चैक्येन वागात्मिका बृहती । स ऋचो व्यौहद्द्वादश बृहतीसहस्राणीति श्रुतेर्बृहत्यां सर्वा ऋचोऽन्तर्भवन्ति तस्या बृहत्याः मध्यमस्थत्वादुपलक्षणविधया सर्वछन्दस्कवर्गानुग्राहकाया (? °छन्दस्वर्ग्राहकायाः Cod.) ऋग्रूपाया एष प्राणः पतिः स्थित्युत्पादनहेतुत्वात् तस्माद् बृहस्पतिरित्युपसंहारः ॥२२॥ तथा यजुर्वेदात्मकत्वमाह एष उ एव ब्रह्मणो यजुर्वेदस्य पतिः ॥२३॥ अथास्य सामवेदात्मकत्वमाह । वाग्वै सा अमैषः सर्वस्त्रीलिङ्गशब्दाभिधेयवस्तुविषयो हि सर्वनाम-साशब्दः सा वै वाक् सर्वपुंलिङ्गशब्दाभिधेयवस्तुविषयोऽमःशब्दः अम एष प्राणः । तथा सति प्राणनिर्वर्त्यस्वरपदवाक्यादिसमुदायमात्रगीतिः (त्रं C.) सामशब्देनाभिधीयते । सा [illegible]उपसर्जनः प्राण एव मुख्य(:) सामशब्दवाच्यः । अस्यैव प्राणस्य प्रकारान्तरेण सामत्वमुपासनार्थमाह यद्वेवेति उशब्दो विकल्पार्थः प्रकारान्-

र्घोतकः यद्यस्माद्वायं प्राणः सूत्रात्मा लिङ्गात्मना प्लुषिणा पुत्तिकाशरीरेण समस्तुल्यः मश-केन मशकशरीरेण समो नागेन हस्तिशरीरेण सम एभिस्त्रिभिर्लोकैस्त्रैलोक्यात्मकप्राजापत्य-शरीरेण समः अनेन सर्वेण हिरण्यगर्भजगद्रूपेण समस्तुल्य एव पुत्तिकादिशरीरेषु गोत्वा-दिवत्कार्त्स्न्येन परिसमाप्तस्तस्मादु एव साम एवं प्राणस्य समत्वं सिद्धम्। य एवं यथोक्त-मेतत्साम सामगुणकं प्राणं वेदोपास्ते स साम्नः प्राणस्य सायुज्यं सयुग्भावं समानदेहेन्द्रि-याभिमानतां व्याप्नोति सलोकतां प्राणसमानलोकतां चाश्नुते ॥२४॥ इदं च फलं मध्यप्र-दीपन्यायेनोभयतःसम्बन्धमवधेयमितीमामेव फलश्रुतिमनुसृत्य गुणान्तरमाह । एष प्राणो वै उद्गीथः उद्गीथो नाम सामावयवो भक्तिविशेषः नोद्गानम् सामाधिकारात् । उत्तब्धमुत्तम्भितं विधृतम् । वागेव गीथा उद्गीथाभिव्यक्तिरूपा गायतेः शब्दार्थत्वात् । स वागुपसर्जनः प्राण एवोद्गीथः ॥२५॥ उद्गीथदेवता प्राणो न वागादिरित्युक्तार्थदार्ढ्यायाख्यायिकामाह । चिकिता-नस्यापत्यं चैकितानिः (°नः Cod.) तस्यापत्यं युवा चैकितानेयो ब्रह्मदत्तनामा विश्वसृजां पूर्वं स ऋषीणां सत्रे राजानं सोमं भक्षयन्नुवाच । अत्रायास्याङ्गिरसशब्देनोद्गातोच्यते एतादृ-क्प्राणोपासकत्वात्तस्य । यदि स उद्गाता विश्वसृजां पूर्वं स ऋषीणां सत्रे इतोऽस्मात्पूर्वोक्ता-द्वागुपसर्जनात्प्राणादन्येन देवतान्तरेणोदगायत् उद्गानं कृतवान् तदा त्यस्य तस्य अनृतवादि-नो मम मूर्धानं शिरोऽयं चमसस्थो मया भक्ष्यमाणो राजा सोमो विपातयतादिस्पष्टं पातयतु यद्यहमनृतवादी स्यामित्यर्थः । एवमुद्गीथदेवता प्राण एवेत्याख्यायिकया निर्धारितमर्थं श्रुतिः स्वेन वचसोपसंहरति सोऽयास्य आङ्गिरस उद्गाता वाचा च प्राणप्रधानया प्राणेन च स्व-स्यात्मभूतेनोदगायदित्येषोऽर्थः शपथेन निर्धारितः ॥२६॥ एवमुद्गीथदेवता प्राण एवेति नि-र्धार्य तस्य स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरकण्डिकात्रयमवतारयति । तस्य वियुआदिगु-णवत्तया प्रकृतस्य ह एतस्य बृहस्पत्यादिगुणवत्तया निरूपितस्य साम्नः सामशब्दवाच्यस्य प्राणस्य स्वं धनं यो वेद अस्य विज्ञातुर्ह स्वं धनं भवति । तस्य वै साम्नः स्वर एव कण्ठगतं माधुर्यमेव स्वम् विभूषणम् तेन हि भूषितमुद्गानमृद्धिमल्लक्ष्यते । स्वरमिच्छेत इच्छा-मात्रेण सौस्वर्यासम्भवात्तद्धेतु दन्तधावनतैलपानादि कुर्यादित्यर्थादवगम्यते । एतच्च कण्ठ-निष्ठं माधुर्यं बाह्यं धनं सौस्वर्यस्य ध्वनिगतत्वात् ॥२७॥ इदानीं लाक्षणिकवर्णज्ञानपूर्वकं वर्णोच्चारणं वर्णनिष्ठत्वादान्तरं धनमित्याह । सुवर्णम् कण्ठ्योऽयं दन्त्योऽयमिति लक्षणज्ञान-पूर्वकं सुष्ठु वर्णोच्चारणम् । अस्योपासकस्य सुवर्णं लोकप्रसिद्धमेव हिरण्यं भवति ॥२८॥ तस्य वै साम्नो वागेव जिह्वामूलादान्यष्टौ स्थानानि प्रतिष्ठा । वागिति जिह्वामूलादीनां स्थानानामाख्या सैव प्रतिष्ठा । हि यस्मादेष प्राणो वाचि जिह्वामूलोरःशिरःकण्ठदन्तोष्ठनासि-कातालुषु स्थानेषु प्रतिष्ठितः सन्खलु निश्चितमेतद्गानं गीयते गीतिभावमापद्यते तस्मात्सा-म्नो वागेव प्रतिष्ठेति सम्बन्धः । मतान्तरमाह अन्ने अन्नपरिणामे देहे प्रतिष्ठितो गीयते । इत्येकीयपक्षस्यानिन्दितत्वाद्विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्यात् वाग्वा प्रतिष्ठान्नं वेति ॥२९॥ इदानीमेवं प्राणविज्ञानवतो मन्त्रजपविधित्सयाह अथात इति । अथ प्राणविज्ञानकथनानन्तरं यस्माच्चैवं विदुषा प्रयुज्यमानं जपकर्म देवभावाभ्यारोहफलमतः तस्मात्तद्विधीयते । तस्य चोद्गीथसम्बन्धात्सर्वत्रोद्गानकाले प्राप्तौ पवमानानामेवेति वचनात्पवमानेषु त्रिष्वपि कर्त-व्यतायां प्राप्तायाम् पुनः कालसंकोचं करोति स वै खल्विति । स प्रस्तोता यस्मिन्काले

साम प्रस्तुयात्प्रारभेत तस्मिन्काले एतानि जपेत् । अस्य च जपकर्मणोऽभ्यारोह इत्याख्या आभिमुख्येनारोहयत्यनेन जपकर्मणा एवंविद्देवभावमित्यभ्यारोहः । एतानीति बहुवचनात्त्रीणि यजूंषि द्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्च यथापठित एव स्वरः प्रयोक्तव्यो न मान्त्रः । एतच्च जपकर्म याजमानम् । मृत्युर्वाऽअसत् स्वाभाविककर्मविज्ञाने मृत्युरित्युच्येते सदमृतम् सच्छास्त्रीये कर्मविज्ञानेऽउच्यते ॥३१॥ तमःशब्देन अशास्त्रीयकर्मज्ञानमूलमज्ञानमुच्यते आवरणात्मकत्वात्तस्य ॥३२॥ प्राणवदुद्गातुरपि स्वार्थं गानमस्तीत्याह अथ त्रिषु पवमानेषु यजमानोद्गानकरणानन्तरं यानीतराण्यवशिष्टानि नव स्तोत्राणि तेषु स्तोत्रेषु प्राणविदुद्गाता आत्मार्थमन्नाद्यमन्नं च तदाद्यं चान्नाद्यमागानेन सम्पादयेत् । अस्योद्गातुः सर्वफलसाधकत्वमाह तस्मादिति यस्मात्स एष उद्गाता एवंवित् यथोक्तप्राणवित् प्राणवदेव आत्मने आत्मार्थं वा यजमानाय वा यं कामं कामयते इच्छति तमागायति आगानेन साधयति तस्माद्ध तस्मादेव यजमानस्तेषु नवसु स्तोत्रेषु पयुज्यमानेषु यं कामं कामयेत इच्छेत् तं कामं वरं वृणीत प्रार्थयेदित्यन्वयार्थः ॥ एवं कर्मसमुच्चितादुपासनात्फलसिद्धौ आशङ्कासम्भवाभावेऽपि केवलादुपासनात्तत्सिद्धिशङ्का स्यात्तां निरस्यति कर्मानधिकृतस्यापि तत् ह एतत्प्राणदर्शनं केवलमपि लोकजिदेव लोकसाधनमेव न ह एवालोक्यतायै अलोकार्हत्वाय आशास्ति आशंसनं प्रार्थना नैवास्ति । तथा चोपासनासहितं कर्म सकृदेवानुष्ठितं सदृष्टद्वारा फलसाधनम् केवलोपासनं तु नैरन्तर्येणासकृदनुष्ठितं तत्साधनमित्यर्थः ॥३३॥१॥४॥

एवं ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता इदानीमस्य प्रजापतेः फलभूतस्य जगत्सर्जनस्थितिसंहारेषु स्वातन्त्र्यादिविभूत्युपवर्णनेन तं स्तोतुं ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थमात्मैवेदमग्रऽइति पुरुषविधब्राह्मणमारभ्यते । वक्ष्यमाणब्रह्मविद्याधिकारहेतुभूतवैराग्योत्पादनाय आत्मैवेति तत्रात्मशब्देन प्रजापतिः प्रथमोऽजः शरीरी वैदिकज्ञानकर्मफलभूतोऽभिधीयते । इदं दृश्यमानं शरीरभेदजातं तेन प्रजापतिशरीरेणाविभक्तमग्रे शरीरान्तरोत्पत्तेः प्रागात्मैवासीत् । पुरुषविधः पुरुषाकारः शिरःपाण्यादि लक्षणो मन्वादीनां स्रष्टा विराडात्मा ॥१॥ एवमुपासनार्थं प्रजापतेरहंनामोक्त्वा इदानीं पुरुषनामनिर्वचनमाह । औषददहत् ॥२॥ यदिदं स्तोतुमभिप्रेतं प्राजापत्यलक्षणं ज्ञानकर्मफलं तदपि नैव संसारविषयमत्यक्रामदितीममर्थं प्रदर्शयिष्यन्नाह स इति ॥३॥ एवं प्रजापतेर्भयाद्याविष्टत्वेन संसारान्तर्भूतत्वमुक्तम् इदानीं तत्रैवारत्याविष्टत्वं हेत्वन्तरमाह । द्वितीय त्यपनोदसमर्थं स्त्रीवस्त्वैक्षत् इष्टवान् । तस्य चैवं स्त्रीविषयं गृध्यतोऽतिविषयासक्तस्य स्त्रिया परिष्वक्तस्येवात्मन्यभिमाने संजाते स ह प्रजापतिस्तेनैवाभिमानेन सत्यसंकल्पत्वादेतावत्परिमाणः बभूव यथ लोके स्त्रीपुमांसावरत्यपनोदनाय अन्योऽन्यं गाढमालिङ्गितौ यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूव ॥४॥ स विराडात्मा विराट्स्वरूपानुपमर्देनैव इमं परिष्वक्तस्त्रीपुंसपरिमाणमात्मानं शरीरं एतावत्परिमाणं द्विःप्रकारं पातितवान् । ततस्तस्मात्पातनात्पतिर्मन्वाख्य पत्नी शतरूपाख्या च बभूवतुः । यस्मात्पतिपत्न्यावेकशरीरविभक्तौ तस्मात्स्वः स्वस्य आत्मन इदं शरीरं प्राक्स्त्र्युद्वहनादर्धबृगलमिव बृगलं विदलम् अर्धं च तद्बृगलं चार्धबृगलं मुकत्यादिविभागवत् अर्धविदलमेवेत्यर्थः । अत्राभियुक्तसंमतिमाहेति हेति यज्ञस्य वक्ता यज्ञवल्कस्तस्यापत्यं याज्ञवल्क्यो दैवरातिर्ब्रह्मणो वापत्यम् स ह किल इति इत्थमाह स्मो

क्तवान् । द्वेधापातने सत्येको भागः पुरुषोऽपरस्तु स्त्रीत्यत्रैव हेत्वन्तरमाह तस्मादयमिति य-
स्माद्द्विदलनात्प्रागवस्थायामयमाकाशः पुरुषार्धः स्त्र्यर्धशून्योऽसम्पूर्णो वर्तते तस्मात्पुनरुद्वह-
नादनन्तरं स्त्रिया प्राप्तस्त्र्यर्धेनेतरो भागः पूर्यतऽएव यथा विदलार्धोऽसम्पूर्णः सम्पुटीकरणेन
पुनः सम्पूर्णः क्रियते तद्वत् । अथ मिथुनद्वारिकां सृष्टिमाह । स प्रजापतिर्मन्वाख्यस्तां शत-
रूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवत् मिथुनभावमुपगतवान् ॥५॥ सेयं
शतरूपा उ ह किल न सगोत्रां समानप्रवरां भार्यां विन्देतेति दुहितृगमने स्मार्तं प्रतिषेध-
मनुस्मरन्ती ॥६॥ एकशफमेकखुरमश्वाश्वतरगर्दभाख्यं त्रयम् ॥८॥ बस्तः छागः ॥९॥ अहं
वाव अहमेव सृष्टिरस्मि यन्मया सृष्टं जगत् मद्वेदत्वादहमेवास्मि न मत्तो व्यतिरिच्यते कर्तृ-
क्रिययोरभेदोपचारात् । अस्योपासकस्यैतस्यां सृष्ट्यामेतस्मिञ्जगति स्रष्टृत्वं भवति ॥१०॥ एव-
मनुग्राह्यसृष्टिमुक्त्वानुग्राहकसृष्टिं प्रस्तौति । इतिशब्दो मन्थनप्रकाराभिनयप्रदर्शनार्थः इत्यनेन
प्रकारेण मुखे हस्तौ प्रक्षिप्याभिमुख्येन मन्थनमकरोत् मुखं हस्ताभ्यां मथित्वा स प्रजापतिः
मुखाच्च योनेर्हस्ताभ्यां च योनिभ्यामग्निं ब्राह्मणजातेरनुग्रहकर्तारमसृजत । यस्माद्दाहकस्या-
ग्नेर्हस्तौ मुखं च योनिः तस्मादेतदुभयमप्यभ्यन्तरे लोमवर्जितम् या हि स्त्रीणां योनिः सा ह्यन्त-
रतोऽलोमकेत्येतत्सामान्यादुभयस्याग्नियोनित्वम् ॥११॥ सृज्यस्य स्रष्टुरनन्यत्वात्सृष्टं सर्वं स्रष्टा
प्रजापतिरेवेत्युक्तस्यार्थस्य स्तुत्यभिप्रायेणाविद्वन्मतं निन्दितुमुपन्यस्यति तत्तत्र कर्मप्रकरणे
केवलयाज्ञिका यागकाले यदिदं वच आहुः अमुमग्निं यजामुमिन्द्रं यजेत्यादि नामशस्त्रस्तो-
त्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं मन्यमाना आहुरित्यभिप्रायः तन्न तथा विद्यादिति
वाक्यशेषः । एतस्यानादरणीयत्वे हेतुं वदन्ननुग्राहकसृष्टिमुपसंहरति एतस्यैवेति [हि] यस्मात्
यः सर्वोऽपि देवभेदः प्रजापतेरेव सा विसृष्टिः । प्रजापतिः प्राण एव सर्वे देवाः नान्यद्देव-
तान्तरमस्ति ॥१२॥ एकस्यैव प्रजापतेर्द्विधोपास्यत्वायाग्निसर्गमुक्त्वा अन्नसर्गमाह । द्रवात्मकश्च
सोमः तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टं तदु सोम एव ॥१३॥ अनुग्राहकदेवसृष्टिं सृ-
ष्ट्वा तदुपासकस्य फलोक्त्यर्थमादौ देवसृष्टिं स्तौति सा एषा सृष्टिः ब्रह्मणः प्रजापतेरतिसृ-
ष्टिरात्मनोऽप्यधिकतरा । श्रेयसः प्रशस्यतरानात्मनः सकाशात् । य एवं सृष्ट्यात्मा प्रजापति-
रहमेवेति वेदास्योपासकस्यैतस्यामतिसृष्ट्यां देवादिप्रपञ्चे ह किल भवति प्रजापतिवत्स्रष्टृ-
त्वमिति शेषः ॥१४॥ एतावतोक्तस्य व्याकृतस्य जगतोऽव्याकृतावस्थां बीजभूतां सबीजसं-
सारोद्धरणायाह । तदिदं व्याकृतं जगत्तर्हि तदा उत्पत्तेः (तुल्प° Cod.) प्राक्कालेऽव्याकृतम-
नभिव्यक्तनामरूपं ह किलासीद्बभूव । तदव्याकृतं जगन्नाम्ना रूपेण च स्वयमेव व्याक्रियत
व्याक्रियतेति कर्म कर्तुः प्रयोगादात्मनैव विस्पष्टं नामरूपविशेषावधारणमर्यादं व्यक्तीभा-
वमापद्यत । अयं पुरुषादिपदार्थः असौनामा देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामा
इदं शुक्लं कृष्णं वा रूपमस्येत्यसाविदंरूप इत्येवं व्याक्रियत असौशब्दः श्रौतोऽव्ययत्वेन
ज्ञेयः ॥१५॥ तद्धेदमित्यत्र मूलकारणमुक्त्वा तन्नामरूपाभ्यामित्यादिना तत्कार्यमुक्तम् इदानीं
तस्मिन्कार्ये स्रष्टुः प्रवेशमाह । स एष स्रष्टा परमात्मैव इह ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु
अव्याकृते नामरूपे व्याकुर्वन्प्रविष्टः । क्षुरधाने नापितोपस्कराधाने । यथा वा जाठरत्वेन
विश्वस्य भरणाद्विश्वम्भरोऽग्निः विश्वम्भरकुलाये अग्न्याधारभूतकाष्ठादिलक्षणे नीडे सर्वतो व्या-
प्यावस्थितः । इदानीं व्याकृताज्जगत आत्मानं पृथक्कर्तुं तन्न (!) पश्यन्तीति वाक्यम् तं

प्राणनादिक्रियाविशिष्टमात्मानं तत्रैवं प्रविष्टं सन्तं पश्यन्तोऽपि केवलं पूर्णमात्मानं न पश्यन्ति नोपलभन्ते यस्मात्स प्राणनादिक्रियाविशिष्ट आत्मा अकृत्स्नः असमर्थः असम्पूर्णः ॥१६॥ कुतः पुनस्तस्याकृत्स्नत्वमित्यत आह । प्राणनक्रियामेव कुर्वन्नात्मा प्राणो नाम प्राणाभिधानो भवति नान्यां क्रियां कुर्वन् तस्मात्क्रियान्तरविशिष्टस्यानुपसंहारादकृत्स्नो हि सः प्राणक्रियाकर्तृत्वाद्धि प्राणः प्राणितीति व्युत्पत्तेः । प्राणवदनाभ्यामनुक्तकर्मेन्द्रियव्यापार उपलक्ष्यते दृष्टिश्रुतिभ्यामनुक्तज्ञानेन्द्रियव्यापार (°क्तकाने° Cod.) उपलक्ष्यते । तान्येतानि प्राणादिनामान्यस्यात्मनः कर्मजानि नामान्येव न वस्तुविषयान्यतो न कृत्स्नवस्त्ववद्योतकानि । अकृत्स्नदर्शी नात्मदर्शीत्याह स यः अतोऽस्मात्प्राणनादिक्रियासमुदायादेकैकम् प्राणमिति वा चक्षुरिति वा विशिष्टमनुपसंहृतेतरक्रियात्मकमात्मानं मनसायमात्मेत्युपास्ते चिन्तयति स न जानाति कृत्स्नमात्मानम् ॥१७॥ कथं पुनर्ब्रह्मात्मतत्वदर्शीत्याकाङ्क्षापूर्वकं विद्यासूत्रमवतारयति आत्मेत्येवेति । पदनीयं गमनीयमन्वेषणीयम् । यथा ह वै लोके गवादिखुराङ्कितो देशः पदमित्युच्यते तेन पदेनान्विष्यमाणो नष्टं विविल्सितं गोसुवर्णादि वस्तु अनुविन्देल्लभेत एवमेनेन प्रकारेण श्रुत्यादिनात्मनि लब्धे सर्वमनुलभते । इदानीं गुणविज्ञानफलमाह कीर्तिमिति कीर्तिं प्रख्यातिं श्लोकं च मित्रैः सह संघातम् ॥१८॥ कुतोऽन्यत्सर्वमनादृत्यात्मतत्वमेव विज्ञेयमित्याशङ्कायां लोकदृष्टिमवष्टभ्याह तदेतदिति । बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायो ह्यन्तरोऽभ्यन्तर आत्मनः संनिकृष्टस्तस्मादप्यन्तरादतिशयेनान्तरमन्तरतरम् । यदयमात्मा यदेतदात्मतत्वम् । किं तव पुत्रादिलक्षणं प्रियमभिमतम् तर्हि मन्दोऽसि यतः तत्प्रियं रोत्स्यति आवरणं प्राणसंरोधं प्राप्स्यति विनङ्क्ष्यतीति यावत् यस्मादेव वक्तुमीश्वरो ह समर्थः पर्याप्त एव तस्मादेवं वदेत् कुतोऽस्येश्वरत्वमवगम्यतऽइत्याशङ्कायां यथाभूतार्थवादित्वादित्याह तथैवेति यस्मात्प्रियत्वेन कल्पितमनात्मवस्तु विनङ्क्ष्यतीति यत्तेनोक्तं तत्तथैव स्यादविसंवाद्येव भवेत् यथाभूतार्थवादी हि सः तस्मादस्येश्वरत्वमवगम्यते । प्रमायुकं प्रमरणशीलम् ॥१९॥ आत्मेत्येवोपासीतेति सूत्रिता ब्रह्मविद्या यदर्था कृत्स्नाप्युपनिषत् तस्यैतस्य सूत्रस्य व्याचिख्यासुः श्रुतिः प्रयोजनाभिधित्सयोपोद्घातं करोति । ब्रह्म परमात्मा तद्यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया सर्वं निरवशेषं भविष्यन्तः सर्वात्मका भविष्याम इत्येवं मनुष्या यन्मन्यन्ते सम्भावयन्ति । मनुष्यग्रहणं विशेषतोऽधिकारिज्ञपनार्थम् मनुष्या एव हि विशेषतोऽभ्युदयनिःश्रेयससाधनेऽधिकृताः । तत्र विप्रतिषिद्धं वस्तु लक्ष्यते अतः पृच्छामः किमु तद्ब्रह्मेति तद्ब्रह्म किं यस्य विज्ञानात्सर्वं भविष्यन्तो मनुष्या मन्यन्ते तद्ब्रह्म किमवेत्किमज्ञासीद्यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवदिति त्रयः प्रश्नाः । तद्ब्रह्म किमात्मस्वरूपम॰तिरिक्तं वेति प्रथमः किं वावेदिति स्वरूपं तदतिरिक्तं वाज्ञासीदिति द्वितीयः यस्मात्तत्सर्वमभवदिति सर्वभावापत्तिरपि किं विद्यमानैवाभिव्यज्यते नूतनं वोत्पद्यतऽइति तृतीयः ॥२०॥ एतेषां प्रश्नानां क्रमेण सर्वदोषानाघ्रातं प्रतिवचनमाह । अग्रे प्राक्प्रतिबोधादपि इदं शरीरस्थं प्रमात्रादिसाक्षिभूतं त्वंपदलक्ष्यं ब्रह्म वै ब्रह्मैवासीत् । तद्ब्रह्मविद्याविशिष्टतयाधिकारित्वेन (विका° Cod.) व्यवस्थितं नासि त्वं संसारी किं तु सकलधर्मरहितं चिदानन्दैकरसं ब्रह्मैवासीति दयालुनाचार्येण कथंचित्प्रतिबोधितं आत्मानमेव अहं ब्रह्म प्रमात्रादिसाक्ष्यशनायाद्यतीतं नेतिनेत्यस्थूलादिलक्षणमस्मि भवामीत्येवमवेदज्ञासीत् । ब्रह्म-

विद्यायामग्निहोत्रादाविव मनुष्यवाद्यधिकारिविशेषणनियमो नास्तीत्याह तद्यो यो देवानामिति । प्रत्यबुध्यत प्रतिबुद्धवान् आत्मानं यथोक्तेन विधिना । आत्मबोधनादेव स-स देवस्तद्ब्रह्म सर्वात्मकमभवन्न साधनान्तरेण ॥२१॥ अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य दार्ढ्याय श्रुतिर्मन्त्रमुदाहरति तद्धैति एतस्मादेव ब्रह्मणो दर्शनादृषिर्वामदेवाख्योऽहं मनुरिति मन्त्रं (ऋ° ४. २६. १.) प्रतिपन्नवान् स एतस्मिन्ब्रह्मदर्शनेऽवस्थित एतं मन्त्रं ददर्श । ननु महतां देवादीनां वीर्यातिशयवाद्ब्रह्मविद्यया सर्वभावापत्तिर्युज्यते कथं पुनरिदानीं कलिकाले वर्तिनां मनुष्याणां विशेषतोऽल्पवीर्यत्वात्सर्वभावापत्तिरित्यत आह तदिदमपीति । अभूत्यै सर्वात्मकब्रह्मभावस्याभवनाय न पर्याप्ताः । एवं सोपपत्तिकं विद्यासूत्रमुक्त्वा सम्प्रत्यविद्यासूत्रमाह अथ योऽन्यामिति यः कश्चिदब्रह्मवित्स्वात्मनि कर्तृत्वमङ्गीकृत्यान्यामात्मनो व्यतिरिक्तां देवतामन्योऽहमुपास्यदेवतायाः सकाशादस्म्यन्योऽसौ मम उपासनीयो देव इत्येवं भेददृष्ट्योपास्ते स्तुतिनमस्कारयागबल्युपाहारप्रणिधानध्यानादिना स उपासको न वेद उपास्योपासकयोस्तत्त्वं न विजानाति । न केवलमेवम्भूतोपासकोऽविद्यादोषवानेव किं तु (तर्हि Cod.) पशुसदृशोऽपि भवति यथा पशुर्गवाश्वादिर्दोहनवाहनाद्युपकारैरुपभुज्यते एवमेव सोऽविद्वान्देवानां मध्ये एकैकस्यापि देवस्य पशु[illegible]रुपभोग्यो भवति । लोकपशोर्मनुष्यपशौ यथोक्तं विशेषं वक्तुं श्रुतिः स्वयमेवाह यथा ह वा इति यथा ह वै लोके बहवो गोऽश्वादयः पशवो मनुष्यमात्मनोऽधिष्ठातारं स्वामिनं दोहनवाहनादिना भुञ्ज्युः पालयेयुः एवं बहुपशुस्थानीयोऽयं कर्मी पुरुष एकैक एव देवानिन्द्रादीन्स्तुतिनमस्कारादिक्रियया भुनक्ति पालयति । देवग्रहणमृषिपित्रादीनामप्युपलक्षणपरम् । अत एव मनुष्याणां पशुभावाद्व्युत्थानं देवा द्विषन्तीत्याह एकस्मिन्नेवेति यथा लोके बहुपशुमतोऽपि एकस्मिन्नेव पशौ व्याघ्रादिना आदीयमानेऽपह्रियमाणेऽप्रियं भवति तथा बहुषु बहुपशुस्थानीये एकस्मिन्पुरुषे पशुभावाद्व्युत्तिष्ठति सति देवानामप्रियं भवतीति किमु वक्तव्यम् अथ एवाविद्यावतां पशुभावाद्व्युत्थानसाधनं तत्त्वज्ञानमपि देवा द्विषन्तीत्याह तस्मादेषामिति यस्मान्मनुष्याणां पशुभावाद्व्युत्थानं देवानामप्रियं तस्मात्कारणाद्यदेतद्ब्रह्मात्मतत्त्वं मनुष्याः कथं चन विद्युर्विजानीयुस्तदेषां देवानां न प्रियं नेष्टमित्यर्थः ॥२२॥ अथेत्यभ्यमन्थदित्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेव सृष्टिरुक्ता नेन्द्रादीनाम् अत्र च विद्यां प्रस्तुत्य तेषां सृष्टिरुच्यते ब्रह्म वाऽइत्यादिनाविद्वान्कैः कर्मभिः केषां देवानां भोग्य इत्यथोऽअयं वाऽआत्मेत्यादिना (क° २१.) विशेषतो दर्शयितुम् । आत्मैवेदमग्रऽआसीदित्यत्र (क° १.) यदात्मशब्देनोक्तं स्रष्टृ ब्रह्म तदग्निं सृष्ट्वाग्रेऽग्निरूपापन्नं ब्राह्मणजात्यभिमानवदस्मिन्वाक्ये ब्रह्मशब्देनाभिधीयते । एकमभिन्नम् । तद्ब्राह्मणजात्यभिमान्यग्न्यात्मकं ब्रह्मैकं केवलं परिपालयितृक्षत्रादिशून्यं सन्न व्यभवत् न विभूतवत् (°ततत् Cod.) कर्मणे नालमासीत् । तद्ब्रह्म ब्राह्मणोऽस्मि ममेत्थं कर्तव्यमित्यात्मनो ब्राह्मणजातिनिमित्तकर्मकर्तृत्वविभूत्यै श्रेयो रूपं प्रश[illegible] अतिशयेन सृष्टवान् । क्षत्रं क्षत्रियजातिम् तदेव क्षत्रं व्यक्तिभेदेन प्रदर्शयति यान्येतानि प्रसिद्धानि देवत्रा देवेषु क्षत्राणि कानि पुनस्तानि तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते इन्द्रो देवानां राजा वरुणो यादसां सोमो ब्राह्मणानां रुद्रः पशूनां पर्जन्यो विद्युदादीनां यमो धर्मराजः पितॄणां मृत्युर्यमहर्ता रोगादीना

मीशान ईश्वरो भासां राजा । तदन्विन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि तदर्थ एव हि देवक्षत्रसर्गः प्रसृतः । राजसूयाभिषिक्तेनासन्द्यास्थितेन राज्ञा स ब्रह्मन्नित्येव प्रथममामन्त्रयतऽइत्यादिनामन्त्रित ऋत्विक् ब्रह्मासीतीतरः प्रत्याहेति यत् (५. ८. ८. १.) तदेतदभिधीयते क्षत्रऽएव तद्यशो दधातीति । अन्ततोऽन्ते कर्मपरिसमाप्तौ । एनं स्वयोनिभूतं ब्राह्मणम् । ऋच्छति विच्छिनत्ति ॥२३॥ कर्माङ्गभूतद्रव्योपार्जनार्थं वैश्यसृष्टिमाह । देवजातानि देवजातिभेदाः । वसवोऽष्टसंख्यो गणः तथा एकादश रुद्राः द्वादशादित्याः दश विश्वे देवाः विश्वाया अपत्यानि सर्वे वा देवाः मरुतः सप्तसप्तसंख्याताः सप्त गणाः ॥२४॥ परिचारकसृष्टिमाह । पुष्यतीति पूषा इयं वै पृथिवी पूषा । पुष्यति पुष्णाति ॥२५॥ क्षत्रस्योग्रत्वान्नियन्तृधर्मसर्गमाह । क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ उग्रादप्युग्रं । यो धर्मश्चेतनभूतो देवतात्मकः । धर्मेण बलेन जेतुमाशंसते कामयते इच्छति ॥२६॥ ननु [illegible]र्व्यर्थेत्याशङ्कायां पूर्वत्र देवेषु दर्शितस्य वर्णविभागस्य मनुष्येषु योजनार्थमुक्तानुवादपूर्वकं देवसर्गमुपसंहरति तदेतदिति । सृष्टवर्णचतुष्टयनिविष्टमवान्तरविभागमभिधातुमारभते तदग्निनेति तदेग्निरूपापन्नं स्रष्टृ ब्रह्माग्निनैव नान्यदेवतान्तरस्वरूपेण क्षत्रादिविकारप्राप्तिमन्तरेण केवलाग्निरूपेणैव देवेषु ब्रह्म ब्राह्मणजातिरभवत् तदेवाग्निरूपापन्नं स्रष्टृ ब्रह्म तेनैव रूपेण मनुष्येषु ब्राह्मणो ब्राह्मणजातिरभवदित्यनुषज्यते । इतरेषु वर्णेषु तु अग्निब्राह्मणलक्षणं विकारान्तरं प्राप्य स्रष्टृ ब्रह्माभवदिति दर्शयति क्षत्रियेणेन्द्रादिदेवक्षत्रियेण नियन्त्रितोऽनुगृहीतश्च क्षत्रियो मनुष्यक्षत्रियः सोमसूर्यवंश्यः पुरूरवइक्ष्वाकुप्रभृतिको देवमानुषब्राह्मणरूपेण विकृतात्स्रष्टृब्रह्मणः सकाशादभवत् तथा वैश्येन वस्वादिदेववैश्येनाधिष्ठितो वैश्यो मनुष्यवैश्योऽभवत् एवं शूद्रेण देवशूद्रेण पूष्णाधिष्ठितः मनुष्यशूद्रोऽभवत् । यस्मा[illegible] विकारापन्नं स्रष्टृ ब्रह्माग्नौ ब्राह्मणे एव चाविकृतं तस्माद्देवेषु देवानां मध्येऽग्नावेवाग्निसम्बद्धं कर्म कृत्वैव लोकं कर्मफलमिच्छन्ते प्रार्थयन्ते । कर्मफलदानार्थमेव हि तद्ब्रह्म कर्माधि[illegible]त्वेनाग्निरूपेण व्यवस्थितम् तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्ते । मनुष्याणां मध्ये कमपि मनुष्यमवलम्ब्य कर्मफलभोगापेक्षायामग्न्यादिनिमित्तक्रियापेक्षामन्तरेणापि ब्राह्मणे ब्राह्मणजातौ ब्राह्मण्यप्रयुक्तजपादिकर्ममात्रेण लोकमिच्छन्ते । हि यस्माद्यत्स्रष्टृ ब्रह्म तदेताभ्यामग्निब्राह्मणलक्षणाभ्यां रूपाभ्यां साक्षाद्रूपवदभवत् ॥२७॥ केचिदग्न्यादिसाध्यकर्मणा मे[illegible]मिच्छन्ति तान्प्रत्याह अथेति अथशब्दः पूर्वपक्षव्यावृत्त्यर्थः यः कश्चित्स्वं लोकं [illegible]मात्माख्यमहं [illegible]सारिका[illegible]ग्रहणलक्षणात्प्रैति म्रियते तमेनं स स्वो लोकः परमात्माविदितोऽविद्यया व्यवहितः सन् शोकमोहभयादिदोषापनयनेन न भुनक्ति न पालयति । उ पुनः ह किल वै निश्चितं संसारमण्डले यः कश्चिन्महात्माप्यनेवंविद्यन्महद्बहु अश्वमेधादि पुण्यं कर्म प्रकृष्टफलमेव नैरन्तर्येण करोति अनेनेवानन्त्यं मम भविष्यतीति त[illegible]दुषो ह निश्चितमन्ततः फलभोगस्यावसाने क्षीयतऽएव कृतकत्वात् स्वप्नविभूतिवत् । [illegible]त्मानमेव लोकं [illegible]उपासीताशेषानात्मदृष्टिपरिहारेण निरन्तरमनुसंदधीत ॥२८॥ अत्राविद्वान्वर्णाश्रमाद्यभिमानी (नी C.) धर्मेण नियम्यमानो देवादिकर्मकर्तव्यतया प[illegible]वत्परतन्त्र इत्युक्तम् कानि पुनस्तानि कर्माणि [illegible]कर्तव्यतया परतन्त्रो भवति के वा ते देवादयो येषां कर्मभिः [illegible]वदुपकरोतीति तदुभयं प्रपञ्चयति । अयं यः

प्रकृतो गृही कर्माधिकृतोऽविद्वाञ्छरीरेन्द्रियसंघातविशिष्टः पिण्ड आत्मेत्युच्यते अयं वै सर्वेषां देवादीनां पिपीलिकान्तानां भूतानां प्राणिनां लोको भोग्यः सर्वेषां वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात् । कैः पुनः कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणां लोक इत्याह स यज्जुहोतीति स गृही । यागो देवतामुद्दिश्य द्रव्यपरित्यागः स एवासेचनाधिको होमः तेन होमयागलक्षणेन कर्मणावश्यकर्तव्यत्वेन प्रतिबद्धः सन्पशुवत्परतन्त्रो देवानामिन्द्रादीनां लोको भोग्यः । अनुब्रूते स्वाध्यायमधीतेऽहरहः । निपृणाति पिण्डोदकादिकं प्रयच्छति । गृहे भूम्युदकादिदानेन वासयते । विन्दति लम्भयति । यदस्य कर्मिणो गृहेषु श्वापदा मार्जारादयः वयांसि पक्षिणश्च कणबलिभाण्डप्रक्षालनादिकमुपजीवन्ति । एवमुपकारिणं देवादयोऽप्युपकुर्वन्तीत्याह यथा ह वै लोके स्वाय लोकाय स्वस्मै देहायारिष्टिमविनाशमिच्छेत् पोषणरक्षणादिभिः सर्वतः परिपालयेत् । तदेतदेव यथोक्तानां कर्मणामृणवदवश्यकर्तव्यत्वं भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति पञ्चमहायज्ञप्रकरणे विदितं विज्ञातम् ननु श्रुतमप्यविचारितं नानुष्ठेयमित्यत आह मीमांसितमिति ऋणं ह वाऽइत्यादिनार्थवादेन (१. ७. २. १.) एतदवश्यकर्तव्यत्वमवदानप्रकरणे विचारितम् ॥२२॥ ननु येन प्रयुक्तो मनुष्यो ग्रहग्रस्त-इवावशः स्वात्मलोकबहिर्मुखीभूतो दुःखात्मके कर्मण्येव प्रवर्ततऽइति स कः प्रवर्तक इत्यपेक्षायां काम एवेति निर्णयार्थमाह आत्मैवेति अत्रात्मशब्देन स्वाभाविक्याविद्यया युक्तः कार्यकरणसंघातलक्षणो ब्रह्मचार्यभिधीयते । एतावान्वै प्रसिद्धजायापुत्रवित्तकर्माण्येव हि कामः कामयितव्यो विषयः । समस्तानेवैतान्यदा सम्पादयति तदा तस्य कृत्स्नता यदा तु कृत्स्नतां सम्पादयितुं न शक्नोति तदा तस्य कृत्स्नत्वसम्पादनोपायमाह तस्यो कृत्स्नतेति तस्याकृत्स्नत्वाभिमानिनः कृत्स्नतैवं भवति ॥३०॥ अस्याकृत्स्नत्वाभिमानिनो मन एवात्मा मनोऽनुवृत्ति हीतरत्सर्वं कार्यकरणजातमिति मनसः प्रधानत्वात् यथा कुटुम्बपतिर्जायादीनामात्मैव जायादिचतुष्टयस्य तदनुकारित्वादेवम् । वाग्जाया वाचो मनोऽनुवृत्तित्वसामान्यात् । वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्मार्थमिति. प्राणः प्रजेव । विज्ञानस्य श्रोत्रा नवाच्छ्रोत्रमेव तत् । आत्मैव शरीरमेव आत्मादिवित्तैर्निर्वर्त्यं कर्म यस्मादात्मना शरीरेण कर्म करोति । एवं कृत्स्नता सम्पन्ना तस्मात्स एष पाङ्क्तः पञ्चभिर्निर्वृत्तो दर्शनात्मको यज्ञः कथं पुनरस्य पञ्चत्वसम्पत्तिमात्रेणैव यज्ञत्वमित्याशङ्कायां बाह्ययज्ञस्यापि पाङ्क्तत्वमाह पशुः पशुसाध्यो यज्ञः पाङ्क्तः पुरुषः पुरुषसाध्यो यज्ञः पाङ्क्त एव यथोक्तमनआदिपञ्चत्वयोगात् किं बहुना पञ्चभूतात्मकं हैरण्यगर्भं जगदपि पाङ्क्तमेव । य एवमुक्तप्रकारेण पाङ्क्तं यज्ञमात्मानं वेद स इदं सर्वं जगदात्मत्वेनाप्नोति ॥३१॥२॥४॥

एवं कामप्रयुक्तेन गृहस्थेनान्येन वा पाङ्क्तज्ञानकर्मभ्यां वा केवलज्ञानेन वा अप्रमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं विभागेन सप्तधा निर्दिदिक्षुं च सप्तान्नब्राह्मणं प्रवर्तते तत्र संक्षेपतः सविनियोगान्नप्रकाशकान्सूत्रभूतान्मन्त्रानुदाहरति । पिता क्षेत्रज्ञो ज्ञानकर्माधिकारी । अत्र ज्ञानकर्मणी मेधातपःशब्दवाच्ये । यो वै तामक्षितिमन्नाक्षयकारणं वेद स प्रतीकेन मुख्येन मुख्यया वृत्त्यान्नमत्ति ॥१॥ एतेषां मन्त्राणां तिरोहितार्थत्वेन प्रतीकग्रहणपूर्वकं तदर्थव्याख्यानाय ब्राह्मणं प्रवर्तते । अस्य भोक्तृसमुदायस्य तत्साधारणम् । एतस्य सर्वसाधारणस्यान्नस्यासाधारणीकुर्वतो दोषं दर्शयति स यः कश्चिदेतत्साधारणं

सर्वप्राणभृत्स्थितिकरं भुज्यमानमन्नमुपास्ते तत्परो भवति स्वशरीरस्थित्यर्थान्नोपयोगप्रधानो नादृष्टार्थकर्मप्रधानः स पाप्मनोऽधर्मान्न व्यावर्तते न विमुच्यते हि यस्मादेतदन्नं मिश्रं सर्वप्राणिसाधारणम् ॥२॥ हुतमित्यग्नौ हवनम् प्रहुतं च हुत्वा बलिहरणम् । एतस्य पूर्वपक्षत्वं सूचयितुं पक्षान्तरमाह अथोऽआहुरिति । तस्मा[illegible] इष्टियाजुकः इष्टियजनशीलो न भवेत् इष्टिशब्देन किल काम्या इष्टयः काम्येष्टियजनप्रधानो न स्यात् ॥३॥ पशुभ्यो द्विपाच्चतुष्पाद्भ्यः । त्रैवर्णिका जातकर्मणि जातमुत्पन्नमात्रं कुमारं बालमग्रे घृतं वैव घृतमेव सुवर्णयुक्तयानामिकयाङ्गुल्या प्रतिलेहयन्ति प्राशयन्ति स्तनं वा स्तनं चानुधापयन्ति पश्चात्पाययन्ति अत्रैवर्णिकानां तु यथासम्भवं स्तनमेवाग्रे धापयन्तीति बोद्धव्यम् ॥४॥ द्विपात्पश्वधिकारविच्छेदार्थोऽथशब्दः । जातं वत्सं कियत्प्रमाणो वत्स इत्येवं पृष्टाः सन्तोऽतृणाद इत्याहुः । अग्निहोत्रादिकर्म हि पयःसाधनम् अग्निहोत्राद्याहुतिविपरिणामकं च जगत्कृत्स्नमिति पयसः सर्वजगदाधारत्वं प्रसिद्धम् ॥५॥ सर्वं पयसि प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये मतान्तरं निन्दितुमुद्भावयति । वर्षपर्यन्तं पयसा जुह्वदग्निहोत्रहोमं कुर्वन्पुनर्मृत्युमपजयति पुनर्मरणाय न जायते इतः प्रेत्य देवेषु सम्भूतः पुनर्न म्रियतऽइति यदिदं ब्राह्मणवादा आहुस्तन्न तथा द्रष्टव्यम् तर्हि कथं विद्यात् यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पयआहुतिविपरिणामात्मकत्वात्सर्वस्य जगत इत्येवंविद्वान्सन्यस्मिन्नेव दिवसे जुहोति तस्मिन्नेव दिवसे पुनर्मरणमपजयति सकृन्मृत्वा शरीरेण वियुज्य न पुनर्मरणाय परिच्छिन्नं शरीरं गृह्णाति न संवत्सराभ्यासमपेक्षतऽएवंविद्वानेकेनैवाह्ना जगदात्मत्वं प्रतिपद्यते । हि यस्मात्समस्तं देवेभ्यः सर्वेभ्योऽन्नाद्यं सायंप्रातराहुतिप्रक्षेपेण ददाति तस्माद्युक्तम् सर्वमाहुतिमयमात्मानं कृत्वा सर्वदेहान्नरूपेण सर्वैर्देवैरेकात्मभावं गत्वा सर्वदेवमयो भूत्वा पुनर्न म्रियतऽइति भावः ॥६॥ पुरुषो वै योऽन्नानां भोक्ता स एवाक्षितिरन्नाक्षयहेतुः ननु प्रत्युत क्षयहेतुर्भोक्ता कथमस्याक्षयहेतुत्वम् यस्मात्स पुरुषो भोक्तापि इदं भुज्यमानं सप्तविधं कार्यकारणलक्षणं क्रियाफलात्मकमन्नं भूयो-भूयः उत्पादयति । धिया-धिया तत्तत्कालभाविन्या तया-तया प्रज्ञया कर्मभिश्च वाङ्मनःकायचेष्टितैर्जनयते । तर्हि सातत्येन भुज्यमानत्वाद्विच्छिद्येत किल । यस्माद्यथैवायं पुरुषो नैरन्तर्येणान्नानां भोक्ता यथाप्रज्ञं यथाकर्म चान्नं करोत्यपि ततः सातत्येन कर्तृत्वात्पुरुषोऽक्षितिः तस्माद्भुज्यमानान्यप्यन्नानि न क्षीयन्ते । प्रतीकं मुखं मुख्यत्वं प्राधान्यमिति प्राधान्येनैवान्नानां पितुः पुरुषस्याक्षितित्वं यो वेद स मुखेन मुख्यत्वेन प्राधान्येनान्नमत्ति । मन्त्रे देवात्मभावं प्रतिपद्यते ऊर्जममृतं चोपजीवतीति यदुक्तं सोपासनप्रशंसा प्रशस्तिमात्रं नापूर्वोऽर्थोऽस्तीत्यर्थः (!) ॥७॥ एवं पाठक्रममुल्लङ्घ्यार्थक्रमवशात्साधनभूतमन्नचतुष्टयं व्याख्यायेदानीं पाङ्क्तस्य कर्मणः फलभूतमन्नत्रयं कार्यत्वाद्विस्तीर्णविषयत्वाच्च पूर्वेभ्योऽन्नेभ्यः पृथगुत्कृष्टम् तद्व्याख्यानार्थ उत्तरो ग्रन्थ आ ब्राह्मणपरिसमाप्तेः । मनो वाचं प्राणमित्येवं तानि त्रीण्यन्नानि पिता सृष्ट्वा आदावात्मार्थं कृतवान् तेषां मध्ये मनसोऽस्तित्वं प्रति संशये प्रमाणमाह अन्यत्रमना इति । यस्मात्सर्वो लोक आत्मसाक्षिकं मनसैव पश्यति मनसैव शृणोति तद्व्यग्रत्वे दर्शनाद्यभावात् तस्मात्सिद्धं प्रत्यक्षादिप्रमाणकं मनसोऽस्तित्वम् ॥८॥ किं पुनर्मनसः स्वरूपमित्यतस्तदाह काम इति । कामः स्त्रीव्यतिकराभिलाषादिः संकल्पः प्रत्युपस्थितविषयसंकल्पनं शुक्लनीलादिभेदेन विचिकित्सा संशयज्ञानम् अजादृष्टार्थेषु

कर्मसु देवतादिषु चास्तिक्यबुद्धिः अश्रद्धा तद्विपरीता बुद्धिः धृतिर्धारणं देहाद्यवसादे सत्युत्तम्भनम्। पुनरपि मनसोऽस्तित्वे कारणमाह तस्मादपीति यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽपि केनचिदुपस्पृष्टः कश्चित् हस्तस्यायं स्पर्शो ज्ञातोऽयं स्पर्श इति विवेकेन प्रतिपद्यते तस्मादस्ति विवेकप्रतिपत्तिकारणं मन इति ॥९॥ इह कर्मणां फलभूतानि त्रीण्यन्नानि मनोवाक्प्राणाख्यानि अध्यात्ममधिभूतमधिदैवं च व्याचिख्यासितानि तत्राध्यात्मिकानां वाङ्मनःप्राणानां मनो व्याख्यातमथेदानीमाध्यात्मिकाया वाचः स्वरूपमाह यः कश्चेति । अथ तस्याः कार्यमुच्यते एषा प्रकाशमात्रस्वरूपा वागात्तमभिधेयावसानमभिधेयनिर्णयमायत्तानुगतात एषा पुनः स्वयं नाभिधेयवत्प्रकाश्या किंतु प्रदीपादिवत्प्रकाशात्मकत्वात्प्रकाशिकैव स्वयं प्रकाशिकैव न प्रकाश्या प्रकाशयात्मकत्वमेव वाचः कार्यमित्यर्थः । अथाध्यात्मिकप्राणविषयं वाक्यमवतारयितुं प्राणास्तित्वे प्रमाणं कथयन्प्राणस्वरूपमाह प्राण इति । प्राणो मुखनासिकाभ्यन्तरचारी हृदयवृत्तिः प्रणयनात्प्राणः मूत्रपुरीषादेरपनयनान्नाभिमर्यादोऽधोवृत्तिरपानः हृदयादारभ्य नाभिपर्यन्तं वर्तमानो व्यायकृत्कर्मा (?°यमनकर्मा ?) वीर्यवत्कर्महेतुश्च व्यानः प्राणापानयोर्नियमनकर्मा उत्कर्षोर्ध्वगमनादिहेतुरापादतलमस्तकस्थान ऊर्ध्ववृत्तिरुदानः भुक्तस्य पीतस्य च समं नयनात्समानः कोष्ठस्थानोऽन्नपक्ता अन इत्येतेषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टाभिसम्बन्धिनी वृत्तिरुच्यते एतत्सर्वं प्राणादिवृत्तिजातमाध्यात्मिकः साधारणासाधारणवृत्तिमान्प्राण एव वृत्तिवृत्तिमतोरभेदात् । व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यान्यन्नानि अतस्तेषां वागादीनां समुच्चितं स्वरूपं दर्शयति एतन्मय इति अयमात्मा प्राजापत्यैर्वाङ्मनःप्राणैरारब्धः कार्यकारणसंघातः पिण्ड एतन्मय एतद्विकारः ॥१०॥ एवं वागादीनामाध्यात्मिकीं विभूतिमुक्त्वा आधिभौतिकीं विस्तृतिमाह त्रय इति ॥११॥ अवति प्रतिपालयति विज्ञातरूपेणैवास्यान्नत्वं भोज्यत्वं प्रतिपद्यते ॥१५॥ एवमाधिभौतिकं विस्तारमुक्त्वाधिदैविकं विस्तारमाह तस्यै वाच इति तस्यै तस्याः प्रजापतेरन्नत्वेन प्रस्तुताया वाचः पृथिवी शरीरं बाह्य आधारः ज्योतीरूपं प्रकाशात्मकं करणमाधेयभूतमयं पार्थिवोऽग्निः ॥१८॥ तत्र मन एवास्यात्मा वाग्जाया प्राणः प्रजेत्यध्यात्मं मन एव पिता वाङ्माता मनः प्रजेत्यधिभूतं (? दैवतं Cod.) च वाङ्मनसयोः प्रजात्वं प्राणस्योक्तम् तथाधिदैवेऽपि प्राणस्य तत्प्रजात्वं वाच्यम् तौ अग्न्यादित्यौ आधिदैविके वाङ्मनसे मातापितरौ मैथुन्यं समगच्छताम् तयोरेव संगमनात्प्राणो वायुरजायत परिस्पन्दनाय कर्मणे जातः । वायोरिन्द्रत्वासपत्नत्वगुणविशिष्टस्योपासनमभिप्रेत्याह स इन्द्र इति ॥१९॥ अथाधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशानन्तरमेतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राणस्यापः शरीरमाधारः पूर्ववत् ॥२०॥ इदानीमेषामाध्यात्मिकाधिभौतिकाधिदैविकानां वाङ्मनःप्राणानां ध्यानार्थं समत्वादिगुणमाह ॥२१॥ ननु फलवज्ज्ञानविषयेऽन्नत्रये व्याख्याते वक्तव्याभावात्किमुत्तरग्रन्थेनेत्याशङ्कायामुच्यते पिता पाङ्क्तेन कर्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तम् तान्येतानि पाङ्क्तकर्मफलभूतानि व्याख्यातानि तेषु त्रिष्वप्यन्नेषु पाङ्क्तत्वावगतयऽआत्मा जाया प्रजा वित्तं कर्म चेति पञ्चकं संग्रहीतव्यम् तत्र पृथिव्यग्नी माता दिवादित्यौ पिता योऽयमनयोरन्तरा प्राणः स प्रजेति व्याख्यातम् तत्र वित्तकर्मणी सम्भावयितव्येऽइत्येतदर्थमुत्तरो ग्रन्थ आरभ्यते स एष इति योऽयमन्नात्मा प्रजापतिः प्रकृतः स एष संवत्सरात्मना

विशेषतो निर्दिश्यते । रात्रयः अहोरात्राणि तिथय एव प्रतिपदाद्याः । ध्रुवैव नित्यैव व्यवस्थिता । एतासां कलानां वित्तत्वं वक्तुं (?वक्त pr. m. वक्तुत sec.) तत्साधर्म्यमाह स चन्द्रात्मा प्रजापती रात्रिभिरिव प्रतिपदाद्याभिरुपचीयमानाभिः शुक्लपक्षे वर्धते कृष्णपक्षे ताभिरेवापचीयमानाभिः कलाभिरपक्षीयते अमावास्यायां ध्रुवैका कला व्यवस्थिता । एवं कलानां वित्तत्वे सिद्धे तदुपचयापचयौ कर्मेत्यभिप्रेत्याह स कलात्मा प्रजापतिरमावास्यां रात्रिं रात्रौ या ध्रुवा कला व्यवस्थितोक्ता एतया षोडश्या कलया सर्वमिदं प्राणिजातं स्थावरजङ्गमात्मकमनुप्रविश्य यदपः पिबति यच्चौषधीरश्नाति तत्सर्वमेवौषध्यात्मना व्याप्यामावास्यां रात्रिमवस्थाय ततोऽपरेद्युः प्रातर्जायते द्वितीयया संयुक्तो भवति । एवमसौ प्रजापतिः पाङ्क्तात्मकः संवृत्तः । एवं प्रजापतेः पाङ्क्तकर्मफलत्वमुक्त्वा प्रासङ्गिकमर्थमाह तस्मादिति प्राणिनं न प्रमापयेत् कृकलासस्यापि सरटस्यापि प्राणं न विच्छिन्द्यात् स हि पापात्मा दृष्टोऽप्यमङ्गल इति कृत्वा स्वभावेनैव प्राणिभिर्हिंस्यते । निषेधप्रयोजनमाह एतस्या एव सोमदेवतायाः पूजार्थम् ॥२२॥ यत्पूर्वमाधिदैविकत्र्यन्नात्मकप्रजापत्युपासनमुक्तं (क अन्ना° Cod.) तदहमस्मि प्रजापतिरित्यहंग्रहेण कर्तव्यमित्याह यो वै (सुः) परोऽक्षाभिहितः संवत्सरः प्रजापतिः षोडशकलः स नैवात्यन्तं परोऽक्षो मन्तव्यः यस्मादयमेव स प्रत्यक्ष उपलभ्यते कोऽसौ योऽयं पुरुष एवंवित् यो यथोक्तं त्र्यन्नात्मकं (क्तं अन्ना° Cod.) प्रजापतिमात्मभूतं (°तिं स्वात्म°?) वेत्ति सोऽयं प्रत्यक्षं प्रजापतिः केन सामान्येन प्रजापतिरित्यत आह तस्यैवंविदः पुरुषस्य गवादिवित्तमेव पञ्चदश कलाः कलावदुपचयापचयधर्मित्वात् आत्मैव पिण्ड एव षोडशी कला ध्रुवास्थानीया स विद्वान् चन्द्रवद्वित्तेनेवापूर्यते अपक्षीयते च । आत्मैव ध्रुवा कलेत्युक्तम् तदेव रथचक्रदृष्टान्तेन स्पष्टयति नाभिश्चक्रपिण्डिका नाभ्यै हितं नाभिमर्हतीति वा नभ्यम् तदेतल्लोके प्रसिद्धं चक्रपिण्डिकास्थानीयम् किं तत् यदयमात्मा योऽयं पिण्डः शरीरम् । प्रधिः परिवारस्थानीयं बाह्यं वित्तम् चक्रस्येवारनेम्यादि । एवं सति फलितमाह यस्माच्छरीरं रथचक्रपिण्डिकास्थानीयं तस्माद्यद्यपि सर्वज्यानिं सर्वस्यापहरणं जीयते हीयते ग्लानिं प्राप्नोति तथापि चेद्यदि आत्मना शरीरेण नाभिस्थानीयेन जीवति तदा प्रधिना बाह्येन परिवारेणायमगात् (°मागात् Cod.) क्षीणोऽयम् यथा चक्रमरनेमिविमुक्तमेवमाहुर्लौकिकाः जीवंश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयतऽइति वाक्यार्थः ॥२३॥ नन्वन्नत्रयात्मनि प्रजापतावहंग्रहोपासनस्य सफलस्योक्तत्वात् वक्तव्याभावात् उत्तरग्रन्थवैयर्थ्यमित्याशङ्कायामुच्यते एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकप्रजापतिभावो (अन्ना° Cod.) व्याख्यातः अनन्तरं च जायादिवित्तं परिवारस्थानीयमित्युक्तम् तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतम् न पुनः पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसम्बन्धनियमोऽवगतः स वक्तव्य इति तत्प्रदर्शनार्थमथ त्रयो वावेति कण्डिका प्रणीयते । शास्त्रोक्तसाधनार्हा लोकास्त्रय एव । के ते । केन कः साध्यः । पुत्रेणैव जेतव्यः । कर्मणा अग्निहोत्रादिलक्षणेन । विद्ययापरविद्यया ॥२४॥ एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि जाया तु पुत्रकर्मार्थत्वान्न पृथक्साधनमिति पृथङ्नाभिहिता वित्तं च कर्मसाधनत्वान्न पृथक्साधनम् । विद्याकर्मणोर्लोकजयहेतुत्वं स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धम् पुत्रस्य त्वक्रियात्मकत्वात्केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायते

ऽतस्तद्वक्तव्यमित्यथानन्तरमारभ्यतेऽथात इति अथ पुत्रकर्मविद्याख्यानां साधनानां साध्यविशेषसम्बन्धकथनानन्तरं यतः पुत्रस्यैतल्लोकसाधनत्वं कथमिति न ज्ञायतेऽतस्तत्कथयितुं सम्प्रत्तिः सम्प्रदानमारभ्यते पुत्रे हि पिता वक्ष्यमाणप्रकारेण स्वात्मव्यापारसम्प्रदानं करोति तेन सम्प्रत्तिसंज्ञकमिदं कर्म । यस्मिन्काले प्रैष्यन् प्रव्रजिष्यामि मरिष्यामीति वारिष्टदुःस्वप्नादिदर्शनेन मन्यते ॥२५॥ एतद्वाक्यत्रयस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तते । योऽध्ययनव्यापारो मम कर्तव्य आसीदेतावन्तं कालं वेदविषयः स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्विति वाक्यार्थः । मत्कर्तृका यज्ञा यऽआसन् तऽइत ऊर्ध्वं त्वत्कर्तृका भवन्तु तथा ये वै के च लोका मया जेतव्याः सर्वो जिता अजिताश्च तऽइत ऊर्ध्वं त्वं लोकास्त्वया जेतव्याः । एतत्सर्वं सन्नयं पुत्रः सर्वं होमं भारं मदधीनं मत्तोऽपच्छिद्यात्मनि निधाय इतोऽस्माद्बन्धहेतुभूताल्लोकात् मा मामभुनजत्पालयिष्यति लृडर्थे लङ् । इदानीं पुत्रानुशासनस्य फलवत्त्वमाह तस्मात्पुत्रमिति लोक्यं पितुर्लोकहितम् एनं पुत्रमनुशासति शिक्षयन्ति लोक्योऽयमस्माकं स्यादिति मन्वानाः । कृतसम्प्रत्तिकः पिता किं करोति स यदेति । पुत्रनिर्वचनमाह स पुत्रो यदि अनेन पित्रा अक्ष्णया कोणाच्छिद्रतोऽन्तरा कर्तव्यं किंचिदकृतं भवति तस्मादकृतात्कर्तव्यतारूपात्सर्वस्मात्सर्वलोकप्राप्तिप्रतिबन्धरूपादेनं मोचयति तत्सर्वं स्वयमनुतिष्ठन्पितुः छिद्रं पूरयित्वा पितरं त्रायते तस्मात्पुत्रो नाम । इदानीं पितुः पुत्रतादात्म्येनैतल्लोकावस्थानमुक्तं निगमयति स पुत्रेणेति । एवं प्रासङ्गिकं निरूप्य प्रकृतं पितरमेवाधिकृत्याहाथैनमिति एनं कृतसम्प्रत्तिकं पितरमेते वागादयः प्राणा दैवा हैरण्यगर्भा अमरणधर्माण आविशन्ति ॥२६॥ तेषामावेशनप्रकारमाह पृथिव्याऽइति ॥२७॥ यो जङ्गमेषु संचरन् स्थावरेषु चासंचरन्न व्यथते न दुःखनिमित्तेन भयन युज्यते अथो अपि न रिष्यति न विनश्यति न हिंसामापद्यते । एवंविदः फलमाह स एष इति सर्वभूतात्मतया सर्वज्ञः सर्वकृच्च भवति यथैषा पूर्वसिद्धा हिरण्यगर्भदेवता एवम् । किं च स इति दृष्टान्तनिर्देशः यथा एतां हिरण्यगर्भदेवतामिज्यादिभिः सर्वाणि भूतानि पालयन्ति । नन्वस्य विदुषः सर्वप्राणिनामात्मत्वेन तत्कार्यकरणात्मत्वात्सर्वप्राणिदुःखैरस्य सम्बन्धः स्यादित्यत आह यदु किं चेति अमैव सहैव प्रजाभिः तच्छोकादिनिमित्तं दुःखसंयुक्तमासां प्रजानां भवति परिच्छिन्नबुद्धिजनितत्वात् अमुं प्राजापत्ये पदे वर्तमानमेवंविदं पुण्यमेव शुभमेव फलमभिप्रेतं प्राप्नोति । पापं पापफलं दुःखम् ॥२९॥ तऽएते सर्वऽएव समाः सर्वेऽनन्ता इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तं नान्यतमगतो विशेष उक्तः किमेव[मेव] प्रतिपत्तव्यं किं वा विचार्यमाणे व्रतमुपासनं प्रति कश्चिद्विशेषः प्रतिपत्तुं शक्यतऽइति जिज्ञासायामाह अथोपासनोक्त्यनन्तरमत एषां वागादीनां प्राणानां मध्ये कस्य कर्मव्रतत्वेन धारयितव्यमिति मीमांसा उपासनकर्मविचारणा प्रवर्तते । व्रतमित्यवश्यानुष्ठेयं कर्मोच्यते । प्रवृत्तायां मीमांसायां प्राणव्रतमभग्नत्वेन धारणीयमिति निर्धारणार्थमाख्यायिकां प्रणयति । कर्माणि वागादीनि करणानि कर्मार्थानि हि तानीति कर्माणीत्युच्यन्ते ॥३०॥ उपयेमे संजग्राह । अवारुन्द्ध अवरोधं कृतवान्स्वकर्मभ्यः प्रच्यावितवान् ॥३१॥ अधिदैवतं देवताविषयं दर्शनमुच्यते कस्य देवताविशेषस्य व्रतधारणं श्रेय इति मीमांस्यते । म्लोचन्त्यस्तंयन्ति ॥३३॥ उक्तार्थदार्ढ्याय मन्त्रमवतारयति । देवा वागादयोऽग्न्यादयश्च तं धर्मं वायुव्रतं प्राणव्रतं चावश्यानुष्ठेयं चक्रिरे धृतवन्तः स एव प्राण-

वायुव्रतलक्षणो धर्म एवाद्य श्वोऽपि । अमुर्हि अमुष्मिन्काले एते वागादयोऽग्न्यादयश्च । प्रकरणार्थमुपसंहरति तस्मादिति अध्यात्मं प्राणव्रतमधिदैवं च वायुव्रतमित्येकमेव व्रतं धार्यम् । न हि प्राणनापाननलक्षणस्य प्राणव्यापारस्योपरमोऽस्ति तस्मादिन्द्रियेतरव्यापारं हित्वा तदेवैकं व्रतं चरेत् । आप्नुवत् (!) प्राप्नुयात् । प्राणव्रतस्य सकृदनुष्ठानमाशङ्क्य सर्वेन्द्रियव्यापारनिर्वृत्तिरूपं संन्यासलक्षणं प्राणव्रतमामरणमनुवर्तयेत् यदि कदाचित्प्रारभेत प्राणव्रतं तर्हि समापयितुमिच्छेत् यदि व्यस्मद्व्रतादुपरमेत्प्राणः परिभूतः स्याद्देवाश्च । सर्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एवाहं च सूत्ररूपप्राणात्मा परिस्पन्दकृदित्येवमुपासकस्य फलमाह तेनानेन प्राणव्रतेन प्राणात्मप्रतिपत्त्या एतस्या एव प्राणदेवतायाः सयुग्भावमेकात्मकत्वं विज्ञानप्रकर्षापेक्षं सलोकतां चैकस्थानत्वं विज्ञाननिकर्षापेक्षं प्राप्नोति ॥३४॥३॥४॥

अथ योऽन्यां देवतामुपास्तऽइत्यत्र (२. २२.) सूत्रिताया अविद्यायाः साध्यसाधनलक्षणो व्याकृताव्याकृतरूपो विस्तर इयता ग्रन्थेन निरूपितः इदानीं प्रतिपत्तिसौकर्यार्थं तस्यैव नामरूपकर्मात्मत्वेनोपसंहारं वक्तुमुपसंहारब्राह्मणं प्रवर्तते । उक्थं कारणमुपादानं सैन्धवलवणकणानां सैन्धवाचल-इव । समत्वात्साम सामान्यम् । ब्रह्म आत्मा ॥१॥ आत्मा आत्मशब्दवाच्यशरीरनिर्वर्त्यकर्मसामान्यम् आत्मना हि शरीरेण कर्म करोति शरीरे च सर्वं कर्माभिव्यज्यते । एवं नामरूपकर्मात्मत्वेन संक्षिप्तस्यापि जगतः पुनः संक्षेपान्तरमाह तदेतत्त्रयमिति । अयं प्रत्यक्ष आत्मा आत्मकार्यकरणसंघातः पिण्डः । एकः सन्नध्यात्माधिभूताधिदैवभावेन व्यवस्थितमेतदेव नाम रूपं कर्मेति त्रयम् । एकस्मिन्नपि संघाते कार्यकरणरूपेणावान्तरविभागमाह तदेतद्वक्ष्यमाणममृतम् प्राणो वै लिङ्गात्मा करणात्मकोऽन्तरुपष्टम्भक आत्मभूतोऽविनाशी अमृतभूतः स्थूलदेहे गच्छत्यपि यावन्मोक्षस्थायित्वात् नामरूपे पञ्चीकृतभूतात्मके शरीरावस्थे कार्यात्मके सत्यशब्दवाच्ये सच्च त्यच्च सत्यं भूतपञ्चकं तदात्मके । ताभ्यां बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायिधर्मिभ्यां मर्त्याभ्यां नामरूपाभ्यामय क्रियात्मकस्तयोरुपष्टम्भकः प्राणशक्तोऽप्रकाशीकृतः अतः प्रत्यगात्मत्वं सुतरां दुर्विज्ञेयमिति तज्ज्ञाने ऽवहितैर्भाव्यमिति भावः । एतदेव संसारतत्त्वमविद्याविषयं प्रदर्शितम् ॥३॥४॥४॥

अथ प्रथमेऽध्याये सूत्रितयोर्विद्याविद्ययोरविद्या प्रपञ्चिता सम्प्रति विद्यां प्रपञ्चयितुं श्रुतिर्द्वितीयमध्यायमारभते । तत्र वक्तृश्रोतृरूपाख्यायिकयाविद्याविषयमेव ब्रह्मत्वेनोपागतो (°ह्मा° Cod.) गार्ग्यो ब्राह्मणो पूर्वपक्षवादी उपस्थाप्यते मुख्यब्रह्मात्मदर्शी राजाजातशत्रुः श्रोता सिद्धान्तवादी च । दृप्तो सम्यग्ब्रह्मवित्त्वादेव गर्वितो बलाकाया अपत्यं बालाकिः गार्ग्यो गर्गगोत्रापत्यम् । अजातशत्रुनामानं जनकं (! sic) काश्यं काशिराजम् । गवां सहस्रम् । ननु साक्षाद्ब्रह्मकथनमेव सहस्रदाने निमित्तम् कस्मान्नेष्यतऽइत्याशङ्कायां श्रुतौ राज्ञोऽभिप्रायमाह जनको जनक इतीति वैशब्दो जनको दाता जनको श्रोतेति प्रसिद्ध्यवद्योतनार्थः जनको दित्सुर्जनकः शुश्रूषुरिति वै ब्रह्मशुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जना ब्राह्मणा धावन्ति अभिगच्छन्ति तस्मात्तत्सर्वं मय्यपि सम्भावितवानसीति मुख्यं ब्रह्मकथनं विनैव तद्वचनमात्रेणैव सहस्रं दद्म इति राज्ञोऽभिप्रायः ॥१॥ य एवासावादित्ये चक्षुषि चैकोऽभिमानी पुरुषश्चक्षुर्द्वारेणेह हृदि प्रविष्टोऽहं कर्ता भोक्ता चेत्यवस्थितमेतमेव पुरुषमस्मिन्कार्यकरणसंघाते अहं ब्रह्मोपासे ॥२॥ चन्द्रे मनसि चैकः पुरुषो भोक्ता कर्ता चेति पूर्ववद्विशेषणं बृहन्महान्

पाण्डुरं शुक्लं वासो यस्य स पाण्डुरवासाः (!) चन्द्राभिमानिनः प्राणस्य अप्शरीरत्वात् (अप-श° Cod.) सोमो राजेति चन्द्रमाः लतात्मकश्च सोमो यज्ञे योऽभिषूयते तं बुद्धिनिष्ठं च पुरुषमेकीकृत्य अहं ब्रह्मोपासे ॥३॥ विद्युति त्वचि हृदये चैका देवता तेजस्वीति तस्या विशेषणम् ॥४॥ आकाशे हृद्याकाशे हृदये चैका । अप्रवर्तित्वमप्रवर्तकत्वमक्रियावत्त्वं वा ॥५॥ वायौ प्राणे हृदि चैका । इन्द्रः परमेश्वरः वैकुण्ठोऽप्रसंख्यः । अपराजिता सेनेति न परैर्जितपूर्वः मरुतां गणत्वप्रसिद्धेरेकस्मिन्वायावपराजिता सेनेति गुणः सम्भवति । जिष्णुर्जयशीलः अपराजिष्णुर्न परैर्जितस्वभावः अन्यतस्त्यानामन्यमातृतो जातानां सपत्नानां जयशीलः ॥६॥ अग्नौ वाचि हृदि चैका । यद्वविविर्षियते र्जिप्यते तत्सर्वं भस्मीकरणेन सहतऽइति विषासहिरग्निः । फलोक्तौ विषासहिः परेषां मर्षयिता ॥७॥ अप्सु रेतसि हृदि चैका । प्रतिरूपोऽनुरूपः श्रुतिस्मृत्यप्रतिकूलः । फलं प्रतिरूपं श्रुतिस्मृतिशासनानुरूपमेवैनमुपासकं प्राप्नोति ॥८॥ आदर्शे प्रसादस्वभावे चान्यत्र खड्गादौ हार्दे सत्त्वशुद्धिस्वाभाव्ये चैका ॥९॥ दिक्षु कर्णयोर्हृदि चैकाश्विनौ देवावविमुक्तस्वभावौ तस्य देवस्य गुणो द्वितीयवत्त्वमनपगत्वमन्योऽन्यमवियुक्तता दिशामश्विनोश्चैवंधर्मित्वात् । गणः समूहः ॥१०॥ गच्छन्तं पश्चात्पृष्ठतो य एवायं शब्दोऽनूदैत्युत्पद्यतेऽध्यात्मं च जीवनहेतुः प्राणस्तमेकीकृत्यैतमेवोपास्ते तस्य विशेषणमसुर्जीवनहेतुः प्राणः । सर्वं सम्पूर्णं यावत्कर्मोपात्तम् । कर्मपरिच्छिन्नकालात्पूर्वम् ॥११॥ छायायां बाह्ये तमसि अध्यात्मं चावरणात्मकेऽज्ञाने हृदि चैका देवता तस्या विशेषणं मृत्युः ॥१२॥ व्यस्तानि ब्रह्माण्युपन्यस्य समस्तं ब्रह्मोपदिशति आत्मनि प्रजापतौ बुद्धौ च हृदि चैका तस्या विशेषणमात्मन्वी वश्य आत्मास्यास्तीत्यात्मन्वी स्वतन्त्रः ॥१३॥ तं गार्ग्यं सलज्जमालक्ष्य विश्रम्भजननाय पाणौ हस्ते गृहीत्वा । तथा च बृहन्पाण्डुरवास (!) इत्यादिप्राणात्मचन्द्रादिनाम्ना सम्बोधनेन गार्ग्याभिमतप्राणदेवतातिरिक्त एवात्मास्मिञ्छरीरे कर्ता भोक्ता न प्राण इति निर्णीतम् अन्यथोच्छ्वासनिःश्वासरूपेण व्याप्रियमाणस्य प्राणस्य सम्बोधनाश्रवणमनुत्थानं च न भवेत् आपेषणेन च प्राणशरीरसंघातमात्रो भोक्ता नेति निश्चितम् अन्यथा संघातमात्राविशेषात्स्पर्शमात्रेणाप्युत्थानं स्यादिति भावः ॥१५॥ संकल्पविकल्पाद्यात्मकमन्तःकरणं बुद्धिर्विज्ञानमुच्यते तन्मयस्तत्प्रायस्तस्मिन्नुपलभ्यस्तेन च उपलभ्यः । यत्र यस्मिन्पाणिपेषणप्रतिबोधात्प्राक्काले । कुत आगतः पाणिपेषोत्तरकालम् । विज्ञानमयस्य पुरुषस्य स्वापे संवेशनस्थानं यतश्च स्थानाज्जागरिते कार्यकरणसंघातचेतयितृत्वेनागमनम् ॥१६॥ जागरिते कर्तृत्वभोक्तृत्वादिकं नात्मनः स्वाभाविकं किंतु वागाद्युपाधिसम्बन्धकृतमेव स्वापे तद्व्यतिरेकेण कर्तृत्वादिव्यतिरेकदर्शनादिति दर्शयितुं प्रश्नानुवादपूर्वकं प्रथमप्रश्नस्योत्तरमाह । तत्रास्मिन्काले एषां प्राणानां वागादीनां विज्ञानं स्वस्वविषयगतप्रतिनियतप्रकाशनसामर्थ्यं विज्ञानेनान्तःकरणोपादानाज्ञानजनितेनान्तःकरणगताभिव्यक्तविशेषविज्ञानेन चैतन्याभासलक्षणेन करणेन गृहीत्वा अन्तर्हृदयं (°दये ?) हृदयस्य मध्ये य आकाशः आकाशशब्देन जीवस्य स्वाभाविकस्वरूपभूतः परमात्मोच्यते तस्मिन्स्वाभाविकेऽसांसारिके परमात्मन्याकाशे शेते लिङ्गोपाधिसम्बन्धकृतं विशेषात्मस्वरूपमुत्सृज्याविशेषस्वाभाविके आत्मन्येव केवलं वर्तते ॥१७॥ यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदासौ स्वात्मनि वर्तत ऽइति कथमवगम्यतऽइत्यपेक्षायां नामप्रसिद्धेत्याह । स्वमेवात्मानमप्येत्यपिगच्छतीति स्व-

पितीत्युच्यते । स्वपितीति नाम प्रसिद्धात्मनः संसारधर्मविलक्षणे रूपेऽवगतेऽपि नात्र युक्तिरस्तीत्याशङ्कायामाह तत्तत्र स्वापकाले गृहीत एव प्राणो भवति प्राण इति घ्राणेन्द्रियम् । तथा च वागादिसम्बन्धाभावात्स्वापे कर्तृत्वासम्बन्धः जागरिते च वागादिसम्बन्धात्कर्तृत्वादिकमतोऽन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमिति निश्चितम् ॥१८॥ ननु दर्शनलक्षणायां स्वप्नावस्थायां वागादिसम्बन्धाभावेऽपि कर्तृत्वादिसंसारस्य दर्शनाद्व्यतिरेकासिद्धिरित्याशङ्कायां तत्रापि जाग्रद्वासनया सत्त्वात्परिकल्पितस्य स्वप्नप्रपञ्चस्य च मृषात्वात् न व्यतिरेकासिद्धिरित्यतोऽस्य स्वतःशुद्धत्वमेवेत्यभिप्रेत्याह स प्रकृत आत्मा यस्मिन्काले दर्शनलक्षणया स्वप्नया स्वप्नवृत्त्या वर्तते तदास्यात्मनस्तेऽनन्तरं वक्ष्यमाणा लोकाः कर्मफलानि के ते महाराजत्वमिवास्य सोऽयं लोकः । इवशब्दप्रयोगाद्व्यभिचारदर्शनाच्चैते महाराजत्वादयो लोका मृषैव नास्यात्मभूताः ॥१९॥ कामकर्मभ्यामुद्भासिताः पूर्वानुभूतवस्तुसदृशा वासना अनुभवति । तस्मादसौ विज्ञानमयो द्रष्टा दृश्येभ्यः स्वप्नजागरितलोकेभ्योऽन्यो विशुद्धः ॥२०॥ दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वादसंसारधर्मतेत्यात्मनो विशुद्धतावगता तत्र कामवशात्परिवर्तनमुक्तम् द्रष्टृदृश्यसम्बन्धश्चास्य स्वाभाविक इत्यशुद्धतेत्याशङ्कायां तत्सम्बन्धस्य सुषुप्तौ व्यतिरेकदर्शनेनास्वाभाविकत्वाच्छुद्धत्वमेवास्य स्वाभाविकमिति वक्तुमाह यस्मिन्काले जाग्रत्स्वप्नयोर्दृष्ट्वा दर्शनवृत्तिं स्वप्नं हित्वा सुषुप्तः विशेषज्ञानाभावेन सम्प्रसादं स्वस्वरूपब्रह्मैक्यं गतो भवति । हृदयं नामोदरवक्षःप्रदेशयोर्मध्यस्थितः पुण्डरीकाकारो मांसपिण्डस्तत्परिवेष्टनं पुरीतदित्युच्यते इह पुनस्तदुपलक्षितं शरीरं पुरीतच्छब्देनाभिप्रेतम् तथा च हृदयात्पुरीततं शरीरमभि(प्र)तिष्ठन्तऽइति कृत्स्नं शरीरं व्याप्नुवन्त्योऽश्वत्थपर्णराजय-इव बहिर्मुखाः प्रवृत्ता अभितो निःसरन्ति । ताभिर्नाडीभिः कृत्वा जाग्रद्विषयाया बुद्धेः कर्मवशात्प्रत्यवसर्पणमनु विज्ञानमय आत्मा प्रत्यवसृप्येन्द्रियाण्युपसंहृत्य पुरीतति शेते अग्निवत्तप्तं लोहपिण्डमविशेषेण संव्याप्य वर्तते । ननु पूर्वं विज्ञानमयो हृदयाकाशे ब्रह्मणि शेतऽइत्युक्तेदानीं पुरीतति शयनमाचक्षाणस्य कथं न पूर्वापरविरोधः स्यादिति चेत् सत्यम् स्वाभाविकऽएव स्वात्मनि वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्तित्वात्पुरीतति शेतऽइत्युपचाराडुच्यतेऽतो नोक्तविरोधः ॥२१॥ उक्तं शयनं दृष्टान्तपूर्वकमाह । अतिशयेन दुःखं हन्तीत्यतिघ्नी आनन्दस्य सुखस्यावस्था दुःखाननुविद्धसुखस्वाभाव्येऽवतिष्ठेत ॥२२॥ एवं क्वैष तदाभूदित्यस्य पूर्वप्रश्नस्य प्रतिवचनमुक्तमनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिरसंसारित्वं चोक्तम् इदानीं तस्याद्वितीयत्वं प्रकटयितुं कुत एतदागादिति द्वितीयप्रश्नस्यापाकरणार्थं प्रतिवचनमाह । स इति दृष्टान्तः ऊर्णवाभिरूर्णनाभिर्लूताख्यः कीटविशेषः । क्षुद्रा अल्पा विष्फुलिङ्गा अग्न्यवयवाः । विज्ञानमयस्य प्राक्प्रतिबोधात्स्वापे यत्स्वं रूपं तस्मादेतस्मादात्मनः सकाशात्सर्वे प्राणाः वागादयः सर्वे लोका भूरादयः सर्वकर्मफलभूताः सर्वे देवाः प्राणलोकाद्यधिष्ठातारोऽग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि सर्व एतऽआत्मानः उपाधिस[illegible]ध्यमानविशेषात्मानो व्युच्चरन्ति । यस्मादात्मनः स्थावरजङ्गममिदं जगदग्निविष्फुलिङ्गवदनिशं व्युच्चरति यस्मिन्नेव च जलबुद्बुदवत्प्रलीयते सदात्मकं च स्थितिकाले वर्तते तस्यात्मनो ब्रह्मण उपनिषदुप समीपं नितरां सादयति गमयति विज्ञानात्मानमिति व्युत्प[illegible]पनिषदात्मनोऽभिधायकः शब्दः सत्यस्य सत्यमिति

प्राणा वै सत्यं सच्च त्यच्चेति व्युत्पत्तेः प्राणानां मध्ये एष उक्त आत्मा सत्यमबाध्यं रूपम् ॥ २३ ॥ १ ॥ ५ ॥

एवं प्राणा वै सत्यं तेषामेष सत्यमित्यादिब्राह्मणभागेन व्याख्याताया अप्युपनिषदो विशेषतोऽर्थप्रकाशनाय ब्राह्मणद्वयम् तत्र प्राणा वै सत्यमित्यंशेनोक्तायाः प्राणोपनिषदो व्याख्यानाय शिशुब्राह्मणं प्रवर्तते । चक्षुर्द्वयं नासिकाद्वयं श्रोत्रद्वयं मुखमिति सप्त द्वेषकर्तॄन् शत्रूनपावृणोति विनाशयति जितेन्द्रियो भवतीत्यर्थः । भ्रातृव्या हि द्विविधाः द्विषन्तोऽद्विषन्तश्च तत्र सप्त शीर्षण्याः प्राणा विषयोपलब्धिद्वाराणि तत्प्रभवा विषयरागाः सहजत्वाद्भ्रातृव्यास्ते स्वस्य स्वात्मस्थां दृष्टिं विषयविषयां कुर्वन्ति तेन प्रत्यगात्मेक्षणप्रतिषेधकत्वात्ते द्वेष्टारो भ्रातृव्या इति भावः ॥१॥ शिशुरिव शिशुः विषयेष्वितरकरणवदपटुत्वात् योऽयं शरीरमध्यस्थः प्राणो लिङ्गशरीरात्मा पञ्चधा शरीरमाविष्टः तस्य शिशोः प्राणस्य वत्सस्थानीयस्य करणात्मन इदं कार्यात्मकं शरीरमेव आधानम् आधीयतेऽस्मिन्नित्याधानमधिष्ठानम् इदं प्रसिद्धं शिरो मस्तकं प्रत्याधानम् प्रदेशविशेषेषु प्रतिपत्त्याधीयतऽइति प्रत्याधानम् प्राणो बलापरपर्यायान्नपानजनिता शक्तिः स्थूणा अवष्टम्भः बलावष्टम्भो हि प्राणोऽस्मिञ्छरीरेऽवतिष्ठते अन्नं भुक्तमशनं दाम उभयतःपाशं वत्सस्येव बन्धने बन्धनरज्जुः । इदानीं तस्यव शिशोः प्रत्याधाने शिरस्याहृतस्य चक्षुषि काश्चनोपनिषद उच्यन्ते तं करणात्मकं शरीरेऽन्नबन्धनं चक्षुष्यूढं प्राणमेता वक्ष्यमाणाः सप्त अक्षितयः अक्षितिहेतुत्वादक्षितय [उपतिष्ठन्ते] उपस्थानं कुर्वन्ति ॥२॥ कास्ताः । अक्षणि नेत्रे लोहिता रेखाः ताभिर्द्वारभूताभिरेनं मध्यमं प्राणं रुद्रोऽनुगतः उपतिष्ठते । अक्षणि या आपः धूमादिसंयोगेनाभिव्यज्यमानाः । या कनीनका चक्षुषि दृक्शक्तिः । अधस्तन्या वर्तन्या पक्ष्मणा । य एवं प्राणस्यान्नभूताः सप्ताक्षितीर्वेदास्योपासकस्यान्नं न क्षीयते ॥३॥ उक्ता रुद्रादिदेवताः प्राणोपासनाद्वागाद्यात्मका एव संवृत्ता इति वागादय एवात्र रुद्रादिशब्दाभिधेया इत्यभिप्रेत्योक्तेऽर्थे मन्त्रसंमतिमाह ॥४॥ तं मन्त्रं प्रतीकग्रहणपूर्वकं व्याकरोति । प्राणाः श्रोत्रादयः सप्त पूर्वोक्तास्तेषु प्रसृता वागादयश्च विश्वरूपं विषयाणामनेकत्वेनानेकरूपं शब्दादिज्ञानलक्षणं यशः शिरसि निहितम् । तस्य शिरोलक्षणस्य चमसस्य तीरे पार्श्वे सप्त ऋषय आसते वर्तन्ते प्राणाः करणाश्रयाः परिस्पन्दात्मका सप्त वायव ऋषयः प्रसिद्धऋषिवदेषां (!) शब्दादिविषयद्रष्टृत्वात्तदाश्रयत्वेन तद्रूपत्वाद्वा ऋषित्वम् । ब्रह्मणा शब्दराशिना वेदेन सह संविदाना संसर्गं गच्छन्ती शब्दराशिमुच्चारयन्ती ॥५॥ के ते प्राणा ऋषयः । गौतमभरद्वाजौ अयमेव दक्षिणः कर्णो गौतमः ॥६॥२॥५॥

अथ कथमेषां प्राणानां सत्यत्वं कथं वा ततोऽप्यात्मनः सत्यत्वमिति जिज्ञासायां कार्यकरणात्मकानां सत्यानां पञ्च भूतानां स्वरूपावधारणार्थं मूर्तामूर्तब्राह्मणं प्रवर्तते । यदपोहद्वारेण नेति नेत्यादिना निर्दिधारयिषितं ब्रह्म तस्य मायामये द्वे एव रूपे रूप्यते ज्ञाप्यते अरूपं परं ब्रह्म याभ्यामविद्याध्यारोप्यमाणाभ्यां रूपाभ्याम् । सत् प्रत्यक्षेणोपलभ्यमानासाधारणधर्मवत् त्यं तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम् ॥१॥ के ते मूर्तामूर्ते कस्य वा कानि विशेषणानि । मूर्तं मूर्छितावयवमितरेतरानुप्रविष्टावयवं घनं संहतम् ॥२॥ रसः सारः ॥३॥ अथास्य करणात्मनो वासनामयं रूपं निरूपयितुमाह यथा लोके महाराजनं (!) वासः महाराजनं (!) हरिद्रा तया रक्तं माहारजनं वासो वस्त्रम् एवं स्त्र्यादिविषयसंयोगे सति

तादृशं रञ्जनाकारं (रे Cod.) चित्तस्य वासनारूपमुत्पद्यते येनासौ पुरुषो रक्त इत्युच्यते व-स्त्रादिवत्। यथा च लोके पाण्ड्वाविकम् अवेरिदमाविकमूर्णादि आपाण्डुरं भवति तथान्य-द्वासनारूपम्। यथा च लोके इन्द्रगोपो वर्षाकाले कीटविशेषः कौसुम्भवदत्यन्तरक्तो भवति एवमेवास्य वासनारूपं क्वचिद्विषयविशेषापेक्षया रागस्य तारतम्यं क्वचित्पुरुषचित्तवृत्त्यपेक्ष-येति बोध्यम्। यथा च लोकेऽग्न्यर्चिर्भास्वरं भवति तथा क्वचित्कस्यचिद्वासनारूपम्। यथा च पुण्डरीकं शुक्लम् तद्वदपि कस्यचिद्वासनारूपम्। यथा च लोके सकृद्विद्युत्तं सकृद्विद्योतनं सर्वतःप्रकाशकम् तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्धिरण्यगर्भादेर्वासनारूपमुपजायते सत्त्वादितारतम्यात् ॥१०॥ एवं सत्यस्येति षष्ठ्यन्तस्थूलसूक्ष्मप्रपञ्चात्मकहेयभूतसत्यशब्दार्थं व्याख्यायोपादेयभूतप्रथमान्तसत्यशब्दार्थव्याख्यानायेदमारभ्यतेऽथात आदेश इति अथ सत्य-स्वरूपनिर्देशानन्तरं यत्सत्यस्य सत्यं तदेवावशिष्यते यस्मादतस्तस्मात्तस्य सत्यस्य ब्रह्म-णो नेति नेतीत्येवादेशो (त्यैमा Cod.) निर्देशः ॥११॥३॥५॥

दृप्तबालाकिर्हेति द्वितीयेऽध्याये ब्रह्मविद्याविषयं प्रत्यगात्मानं ब्रह्म ते ब्रवाणि व्येव वा ज्ञपयिष्यामीति च प्रस्तुत्य (! प्र च स्तुत्य Cod.) तद्ब्रह्मैकमद्वयं सर्वविशेषशून्यं क्रि-याकारकफलस्वभावसत्यवाच्याशेषभूतधर्मप्रतिषेधद्वारेण नेति नेतीति विज्ञापितम् अस्या ब्रह्मविद्याया अङ्गत्वेन संन्यासविधित्सयैवाख्यायिकारूपं मैत्रेयीब्राह्मणमारभ्यते। अस्माद्गार्ह-स्थ्यात्स्थानादाश्रमात्पारिव्राज्याख्यमाश्रमान्तरं यास्यन्नेवास्मि। अन्तं विच्छेदं द्रव्यविभागम् ॥१॥ उपकरणवतां साधनसम्पत्तियुक्तानाम् ॥२॥ यदेव केवलममृतत्वसाधनं भगवान्वेद ॥३॥ स याज्ञवल्क्योऽमृतत्वसाधनं वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यः सकलसुखसाधनेभ्यस्तत्सं-न्यासाय विरागमुत्पादयन्नुवाच ॥५॥ तमयथार्थदर्शिनं पुरुषं ब्रह्म ब्राह्मणजातिः परादात् पराद्ध्यात्पराकुर्यात् कैवल्यासम्बन्धिनं कुर्यात् अयमनात्मस्वरूपेण (नासस्व Cod.) मां पश्यतीत्यपराधात् परमात्मा हि सर्वेषामात्मा (माश्रा Cod.) ॥६॥ कथं पुनरिदानीमिदं सर्व-मात्मैवेति ग्रहीतुं शक्यते इत्याशङ्कायां घटः (घरः Cod.) स्फुरतीत्यादिप्रत्ययमाश्रित्य चि-न्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते। यत्स्वरूपव्यतिरेकेण कस्याग्रहणं तस्य तदा-त्मकत्वमेवेति व्याप्तौ दृष्टान्तत्रयमाह। स इति दृष्टान्तः। दुन्दुभ्याघातविशिष्टस्य शब्दसामा-न्यस्य ग्रहणेन तु दुन्दुभिशब्दविशेषो गृहीतः स्यात् यथैवं शब्दविशेषाः शब्दसामान्यान्ना-तिरिच्यन्ते तथा स्फुरणात्मकब्रह्मसामान्यात्स्फोर्यमाणाः पदार्था नातिरिच्यन्ते ॥७॥ एवं स्थि-तिकाले जगतो ब्रह्मैकत्वमवगमय्योत्पत्तिकालेऽपि तथावगमयितुं कार्याणामुत्पत्तेः प्राक्कार-णादभिन्नत्वं दर्शयितुमाह स इति दृष्टान्तः आर्द्रैरेधैः काष्ठैरिद्धोऽग्निरार्द्रैधाग्निः तस्मादभ्याहिताद-भितः प्रज्वालितात् पृथक् नानाप्रकारम्। तथा ऋग्वेदादिप्रपञ्च उत्पत्तेः प्राक् न ब्रह्मणः पृथगस्ति एवमेव अस्य प्रकृतस्य परमात्मनो महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्वभा-वस्य एतद्वक्ष्यमाणं निःश्वसितमयत्नोत्पादितं निःश्वसितमिव निःश्वसितम्। अथर्वणा अङ्गि-रसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः। इतिहास उर्वशीपुरूरवसोः संवादादिरूपो ब्राह्मणभागो यथा उर्वशी हाप्सरा इत्यादिब्राह्मणमेव (११. ५. १. १.) पुराणमसद्वाऽइदमग्रऽआसीदित्या-दि (६. १. १. १.) विद्या देवजनविद्या वेदः सोऽयमित्याद्याः (१३. ४. ३. १०.) उपनिषदः प्रियमित्येनदुपासीतेत्याद्याः (१४. ६. १०. ३.) श्लोकाः ब्राह्मणप्रभवास्तदप्येते श्लोका इत्या-

दयः (११.३.१.५.) सूत्राणि वस्तुसंग्राहकाणि वाक्यानि वेदे यथा आत्मेत्येवोपासीतेत्येवमादीनि (१४.४.२.१८.) अनुव्याख्यानानि मन्त्रविवरणानि व्याख्यानान्यर्थवादाः अथवानुव्याख्यानानि वस्तुसंग्राहकवाक्यानां विवरणवाक्यानि यथा प्राणा वै सत्यमित्यस्य (१४.५.१.२३.) शिशुमूर्तामूर्तब्राह्मणे (१४.५.२-३.) व्याख्यानानि मेधया हि तपसाजनयत्पितेत्येवमादीनि (१४.४.३.२.) मन्त्रविवरणानि । एतान्युक्तानि ऋग्वेदादीनि मन्त्रब्राह्मणात्मकानि अस्यैवेश्वरस्य निःश्वसितानि ॥१०॥ अथ प्रलयकालेऽप्यस्य प्रपञ्चस्य ब्रह्मात्मकत्वं प्रतिपत्तव्यमिति दृष्टान्तपूर्वकमाह । स इति दृष्टान्तः । एकायनमेकगमनमेकप्रलयोऽविभागप्राप्तिः ॥११॥ एवं प्राकृतिकप्रलयप्रदर्शनेन सर्वं मूलप्रकृतिभूतमद्वयात्मतत्त्वमित्यवगमितम् इदानीं ब्रह्मविद्ययाविद्यानिरोधद्वारेण योऽयमात्यन्तिकः प्रलयस्तं दर्शयितुं दृष्टान्तमुपादत्ते । सैन्धवखिल्यः स्यन्दनात्सिन्धुरुदकं तस्य विकारस्तत्र भवो वा सैन्धवः स चासौ खिल्यो लवणशकलश्चेति सैन्धवखिल्यः । लवणं लवणास्वादमेव । विज्ञानं च तद्घनश्चेति विज्ञानघनः घनशब्दो जात्यन्तरप्रतिषेधार्थः । स विज्ञानघनो विशुद्धज्ञप्तिमात्रैकरस एवात्मा एतेभ्यो भूतेभ्यः कार्यकारणविषयाकारपरिणतेभ्यो नामरूपात्मकेभ्यः सम्यगुत्थाय । अस्यां च कैवल्यावस्थायां विशेषज्ञानं नास्तीत्याह न प्रेत्येति संज्ञा अहमसावमुष्य पुत्रो ममेदं क्षेत्रं धनं सुखीत्येवमादिलक्षणा विशेषसंज्ञा विशेषज्ञानम् ॥१२॥ एकस्मिन्वस्तुनि ब्रह्मणि पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य संज्ञास्तीति विज्ञानघनं संज्ञाभावं च विरुद्धधर्मत्वमाचक्षाणो भगवान्मा माममूमुहत् ॥१३॥ मोहं मोहनवाक्यम् । विशेषविज्ञानानामभावस्यैवोक्तत्वात् अतः यन्महद्भूतं ज्ञानघनस्वरूपं यथाव्याख्यातम् इदमेव विज्ञातुं पर्याप्तम् ॥१४॥ विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दृढीकुर्वन्नाह यत्र यस्मिन्नविद्याकल्पिते कार्यकरणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि भिन्नमिवात्मनो वस्वन्तरं भासमानं भवति । इयमविद्यावदवस्था ॥१५॥ यत्र तु ब्रह्मविद्ययाविद्या नाशमुपगमिता तत्रात्मव्यतिरेकेणान्यस्याभाव इति व्यतिरेकं दर्शयितुमाह यत्र त्वस्येति यस्यां विद्यावस्थायामस्य ब्रह्मविदः सर्वं कर्तृकर्मक्रियाफलादिकमात्मन्येव प्रविलापितं सदात्मैवाभूदात्मैव संवृत्तम् ॥१६॥४॥५॥

पूर्वं मैत्रेयीब्राह्मणे इदं सर्वं यदयमात्मेति प्रतिज्ञातस्यात्मोत्पत्तिस्थितिलयत्वहेतुमुक्त्वा प्रतिज्ञातस्यार्थस्य निगमनार्थं मधुब्राह्मणमारभ्यते । मधु कार्यम् मध्विव मधु यथैको मधूपूपोऽनेकैर्मधुकरैर्निर्वर्तित एवमियं पृथिवी सर्वभूतनिर्वर्तिता । तेजोमयश्चिन्मात्रप्रकाशमयः । आत्मानं शरीरमधिकृत्य वर्ततऽइत्यध्यात्मम् शारीरः शरीरे धवः सर्वलिङ्गाभिमानी । एवमुभयविधोऽपि पुरुषः सर्वेषां भूतानामुपकारकत्वात्करणत्वेन मधु सर्वाणि भूतान्यस्य कार्यत्वेन मध्विति च शब्दसामर्थ्याद्व्याख्येयम् । पृथिवी सर्वाणि भूतानि पार्थिवः पुरुषः शारीरश्चेत्येवमेतच्चतुष्टयमेकं मधु सर्वभूतकार्यं सर्वाणि च भूतान्यस्य पृथिव्यादेः कार्यमतोऽस्य पृथिव्यादेः परस्परमुपकार्योपकारकभावः । यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्म इतरत्कार्यं वाचारम्भणं विकारो नामधेयमात्रमित्याशयेनाह अयमेवेति पूर्वं मैत्रेय्यै इदं सर्वं यदयमात्मेति प्रतिज्ञातः स एवात्मा अयमुक्तश्चतुर्विधमध्यात्मा नान्यः (°त्मनोनान्यः Cod.) । इदं चतुष्टयकल्पनाधिष्ठानब्रह्मविषयं ज्ञानममृतत्वसाधनम् इदमेवात्मतत्त्वं ब्रह्म

ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रकृतं ब्रह्म यद्विषया विद्या ब्रह्मविद्येत्युच्यते इदमेव सर्वं सर्वाप्तिसाधनं यस्माद्ब्रह्मणो विज्ञानात्सर्वं भवति नान्यत्किंचिदस्तीत्यर्थः । एवमन्ये ऽपि मधुपर्याया व्याख्येयाः ॥१॥ रेतसि भवो रैतसः रेतस्यपां विशेषतोऽवस्थानम् आपो रेतो भूत्वा शिश्नं प्राविशन्निति श्रुत्यन्तरात् (ऐत° २.४.) ॥२॥ वाङ्मयो वागभिमानी वाच्यग्नेर्विशेषतोऽवस्थानम् अग्निर्वाग्भूत्वा मुखं प्राविशदिति श्रुतेः ॥३॥ हृद्याकाशो हृदयाकाशः (५.१.१७.) ॥४॥ प्राणो घ्राणेन्द्रियम् वायुः प्राणो भूत्वा नासिके प्राविशदिति श्रुत्यन्तरात् । भूतानां शरीरारम्भकत्वेनोपकारान्मधुत्वम् तदन्तर्गतानां तेजोमयादीनां द्रवणत्वेनोपकारान्मधुत्वम् (? द्रुतण° Cod.) ॥५॥ आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति श्रुतेः ॥६॥ चन्द्रमा मनो भूत्वा हृदयं प्राविशदिति श्रुतेः ॥७॥ यद्यपि दिशां श्रोत्रमध्यात्मं तथापि शब्दप्रतिश्रवणवेलायां तु विशेषः सन्निहितो भवतीत्यध्यात्मं प्रातिश्रुत्क इति विशेषणम् प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः । दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्निति श्रुतेः ॥८॥ स्तनयित्नुः पर्जन्यः । स्वरे भवः सौवरः ॥१०॥ पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकरणसंघातात्मनोपकुर्वन्तो मधु भवन्तीत्युक्तम् ते येन प्रयुक्ताः शरीरिभिः सम्बध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते अयं धर्म इति ॥११॥ धर्मसत्याभिप्रयुक्तोऽयं कार्यकरणसंघातविशेषो येन जातिविशेषेण संयुक्तो भवति तं निर्दिशति ॥१३॥ यः पुनर्मानुषादिजातिविशिष्टः कार्यकरणसंघातस्तस्य मधुत्वमाह अयमात्मोक्तजातिविशिष्टो देहो न तु चेतनः । यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषः सोऽमूर्तरसः सर्वात्मकश्चेतनो निर्दिश्यते ॥१४॥ अस्यान्तिमपर्यायोक्तस्यात्मनः स्वरूपमाह । रथनाभौ रथचक्रपिण्डिकायां रथनेमौ च वलयभूतायाम् । एवमेवास्मिन्नात्मनि परमात्मभूते ब्रह्मविदि । सर्वऽएतऽआत्मानो जलचन्द्रवत्प्रतिशरीरानुप्रवेशिनोऽविद्याकल्पिताः ॥१५॥ एवं साकल्येन निरूपिताया ब्रह्मविद्यायाः स्तुत्यर्थं प्रवर्ग्यप्रकरणस्थिताख्यायिकासंक्षेपकौ मन्त्रौ (१४.१.१.२५.) श्रुतिः प्रस्तावपूर्वकमवतारयति । ऋक्स° १.११६.१२. ॥१६॥ ऋक्स° १.११७.२२. ॥१७॥ प्रवर्ग्यकर्मार्थयोः प्रथमद्वितीययोरध्याययोरर्थः प्रवर्ग्यसम्बन्ध्याख्यायिकोपसंहर्तृभ्यां मन्त्राभ्यां प्रकाशितः इदानीं ब्रह्मविद्यार्थयोस्तु तृतीयचतुर्थाध्याययोरर्थ उत्तराभ्यामृग्भ्यां प्रकाशयितव्यः । ईश्वरोऽव्याकृते नामरूपे व्याकुर्वाणो भूतादिसर्गपुरःसरं पञ्चीकृतेभ्यो भूतेभ्यो भूरादीन्लोकान्सृष्ट्वा पुरः पुराणि शरीराणि द्विपदो द्विपादुपलक्षितानि मनुष्यशरीराणि कृतवान् तथा चतुष्पादुपलक्षितानि पशुशरीराणि नानाविधानि सृष्ट्वा स ईश्वरः पुरः पुरस्तादात्मप्रवेशात्पूर्वं पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि पुरुषरूपः सन्प्रविवेश । एनेनानेन परमात्मना अनावृतमनाच्छादितम् असंवृ[illegible] । तथा च परमात्मैवान्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थितो न ततोऽन्यत्किंचिदस्तीति मन्त्रः सम्प्रक्षेपत [illegible] ॥१८॥ एवं शरीरेषु प्रविष्टः परमात्मा किंरूपः (ऋक्स° ६.४७.१८.) । स ईश्वरो रूपंरूपमुपाधिभेदं देहं प्रति प्रतिरूपो रूपान्तरं प्रतिबिम्बं बभूव । तत्प्रतिबिम्बत्वमस्यात्मनो निरुपाधिकस्य रूपं स्वरूपं प्रतिचक्षणाय आत्मयाथात्म्यप्रतिख्यापनाय शास्त्राचार्यादिभेदेन तत्प्रकाशनाय । यदा हि नामरूपे न व्याक्रियेते तदास्यात्मनो निरुपाधिकं प्र[illegible]ख्यं रूपं न प्रतिख्यायेत यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते भवतस्तदास्य रूपं प्रतिख्यायेत । इन्द्रः परमेश्वरो मायाभिः नामरूपविषयमिथ्याभि[illegible]नात्मना परिणताभिः बहुरूप ईयते मि-

थ्यैव जलसूर्यवत् । परमात्मनो बहुरूपत्वे किं निमित्तम् रथे युक्ता वाजिन इव हि यस्मादस्य प्रतीचो रथस्थानीये शरीरे युक्ताः हरय इन्द्रियाणि शतानि दश च प्राणिभेदबाहुल्यात् प्रत्यश्चं स्वविषयान्प्रति (? °यात् प्रति C.) हरन्तीति हरणादिन्द्रियाणि हरयः । अयमेव आत्मा हरयः इन्द्रियादिरूपेणास्यैवाविद्यया भानात् (?) अयमेवात्मा दश च सहस्राणि बहूनि चानन्तानि च हरिशब्दितानीन्द्रियाणि प्राणिभेदस्यानन्त्यात् । इदानीमस्यात्मनः पारमार्थिकं स्वरूपमाह तदेतदिति । न विद्यते पूर्वं कारणं यस्य तदपूर्वम् न विद्यतेऽपरं कार्यं यस्य तदनपरम् । अनुशासनं सर्ववेदान्तोपदेशः ॥१९॥ अथेदानीं ब्रह्मविद्यार्थस्य मधुकाण्डस्य स्तुत्यर्थं स्वाध्यायार्थो जपार्थश्च ब्रह्मविद्याया अयं वंश आरभ्यते । वंश इव वंशः यथा वेणुवंशः पर्वणः-पर्वणो भिद्यते तद्वदग्रात्प्रभृत्या मूलप्राप्तेरयं वंशोऽध्यायद्वयस्याचार्यपरम्पराक्रमो वंश इत्युच्यते तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यो बोद्धव्यः ॥२०॥ परमेष्ठी विराड् ब्रह्मणो हिरण्यगर्भादधीतवान् हिरण्यगर्भः स्वयम्प्रतिभातवेदः ॥२२॥५॥५॥

एवमागमप्रधानेन मधुकाण्डेनोक्तमेवार्थमुपपत्तिभिर्निरूपयितुमुपपत्तिप्रधानं याज्ञवल्कीयं काण्डमारभ्यते । तत्र प्रस्तावं कर्तुं विज्ञानस्तुत्यर्था विद्याप्राप्त्युपायदानप्रदर्शनार्था वाख्यायिकाश्वलब्राह्मणेनारभ्यते । बहुदक्षिणेन यज्ञेन शाखान्तरप्रसिद्धेन (!) बहुदक्षिणाविशिष्टेनाश्वमेधेन वा ईजे अयजत ॥१॥ अवरुरोध गोष्ठेऽवरोधं कारयामास । पलचतुर्भागः पादः एवम्भूताः सुवर्णस्य दश-दश पादाः । शृङ्गयोरिति द्विवचनादेकैकस्मिन् शृङ्गे पञ्च पञ्च पादाः ॥२॥ सामविधिं शृणोतीति सामश्रवाः यजुर्वेदविदो याज्ञवल्क्यात्सामविधिश्रवणमनुपपन्नमित्यर्थाच्चतुर्वेदो याज्ञवल्क्य इति सिद्धम् ॥३॥ पूर्वत्र व्याख्याते मधुकाण्डे यदुद्गीथप्रकरणं तस्मिन्नासङ्गपाप्मनो मृत्योरत्ययः समुच्चितेन कर्मणा संक्षेपतो व्याख्यातस्तस्यैवोद्गीथदर्शनस्य परीक्षाविषयोऽयं प्रश्नप्रतिवचनरूपो विस्तर आरभ्यते । केन दर्शनलक्षणेन साधनेन यजमानो मृत्योराप्तिमतीत्य मृत्युगोचरत्वमतिक्रम्य मुच्येत स्वतन्त्रो मृत्योरवश्यो भवति । यज्ञो वै यजमान इति (१४. २. २. २४.) श्रुतेर्यज्ञस्य यजमानस्य याध्यात्मं वाक् सैवाधियज्ञं होता तत्रैवं सति या इयं यज्ञस्य यजमानस्य वाक्सोऽयं प्रसिद्धोऽग्निरधिदैवम् । स एव वागैक्यमापन्नोऽग्निर्होता स होताग्निरूपेण दृष्टः सा मुक्तिः मृत्य्वतिक्रमणरूपाया मुक्तेः साधनम् सोक्तरूपा मुक्तिरेवातिमुक्तिः फलभूताया अग्न्यादिभावापत्तिरूपाया अतिमुक्तेः साधनम् तथा चाध्यात्मिकादाधिभौतिकाच्च परिच्छिन्नरूपाद्वाग्घोतृलक्षणात्साधनद्वय[illegible]धिदेवताग्निरूपेण होतरि दृष्टिमुक्तिसाधनम् ॥५॥ स्वाभाविकादज्ञानासङ्गप्रयुक्तात्कर्मलक्षणान्मृत्योरतिमुक्तिर्व्याख्याता तस्य कर्मणः सासङ्गस्य मृत्योराश्रयभूतानां दर्शपूर्णमासादिकर्मसाधनानां यो विपरिणामहेतुः कालस्तस्मात्कालात्पृथगतिमुक्तिर्वक्तव्येतीदमारभ्यते क्रियानुष्ठानव्यतिरेकेणापि क्रियायाः प्रागूर्ध्वं च साधनविपरिणामहेतुत्वेन कालस्य व्यापारदर्शनात्तस्मात्कालात्पृथगतिमुक्तिः वक्तव्येति स च कालो द्विरूपोऽहोरात्रादिलक्षणस्तिथ्यादिलक्षणश्च तत्राहोरात्रादिलक्षणात्तावदतिमुक्तिमाह । अहोरात्राभ्यां हि सर्वं जायते वर्धते विनश्यति च तथा यज्ञसाधनं यज्ञस्य यजमानस्य चक्षुरध्वर्युश्च ताभ्यां जायते वर्धते विनश्यति च । यजमानस्य चक्षुरध्वर्युश्चेति साधनद्वयमध्यात्माधिभूतपरिच्छेदं हित्वापरिच्छिन्नाधि[illegible] दृष्टं सन्मुक्तिः । आदित्यात्मभावमापन्नस्य हि नाहोरात्रे सम्भवतः ॥६॥ इदानीं तिथ्यादिल-

क्षणात्कालादतिमुक्तिरुच्यते । आदित्यप्राप्त्याहोरात्रात्ययवच्चन्द्रप्राप्त्या पूर्वपक्षापरपक्षात्ययः । यज्ञस्य यजमानस्य । मनोऽध्यात्मं चन्द्रमा अधिदैवतमिति प्रसिद्धम् स एव चन्द्रो ब्रह्म ऽर्त्विक् तेन यजमानस्य मनो ब्रह्मेति च साधनद्वयमपरिच्छिन्नाधिदैवतचन्द्रात्मना दृष्टं सन्मुक्तिरित्यर्थः ॥७॥ यजमानस्य कालान्मृत्योरतिमुक्तिर्व्याख्याता सोऽतिमुच्यमानः केनावष्टम्भेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोतीत्यत आह । अन्तरिक्षमाकाशोऽनारम्बणमनालम्बनमिव । येनाक्रमेणावष्टम्भेन यजमानः कर्मफलं प्रतिपद्यमानोऽतिमुच्यते किं तत् । स्वर्गं लोकं फलं प्राप्नोति अतिमुच्यतऽइत्यर्थः । उद्गातऽर्त्विगधिभूतं परिच्छिन्नं रूपमध्यात्मं च प्राणः एतद्द्वयमपरिच्छिन्नेन वायो रूपेण पश्यति तेन वायुना प्राणेनालम्बनेन कर्मफलं स्वर्गलोकं प्राप्नोति । महतां फलवतामश्वमेधादिकर्मणां कर्मवादिना सामान्येनाल्पीयस्सु कर्मसु त्रिवक्षितफलसिद्ध्यर्थं सम्पत्तिः सम्पदुच्यते यथाशक्त्यग्निहोत्रादिनिर्वर्तनेनाश्वमेधादिकर्म मया निर्वर्त्यतऽइति ध्यानं सम्पत् यद्वा फलस्यैव देवलोकादेरुऽऽज्वलत्वादिसामान्येनाज्याद्याहुतिषु सम्पादनं सम्पत् ॥८॥ करिष्यति शस्त्रं शंसिष्यति । प्राक्प्रयोगकालाद्धोत्रा प्रयुज्यमाना ऋग्जातिः पुरोऽनुवाक्येत्युच्यते यागार्थं प्रयुज्यमाना ऋग्जातिर्याज्या शस्त्रार्थं प्रयुज्यमाना ऋग्जातिः शस्या याः काश्चन ऋच स्तोत्रिया वा अन्या वा ताः सर्वा एतास्वेव तिसृषु ऋग्जातिष्वन्तर्भवन्ति । पृथिवीलोकम् लोकसम्बन्धसामान्यात् । अन्तरिक्षलोकम् मध्यमत्वसामान्यात् । द्यौर्लोकं द्युलोकम् ऊर्ध्वत्वसामान्यात् ॥९॥ एवं ऋग्जातिषु फलसम्पादने विहिते अध्वर्युकृताहुतिषु फलसम्पादनजिज्ञासया पृच्छति । या हुताः समिदाज्याहुतयः उऽऽज्वलन्ति । या हुता मांसाद्याहुतयोऽतिनेदन्ति अतीव शब्दं कुर्वन्ति । या हुताः पयःसोमाहुतयः अधिशेरते अधि भूमेरधो गत्वा शेरते । अतीवातिकुत्सितशब्द-इव मनुष्यलोकः । उपरितनसाध्यादिलोकापेक्षया पापप्रचुरत्वेन अधोगमनापेक्षया वा पितृलोकोऽध-इव वर्तते ॥१०॥ तस्मात्स उपासकस्तेन मनसि विश्वेदेवदृष्ट्याध्यासेन (? वैश्वदे° Cod.) आनन्त्यसामान्यादनन्तमेव लोकं जयति ॥११॥ स्तोत्रिया नाम गीतिविशिष्टा ऋग्जातयः । अधिदेवतमिति यज्ञाधिकारादधियज्ञमिति बोद्धव्यम् । प्राणपुरोऽनुवाक्ययोः पकारादित्वसामान्यात् (!) । अपानयाज्ययोः प्राणपुरोऽनुवाक्याभ्यामानन्तर्यसामान्यात् । अप्राणन्नपानन्नृचमभिव्याहरतीति श्रुत्यन्तरे शस्त्रप्रयोगस्य प्राणापानव्यतिरेकेण सिद्धत्वाद्व्याने शस्यादृष्टिरिति भावः ॥१२॥१॥६॥

एवं काललक्षणात्कर्मलक्षणाच्च मृत्योरतिमुक्तिर्व्याख्याता इदानीं बन्धज्ञानं विना ततो विश्लेषायोगान्मुमुक्षोः सप्रयोजकबन्धज्ञानार्थत्वेन ग्रहातिग्रहलक्षणाद्बन्धान्मृत्योरतिमुक्तिं वक्तुमाख्यायिकामनुसृत्यार्तभागब्राह्मणमारभ्यते । जरत्कारुगोत्र ऋतभागस्यापत्यम् ॥१॥ प्राणाख्यः प्राणो ग्रहवत्परवशताहेतुत्वाद्ग्रहो ऽपानेनेति गन्धेनातिग्रहेण गृहीतः । अपश्वासोऽत्रापानशब्दार्थः अपानसचिवत्वादपानो गन्ध उच्यते । अपानेन अन्तर्मुखश्वासेन । अपानोपकृतं गन्धं प्राणेन सर्वो लोको जिघ्रति ॥२॥ मृत्योरन्नं मृत्युना ग्रहातिग्रहलक्षणेन ग्रस्तम् । ब्रह्मात्मसाक्षात्कारेण सर्वमृत्युना ग्रहातिग्रहलक्षणे मृत्यौ भक्षिते सति विद्वान्पुनर्मृत्युं पुनर्मरणमपजयति निराकरोति पुनर्मरणाय न जायते ॥१०॥ एवं परमात्मदर्शनेन मुक्तस्य किं प्राणा एव समवनीयन्ते आहोस्वित्तत्प्रयोजकमपि सर्वम् अथ प्राणा एव न तत्प्रयोजकं सर्वम् तर्हि प्रयोजके विद्यमाने पुनः प्राणानां प्रसङ्गोऽथ सर्वमिव कामकर्मादिकं ततो मोक्ष

उपपद्यतऽइत्येवमर्थ उत्तरप्रश्नोऽयम्। सर्वं समवनीयते नाममात्रं तु न लीयते। अनन्तं आकृतिसम्बन्धात् नित्यं वै प्रसिद्धं नाम शुको मुक्त इतिवद्व्यवहारपारम्पर्यात्। ब्रह्मविद्यां स्तोतुमाह अनन्ता वै प्रसिद्धा विश्वे देवा अतस्तान्नामानन्त्याधिकृतान्विश्वान्देवान्ब्रह्मास्मीति दर्शनेनात्मत्वेनोपगम्य स विद्वान् तेन दर्शनेनानन्तमेव लोकं जयति ॥११॥ साक्षात्कारज्ञाने जाते विद्वान्न म्रियते न च तस्य प्राणा अत्यन्तं समवनीयन्ते किंतु जीवन्मुक्तत्वेन सर्वदा तिष्ठसीति (!) तन्निराकर्तुमाह। परमात्मसाक्षात्काररूपेण सर्वमृत्युना सविलासाज्ञानमृत्यौ नाशिते सति तद्विद्वान्यस्मिन्काले म्रियते। तदास्मात् प्राणा प्राणादयो ग्रहा गन्धादयश्चातिग्रहा वासनारूपा अन्त(:)स्थाः सप्रयोजका ऊर्ध्वं गच्छन्ति आहोस्विन्नेति प्रुतिर्विचारणार्था। अत्रैव परब्रह्मण्येकतां गतेऽस्मिन्विदुष्येव समवनीयन्ते एकीभावेन समवसृज्यन्ते प्रविलीयन्ते ऊर्मय-इव समुद्रे। तर्हि मृतप्रसिद्धिः कथमित्यपेक्षायां तस्या देहविषयत्वादित्याह स मुक्तदेह उच्छूनतां प्रतिपद्यते। देहस्यैव मरणधर्मताबन्धनाशे मुक्तस्य न क्वाचिद्गमनमिति वाक्यार्थः ॥१२॥ अथ केन प्रयुक्तं ग्रहातिग्रहलक्षणं बन्धनमित्येतन्निर्दिधारयिषया पृच्छति। आकाशमात्मेत्यत्रात्मशब्देनात्माधिष्ठानं हृदयाकाशमुच्यते। क्व कस्मिन्नाश्रये भवति किमाश्रितः कार्यकरणसंघातमुपादत्तऽइति पृष्ट उत्तरं वक्तुमुपोद्घातमाह आहरेति देहि ॥१३॥ आवमित्यावामेवैकान्ते गवितस्य त्वत्पृष्टस्य वेदितव्यं यत्तत्वं तद्वेदिष्याव निरूपयिष्याव। तौ आवयोरेतद्वस्तु सजने जनसमुदाये निर्णेतुं न शक्यतेऽत्रानेकवादिविप्रतिपत्तेः। तौ ह विचार्य सर्वानेव पूर्वपक्षान्स्वभाववादादीनपोह्य यदुक्तवन्तौ तच्छृणु कर्म हैवाश्रयं पुनःपुनःकार्यकरणोपादानहेतुं उक्तवन्तौ पुण्येन शास्त्रविहितेन कर्मणा देवादिषु जायमानः पुण्यः पुण्यात्मा भवति पापेन शास्त्रनिषिद्धेन कर्मणा स्थावरादिषु जायमानः पापः पापात्मा भवति ॥१४॥२॥६॥

पुण्यमेव कर्म सर्वपुरुषार्थसाधनमित्युक्तम् तत्र मोक्षस्यापि पुरुषार्थत्वादुत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्कानिरासार्थं विद्यासंयुक्तस्यापि कर्मणो मोक्षारम्भकत्वासम्भवान्न मोक्षार्थानि कर्माणीत्यतः कर्मफलानां संसारत्वप्रदर्शनायैव भुज्युब्राह्मणमारभ्यते। लह्यस्यापत्यं लाह्यस्तदपत्यं लाह्यायनिः। अध्ययनार्थं व्रतचरणाच्चरका विद्यार्थिनोऽध्वर्यवो वा। काप्यस्य कपिगोत्रस्य। गन्धर्वेणामानुषेण केनचित्सत्वेन गृहीताविष्टा। अन्तानवसानानि। परितो दुरितं क्षीयते येन स परिक्षिदश्वमेधस्तद्याजिनः पारिक्षिताः। प्रथमा तावत्क्व पारिक्षिता अभवन्नित्युक्तिर्गन्धर्वप्रश्नार्था द्वितीयातु यो हि क्व पारिक्षिता अभवन्निति प्रश्नो गन्धव प्रति कृतस्तस्य प्रत्युक्तिः सर्वं सोऽस्मभ्यमब्रवीदिति विवक्षया तदनुरूपप्रतिवचनार्था तृतीया तु मुनिं प्रति प्रश्नार्थेति विभागो बोद्धव्यः ॥१॥ ते इदानींतनाः पारिक्षितास्तत्रागच्छन्यत्र यस्मिन्पूर्वतना अश्वमेधयाजिनो गच्छन्ति। तेषा गतिविवक्षया तावद्भुवनकोशपरिमाणमाह देव आदित्यस्तस्य रथो देवरथः तस्य गत्या एकेनाह्ना यावद्देशपरिमाणं परिच्छिद्यते तदेकं देवरथाह्न्यम् तद्द्वात्रिंशद्गुणितम् तावत्परिमाणोऽयं लोकः लोकालोकगिरिणा परिक्षिप्तः संसारः (? सप्तागारः Cod. pr. m. ससारः sec. m.) सर्वेषां प्राणिनां कर्मफलोपभोगहेतुभूतः। लोक्यते सूर्यादिभिः प्रकाश्यते इति स (ष Cod.) एष एतावाल्लोकोऽतः परमलोकः तं च लोकं समन्तं (संन Cod. pr. m. समं sec. m.) समन्ततः पृथिवी द्विस्तावदिति लोकपरिमाणाद्द्विगुणपरिमाणा पर्येति रविचन्द्रमसोर्यावन्मयूखैरवभास्यन्ते ससमुद्रसरिच्छैला तावती पृथि-

वी स्मृतेति स्मृतेः । तां पृथिवीं पृथिवीपरिमाणाद्द्विस्तावदिति द्विगुणपरिमाणः समुद्रः समन्तं पर्येति यं घनोदमाचक्षते (लवणोदं Cod. sec. m.) पौराणिकाः उक्तं हि अण्डस्यास्य समन्तात् संनिविष्टोऽमृतोदधिः समन्ताद्घनतोयेन धार्यमाणः स तिष्ठतीति । एवं लोकादिपरिमाणे स्थिते सदृष्टान्तमण्डकपालयोर्विवरपरिमाणमाह यावत्परिमाणा क्षुरस्य धाराग्रम् वाथवा यावत्सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं पक्षः तावत्परिमाणः कपालयोरन्तरेण मध्ये आकाशोऽवकाशः यद्विवक्षयेदं सर्वमुक्तम् तेनाकाशद्वारेण तान्पारिक्षितानश्वमेधयाजिनः प्राप्तानिन्द्रः परमेश्वरः योऽश्वमेधे सुपर्णाकारेण चितोऽग्निः स सुपर्णः पक्षपुच्छाद्यात्मकः पक्षी भूत्वा वायवे प्रदत्तवान् स्वस्य स्थूलत्वेनोक्तच्छिद्रद्वाराण्डाद्बहिर्गमनासम्भवाद्युक्तं वायवे प्रदानम् । वायुः पुनस्तान्पारिक्षितानात्मनि स्वस्मिन्धित्वा स्थापयित्वा स्वात्मभूतान्कृत्वा तत्र तस्मिन्नामितवान्यत्र पूर्वेऽतिक्रान्तकालिकाः पारिक्षिता अश्वमेधयाजिनोऽभवन् । एवमिव वै स गन्धर्वो वायुमेव क्रियाशक्तिप्रधानं सूत्रमेव पारिक्षितानां गतिं तुष्टाव । वायुः स्थावरजङ्गमानां भूतानामन्तरात्मा बहिश्च । व्यष्टिरध्यात्माधिभूताधिदैवभावेन व्यावृत्तिरूपा विविधाष्टिर्व्याप्तिः । समष्टिः समानुगतरूपा केवलेन सूत्रात्मनाष्टिर्व्याप्तिः ॥ २ ॥ ३ ॥ ६ ॥

एवं पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्गृहीतः पुनः पुनर्ग्रहातिग्रहांस्त्यजन्नुपाददच्च (दश्चा Cod.) ब्रह्मस्थावरपुण्योत्कर्षादप्यविमुच्यमानः (?प्यपिमु Cod. prima manu) संसरत्येवेति ब्राह्मणत्रयेणोक्तम् इदानीं तस्य बन्धमोक्षसाधनं ससंन्यासमात्मज्ञानं वक्तव्यमिति कहोडब्राह्मणमारभ्यते । साक्षादव्यवहितम् अपरोऽक्षादिति विभक्तिव्यत्ययेनापरोऽक्षमगौणम् । य आत्मा प्रत्यगात्मा सर्वस्याभ्यन्तरः । तत्र पिण्ड एकस्तस्याभ्यन्तरे लिङ्गात्मा कारणसंघातो द्वितीयो यश्च परमात्म[illegible] मध्ये कतमः । एवमुक्तज्ञानाङ्गं पारिव्राज्यं वक्तुमाह एतं वै तमिति । पुत्रैषणा पुत्रोत्पत्तिमुद्दिश्य दारसंग्रहेच्छालक्षणा वित्तं द्विविधं मानुषं गवादि दैवं विद्या तस्य कर्मसाधनस्य गवादेरुपादानरूपा इच्छा वित्तैषणानेन कर्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोककेवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं जेष्यामीतीच्छा लोकैषणा । एवमेकत्वेऽपि लोकैषणायाः साधनमन्तरेणासिद्धेः साध्यसाधनभेदेन द्वैविध्यमाह उभे हीति । यस्मात्पूर्वे ब्राह्मणास्तमेतमात्मानं विदित्वा सर्वस्मात्साधनफलस्वरूपादे[illegible] व्युत्थाय दृष्टादृष्टार्थं कर्म तत्साधनं च हित्वा भिक्षाचर्यं चरन्ति स्म तस्मादद्यतनोऽपि ब्रह्मविद्ब्राह्मण एषणाभ्यो व्युत्थाय पाण्डित्यं शास्त्रोत्था बुद्धिः पण्डा तद्वा[illegible]स्य कर्म पाण्डित्यं वेदान्तवाक्यविचारलक्षणं श्रवणापरपर्यायं निर्विद्य निःशेषं विदित्वा आत्मविज्ञानं निरवशेषं कृत्वा अनन्तरं बाल्येन तिष्ठासेत् श्रवणज्ञानोत्पन्नाशेषानात्मदृष्टितिरस्कारसामर्थ्यं बलं तस्य भावो बाल्यं तेन बाल्येन बलभावेन (बाल° Cod. !) विषयैरनाकृष्टः सन् तिष्ठासेत् स्थातुमिच्छेत् बाल्यशब्दाभिधेयं मननं कुर्यात् । बाल्यं च पाण्डित्यं च निर्विद्य निःशेषं कृत्वाथानन्तरं मुनिर्मौनवान् धारावाहिकात्मप्रत्ययप्रवाहवान् तिष्ठ[illegible]ष्यते निदिध्यासनं कुर्यादित्यर्थः । एवममौनं चोक्तार्थपाण्डित्यबाल्यशब्दाभिधेयं श्रवणमननाख्यं निर्विद्य मौनं चोक्तार्थमुनिशब्दवाच्यं निदिध्यासनाख्यं च निर्विद्याथानन्तरं ब्राह्मणो निरुपचरितब्राह्मण्यवान् साक्षात्कृतब्रह्मैव स्यात् कृतकृत्यो भवेत् । उक्तं ब्राह्मण्यं प्राप्तवतो ब्रह्मविदः समाचारं पृच्छति स इति अनियतं तस्य चरणमित्युक्त-

रमाह येनेति विहितमाचरतो निषिद्धं च त्यजतः शुद्धबुद्धेः श्रुताद्वाक्यात्सम्यक् धीरुत्पद्यते तस्य च वासनावशाद्व्यवस्थितैव चेष्टा नाव्यवस्थितेति न यथेष्टाचरणप्रयुक्तो दोष इति स्तुत्यर्थं येन केनचिच्चरणेनेति बोध्यम् ॥ १ ॥ ४ ॥ ६ ॥

एवं ब्राह्मणत्रयेण सप्रयोजकं बन्धनमुक्तम् चतुर्थे च कहोडब्राह्मणे बन्धध्वंसि ससंन्यासमात्मज्ञानमभिहितम् साम्प्रतं यो बद्धः संसरति सोऽस्ति नास्ति वेत्यस्तित्वे च किंलक्षणो देहादीनामन्यतमस्तेभ्यो विलक्षणो वेति विमर्शे आत्मनो देहादिभ्यो विवेकेनाधिगमायोषस्तब्राह्मणमारभ्यते । चक्रस्यापत्यं चाक्रायणः । सर्वाः कार्यकरणसंघातगताः प्राणनादिचेष्टा दारुयन्त्रस्येव येन क्रियन्ते स कार्यकरणसंघातविलक्षणो विज्ञानमयश्चेष्टयितास्ति यतो या खल्वचेतनप्रवृत्तिः सा चेतनाधिष्ठानपूर्विका यथा रथादिप्रवृत्तिरिति बोध्यम् । यथा कश्चिद्गामश्वं वा प्रत्यक्षं दर्शयामीति पूर्वं प्रतिज्ञाय पश्चाच्चलत्यसौ गौर्यो वा धावत्यसावश्व इति चलनादिलिङ्गैर्यथा वै निश्चितं ब्रूयाद्व्यपदिशेत् एवमेव ब्रह्म प्रत्यक्षं दर्शयामीति मत्प्रश्नानुसारेण प्रतिज्ञाय प्राणनादिलिङ्गैरेतद्ब्रह्म व्यपदिष्टं भवति त्वया तथा च तद्व्यपदिशतस्ते प्रतिज्ञाहानिरनवधेयवचनता च स्यादिति भावः । दृष्ट्यादिसाक्षिणोऽन्यत्किंचिद्वास्तवं नास्ति अत एतस्मादुक्तरूपादात्मनोऽन्यदार्तं विनाशि रज्जुसर्पादिवन्मिथ्याभूतम् ॥ १ ॥ ५ ॥ ६ ॥

पूर्वब्राह्मणयोर्यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर इत्यत्र यः सर्वान्तर आत्मोक्तस्तस्य स्वरूपाधिगमाय शाकल्यब्राह्मणात्प्राक्तनं ब्राह्मणत्रयमारभ्यते तत्रानात्मभूतान्सर्वान्पदार्थांस्तावद्गार्गीब्राह्मणे आह । वचक्नोर्दुहिता वाचक्नवी । यदिदं सर्वं भूधरादिकं पार्थिवं धातुजातमप्सूदके स्वकारणे ओतं च दीर्घपटतन्तुवत् प्रोतं च तिर्यक्तन्तुवत्सर्वतोऽन्तर्बहिर्भूताभिरद्भिर्व्याप्तम् अन्यथा सक्तुमुष्टिवद्विशीर्येत । अन्तरिक्षलोकेषु पक्ष्यादिगतिहेतुभूतेषु प्रजापतिलोकाः विराट्शरीरारम्भकपञ्चीकृतपञ्चमहाभूतात्मकाः ब्रह्मलोकेषु हिरण्यगर्भलोकेष्वपञ्चीकृतपञ्चभूतात्मकेषु ओतप्रोतभावेन वर्तन्ते शेषं सुबोधम् । एवं पूर्ववदनुमानेन सूत्रमपि ब्रह्मलोकाश्रयं पृच्छन्तीं गार्गीं प्रतिषेधति । देवतानां स्वः प्रश्न आगमविषयः तं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्न आनुमानिकत्वात् स प्रश्नो यासामिन्द्रादिदेवतानां विद्यते ता अतिप्रश्न्याः एतास्तु न अतिप्रश्न्याः अनतिप्रश्न्या स्वप्रश्नविषया एव केवलागमगम्याः ॥ १ ॥ ६ ॥ ६ ॥

एवं गार्गीब्राह्मणे सूत्रादर्वाक्तनं व्यापकमुक्तमिदानीमागमैकगम्यं सूत्रं तदन्तर्गतमन्तर्यामिणं च निर्वक्तुमन्तर्यामिब्राह्मणमारभ्यते । यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाः शिष्याः सन्तः ॥ १ ॥ याज्ञिकांश्च तच्छिष्यानस्मान् । संदृब्धानि संग्रथितानि स्रगिव सूत्रे विष्टब्धानि ॥ २ ॥ तं सूत्रान्तर्गतमन्तर्यामिणम् । यमयति नियम[य]ति दारुयन्त्रमिव भ्रमयति स्वं-स्वमुचितं व्यापारं कारयति ॥ ३ ॥ व्यस्रंसिषत विस्रस्तान्यभवन् सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टमेवं वायुः सूत्रम् ॥ ६ ॥ एष (!) ते तव कार्यकरणसंघातस्य सर्वभूतानां चेत्युपलक्षणार्थमेतत् सर्वेषामात्मा यस्त्वयान्तर्यामी पृष्टः एषोऽमृतः सर्वसंसारधर्मवर्जितः ॥ ७ ॥ चन्द्रश्च तारकाश्च चन्द्रतारकम् ॥ १३ ॥ लोका भोगस्थानानि ॥ १७ ॥ प्राणे घ्राणाख्ये वायुसहिते ॥ २१ ॥ तेजः प्रकाशः शास्त्रीयं ज्ञानम् ॥ २७ ॥ तमसि बाह्ये आवरणात्मके ॥ २८ ॥ आत्मनि जीवात्मनि ॥ ३० ॥ कस्मात्पुनः कारणान्महाभागाः पृथिव्यादिदेवता मनुष्यादिवदात्मनि तिष्ठन्तमात्मनो नियन्तारमन्तर्यामिणं न विदुरित्यत आह अदृष्ट इति ॥ ३१ ॥ ७ ॥ ६ ॥

पूर्वस्मिन्ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्यां निर्धारितौ सम्प्रति अशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादपरोऽक्षात्सर्वान्तरं ब्रह्म वक्तुमक्षरब्राह्मणं प्रवर्तते । विवक्ष्यति विस्पष्टं कथयिष्यति । जातु कदाचित् । ब्रह्मोद्यं ब्रह्मवदनं प्रति ॥१॥ उग्रपुत्रः शूरान्वयः । उद्यमिति उत् ऊर्ध्वं याति गच्छति विस्तृतं भवतीत्युद्यमवतारितज्याकं धनुश्चापं पुनरधिज्यं कृत्वा आरोपितज्याकं विधाय । बाणशब्देन शराग्रे यो वंशखण्डः संधीयते स उच्यते तेन विनापि शरो भवत्यतो बाणवन्ताविति. विशिनष्टि सपत्नातिव्याधिनाविति शत्रोरतिशयेन पीडाकरौ ईदृशौ द्वौ शरौ । उपोत्तिष्ठेक्त्रोः समीपत आत्मानं दर्शयेत् ॥२॥ यत्त्वयोक्तमूर्ध्वं दिव इत्यादि तत्सर्वं यत्सूत्रमाचक्षते तद्व्याकृतजगदात्मकं सूत्रमाकाशेऽव्याकृतशब्दवाच्ये नारायणाख्येऽन्तर्यामिणि ओतं च प्रोतं च उत्पत्तौ स्थितौ लये चेत्येवं त्रिष्वपि कालेषु पृथिवीधातुरप्स्विव वर्ततऽइत्यर्थः ॥४॥ प्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते न किंचिदपूर्वमर्थान्तरमुच्यते ॥५॥ द्वितीयं प्रश्नमाह कस्मिन्वाकाश इति ॥६॥ न क्षरति न क्षीयते वाक्षरं शुद्धं ब्रह्म । अविद्यमानमन्तरं छिद्रं यस्य अनन्तरम् अबाह्यमपरिच्छिन्नम् । अनात्मव्यक्तीनामानन्त्येन प्रत्येकं निषेधाशक्तेर्भोक्तृभोग्यात्मनैकीकृत्य प्रतिषेधति तदक्षरं कं चन कंचिदपि विषयं नाश्नोति नाश्नाति न भुङ्क्ते ॥८॥ प्रशासने आज्ञायाम् । विधृते हस्तन्यस्तपाषाणादिवत्तिष्ठतो वर्तेते । ददतं दुःखार्जितानोहिरण्यादीन्प्रयच्छन्तं पुरुषं मनुष्याः प्रशंसन्ति । पितरोऽर्यमादयो दर्व्यं दर्वीहोममन्वायत्ताः अनुगताः यो न कस्यचित्प्रकृतित्वेन विकृतित्वेन वा वर्तते स दर्विहोमः दर्वीसाध्यो होमो दर्व्यः ॥९॥ यस्याज्ञानेन नियता संसारोपपत्तिर्यद्विज्ञानेन च संसारविच्छेदस्तदस्त्यक्षरमिति साधयितुं कर्मणामेव मोक्षहेतुत्वमिति पक्षं निराकरोति यो वाऽइति । कृपणः पणक्रीतो दासादिरिव दीनः कर्मफलस्यैव भोक्ता न तु मोक्षस्येत्यर्थः । स ब्राह्मणो ब्रह्मविन्मुक्तः ॥१०॥ अग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमस्याक्षरस्य प्रशास्तृत्वमित्याह तद्वाऽइति ॥११॥ तदेव बहुमन्यध्वं बहुमानविषयं कुरुध्वं प्रमाणीकुरुध्वम् । मुच्याध्वै मुच्यध्वम् । जातु कदाचिदपि ॥१२॥८॥६॥

एवं यत्साक्षादित्यादि प्रस्तुत्य सर्वान्तरत्वनिरूपणद्वारा साक्षात्त्वादिकमार्थिकं कहोडादिब्राह्मणत्रयेण निर्धारितम् ततोऽन्तर्यामिब्राह्मणे यः पृथिव्यां तिष्ठन्नित्यादिश्रुत्या व्याकृतविषये सूत्रभेदेषु पृथिव्यादिषु नियम्येषु तस्य नियन्तृत्वमुक्तम् इदानीं नियन्तव्यानां देवताभेदानां प्राणान्तसंकोचानन्त्यपर्यन्तविकाशद्वारा प्रकृतस्यैव ब्रह्मणः साक्षात्त्वापरोऽक्षत्वेऽअधिगन्तव्येऽइति कृत्वा प्रथमं देवतासंकोचविकाशोक्तिरनन्तरं वस्तुनिर्देश इत्येतदर्थं शाकल्यब्राह्मणमारभ्यते । शकलस्यापत्यं शाकल्यः । यावत्संख्याका देवा वैश्वदेवस्य शस्त्रस्य निविदि उच्यन्ते श्रूयन्ते तावतो देवान्ह किल एतया वक्ष्यमाणया निविदा प्रतिपेदे । निविन्नाम देवतासंख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते । तान्येव निवित्संज्ञकानि मन्त्रपदानि दर्शयति त्रयश्च देवा देवानां त्रीणि च शतानि । इयं तेषां मध्यमा संख्या बहुवचनादुत्तमानन्तसंख्याप्युक्तैव वेदितव्या अनन्ता वै विश्वे देवा इति पूर्वमुक्तत्वात् । ओमित्यङ्गीकारे एवमेषां षडधिकत्रिशताधिकत्रिसहस्रलक्षणा मध्यमा संख्या सम्यक्तया ज्ञातेत्यर्थः ॥१॥ त्रयस्त्रिंशत् षट् त्रयो द्वावध्यर्ध एक इति देवतासंकोचविकाशविषयां संख्यां पृष्ट्वा पुनः संख्येयस्वरूपं पृच्छति कतमे त इति ॥२॥ त्रयस्त्रिंशो त्रयस्त्रिंशतः पूरणो ॥३॥ दश प्राणाः ज्ञाने-

न्द्रियकर्मेन्द्रियरूपाः आत्मा मनः ॥५॥ यस्मादेते मासाभिमानिनो देवाः पुनः-पुनः परिवर्तमानाः प्राणिनामायूंषि कर्मफलं चेतीदं सर्वमाददाना गृह्णन्त उपाददत एव यन्ति ॥६॥ स्तनयित्नुर्मेघनादाभिमानिनी देवतैवेन्द्रः । पशूनां यज्ञसाधनाश्रयत्वात् यज्ञस्यारूपत्वाच्च पशवो यज्ञ इत्युच्यते ॥७॥ यस्मादेषु त्रिषु लोकेषु अग्न्याद्याः सर्वे देवा अन्तर्भवन्ति तेन एत ऽएव त्रयो देवा इत्युक्तम् । योऽयं बाह्यो वायुः पवते वाति ॥९॥ यस्मादस्मिन्वायौ सति इदं सर्वं चराचरमधि आर्ध्नोत् अधिकामृद्धिं प्रापत् । कतम एको देव इति स ब्रह्मेति स इति प्राणः परामृश्यते अष्टाध्याय्यां (११. ६. ३. १०.) तथा दर्शनात् स प्राणो ब्रह्म सर्वदेवात्मकत्वात्सूत्रात्मरूपेण सर्वकार्याणां भरणाच्च कारणभूतो महद्ब्रह्मेत्युच्यते तस्मात्तं प्राणं त्यदिति परोऽक्षाभिधायकेन शब्देनाचक्षते तद्ब्रह्म कथयन्ति प्राणविद इति शेषः साक्षान्निर्देष्टुमशक्यत्वादिति भावः ॥१०॥ तदेवं संकोचविस्तराभ्यां प्राणस्वरूपमुक्तम् इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेदो ध्यानार्थमुपदिश्यते । आयतनमाश्रयः शरीरम् । लोकयति अनेनेति लोकः आलोकनसाधनम् चक्षुषा लोकयति पश्यतीति सोऽयं चक्षुर्लोकः । मनसा ज्योतिषा संकल्पविकल्पादि कार्यं करोति यः सोऽयं मनोज्योतिः । पृथिवीशरीरश्चक्षुर्दर्शनो मनसा संकल्पयिता पृथिव्यभिमानी कार्यकरणसंघातवान्देव इत्यर्थः । सर्वस्यात्मनः आध्यात्मिकस्य कार्यकरणसंघातस्यात्मनः परमयनं पर आश्रयस्तं परायणं मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्यास्थिमज्जशुक्ररूपस्य करणात्मनश्च परमयनं विद्यात् । पार्थिवेंऽशे शरीरे भवः शारीरो मातृजकोशत्रयरूप इत्यर्थः स एष देवो यस्त्वया पृष्टः । तस्य शारीरस्य देवस्य का देवता किमुत्पत्तिकारणम् अस्मिन्प्रकरणे यो यस्मान्निष्पद्यते स तस्य देवतेति देवताशब्देन सर्वत्रोत्पत्तिकारणमेव विवक्षितम् । स्त्रीभिर्भुक्तस्यान्नस्य रसो हि मातृजस्य लोहितस्य निष्पत्तिहेतुस्तस्माज्जान्नरसाल्लोहितं निष्पद्यते स्त्रीणां लोहिताच्च त्वङ्मांसरुधिररूपं बीजस्यास्थिमज्जशुक्रात्मकस्याश्रयभूतं शरीरं भवतीति स्त्रीभ्यो निष्पत्तिरिति भावः ॥११॥ रूपाणि शुक्लकृष्णादीनि । सर्वेषां हि रूपाणां विशिष्टं कार्यमादित्ये पुरुषः । तस्य का देवतेति चक्षुरिति होवाचेति चक्षुषो ह्यध्यात्मन आदि[त्यस्याधि]दैवतस्य निष्पत्तिः ॥१२॥ आकाशायतनस्य हि पुरुषस्य विशिष्टमायतनं बाह्यो वायुः । प्राणाद्ध्यात्मनो वायोरधिदैवतस्य निष्पत्तिः ॥१३॥ स्त्रीव्यतिकराभिलाषः कामः । कामशरीरः पुरुष इत्यर्थः । कामायतनस्य हि देवस्य चन्द्रो विशिष्टं कार्यम् कामिनां हि चन्द्रे प्रीतिविशेषो जायते । मनसो ह्यध्यात्मनश्चन्द्रस्याधिदैवतस्य निष्पत्तिः ॥१४॥ तेजआयतनस्य हि देवस्य अग्नौ विशेषावस्थानम् । वाचो ह्याध्यात्मिक्या अग्नेरधिदैवतस्य निष्पत्तिः ॥१५॥ तम इति शार्वराद्यन्धकारः । अध्यात्मं छायामयोऽज्ञानमयः पुरुषः मृत्युरधिदैवतं तस्य निष्पत्तिकारणम् मृत्युनैवेदमावृतमासीदिति श्रुतेः ॥१६॥ वरुणाद्धि वाप्याद्यपां निष्पत्तिः ॥१७॥ रेतआयतनस्य हि विशेषायतनं पुत्रः । पुत्रमय इति चास्थिमज्जशुक्राणि पितुर्जातानि प्रगृह्यन्ते । प्रजापतिः पितोच्यते पितृतो हि पुत्रस्योत्पत्तिः ॥१८॥ एवमष्टधा देवलोकपुरुषभेदेन त्रिधा-त्रिधात्मानं विभज्यावस्थित एकैको देवः प्राणभेद एवोपासनार्थं व्यपदिष्टः अधुना दिग्विभागेन पञ्चधा विभक्तस्य सर्वस्य जगतो हृदयात्मनि उपसंहारार्थं श्रुतिः प्रवर्तते । अङ्गारावक्षयणम् अङ्गारा अवक्षीयन्ते निरुध्यन्ते यस्मिन्संदंशादौ तत् । त्वमङ्गारस्थानीयेन मया दह्य-

मानमात्मानं न बुध्यसऽइत्यभिप्रायः ॥१९॥ अत्यवादीरित्युक्तवानसि स्वयं भीतान्त्वामङ्गारावक्षयणं कृतवन्त इति । किं त्वम् विद्वान्जानन्सन् एवं ब्राह्मणानाधिक्षिपसि । मम दिग्विषयं ब्रह्मविज्ञानं तावदस्तीत्याह दिश इति ॥२०॥ स हि याज्ञवल्क्यो दिक्षु पञ्चधा विभक्तं दिगात्मभूतं हृदयात्मानं तद्द्वारेण सर्वजगदात्मत्वेनोपगम्याहमस्मि दिगात्मेति पूर्वाभिमुखो व्यवस्थित आह आदित्यदेवत इति । हृदयमिति बुद्धिमनसोऽएकीकृत्य निर्देशो न तु मांसखण्डविषयः ॥२१॥ श्रद्धा नाम भक्तिसहितास्तिक्यबुद्धिर्दित्सुत्वलक्षणा ॥२२॥ अपां हि वरुणः कार्यम् श्रद्धा वाऽआपः श्रद्धातो वरुणमसृजतेति श्रुत्यन्तरात् । आपश्च रेतसि प्रतिष्ठिताः रेतसो ह्यापः सृष्टा इति श्रुत्यन्तरात् । हृदयस्य कार्यं रेतः कामो हृदयस्य वृत्तिः कामिनो हि हृदयाद्रेतोऽधिस्कन्दति । प्रतिरूपमनुरूपं पुत्रं जातम् सृष्टो विनिःसृतः ॥२३॥ सोमदेवत इत्यत्र सोमलतां सोमदेवतां चैकीकृत्य निर्देशः । दीक्षितो हि यजमानः सोमं क्रीणाति क्रीतेन सोमेनेष्ट्वा ज्ञानवान्सोमदेवताधिष्ठितां सौम्यामुत्तरां दिशं प्रतिपद्यते ॥२४॥ मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिग्ध्रुवेत्युच्यते ॥२५॥ अहल्लिकेति अहनि लीयतऽइति व्युत्पत्तेः नूनं त्वं प्रेतोभूतोऽसीति लक्ष्यते यतो यत्किंचित्प्रेतवद्भाषसऽइति प्रेतनाम्ना शाकल्यं सम्बोधयन्नाह यत्र यस्मिन्काले एतद्धृदयमयस्य शरीरस्यात्मभूतमस्मदस्मत्त एतस्माच्छरीरादन्यत्र क्वचिद्देशान्तरे वर्ततऽइति यदि मन्यासै मन्यसे यत्र यदा एतद्धृदयमस्मदस्मत्तोऽस्माच्छरीरादन्यत्र देशान्तरे स्याद्भवेत्तदा श्वानो वा एनच्छरीरमद्युर्भक्षयेयुः वयांसि वा पक्षिणो गृध्रादय एनच्छरीरं विमथ्नीरन्विलोडयेयुर्विकर्षेरन्निति तस्मान्मयि शरीरऽएव हृदयं प्रतिष्ठितं तच्छरीरमपि नामकर्मरूपात्मकत्वाद्धृदये प्रतिष्ठितमित्यर्थादुक्तमित्यर्थः ॥२६॥ एवं कार्यकारणयोर्हृदयशरीरयोरन्योऽन्यप्रतिष्ठोक्तातस्तेऽअपि क्व प्रतिष्ठितेऽइति पृच्छति कस्मिन्नु त्वं च शरीरमात्मा च हृदयं चेत्येतौ युवां प्रतिष्ठितौ स्थः । देहात्मानौ ऊर्ध्ववृत्त्यात्मके प्राणे प्रतिष्ठितौ सापि प्राणवृत्तिरपानवृत्त्या चेन्न निगृह्यते तर्हि प्रागेव गच्छेत् स चापानो व्याने मध्यस्थवृत्तिरूपे अन्यथोभयोरूर्ध्वाधोगमनमेव भवेत् स च व्यान उदाने नाभिस्थवृत्तिरूपे कीलकस्थानीये तिस्रोऽपि वृत्तयस्तत्र चेन्न निबद्धाः तर्हि नानागतयो भवेयुः स चोदानः समाने सूत्रात्मशब्दवाच्ये समानप्रतिष्ठा ह्येताः सर्वा वृत्तयः ॥२७॥ सोऽपि समानोऽन्तर्यामिणि सोऽप्यक्षरे कूटस्थे ब्रह्मणीत्यर्थाद्दर्शितमेवेति मत्वा श्रुतिः स्वयमेव ब्रह्मणः स्वरूपमाह स एष इति यः सूत्राश्रयान्तर्यामित्वकल्पनाधिष्ठानभूतः स परमात्मा एष प्रत्यगात्मैव मूर्तामूर्तब्राह्मणे (५. ३. ११.) नेति नेतीत्येव संकल्पोपाधिनिषेधेन निर्दिष्ट आत्मा । निषेधद्वारा निर्दिष्टमेव स्पष्टयति अगृह्य इत्यादिना । असङ्गोऽमूर्तः तथासितोऽबद्धः मूर्तान्तरेण सम्बध्यमानः सज्यते (!) अयं च तद्विपरीतो न सज्यते (!) तथाबद्धत्वान्न व्यथते । अथ पुनः पूर्वामेवाख्यायिकामनुसृत्यायं प्रेतीभूतोऽब्रह्मवित्सन्नेव मां ब्रह्म पृच्छतीति सापराधत्वं सम्पादयितुं याज्ञवल्क्यः पृच्छति एतानीति तान् शारीरप्रभृतीनष्टौ पुरुषान् स यः कश्चिद्ब्रह्मज्ञः आयतनलोकपुरुषेत्येतत्त्रिकभेदेन व्युदुह्य विक्षिप्य लोकस्थितिमुपपाद्य पुनः प्राचीदिगादिद्वारेण हृदयात्मनि प्रत्युह्योपसंहृत्य पश्चाद्धृदयाद्यात्मकलक्षणमपि समानान्तमुपाधिधर्ममत्यक्रामीदतिक्रान्तवान् स्वेनैवात्मना व्यवस्थितः तं ब्रह्मज्ञलक्षणमौपनिषदमुपनिषत्स्वेव विज्ञेयं नान्यप्रमाणगम्यं पुरुषमशनायादिधर्मवर्जितं हे शाकल्य त्वा त्वां ब्रह्मविद्याभिमानिनं

पृच्छामि । ब्रह्मविद्विरोधे (? द्विषेद्वै Cod.) परलोकविरोधोऽपि स्यादिति दर्शयितुमष्टाध्याय्यां (११. ६. ३. ११.) निर्वृत्ताख्यायिकार्थमिह सूचयति तस्य हेति न केवलमसौ मृत एव किं च तस्य शाकल्यस्य अग्निहोत्रेण संस्कारार्थं शिष्यैर्वस्त्रखण्डेन बद्धा गृहान्प्रति नीयमानान्यस्थीन्यपि परिमोषिणस्तस्करा अन्यद्धनमेतैर्नीयतऽइति मन्यमानाः सन्तोऽपहृतवन्तः ॥२८॥ यस्य ब्रह्मणो नेति नेत्यन्यप्रतिषेधद्वारेण निर्देशः कृतस्तस्यैवेदानीं विधिमुखेन निर्देशः कर्तव्यो जगतो मूलं च वक्तव्यम् ॥२९॥ जगत्कारणं प्रष्टुं तावत्पुरुषवृक्षयोः साधर्म्यं श्लोकत्रयेणाह । यथा लोके वृक्षस्तस्य विशेषणं वनस्पतिरिति तच्च वृक्षस्य महत्त्वमाहेत्यपुनरुक्तिता । अमृषा न मिथ्या सत्यमेवैतत् । उत्पाटिका सर्वापेक्षया बहिर्भूता नीरसा वक् ॥३०॥ उत्पटो वृक्षनिर्यासः । आतृन्नाद्धिंसितात् ॥३१॥ शकराणि शकलानि । किनाटं नाम वृक्षस्य शकलेभ्योऽभ्यन्तरं [illegible] वल्कलरूपमुच्यते । स्नाव अस्थिसंलग्नो धातुविशेषः । तदुभयं किनाटं स्नाव च स्थिरं दृढम् । मज्जाया उपमा मज्जोपमा । मज्जाशब्देनोभयत्रास्थिकाष्ठगतः सार उच्यते ॥३२॥ अथ वृक्षपुरुषयोर्वैधर्म्यकथनपुरःसरं जगत्कारणं पृच्छति । मृतस्य पुरुषस्य कुतः प्ररोहणमिति युष्मानहं पृच्छामि ॥३३॥ तत्र शङ्कामुद्भाव्य निराचष्टे रेतस इति । यस्माज्जीवतः पुरुषात्तद्रेतः प्रजायते न मृतात् अतो न रेतः कारणम् । यस्तु मृतः स पुनर्नैव जायते जातवादेव । धाना बीजं वटकणिकादि तस्याः सकाशाद्रोहतीति धानारुहः उशब्दोऽप्यर्थः न केवलं काण्डरुह एव किंतु बीजरुहोऽपि वृक्षो भवति । प्रेत्य मृत्वा अन्यतः सम्भवः काण्डात् धानातोऽपि प्रेत्य सम्भवो भवेत् । समूलं सह मूलेन धानया वा उद्वृहेत् [illegible]त्पाटयेयुः । तत्र विजज्ञुर्ब्राह्मणा यतो मृतः पुनः प्ररोहति ब्राह्मणैर्जगतो मूलं न विज्ञातमतो ब्रह्मिष्ठत्वाद्याज्ञवल्क्येन गावो हृता ब्राह्मणाश्च जिताः समाप्ताख्यायिका । यज्जगतो मूलं येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म यद्याज्ञवल्क्यो ब्राह्मणान्पृष्टवान् तत्स्वेन रूपेण श्रुतिरस्मभ्यमाह विज्ञानमिति विज्ञप्तिर्विज्ञानं कूटस्थचिन्मात्ररूपम् तच्चानन्दं न विषयविज्ञानवद्दुःखानुविद्धं किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमित्यर्थः । रातेर्धनस्य दक्षिणारूपस्य दातुः कर्मकृतो यजमानस्य परायणं परा गतिः । एषणाभ्यो व्युत्थाय तस्मिन्नेव मोहातीते ब्रह्मणि तिष्ठत्यकर्मकृदिति तिष्ठमानः तदेव ब्रह्म वेत्तीति तद्वित् ब्रह्मणि तिष्ठमानस्य ब्रह्मविदश्च परायणम् ॥ ३४ ॥ १ ॥ ६ ॥

एवं शाकल्यब्राह्मणे सच्चिदानन्दं ब्रह्म निर्धारितम् इदानीं तस्यैव प्राणाद्यधिष्ठात्रीषु वाय्वादिदेवतासु (?वाचा C.) ब्रह्मदृष्टिद्वारा निर्णयाय षडाचार्यब्राह्मणं कूर्चब्राह्मणं चेति ब्राह्मणद्वयमारभ्यते । ब्राह्मणद्वयस्य वाख्यायिका आचार्येणता श्रद्धादिसम्पन्नेन विद्या लब्धव्येत्याचारप्रदर्शनार्था बोद्धव्या । आसां चक्रे आसनं कृतवान् दर्शनकामेभ्य आख्यायिकां दत्तवान् । अचारीरागतोऽसि । अणवक्षान् सूक्ष्मार्थान्सूक्ष्मवस्तुनिर्णयान्प्रश्नानमत्तः श्रुत्वा तदुत्तरं वक्तुम् । सम्राट् सार्वभौम सम्राडिति वाजपेययाजिनो लिङ्गम् यद्वा हिमवत्सेतुपर्यन्तस्य देशस्य राजेति सूचितम् ॥१॥ शुल्बस्यापत्यं शौल्बायनः । प्राणो वायुर्देवता ब्रह्म । यस्य पुत्रस्य सम्यगनुशास्त्री माता विद्यते स मातृमान् । आयतनं नाम शरीरम् प्रतिष्ठा नाम त्रिष्वपि कालेषु य आश्रयस्तम् । एकपादेकः पादो यस्य ब्रह्मणः तदिदं त्रिभिः पादैः शू[illegible]मानमपि फलाय न भवति ॥२॥ एवमुक्तो मुनिराह प्राण एवेति प्राण एव घ्राणेन्द्रियमेव

प्राणदेवस्य ब्रह्मण आयतनं शरीरम् आकाशोऽव्याकृताख्यः प्रतिष्ठा तस्योत्पत्तिस्थितिलयकालेषु आश्रयः। एतत्प्राणदेवताख्यं ब्रह्म प्रियमित्येतन्नाम्नोपासीत प्रियमितीयमुपनिषद्ब्रह्मणश्चतुर्थः पादः चतुर्भिः पादैः पूर्णत्वेन फलदत्वात्प्रियमिति कृत्वा एतद्ब्रह्मोपासीतेति भावः। प्राणदेवब्रह्मस्वरूपात्प्रियमितीयमुपनिषत्प्रतिष्ठायतनत्रयाद्भिन्नाभिन्ना वेति जिज्ञासया पृच्छति हे याज्ञवल्क्य का प्रियतेति हे सम्राट् प्राण एव प्राणदेवब्रह्मैव प्रियता न ततो व्यतिरिक्ता प्रियतेति कथं पुनः प्राण एव प्रियत्वेत्युच्यते प्राणाभिरक्षणार्थाय हि पुमानयाज्यं पतितादिमपि याजयति तथाप्रतिगृह्यस्योग्रादेः प्रतिगृह्णाति अपि च धनाद्यर्थे यां तस्करादिसंकीर्णामपि दिशमेति गच्छति तत्र तस्यां दिशि वधशङ्का शस्त्रादिहनननिमित्ता शङ्का भवति तदेतत्सर्वं प्राणस्यैव कामाय तस्मात्प्राणो वै परमं ब्रह्म। अभिजहाति बलिदानादिभिः संयोजयति ॥३॥ हस्त्यृषभं हस्तितुल्य ऋषभो यस्मिन्गोसहस्रे तदेवंभूतं सहस्रम्। अननुशिष्य शिक्षामकृत्वा शिष्यं कृतार्थमकृत्वा शिष्याद्धनं न हरेत ॥४॥ शिलिनस्यापत्यं शैलिनः। वागभिमानिनो देवताग्निः। अवदतो मूकस्य ॥५॥ अयमस्माकं बन्धुरित्युक्ते प्रकर्षेण ज्ञायते। ऋग्वेदादीनि व्याख्यानान्तानि मैत्रेयीब्राह्मणे (५. ४. १०.) उक्तार्थानि ॥६॥ वृष्णस्यापत्यं वार्ष्णः। चक्षुरिति तदधिष्ठात्री देवता आदित्यः ॥८॥ सत्यमित्यादित्यब्रह्मणो उपनिषत्। यस्त्वन्यो ब्रूयादहमश्रौषमिति तदनृतमपि क्वाचित्स्याद्व्यभिचारात् यत्तु चक्षुषा दृष्टं तदव्यभिचारात्सत्यमेव भवति ॥९॥ श्रोत्रं तदभिमानिनी दिग्देवता ॥११॥ दिग्भागो हि पार्थिवाधिष्ठानावच्छिन्नः श्रोत्रमित्युच्यतेऽतस्तयोरेकत्वमित्युपपन्नम् तस्माद्दिगानन्त्यमेव श्रोत्रस्यानन्त्यम् ॥१२॥ जबालाया अपत्यं जाबालः। मनो वै ब्रह्मेति तदधिष्ठात्री चन्द्रदेवता ॥१४॥ मनसा स्त्रियमभिहर्यति अभिलषति तस्यां स्त्रियां प्रतिरूपः पितृभावनानुरूपः पुत्रो जायते स पुत्र आनन्द आनन्दहेतुत्वात् ॥१५॥ हृदयाभिमानिनो देवता प्रजापतिरुच्यते ॥१७॥ यतो हृदयेन सर्वाणि भूतानि नामरूपकर्मात्मकानि प्रतितिष्ठन्ति तस्माद्धृदयं परमं ब्रह्म ॥१८॥१०॥६॥

पूर्वस्मिन्षडाचार्यब्राह्मणे कानि चिदुपासनानि ज्ञानसाधनान्युक्तानि इदानीं तैर्ज्ञेयस्य ब्रह्मणो जागरादिद्वारा ज्ञानार्थं कूर्चब्राह्मणमारभ्यते। कूर्चादासनविशेषादुत्थायोप समीपमवसर्पन् तत्पादयोः पतन्। मुमुक्षवे द्वयं वाच्यं ज्ञानं तत्साधनं च तत्र ज्ञानसाधनं राज्ञोऽस्तीति दृष्टान्तपूर्वकं कथयति। एताभिः प्रियमित्येनदुपासीतेत्याद्युक्ताभिरुपनिषद्भिः समाहितात्मा संयुक्तात्मा अत्यन्तं संस्कृतान्तःकरणोऽसि वृन्दारकः पूज्यः आढ्यश्चेश्वरो न दरिद्रः। धनादिसम्पन्नोऽपि सन्नधीतवेदः अधीतो वेदो येन। आचार्यैरुक्ता उपनिषदो यस्मै तुभ्यं स उक्तोपनिषत्कः। एवं सर्वविभूतिसम्पन्नोऽपि सन्भयमध्यस्थ एवेति यावत्परं ब्रह्म न विदितं तावदकृतार्थ एवेति बोधयितुं ज्ञानसाध्यां प्रणाड्योपासनफलभूतां मुक्तिं पृच्छतीतो विमुच्यमान इति ॥१॥ इदानीं विश्वतैजसप्राज्ञानुवादेन वक्तव्यतया प्रतिज्ञातं तुरीयं ब्रह्म प्रतिपादयितुमादौ वैश्वानराभिन्नं जाग्रदभिमानिनं विश्वं दर्शयति स हेति। इन्धे दीप्यते जागरिते स्थूलार्थभोक्तृत्वेन सदा स्फुरणादितीन्धो नाम वै प्रसिद्ध एष आदित्यान्तर्गतः पुरुषः चक्षुर्वै ब्रह्मेति पुरोक्तः। अधिदैवतं पुरुषमुक्त्वाध्यात्मं तमाह योऽयमिति। परोऽक्षेणेव इन्द्र इत्याचक्षते इवशब्दोऽवधारणार्थः परोऽक्षेणैव कथयन्ति। प्रत्यक्षनामग्रहणं द्विषन्तीति प्रत्यक्षद्विषः ॥२॥ एकस्यैव वैश्वानरस्योपासनार्थं प्रासङ्गिकमिन्द्रश्चेन्द्राणी चेति मिथुनं कल्पयन्ति। अस्यै-

वोक्तस्येन्द्रस्य भोक्तुर्वैश्वानरस्य एषा विराट् पत्नी भोग्यत्वात् तथा च यदेतन्मिथुनं जागरिते विश्वशब्दवाच्यं तदेवैकं स्वप्ने तैजसशब्देन वाच्यमित्यर्थादुक्तमेव । अत एवास्य स्वप्नावस्थस्य मिथुनस्थानमाह तयोरिन्द्रेन्द्राण्योः स्वप्नावस्थामात्रयोरेष संस्तावः सम्भूय यत्रान्योऽन्यं संस्तवं कुर्वाते स एष संस्तावः य एष प्रसिद्धोऽन्तर्हृदये हृदयस्य मांसपिण्डस्यान्तर्मध्ये आकाशः सुषिः । अन्नं भोज्यं स्थितिहेतुः । प्रथमं तावज्जाधमन्नं द्वेधा परिणमते तत्र यत्स्थूलं तदधो गच्छति यदन्यत्सूक्ष्मं तत्पुनरग्निना° पच्यमानं द्वेधा परिणमते तयोर्मध्ये यो मध्यमो रसः स पाञ्चभौतिकं शरीरमुपचिनोति यः पुनरणिष्ठो रसः स एष लोहितपिण्ड इत्युच्यते लोहित एव पिण्डो लोहितपिण्डः । लोके भुक्तवतोः स्वपतोश्च प्रावरणं दृष्टं तथानयोरपि प्रावरणेन भवितव्यम् जालकमिवानेकनाडीछिद्रबहुलत्वाज्जालकवत्प्रतिभासमानम् । इदानीं तयोः स्वप्नाज्जागरितदेशागमनमार्गमाह एषा सती शोभना सृतिर्मार्गः संचरणी संचरतः स्वप्नाज्जागरितमनयेति संचरणी ॥३॥ इदानीं विश्वतैजसयोरन्नविवेको भोक्तुश्च सूक्ष्मतेत्येतत्प्रदर्शनार्थमिन्द्रियाश्रितानां नाड्यन्तराणां परिमाणं सदृष्टान्तमाह । एवं सूक्ष्मा अस्य पुरुषस्य देहसम्बन्धिन्य एताः स्वप्नाज्जाग्रद्गमनादिव्यवहारहेतुभूता नाड्यः सिराः अन्तर्हृदये प्रतिष्ठिताः सन्तीति शेषः हृदयाच्च विप्रवृत्तास्ताः सर्वत्र कदम्बकेसरवद्युगपत्स्थानविशेषेषु प्रसृताः सत्यो व्यवस्थिताः । उक्तनाडीनामुपयोगकथनपूर्वकं सूक्ष्मतमवक्कथनप्रयोजनमाह एताभिरेव एत देहमास्रवत् गच्छरीरं व्याप्नुवत्पूर्वोक्तं सूक्ष्मतरमन्नं कर्तृ आस्रवति करणान्तःकरणानेत्रजान्देवतारूपान्व्याप्नोति । यस्मान्नाड्याश्रितं सूक्ष्ममन्नं देवताद्वारा भुञ्जानः सन्नयं लिङ्गात्मा करणदेवता (?ताः Cod.) करणान्यन्तःकरणं च लिङ्गाख्यं प्रीणयति राजस्थानीयेन चिदात्मनानधिष्ठितानां भोगे स्वातन्त्र्याभावात् तस्मादेष तैजसः प्रविविक्ताहारतरः शारीरात्स्थूलशरीरोपाधेर्वैश्वानराद्दात्मनः सकाशात् तस्य हि मूत्रपुरीषादिस्थूलापेक्षया पिण्डोपचयकरमप्यन्नं प्रविविक्तमेव लिङ्गस्थितिकरं त्वन्नं ततोऽपि सूक्ष्मतरम् ॥४॥ विश्वतैजसयोरेव (वं?) श्रुत्या साक्षान्निर्दिष्टत्वात्तैजसस्य प्राज्ञद्वारा तुरीयब्रह्मात्मनिलयः साक्षादेव निर्देष्टव्य इत्यभिप्रेत्य तुरीये लीनस्य तैजसस्य लयात्प्रागवस्थायां परिच्छेदहेतुभूता ये अध्यात्मं प्राणास्तेषां लयानन्तरसंवृत्तावस्थोपन्यासव्याजेन तैजसस्य प्राज्ञद्वारा तुरीये लयं दर्शयति तस्येति स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति तस्य वै एतस्य पुरुषस्य विदुषः क्रमेण वैश्वानरात्तैजसं प्राप्तस्य तस्य अकार्यकारणाखण्डतुरीयपदाविष्टस्य तैजसस्य ये प्राञ्चः प्राणा नासाद्वारा अग्रतः संचरन्तस्ते प्राची दिगेव संवृत्ताः अध्यात्मादिपरिच्छिन्नाः प्राणाः सर्वासु दिक्षु स्थिताः विदुषस्तुरीयपदं प्राप्तस्य परिच्छेदहेतुनाशात्तस्मिन्नेकीभूताः सन्तस्तत्तद्दिङ्मात्रं संवृत्ताः प्रत्यङ्मात्रे लीना इत्यर्थः । एवं दक्षिणा दिग्दक्षिणाः प्राणा इत्यादि व्याख्येयम् । तथा चोपाधिभूतानां प्राणानां लयं दर्शयन्ती श्रुतिरुपहितस्याप्यात्मनो लयं कारणात्मनि दर्शितवतीति भावः ॥५॥ एवं सर्वोपसंहारं कृत्वावस्थितस्य पुरुषस्य विदुषः किं स्वरूपमित्यपेक्षायामविद्यातत्कार्यभावाभावसाक्षित्वेन तद्विलक्षणं निःप्रपञ्चं स्वरूपमिति दर्शयति स एष नेत्यादिना । इदानीं यत्प्रत्यगात्मस्वरूपज्ञापनार्थं ब्राह्मणद्वयात्मको ग्रन्थ उपदिष्टस्तस्य ज्ञानस्यापरोक्षानुभवरूपस्य फलमाह अभयं वाऽइति अभयं जन्ममरणादिनिमित्तभयाभावम् । गच्छताद्गच्छतु । इमे विदेहास्तव यथेष्टं भोगाय सन्तु अयं चाहं तव दासभावे

स्थितोऽस्मि यथेष्टं मां राज्यं च प्रपद्यस्व । इदं दक्षिणादानं व्यवहारदृष्टिमवष्टभ्यैवोक्तम् तत्वतस्तु नास्त्येव दक्षिणेति राज्ञोऽभिप्रायः अद्वितीयब्रह्मात्मैक्यमनुभवतः स्वात्मातिरिक्तस्य वस्तुनोऽभावात् तदुक्तम् अहं ममेत्यविद्याधीः सहेतुर्नाशिता यदा पूर्णात्मनि तदा दृष्टे कः कस्मै किं च दित्सतीति ॥ ६ ॥ ११ ॥ ६ ॥

मधुकाण्डे तावद्बुद्ध्यनुप्रविष्ट ईश्वरोऽविद्ययाकृत्स्नत्वमापन्न इति तं न पश्यन्त्यकृत्स्नो हि स इत्यादिनोक्तम् (४. २. १६.) पुनस्तस्यैवाविद्यानिरासेन स्वरूपावस्थानं च आगमप्राधान्येन निर्धारितम् एवं मधुकाण्डे निरूपित आत्मा यत्साक्षादपरोक्षादित्यादिलक्षणो जल्पन्यायमवलम्ब्याखण्डप्रत्यक्त्वेन निरूपितस्तस्यैव वादन्यायेन स्वरूपनिर्णयाय वागादिदेवतासु ब्रह्मदृष्टिद्वारा इन्धो ह वाऽइत्यादिना जागराद्यवस्थविश्वादिप्रदर्शनेन तुरीयं नेति नेत्यादिलक्षणं ब्रह्मात्मतत्वमुपदिष्टम् इदानीं पूर्वोक्ता जागराद्यवस्था अनुसृत्य महता तर्केणानेकविप्रतिपत्तिनिरासद्वारेण देहादिव्यतिरिक्तमुक्तस्वयम्प्रकाशानतिशयानन्दस्वभावलक्षणं पूर्वोक्तमेवात्मानमधिगमयितुं ज्योतिर्ब्राह्मणमारभ्यते । स गच्छन्याज्ञवल्क्यो राज्ञेऽहं किंचिदपि न वदिष्ये इति मेने विचारयामास यद्वा सम् एनेनेति छेदः एनेन राज्ञा अहं संवदिष्ये । अग्निहोत्रे निमित्ते (११. ६. २. १-१०.) । कामप्रश्नमिच्छाप्रश्नम् ॥ १ ॥ प्रत्यगात्मचैतन्यस्वरूपं जिज्ञासमानः कार्यकरणसंघातात्मा पुरुषो ज्योतिर्निर्वर्त्यमासनगमनादिकार्यं स्वाभिन्नेनैव ज्योतिषानुगृहीतो निर्वर्तयति किं वा स्वव्यतिरिक्तेनेति संदिहानः पृच्छति हे याज्ञवल्क्यायं पुरुषः कार्यकरणसंघातरूपः शिरःपाण्यादिमान्पिण्डः किंज्योतिः किं ज्योतिरस्य विद्यते येन ज्योतिषानुगृहीतोऽयमासनादिव्यवहारं करोति । तत्किं देहादि तदतिरिक्तं वेति प्रष्टुरभिप्रायज्ञो मुनिरयं हि राजा व्यतिरिक्तं ज्योतिरेव पृच्छतीति तथाविधमेवेतरसर्वज्योतीरहितस्वप्नाद्यवस्थायां विविक्ततया बोधयितुकामो जागरिते तावद्दृष्टान्तभूतान्यादित्यादीनि वागन्तानि ज्योतींष्युपन्यस्यतीति दर्शयति आदित्यज्योतिरित्यादिना आदित्येनैव चक्षुषोऽनुग्राहकेण देहकरणाद्यतिरिक्तेनैवायं प्राकृतः पुरुषः पल्ययते पर्येति गच्छति गत्वा क्षेत्रमरण्यं वा तत्र कर्म कुरुते पश्चाद्विपर्येति भूयो निवर्तते । संघातादिव्यतिरिक्तमेव ज्योतिरासनादिकारणम् ॥ २ ॥ यद्यप्येकेनैवादित्यपर्यायेण व्याप्तिग्रहसम्भवस्तथापि बहवो दृष्टान्ता व्याप्तिं दृढयन्तीति मत्वा प्रश्नप्रतिवचनाभ्यां ज्योतिःपर्यायान्तराणि दर्शयति ॥ ३ ॥ वाचैवायमित्यत्र वाक्पदेन शब्दः परिगृह्यते नेन्द्रियम् ॥ ५ ॥ स्वप्नसुषुप्त्योरपि बन्धुसंगमवियोगदेशान्तरगमनादेरुत्थानस्य च ज्योतिःकार्यस्य दर्शनाद्भवितव्यं तत्राप्यतिरिक्तेन केनचिज्ज्योतिषेत्यनुमानतो ज्योतिर्मात्रे सिद्धे उपन्यस्तानां ज्योतिषां तत्र योग्यानुपलब्धिबाधितत्वात्केन ज्योतिषा तदासौ व्यवहारं करोति । आत्मेति कार्यकरणातिरिक्तं तदवभासकमपराधीनप्रकाशं ज्योतिरभिधीयते ॥ ६ ॥ कोऽसावात्मा किंस्वरूप इति प्रश्नार्थः बुद्ध्यवभासकः स्वयमनवभासमान आत्मेति प्रतिवचनमाह । पुरुषो नित्यपूर्ण इत्यर्थः प्राणेष्विति सामीप्यलक्षणा सप्तमी विज्ञानमयस्य तद्व्यतिरेकप्रदर्शनार्था यो हि येषु भवति स तद्व्यतिरिक्त एव भवति । हृच्छब्दो मांसपिण्डविषयः तात्स्थ्यादत्र हृच्छब्देन लक्षणया बुद्धिरुच्यते हृदि बुद्धावन्तर्वर्तमानं ज्योतिरात्मा । पूर्णो बुद्धिदर्पणाभिव्यक्तः सर्वावभासकः शुभ्रो निरतिशयस्वप्रकाशकस्वभाव आत्मेति वाक्यार्थः । एवमात्मनो नित्यशु[illegible]स्याविद्यया बुद्ध्यादितादात्म्याध्यासादेव संसारित्वमिति दर्शयितुं

सूक्ष्मदेहातिरिक्ततया आत्मनः शुद्धत्वप्रदर्शनाय वा स्वप्नं प्रक्रमते । स समानः सन् हृद्‌शब्द-वाच्याया बुद्धेः प्रकृतत्वात्संनिहितत्वाच्च तया समानः सदृशः अन्योऽन्यधर्माध्यासेन तप्तायः-पिण्डवत्तादात्म्यमापन्नः सन्नुभौ लोकौ इहलोकपरलोकावनुक्रमेणोपात्तदेहेन्द्रियसंघातं त्यजन्नन्यं चोपददत्संचरति परिभ्रमति आत्मा संचरतीति भ्रमो न तस्य स्वतः संचरणमित्यर्थः । एतदेव प्रत्यक्षेणाभिनीय दर्शयति ध्यायतीवेति यतो ध्यानव्यापारवतीं बुद्धिं तत्स्थेन चित्स्वभावज्योतीरूपेणावभासयंस्तत्सदृश आत्मा ध्यायतीव ध्यानं करोतीव तथा लेलायतीव चलतीव बुद्ध्यादिषु करणेषु प्राणादिषु वायुषु च चलत्सु तदवभासकतया तत्समान आत्मापि चलतीव न तु ज्योतीरूपस्यात्मनः परमार्थतो ध्यानं चलनं वेत्यर्थः । सधीः बुद्ध्यैक्यमापन्नः स्वप्नो भूत्वा स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तदाकारो भूत्वा इमं लोकं जागरितलक्षणं लौकिकशास्त्रीयव्यवहारास्पदं कार्यकरणसंघातमतिक्रामति अतीत्य क्रामति तदभिमानं त्यजति ॥७॥ यथैकस्मिन्देहे स्वप्नजागरिते संचरत आत्मनो देहाद्यतिरेकस्तथेहलोकपरलोकयोः संचारित्वत्यापि तस्य तद्व्यतिरेक उच्यतऽइति दर्शयति स वाऽइति । पाप्मभिर्धर्माधर्माश्रयैः कार्यकरणैः संयुज्यते । विजहाति परित्यजति तत्राभिमानत्यागमात्रेणैव तैर्वियुज्यते । अतः संचरणादिकं नात्मनः स्वाभाविकं वह्नेरिवौष्ण्यस्वभावः स्वाभाविके सति परित्यागायोगादिति ज्ञेयम् ॥८॥ एवमुत्क्रामन्म्रियमाणः शरीरमभिसम्पद्यमान इत्यागमवशात्परलोकास्तित्वे सिद्धेऽपि प्रत्यक्षेण न तत्सिद्धं परलोकविषयं च प्रत्यक्षं नास्त्यतो नास्ति परलोक इत्याशङ्क्यास्ति परलोकः प्रत्यक्षसिद्ध इति प्रतिपादनाय तस्मिन्त्संध्ये स्थानऽइत्यारभ्य स यत्रायं प्रस्वपितीत्यतः प्राक्तनो ग्रन्थः प्रवर्तिष्यते प्रथमं तदुपोद्घातत्वेन स्थानभेदं दर्शयति तस्य वाऽइति । संधौ भवं संध्यम् । एतदुक्तं भवति आद्ये वयसि यं स्वप्नं पश्यति तं पूर्वजन्मानुभूतविषयमेव तद्वासनावासितः सन्पश्यति तदानीं बालस्यैहिकपुत्राद्यनुभवाभावात् मध्यमे तु वयसीन्द्रियाणां स्थूलार्थग्रहणसामर्थ्यादिह जन्मन्यनुभूतविषयकमेव स्वप्नं प्रायः पश्यति अन्ते (न्त्ये ?) वयसि पुनः परलोकं यियासुर्विद्याकर्मादिसम्भृतो भाविजन्मविषयकं स्वप्नं प्रायः पश्यति तस्मादन्ते वयस्यादौ चेहजन्मन्यसम्भाव्यमानस्य दर्शनं परलोकसद्भावे प्रत्यक्षं प्रमाणयति ॥९॥ ननु स्वप्नस्थानं गत आत्मा किमाश्रितः सन्केन विधिना परलोकं पश्यतीत्यपेक्षायामाह अथेति । आक्रम आश्रयोऽवष्टम्भो विद्याकर्मपूर्वप्रज्ञालक्षणः यादृश आक्रमो यस्य सोऽयं यथाक्रमः । पूर्वमादित्यादिज्योतिरभावेऽपि आसनादिज्योतिःकार्यदर्शनादयं पुमानात्मज्योतिषैव व्यवहरतीत्युक्तम् इदानीमादित्यादिज्योतिर्भिरसंस्पृष्टः चिदात्मा यथा साक्षादेव प्रत्यग्भावेन स्वप्रकाश इत्यवगन्तुं शक्यते तथा प्रदर्शनायाह स यत्रेति संध्याख्यं स्वप्नं प्रतिपद्यमानः किमाश्रयः केन विधिना प्रतिपद्यतऽइत्याकाङ्क्षायामाह अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य स्थूलदेहस्य सर्वावतः सर्वा भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ताः संसर्गकारणभूता अस्य विद्यन्तऽइति सर्ववान् दैर्घ्यं छान्दसम् तस्य मात्रामेकदेशमवयवमपकृष्य गृहीत्वा जाग्रद्दृष्टवासनावासितः सन्नित्यर्थः । अत्रैतस्यां स्वापावस्थायाम् आदित्यादेस्तदानीमभावादिन्द्रियाणां चोपसंहृतत्वान्मनसश्च विषयाकारेणैवोपक्षयात्परिशेषादात्मा स्वयंज्योतिरित्यर्थः ॥१०॥ ननु स्वप्नेऽपि सर्वस्यादित्यादेर्दृश्यमानत्वात्कथं परिशेषात्स्वयंज्योतिष्ट्वसिद्धिरित्याशङ्कायां तस्य सर्वस्य वासनामात्रनिर्मि-

तत्वात्तत्रात्मा विविक्तः स्वयंज्योतिरिति निश्चेतुं स्वप्ने बाह्यरथाद्यभावं तावदाह न तत्रेति । रथैर्युज्यन्तऽइति रथयोगा अश्वादयः । मुदः पुत्रादिसम्बन्धनिमित्ता हर्षाः । वेशान्ताः चुद्रसरांसि स्रवन्त्यो नद्यः पुष्करिण्यस्तडागाः । हि स यस्मात् आत्मा कर्ता तस्मात्सृजतीति योजना न ह्यत्र कर्तृत्वं वास्तवमात्मनोऽभिप्रेतं किंतु परिणममानवासनासाचितामात्रमेव ॥११॥ उक्तेऽर्थे मन्त्राणामपि संमतिरस्तीत्याह तदप्येतऽइति । तत्र स्वप्नप्रवेशतत्साचित्वप्रकाशकं मन्त्रार्धं पठति स आत्मा स्वप्नेन स्वप्नभावेन वासनामात्रोपग्रहेण शारीरमिति स्वार्थे वृद्धिः शरीरमभिप्रहत्य निश्चेष्टमापाद्यालुप्तदृक्शक्तिस्वाभाव्यात्स्वयमसुप्तः सन्सुप्तान्वासनाकारणोद्भूतान् (रेणो Cod.) अन्तःकरणवृत्त्याश्रयान्बाह्याध्यात्मिकान्सर्वानेव भावान्स्वेन रूपेण प्रत्यस्तमितानभिचाकशीति अलुप्तया आत्मदृष्ट्याभितः सर्वात्मना पश्यत्यवभासयति । स्वप्नभोगक्षये पुनर्जागरितमेतीति द्वितीयार्धेन दर्शयति शुक्र शुद्धं ज्योतिष्मदिन्द्रियादिमात्रारूपं गृहीत्वा पुनः स्वप्नहेतुकर्मोपमरणानन्तरं जाग्रद्भोगहेतुकर्मणा जागरितं स्थानमागच्छति हिरण्मयश्चैतन्यज्योतिःस्वभावः पौरुषः पुरुषः स्वार्थे वृद्धिः एकहंसः एकश्चासौ हंसश्चेत्येकहंसः एक एव जाग्रत्स्वप्नाविहलोकपरलोकौ च हन्ति गच्छति हिनस्तीति वा एकहंस इत्यर्थः ॥१२॥ अपरं निकृष्टमनेकाशुचिसंघातवादत्य बीभत्सम् कुलायं नीडं शरीरम् । यत्रकामं यत्र-यत्र विषयेषूद्भूतवृत्तिः कामो भवति तं काममीयते गच्छति प्राप्नोति ॥१३॥ स्वप्नान्ते स्वप्नस्थाने स्वकर्मोद्भासितं वासनामयमुत्कृष्टं निकृष्टं च स्वेनैवात्मना स्वयमीयमानो गम्यमानः प्राप्नुवन् देवो द्योतनात्मकः । जक्षदिव वयस्यादिभिः सह हसन्निव ॥१४॥ एवं स्वप्ने निरूपिते किं पर्यवसितमित्यपेक्षायां तत्रात्मा विविक्तः स्वयंज्योतिः पर्यवसित इति प्रदर्शनाय मन्त्रशेषं पठति अस्यात्मनः आराममाक्रीडनं ग्रामनगरयोषिदन्नाद्ययानमार्गादिलक्षणं वासनानिर्मितमेव पश्यन्ति सर्वे जनाः न तु तमात्मानं तत्र विविक्तदृग्रूपत्वेनाव(भा)सकं कोऽपि पश्यति तस्मादात्मा स्वप्नेऽदृश्य एव सन्नवभासतऽइति सिद्धमात्मनः स्वयंज्योतिष्ट्वमित्यर्थः । किं च स्वप्नं गत आत्मा विविक्त एवेत्यत्र लोकप्रसिद्धिरप्यस्तीत्याह तं नेति तमात्मानं सुप्तमायतं भृशं न बोधयेदित्याहुः चिकित्सका जनाः जाग्रद्देहगतेन्द्रियद्वारलक्षणाः प्रबोधनाडीः (धंना Cod.) परित्यज्यात्मा स्वप्ननाडीः प्रविष्टो विविक्त एव स्वप्ने वर्तते अत एव नाडीव्यत्यासगमनशङ्कयैव सुप्तं न बोधयेद्भृशम् । सहसा प्रबोधितः कदाचिद्व्यत्यासेनेन्द्रियमात्राः प्रवेशयति ततश्चान्ध्यबाधिर्यादिदोषप्राप्तौ अस्मै देहाय दुःखेन भिषक्कर्म भवति ॥१५॥ इदानीमन्यदीयं मतं स्वयंज्योतिष्ट्वविघातकं दुष्टमित्यस्मान्बोधयितुं स्वमतपरिशुद्धये च तदुपन्यस्यति जागरितदेश एवास्य स्वप्नस्य विषयो न तु संध्यमिदं स्थानान्तरमिहलोकपरलोकाभ्यां व्यतिरिक्तम् । यदि जागरितदेश एवायं स्वप्नो जातस्तदा जागरितऽइव स्वप्नेऽपि कार्यकरणसंघातमिश्रितत्वेन न ततो व्यतिरिक्तः स्वयंज्योतिः सिध्येदिति स्वयंज्योतिष्ट्वं बाधितं स्यात् अयं च पूर्वः पक्षोऽर्थक्रमपरिग्रहेण स यत्रायं प्रस्वपितीत्यतः प्रागेवावगन्तव्यः संध्यस्थानस्य तृतीयत्वाक्षेपकत्वेन तत्रोचितत्वात् नैतत्सारम् स यत्रेत्यादिना युक्तितः प्रमाणेन स्वप्नस्य मृषात्वनिरूपणं कृतमित्येतत्सूचयन्ती श्रुतिरुत्तरमाह अत्रायमिति । देहेन्द्रियमनोबुद्धिप्राणाहंकृतिविलक्षणः स्वयंज्योतिरात्मेति निर्णीय मुनिरुपरतः राजा तु कामकर्मादिसकलसंसार[illegible]भितस्य विजिज्ञासितस्य मोक्षस्यानिर्धारितत्वान्नेश्च-

याय मुनिमपृच्छत् । विशिष्टो मोक्षो भवत्यनेनेति विमोक्षः सम्यग्ज्ञानम् यतः स्वयंज्योतिष्ट्वरूपं मोक्षाङ्गमात्रमेव निर्णीतमतः कारणादूर्ध्वमङ्गनिर्णयादनन्तरं विमोक्षायैव मोक्षसाधनभूताद्वितीय-ब्रह्मात्मज्ञानायैव ब्रूहि यथा मोहत्रासादिजनको मृत्युरात्मनः स्वभावो न भवति तथा मामुपदिशेत्यर्थः ॥१६॥ एवं राज्ञा नियुक्तो मुनिर्मोहत्रासाद्यभावप्रदर्शनपुरःसरं तत्कारणभूतः कर्मलक्षणो मृत्युर्नात्मनः स्वभाव इति दर्शयितुं प्रवर्तमानस्तावत्स्वप्नस्थानाज्जागरितदे-शागमनमाह य एषः स्वप्ने दर्शितः स्वयंज्योतिः स प्रकृत आत्मा स्वप्नान्ते स्वप्नस्थाने पुनः स्वप्नादूर्ध्वं प्रति पूर्वस्माद्गमनात्प्रातिलोम्येन न्यायं निश्चयेनागमनं यथा स्यात्तथा प्रतियोनि जागरितस्थाय पूर्वगृहीतवासनामयं स्थानं प्रत्यागच्छति बुद्धान्तायैव जागरणायैव जागरणानु-भवायेत्यर्थः । ननु स्वप्नेऽआत्मा रत्यादिकं करोति चेत्तत्फलेनापि सम्बध्यते यथा जागरिते कर्म कुर्वंस्तत्फलेन सम्बध्यतऽइत्याशङ्कां वारयति स यदिति । अनन्वागतोऽननुबद्धः । ननु स्वप्ने इन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यद्यदि रेतःस्खलननिमित्तप्रायश्चित्तविधानमात्मनः स्वप्ने कर्मसम्बन्धाभावेनोपपद्यतऽइति चेत् नैतत्स्वप्नसम्भोगनिमित्तं प्रायश्चित्तं किंतु सत्या-देवेन्द्रियलक्षणादाधाराद्रेतसः क्षरणनिमित्तं तस्य जागरिते प्रतिपन्नत्वनिमित्तं च अन्यथा पर-नारीसंगमननिमित्तमपि प्रायश्चित्तं विदध्यात् न स्कन्ननिमित्तमात्रम् तस्मान्न स्वप्नकृतेन कर्मणा तत्फलेन चात्मा सम्बध्यते । कर्मप्रविवेकस्यापि मोक्षैकहेतुत्वात् ऊर्ध्वं विमोक्षायैव ब्रूहि ॥१७॥ एवं स्वतन्त्रज्योतिरात्मावस्थाद्वयेऽपि कामकर्मप्रयुक्तस्थानद्वयसंचरणसंसारधर्मैर-संस्पृष्टोऽवशीकृतोऽसङ्गत्वादिति प्रतिपादितम् तत्र संचरन्नपि कथं तेन न वशीक्रियतऽइत्यत्र दृष्टान्त उच्यते यद्वा स्वप्नान्तबुद्धान्तात्मकावस्थाद्वयस्य मिथो व्यभिचारात्तदनुस्यूतस्यात्मनस्त-द्विलक्षणत्वं तद्गतकर्मात्मकादासङ्गान्मृत्योर्विविक्तत्वं च यद्दर्शितं तत्रेदानीं दृष्टान्तमाह । कूले तीरे तटे ॥ अतोऽस्यात्मनः संसारित्वमाविद्यकमेव न स्वतः तस्यां निवृत्तायां तु स्वतः-सिद्धैव तस्य मुक्तिरिति स वाऽअयं पुरुषो जायमान इत्यारभ्य (क° ८.) मत्स्यवाक्यान्तस्य ग्र-न्थस्य समुदायार्थः ॥१८॥ एवं महामत्स्यदृष्टान्तोपन्यासेनावस्थाद्वयेऽपि यद्यपि कार्यकरणा-दिभ्यो व्यतिरिक्तं नित्यशुद्धबुद्धमुक्तस्वभावमात्मस्वरूपं दर्शितम् तथाप्येकैकस्मिन्वाक्ये एकैकव्यतिरेकस्यैव प्रदर्शनान्न पुञ्जीकृत्य तथाविधमात्मस्वरूपं दर्शितम् अतः सुषुप्तौ तथाविधमात्मस्वरूपं सकृदेव सुखं प्रतिपत्तुं शक्यमिति तद्वाऽअस्यैतदात्मकाममित्यादिना (क° २१.) तथा दर्शयितुं तथाविधसुषुप्तिप्राप्तौ दृष्टान्तत्वेन श्येनवाक्यं प्रवर्ततऽइति श्रीमतां शङ्कराचार्याणामवतारिकावार्त्तिककृत् अवतारिका तु एवं स्वप्नबुद्धान्तयोः संचरत आत्मनः संसारविलक्षणत्वे महामत्स्यदृष्टान्त उक्तः इदानीं सुषुप्तावपि तद्विलक्षणत्वं दर्शयितुं श्येनादि-दृष्टान्तमाह । श्येनो महाकायो मन्दवेगः पक्षिविशेषः सुपर्णस्तु वेगवत्तरोऽल्पविग्रहः । पक्षौ संहृत्य संगमय्य सम्प्रसार्य सल्लयायैव (!) नीडायैव ध्रियते स्वात्मनैव स्वयं धार्यः सम्यक् लीयतेऽस्मिन्निति सल्लयो (!) नीडः आत्मा जाग्रत्स्वप्नयोः परिभ्रमणेन श्रान्तः सन् तच्छ्रमहानार्थम् जाग्रत्स्वप्नयोरन्तोऽवसानं यस्मिन्नज्ञाते ब्रह्मणि सोऽन्तः तस्मै अन्ताय अज्ञातब्रह्मलक्षणस्वनी-डाय धावति ॥१९॥ ननु जाग्रत्स्वप्नोपाध्यपगमेन सुषुप्तिं गतस्याप्यात्मनो न ब्रह्मैकत्वं त-त्रापि भेदहेतोरविद्यायाः सत्वादित्याशङ्क्य न तावदविद्या आत्मनः स्वभावः तथा सति चैतन्यवत्तदनिवृत्तेरमोक्षापत्तेः अस्वभावत्वे तु कामकर्मादिवत्तन्निवृत्तेर्मोक्ष उपपद्यतऽइति

विचारपुरःसरमस्वभावत्वकथनद्वाराविद्याकामकर्मादिहीनतया निरूपितात्मस्वरूपस्य प्रत्यक्षेण प्रदर्शनिकयोत्तरा कण्डिका प्रवर्तते । तिष्ठन्ति अर्थाद्धृदयऽइति गम्यते । एताश्च सूक्ष्मा नाड्यो धातुवैषम्यवशाद्भुक्तान्नरसस्य नानाविधैः परिणामैः पूर्यन्ते तासु चैवंविधासु सकलदेहव्यापिनीषु प्रत्यगात्मोपाधिभूतं जाग्रद्दृष्टपदार्थवासनाश्रयं स्फटिकमणिवत्स्वच्छं लिङ्गं तिष्ठतीत्यभिप्रेत्याह शुक्लस्येति । श्लेष्मबाहुल्ये वातपित्तयोर्गुणत्वेन संसर्गाद्भुक्तान्नरसो नाडीस्थः श्वेतो भवति वातभूयस्त्वे सतीतरयोर्गुणत्वान्नाडीस्थोऽन्नरसो नीलो भवति पित्तबाहुल्यादितरयोरुपसर्जनत्वे सति नाडीस्थो रसः पिङ्गलो भवति वातश्लेष्माधिक्येन पित्ते मन्दे सति नाडीस्थोऽन्नरसो हरितो भवति तेषां च धातूनां साम्ये नाडीस्थो रसो लोहितो भवति एवंविधान्नरसव्याप्तानां नाडीनामपि तादृशा वर्णा जायन्ते तदुक्तं सुश्रुते (शारी° अध्या° ७.) अरुणाः शिरा वातवहा नीलाः पित्तवहाः सिराः असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः सिरा इत्यादि । तथा च तासु नाडीषु पुरुषस्य स्वापकाले धर्मादिनिमित्तवशात्पूर्वोक्तं लिङ्गं स्वगतचिदाभाससहितं मिथ्यैव नानाकारमवभासतऽइति भावः । भवत्वेवं यथोक्तासु नाडीषु यथोक्तस्य लिङ्गस्यावस्थितिः कथमेतावता कार्यद्वाराविद्यासिद्धिरित्याकाङ्क्षायामाह अथ यत्रेति । अथ मूलाविद्याकार्यत्वादविद्यात्मके पूर्वोक्ते लिङ्गे प्रागुक्तनाडीषु व्यवतिष्ठमाने सति यत्र यस्मिन्स्वप्नकाले एनं स्वप्नदृशं के चन शत्रवोऽन्ये वा तस्करादयो घ्नन्तीव अन्ये केचिज्जिनन्तीव वशीकुर्वन्तीव दासादिरूपेण कदाचिदेनं हस्ती विच्छाययतीव विद्रावयतीव विच्छ गतौ गुपूधूपविच्छिपणिपनिभ्य आय इति (पा° ३.१.२८.) स्वार्थे आयप्रत्ययः तथा गर्तं जीर्णकूपादिकं प्रति पततीव वस्तुतो हननादिकारकाभावेऽपि मृषैव स्वप्नदृष्टुरेवंविषयो वासनानिमित्तः प्रत्ययोऽविद्याख्यो जायते सर्वत्रेवशब्दप्रयोगादित्यर्थः निकृष्टाधर्मोद्भासितान्तःकरणवृत्त्याश्रयवासनावशाद्दुःखात्मक एवंविधः प्रतिभासो भवतीति भावः । एवं स्वप्नस्य मिथ्यात्ववर्णने को हेतुरित्यपेक्षायामाह यदेवेति यदेव जागरिते भयं भयहेतुं हस्त्यादिकं पश्यति तदेव भयकारणमत्रास्मिन्स्वप्नेऽविद्यया वासनात्मिकया मृषैवोद्भूतया आत्मा मन्यते पश्यति अतो मृषैव स्वप्न इत्यर्थः । एतेन वाक्येन कार्यद्वाराधर्मसहकारिकानात्मस्वभावाविद्या दर्शिता यतो यदा कदाचिद्विद्यायां तिरोधीयमानायामविद्यायां चोत्कृष्यमाणायामेव घ्नन्तीवेत्यादिनोक्तं प्रत्यक्षत उपलभ्यतऽइति । इदानीं धर्मसहकारिकां च तां शुभवासनात्मिकामनात्मभूतामविद्यां तत्कार्यप्रदर्शनद्वारा निरूपयति अथाविद्यायामपकृष्यमाणायां विद्यायामुत्कृष्यमाणायां सत्यां यत्र स्वप्नकाले राजेव देव इव स्वात्मानं मन्यते पश्यतीत्यन्वयः एतदपि दर्शनं मृषैव इवशब्दप्रयोगादित्यवगन्तव्यम् । इदानीं सत्येवात्मनि विद्योत्कर्षवशादविद्याया विनश्यमानत्वादपि तस्या अनात्मस्वभावतेत्यभिप्रेत्यात्मविद्योत्कर्षवता सर्वात्मभावलक्षणं मोक्षफलमात्मस्वरूपमपि स्वप्ने प्रत्यक्षतोऽनुभूयतऽइत्याह अहमेवेति स सर्वात्मभावोऽस्यात्मनः पूर्वोक्तान्लोकानपेक्ष्य परमः पूर्णो लोको विद्यया सम्पादितः इदं तु दर्शनं परमार्थविषयमेव न त्वविद्यकं पूर्ववदत्रेवशब्दप्रयोगाभावात् अन्यत्सर्वमाविद्यकं तत्रेवशब्दप्रयोगादित्यर्थः । उक्तस्य लोकस्य विषयत्वं दर्शयितुं विशेषणद्वयमाह अथ यत्र सुप्त इत्यादिना ॥२०॥ एवमविद्या आत्मस्वभावो न भवतीति निर्णीतम् यः पुनरेकत्र पुञ्जीकृत्य नित्यमुक्तत्वादिलक्षण आत्मा दर्शयितुमिष्टः स पूर्वकण्डिकामध्येऽहमेवेदं सर्वोऽस्मीति संगृहीतः

स एवेदानीं (! तमेवे° ?) व्यक्ताविद्याविहीनां सुषुप्त्यवस्थामवलम्ब्य कण्डिकाद्वयेन प्रकटी-कुर्वन्नाह तद्वाऽअस्येति अस्य सर्वात्मभावमापन्नस्यात्मनो रूपं स्वरूपम् । आत्मैव कामो यस्मिन्रूपे तदात्मकामम् परमानन्दरूपब्रह्मैकत्वसम्पत्तौ जागराद्याविव स्वात्मव्यतिरिक्तस्य काम्यमानस्य पदार्थजातस्याभावात्सुषुप्तावाप्तकामं रूपम् अकामं कामाश्रयत्वरहितम् । सुषुप्तौ भेदाभावादेव विशेषविज्ञानाभावो न त्वात्मनः स्वयंज्योतिष्ट्वाभावात् तस्मात्स्वयंज्योतीरूपस्यात्मनः सुषुप्तौ सर्वैकत्वमेव विशेषविज्ञानाभावे हेतुरिति वक्तुं तावद्दृष्टान्तमाह तद्यथेति । यो भूतमात्रासंसर्गात्सैन्धवखिल्यवत्प्रविभक्तः सञ्जलादौ चन्द्रप्रतिबिम्बवदिह कार्यकरणे प्रविष्ट इवासीत्सोऽयं शारीरः क्षेत्रज्ञ आत्मा जलाद्यपगमे चन्द्रप्रतिबिम्बस्य चन्द्रैकत्ववत्कार्यकरणेषु स्वकारणे विलीनेषु सत्सु भूतमात्रासंसर्गरहितः प्राज्ञेन निरतिशयपरिपूर्णज्ञानरूपेण परमार्थेन स्वाभाविकेन स्वेनात्मना परंज्योतीरूपेणाविद्यासाक्षिणा सम्परिष्वक्तोऽत्यन्तमेकीभूतः सन् ॥२१॥ एवं सुषुप्तिमुपेयुषः पुरुषस्य विशेषविज्ञानाभावे स्वाभाविकात्मत्वमेव हेतुर्न स्वयंज्योतिष्ट्वाभाव इति दृष्टान्तेनोपपादनान्नात्मनः कामादिवत्स्वयंज्योतिष्ट्वमस्वभाव इति प्रासङ्गिकं परिसमाप्येदानीं प्रकृतं रूपं स्पष्टीकरोति तद्वाऽअस्येति यस्मादयं सुषुप्तौ परमात्मना सहैक्यापत्त्या सर्वात्मा संवृत्तस्तस्मादस्यात्मनः तदेतत्पूर्वप्रकृतं रूपं स्वरूपं वक्ष्यमाणलक्षणम् कीदृशं तदित्यपेक्षायां कामकर्मभयशोकहीनमिति विशेषणचतुष्टयेन विशिनष्टि । छन्दः कामोऽतिक्रान्तोऽस्मात्तदतिच्छन्दः कामवर्जितम् । न विद्यते शोकोऽन्तरे मध्ये यस्य तदशोकान्तरं शोकशून्यम् । सुषुप्तौ विक्षेपकाज्ञानाभावात्कूटस्थमेवात्मरूपमवतिष्ठतऽइत्यर्थः । एवमाविद्यककामादिरहितमात्मस्वरूपं प्रत्यक्षतः प्रदर्श्येदानीं तद्धेतुभूतकर्माख्याविद्यासम्बन्धरहितत्वमप्यात्मनः सुषुप्तौ प्रत्यक्षमित्याह अत्र पितेत्यादिना । न केवलं शुभकर्मसम्बन्धातीत आत्मा किं तर्ह्यशुभैरप्यत्यन्तघोरैः कर्मभिरसम्बद्ध एव सुषुप्तौ वर्ततऽइत्याहात्र स्तेन इत्यादिना । षोडशमाषपरिमितं कांचनं सुवर्णं तावत्ततोऽधिकं वा ब्राह्मणस्यापहर्ता स्तेनः । शूद्रायां ब्राह्मणाज्जातो निषादः तस्मात्क्षत्रियायां जातः पुल्कसः पुल्कस एव पौल्कसः । ब्राह्मण्यां शूद्राज्जातो जात्या चण्डालः चण्डाल एव चाण्डालः । श्रमणः परिव्राट् तापसो वानप्रस्थः । अनन्वागतमिति रूपविषयो नपुंसकनिर्देशः । हृदयशब्दो बुद्धिवचनः शोकशब्द इह कामवाची ॥२१॥ कामकर्मादिवत्सुषुप्तौ विशेषविज्ञानाभावान्न स्वयंज्योतिष्ट्वमात्मनः स्वभाव इति चोदिते स्त्रीपुम्परिष्वङ्गदृष्टान्तेनैकत्वापत्तिवशाद्विशेषविज्ञानाभावो न स्वयंज्योतिष्ट्वाभावादिति समाधिरुक्तः तत्र चार्थाद्विशेषाभावादेव विशेषविज्ञानाभाव इत्यपि सूचितम् तदिदानीं चोद्यानुवादपूर्वकमतितरां स्पष्टीकर्तुं प्रवर्तते यद्वै तन्नेत्यादिना तत् तत्र सुषुप्तावात्मा नैव पश्यतीति यज्जानीषे तत्तथा न मंस्थाः यतस्तत्तत्र स्वरूपचैतन्येन सर्वसाक्षित्वात्पश्यन्नेव सन् द्रष्टव्यं पदार्थजातं न पश्यतीत्यपि सम्भवतीति स्वरूपदर्शनं विशेषादर्शनं च प्रतिज्ञायतऽइत्यर्थः । पश्यन्नेवास्तऽइत्यस्यां प्राथमिकप्रतिज्ञायां तावद्धेतुमाह न हीति कूटस्थचिन्मात्रस्य स्वरूपभूता या दृष्टिः तस्या विनाशो न विद्यते अग्निस्वभावभूतौष्ण्यस्येव तस्माज्जाग्रत्स्वप्नवत्सुषुप्तावप्यात्मा स्वयंज्योतिरेवेत्यर्थः अविनाशित्वमपरिणामित्वम् तस्माद्विनाशहेतुभूतपरिणामहीनत्वात् । विशेषविज्ञानाभावप्रतिज्ञायां हेतुमाह न त्विति तत्र द्वितीयं प्रमातृस्वरूपं साभासान्तःकरणलक्षणं न त्वस्ति । तत आत्मस्वरूपादन्यच्चक्षुरा-

दिलक्षणं न ह्यस्ति यत्पश्येत्प्रमाता प्रमाणेन । तथा च स्वरूपचैतन्यस्य सत्त्वेऽपि (सचेपि Cod.) प्रमातृकरणविषयकृतवाद्विशेषदृष्टेस्तेषां च सुषुप्तावभावात्तत्कार्यविशेषदृष्टेरप्यभावः अतो विशेषविज्ञानाभावो नात्मनः प्रकाशाभावकृत इति स्वयंज्योतिष्ट्वं तस्यावधार्यतऽइत्यर्थः ॥२३॥ एवं यद्वै तन्न पश्यतीत्यादिविस्तरेणोक्तरूपस्य प्राज्ञेनात्मना सम्परिष्वक्तस्यात्मनः स्वरूपोपसंहारार्थमाह सलिल इति सलिल-इव सलिलः सलिलवच्छुद्धः अनेन विजातीयसम्बन्धशून्यत्वमुक्तम् । सजातीयभेदव्युदासायैक इति विशेषणम् । यस्मात्सजातीयविजातीयभावस्य द्रष्टव्यस्याभावस्तस्मादकारकस्वभाववा[द्]द्रष्टेति पूर्णात्मकं ज्योतिरभिधीयते　द्रष्टेति पदच्छेदे उक्तविशेषणद्वयोपलक्षितस्यात्मनो जडत्वशङ्कावारणार्थं द्रष्टेति विशेषणम् । सजातीयविजातीयभेदरहितत्वेऽपि धर्मधर्मिभावलक्षणः स्वगतो भेदः स्यादित्याशङ्क्य तन्निवृत्त्यर्थमद्वैत इति विशेषणम् द्विधा इतं द्वीतं द्वीतस्य भावो द्वैतं तन्न विद्यते यस्मिन्सोऽद्वैत एकारसः । इदानीमत ऊर्ध्वं विमोक्षायैव ब्रूहीति यत्पुनःपुनः पृष्टं तस्योत्तरमुक्तवान्मुनिः एष ब्रह्मलोक इति एष सुषुप्त्यवस्थामापन्नः प्रत्यगात्मा ब्रह्मलोकः लोकनं लोकः ब्रह्मैव लोको ब्रह्मलोकः स्वयंज्योतीरूपं ब्रह्मैव । एषास्य विज्ञानमयस्य सुषुप्तौ परमात्मैक्यमापन्नस्य परमा उत्कृष्टा सम्पद्विभूतिः । परमो मोक्षलक्षणो लोकः स्वयंज्योतिःस्वभावो लोकशब्दस्य मुख्यवृत्तिविषयः स्वाभाविकः । परमः स्वरूपानुभवलक्षणो मुख्यो निरतिशय आनन्दः पूर्णानन्दः । किंच वस्तुतो नास्त्येवात्मसुखातिरिक्तं वैषयिकमपि सुखमित्याह एतस्यैव ब्रह्मानन्दस्य मात्रां कलाम् अन्यानि अविद्यया ब्रह्मणोऽन्यत्वेन परिकल्पितानि ब्रह्मादिस्तम्बपर्यन्तानि भूतान्युपजीवन्ति उपभुञ्जते ता[illegible]नन्दीनि भवन्तीत्यर्थः ॥३१॥ मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमुत्तरोत्तरशतगुणितातिशयशालिनां परब्रह्मानन्दावयवानां प्रतिपादनद्वारेणावयविनं निवृत्तगणितभेदमनतिशयं ब्रह्मानन्दं दर्शयितुमुत्तरा श्रुतिः प्रवर्तते तत्र तावत्परमां काष्ठां गतस्य मानुषानन्दस्य स्वरूपमाह । भोगलक्षणावयवैराध्यात्मिकैः राद्धः संसिद्धः । समृद्धो बाह्यैश्चोपभोगसाधनैः स्रक्चन्दनालङ्कारादिभिः सम्पन्नः । आनन्दानन्दिनोरभेदादेवंविधः पुमानानन्द इति निर्देशः ॥३२॥ पितृणां दक्षिणमार्गानुयायिनाम् । श्राद्धपिण्डपितृयज्ञादिकर्मभिः पितृतोषणद्वारा जितो लोको यैस्ते यद्वा जिता लोका येषामिति जितलोकाः ॥३३॥ ये अग्निहोत्रादिश्रौतकर्मणा देवलोकं प्राप्नुवन्ति ते कर्मदेवाः ॥३४॥ स्वाभाविकदेवानाम् मनुष्यादिसर्गस्य प्रवृत्तेः प्रागेव ये देवत्वं प्राप्ताः ते आजानदेवा उच्यन्ते ते तु सूक्ष्मव्यापिशरीरधारिणो महात्मान इत्यर्थः । इदानीमाजानदेवेषूक्त आनन्दः तदुपास्त्यधिकारिणा आजानदेवानन्दात्प्राक्तनानन्देषु जातवैराग्यस्याजानदेवाद्यानन्देषु सतृष्णस्य मनुष्यदेहऽएव जीवतः श्रोत्रियस्यापि समान एवेत्याह यश्चेति अर्थज्ञानान्तमेकशाखाविषयमध्ययनं यस्यास्ति स श्रोत्रियशब्देनोच्यते (पाणि° ५. २. ८४.) । वृजिनं पापं पापरहितः कृत्स्नवेदोक्तकारित्वात् । अकामहतः आजानदेवावधिपूर्वानन्देषु वितृष्णाः । एवमुत्तरत्रापि श्रोत्रियाणां पूर्व[illegible] वैराग्यमुत्तरोत्तरानन्देष्वभिलाषश्चेत्युभयं तत्तदानन्दसाम्यप्रयोजनं तत्तदुपासकानामिति द्रष्टव्यम् । श्रोत्रियस्य चेहानन्दोपदेश उपास्योपासकयोस्तुल्यानन्दप्रदर्शनद्वारा परब्रह्मविदस्तदानन्दलाभप्रदर्शनार्थमित्यभिप्रायः ॥३५॥ उपास्येन्द्रादिनिवसतिभूमौ तदुपासके च । देवानां सृष्ट्यादिभूतानां यष्टव्यानां निसर्गसिद्धदेवापेक्षयाप्युत्कृष्टानां लोकः स्थानं तस्मिन् ॥३६॥ गन्धर्व-

लोके तदुपासके च । गार्गीब्राह्मणेऽपि (६. ६. १.) देवलोकानां गन्धर्वलोकेष्वेव श्रोतप्रोतभाव उक्तस्तथैवात्रापि देवलोकानन्तर्यं गन्धर्वलोकस्य युक्तम् ॥३७॥ प्रजापतिलोको विराट्शरीरम् तदुपासके च ॥३८॥ विराडानन्दः शतगुणीकृतो हिरण्यगर्भस्य तदुपासकस्य चैक आनन्दः । ब्रह्मलोको हिरण्यगर्भात्मा तस्मिन् । पूर्वं सलिल इत्युपक्रम्य मात्रामुपजीवन्तीत्यन्तेन (क° ३१.) कार्यकारणविनिर्मुक्तो यः प्रत्यगात्मा निरतिशयानन्दः परिपूर्णः प्रतिज्ञातः स एव स यो मनुष्याणामित्यारभ्य स एक ब्रह्मलोकऽआनन्द इत्यन्तेन प्रतिपादितस्तस्येदानीमुपसंहारमाह एष वितृष्णश्रोत्रियप्रत्यक्षो निरतिशयानन्दो ब्रह्मलोक एतदमृतमिदं मुख्यं मोक्षस्वरूपम् ॥३९॥ तत्र तद्यथेत्यारभ्य (क° १९.) एतदमृतमित्यन्तं (क°.३९.) वाक्यजातं सुषुप्तिविषयं तथा च सुषुप्तिं प्रविष्ट आत्मा स इदानीं संसाररूपदार्ष्टान्तिकप्रदर्शनार्थं जाग्रद्भूमिं प्रापयितव्यः सुषुप्तौ दार्ष्टान्तिकसम्बन्धस्यात्यन्तं स्पष्टयितुमशक्यत्वादित्यभिप्रेत्यात्मनः सुषुप्तिस्थानाज्जागरितस्थानप्राप्तिमाह स वाऽइति । सम्यक्प्रसीदत्यस्मिन्निति सम्प्रसादः सुषुप्तिस्थानम् । बुद्धान्ताय जागरणाय ॥४०॥ ननु कुतोऽस्य मुनेर्भयं किं वक्तृत्वासामर्थ्यादुत्तराज्ञानाद्वेत्याशङ्कायां नैतदुभयमस्य भयकारणं सर्वज्ञत्वात् किंत्वयं राजा मेधाविवांल्कामप्रश्नव्याजेन मोक्षफलकज्ञानलक्षणं मदीयं सर्वस्वं ग्रहीष्यतीत्येतद्भयकारणमित्येतदाह मेधावीति अन्तेभ्यः प्रश्ननिर्णयावसानेभ्यः उत् अरौत्सीत् आवृणोत्पुनःपुनरवरोधं कृतवान् ॥४०॥ ननु किंज्योतिरेवायमित्याद्युक्ताः प्रश्ना आदित्यज्योतिरित्यादिभिर्निर्णीताश्चेत्किमनिर्णीतमुद्दिश्यात ऊर्ध्वं विमोक्षायैव ब्रूहीति राज्ञः प्रश्न इति चेत् सत्यम् यद्यपि पूर्वं सहेतुकौ संसारमोक्षौ मुनिनोक्तौ तथापि तत्र या चात्मनः स्वप्नजागरणयोः संचरणोक्तिः सा सर्वा तस्य लोकद्वयसंचरणरूपसंसारदृष्टान्तार्थैवोक्ता या पुनस्तस्य सम्प्रसादोक्तिः सा तु मोक्षदृष्टान्तार्थेत्येवममन्यत राजा अतो दार्ष्टान्तिकजिज्ञासया अत ऊर्ध्वमिति प्रश्न उपपद्यते । तत्र स अणिमानमित्यारभ्य इति नु कामयमान इत्यन्तो (७. २. ८.) ग्रन्थ उभावन्तावनुसंचरतीत्यादौ (क° १८.) सूचितसहेतुसंसाररूपदार्ष्टान्तिककथनपरो बोध्यः अथाकामयमान इत्यारभ्य (७. २. ८.) आ शारीरकब्राह्मणसमाप्तेः ससाधनमोक्षरूपदार्ष्टान्तिककथनपर इति सामान्यसंगतिः । इदानीं स्वप्नाज्जागरणप्राप्तिवल्लोकाल्लोकान्तरं गच्छत्यात्मेत्यस्यार्थस्य सुखप्रतिपत्त्यर्थं तावदाह स यत्रेति स प्रकृतः शिरःपाण्यादिमान्देहो यस्मिन्काले अणिमानमणोर्भावं कार्श्यं न्येति नितरामतिशयेन एति गच्छति प्राप्नोति । उपतपतीत्युपतपन्ज्वरादिरोगः । ततः कथं शरीरं विमुञ्चतीत्यपेक्षायां दृष्टान्तमाह आम्रं फलम् उडुम्बरं वा फलं पिप्पलं वा फलम् । यस्मिन्फलं रसेन बध्यते तद्बन्धनं वृन्तम् । शरीरे स्थूले भवः शारीर आत्मा लिङ्गोपाधिको लिङ्गदेह एव वात्मप्रकाशितः । पुनर्वारं वारं प्रतिन्यायं प्रतिगमनं यथागतं तथा प्रतियोनि योनिं-योनिं प्रति स्थानविशेषं प्रति विद्याकर्मपूर्वसंस्कारवशाद्द्रवति गच्छति । यथा स्वप्नाज्जागरितं ततः स्वप्नमिति पुनःपुनः पुमान्प्रतिपद्यते तथैव पुनःपुनर्देहाद्देहान्तरमिति प्रतिपादनार्थः पुनःशब्दः । प्राणाय प्राणव्यूहायैव प्राणानां स्थानविशेषविन्यासेनावस्थानाय देहान्तरग्रहणाय ॥४१॥ इदानीं लोकाल्लोकान्तरं गच्छत्यात्मेत्यस्यार्थस्य सुखप्रतिपत्त्यर्थं दृष्टान्तमाह अनः शकटं सुष्ठु भृशं वा समाहितमुलूखलमुसलशूर्पभाण्डादिगृहोपकरणेनान्नाद्येन च सम्पन्नं भाराक्रान्तं सत् उत्सर्जन्नानाविधं शब्दं कुर्वद्यायाटकेन । एवमेवायं शारीरः शरीरे स्थूले भव आत्मा लिङ्गोपाधिकः

स्वप्नबुद्धान्ताविव जन्ममरणाभ्यां कार्यकरणसंयोगवियोगलक्षणाभ्यामिहलोकपरलोकानुसंचारी सन्प्राज्ञेन परेणात्मना स्वयंज्योतिःस्वभावेनान्वारूढोऽधिष्ठितोऽवभास्यमान उत्सर्जन् मरणकाले मर्मकृन्तनसम्भूतवेदनपीडितमानसो हिक्किकालक्षणं शब्दं कुर्वन्याति गच्छति । आत्मज्योतिषावभास्यमाने लिङ्गे प्राणप्रधाने गच्छति सति तदुपाधिक आत्मा गच्छतीव न तु परमार्थतो निरुपाधिक आत्मा गच्छति ॥४२॥ नन्वस्य मुमूर्षोः कुतो देहान्तरं यदसौ गच्छेत् तत्कर्तुरभावात् न तावत्तत्स्वकृतं स्यात् देहेन्द्रियवियुक्तस्य तन्निर्माणेऽसामर्थ्यात् न चान्यकृतं राज्ञो गृहनिर्मातृभृत्यादिवत् अस्य देहनिर्मात्रन्यासम्भवादिति शङ्कायां स्वकर्मोपार्जितान्येव भूतानि तत्कर्मप्रेरितानि तद्विद्याकर्मपूर्वप्रज्ञानुसारतः शुभमशुभं वा देहं कृतकर्मोपभोगार्थं कृत्वा प्रतीक्षन्ते इत्येवं समाधास्यमानेऽर्थे दृष्टान्तमाह । उग्रा जातिविशेषाः यद्वा उग्रे हिंस्रे कर्मणि राज्ञा नियुक्ताः क्रूरकर्माण उग्राः । प्रत्येनसः एनः पापं तद्वानिह एनःशब्देनोच्यते तथा च एनं-एनः पापिनं-पापिनं प्रति शासनार्थं नियुक्ताः प्रत्येनस उग्रेभ्यो भिन्नाधिकाराः । सूताः ब्राह्मण्यां क्षत्रियाज्जाताः संकरजातिविशेषा रथवाहनकोविदाः । ग्रामण्यो ग्रामनेतारः । आवसथैः प्रासादगोपुरतोरणादिभिः प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्ते । एवं ह किल एवंविदं कर्मफलवेदितारं संसारिणं सर्वाणि भूतानि पञ्च भूतानि शरीरकर्तॄणि करणानुग्रहीतॄणि चादित्यादीनि संसारिकर्मप्रयुक्तानि कृतैरेव कर्मफलोपभोगसाधनैः शरीरादिभिः प्रतीक्षन्ते स्वात्मनि देहाद्याकारपरिणते आत्माभिव्यक्तिं काङ्क्षन्ते इदं ब्रह्म भोक्तृ कर्तृ चास्माकमायात्यादरेण वदन्तः संसारिणि जीवेऽसंसारिब्रह्मशब्दप्रयोगस्तु तस्य वस्तुतो ब्रह्माभिन्नत्वज्ञापनार्थः । एवंविदमित्युक्तकर्मफलोत्क्रान्तिवेदनस्तुत्यर्थ इति ज्ञातव्यम् ॥४३॥ एवमात्मनो वर्तमानदेहं हित्वा देहान्तरं जिगमिषतस्तन्निर्माणे सहायसम्पत्तिरुक्ता इदानीं गच्छन्तं संसारिणं केऽनुगच्छन्ति अनुगच्छन्तोऽपि किं स्वातन्त्र्येण संसारिकर्मप्रयुक्त्या वानुगच्छन्तीति जिज्ञासायां संसारकर्मप्रेरिता एव वागादयोऽनुगच्छन्तीति निर्णेतुं तावद्दृष्टान्तमाह । राज्ञा सह गमनार्थमनाज्ञप्ता एव केवलं तज्जिगमिषाभिज्ञाः । एवंविदं कर्मफलवेदितारं संसारिणम् । अनाकारिता एव सन्तस्तत्कर्मप्रेरिताः सह गमनार्थम् । एवमात्मना सह गच्छन्तः प्राणाः स्वाश्रयेणापञ्चीकृतभूतपञ्चकेन शरीरारम्भकीभूतेन सहैव गच्छन्ति ॥४४॥१॥७॥

प्रस्तुते संसारिपवर्गनि अयं शारीर आत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्येत्यादिना (७.१.४१.) साकल्येन सम्प्रमोक्षणादि सूत्रितम् तदिदानीं कस्मिन्काले कथं वेति जिज्ञासायां सविस्तरं संसरणं वर्णयितव्यम् । अबल्यमबलभावमिव दौर्बल्यमिव नीत्य नितरामित्वा प्राप्य संमोहमिव संमूढतामिवाविवेकतामिव । आत्मानं करणस्वामिनं प्रति एते प्राणा वागादयः आभिमुख्येन सम्यक् निर्लेपतया स्वस्थानादायन्ति । स प्रकृतोऽविद्वानात्मा तेजोमात्राः तेजःशब्देन भूतपञ्चकमुच्यते मीयन्ते विषया याभिस्ता मात्रा इति व्युत्पत्तेर्विषयप्रकाशहेतुभूतानि चक्षुरादिकरणानि मात्राः तेजसो मात्रा [illegible] रूपादिप्रकाशकानि करणानि ताः सम्यक् निःशेषमाभिमुख्येनाददान उपसंहरमाणो मृतिकाले हृदयस्थां बुद्धिमेवान्वागच्छति बुद्धावेवाभिव्यक्तविज्ञानो भवति ॥१॥ एवं हृदि करणोपसंहरणेन स्वात्मोपसंहरणे सति किं स्यादित्यपेक्षायां करणानुग्राहकनिवृत्तिनिमित्तकं रूपाद्यदर्शनं स्यादित्याह । यो भोक्तृकर्मप्रयुक्तो यावद्देहधारणं चक्षुषोऽनुग्रहं कुर्वंश्चक्षुषि वर्तते आदित्यपुरुषः स एव चाक्षुषः

पुरुषः आदित्यांशः स्वप्रयोजकभोक्तृकर्मक्षये सति यस्मिन्काले भोक्तुर्भोगेभ्यः पराङ् विमुखः सन्स्वांशिभूतदेवतारूपं प्रति आ समन्ताद्भावेन परिवर्तते अथ तदा मुमूर्षुः रूपं न जानाति ।-स्वस्य हृदये लिङ्गात्मन्येकीभाव एव मुमूर्षोरूपज्ञव्यवहारे हेतुर्न तु चक्षुरभावः । अत्र पाठक्रमो नोत्क्रान्तिक्रमाभिधायकः कस्यचित् श्रोत्राद्युत्क्रमणस्यैव प्रथमं दर्शनात् अतोऽत्रा-नियत एव क्रमः ॥२॥ इदानीं करणेषूपसंहृतेषु सत्सु निष्क्रमणसाधनीभूतो योऽन्त्यव्यापारो भवति तमाह । हृदयच्छिद्रस्य अग्रं नाडीमुखं प्रकाशते । यथा स्वप्नं प्रतिपित्सोर्जाग्रद्वासना-दानरूपेण स्वेन भासा चैतन्यज्योतिषा च करणव्यतिरेकेण हृदये वासनाप्रकाशात्मकं ज्ञानं भवतीति ज्योतिर्ब्राह्मणे श्रुतं (७. १. १०.) तथा मृतिदशायामपि तेजोमात्रादानकृतेन वासना-रूपेणात्मचैतन्यज्योतिषा च प्राप्य देहादिविषयबुद्धिवृत्त्यात्मना हृदयाग्रप्रद्योतनं भवति । उक्तप्रद्योतनेन कर्मार्जितं लोकं पश्यन्नात्मा मरणकाले हृदयात्केन मार्गेण निर्गच्छति यद्य-स्यादित्यलोकप्राप्तिनिमित्तं ज्ञानं कम वा स्यात्तदासौ चक्षुषः सकाशान्निष्क्रामति यदि ब्रह्मलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा स्यात्तदा मूर्ध्नो द्वारा निष्क्रामति तथा यथाकर्म यथा-ज्ञानमन्येभ्योवाशरीरदेशेभ्यः श्रोत्रादिभ्यः सकाशान्निष्क्रामति । न चात्रानुशब्दः क्रमाव-द्योतकः किं तु विज्ञानमयादेः प्राधान्यद्योतकः लिङ्गावभासकस्यात्मनो लिङ्गस्य चोत्क्रमणे देशकालभेदाभावात् । एवं म्रियमाणस्यार्थसिद्धमर्थमाह संज्ञामिति यथोत्क्रमणात्प्राक्स्वक-र्मानुसारिभाविदेहविज्ञानसहितो भवति तथोत्क्रान्त्यनन्तरं संज्ञानमेव विशेषज्ञानोद्भासितमेव (तामव Cod.) गन्तव्यमनुगच्छति तथा च दुःखहानिमिच्छता मरणकाले स्वातन्त्र्यार्थं तत्साध-नोपनिषद्विहितशमादौ यत्नवता भवितव्यम् किं च सर्वशुभकर्मविधायित्वेन अशुभकर्मनिषे-धित्वेन च शास्त्रस्येह कर्मभूमौ महानारम्भो दृश्यते सोऽपि मृतिकाले स्वातन्त्र्यार्थं पुण्योप-चयकर्तव्यतां दर्शयति अतस्तदपि यथाधिकारं कर्तव्यमिति प्रकरणार्थः । यदुक्तं हृदयाग्रप्र-द्योतनं तदेव स्पष्टयति स एष मुमूर्षुरात्मा ज्ञो ज्ञातृस्वभाव एव सन् सविज्ञानः पूर्वप्रज्ञा-ख्यभावनाप्रधानेन विज्ञानेन सह वर्तमानो भवति । एतच्च सविज्ञानत्वं कर्मवशादेवास्य भवति न स्वतन्त्रतः स्वातन्त्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्यः स्यान्नैव तु तल्लभ्यते तस्मात्कर्मणोद्भाव्यमानेन भाविदेहविषयकान्तःकरणवृत्त्याश्रितवासनात्मकविशेषज्ञानेन सर्वो लोकोऽन्तकाले सविज्ञानो भवतीति भावः । पूर्वं शकटवत्सम्भृतसम्भार उत्सर्जद्यातीत्युक्तं (७. १. ४२.) तत्रेदानीं किं तस्य परलोकाय प्रस्थितस्य पाथेयं शाकटिकसम्भारस्थानीयं परलोकं गत्वा यद्भुङ्क्ते तत्र शरीराद्यारम्भकं च किमिति जिज्ञासायामाह तमिति । प्रमाणादप्रमाणाद्वा जातं सम्यग्ज्ञानसंशयमिथ्याज्ञानसाधारणं संसारहेतुभूतं ज्ञानमात्रमिह विद्याशब्देनोच्यते । शास्त्रतो लोकतो वा स्वभावतो वा यद्दृष्टादृष्टार्थस्वरूपं वाङ्मनःकायसाध्यं तत्सर्वमिह कर्मशब्देनोच्यते । क्रियमाणस्य कर्मणस्तत्फलस्य च भुक्तस्य यः संस्कारो हृदि संश्रितः सा पूर्वप्रज्ञेत्युच्यते । प्राधान्यं तस्याः भुज्यमानस्य कर्मणः परिशेषरूपत्वाज्जायमानस्य मूल-त्वाच्च ॥३॥ एवं सम्भृतविद्यादिसम्भारो देहान्तरं प्रतिपद्यमानः कथं तत्प्रतिपद्यतऽइत्यत्रार्थे दृष्टान्तमाह । यथा तृणजलायुका तृणजलूका तृणस्यान्तमवसानं गत्वा अर्थात्तृणान्तरमाश्रित्यात्मा-नमात्मनः पूर्वावयवमुपसंहरति एवमेवायं पुरुषो यः प्रकृतः संसारी इदं शरीरं पूर्वोपात्तं निहत्य स्वप्नप्रतिपित्सुरिव पातयित्वा अविद्यां गमयित्वा अचेतनं कृत्वा आत्माभिमानत्यागेन

प्रसारितया वासनया अर्थाच्छरीरान्तरं गृहीत्वा आत्मानमुपसंहरति तत्रैवाहमित्यात्मभावं प्रतिपद्यते न पूर्वदेहे इत्यर्थः । एतेनैतदपास्तं यद्वदन्ति पौराणिकास्तृणजलायुकादृष्टान्ताद्देहान्तरं गृहीत्वा पूर्वदेहं मुञ्चत्यात्मेति स्थूलदेहविशिष्टस्यैव परलोकगमनमिति यस्माद्देहनिर्गमनप्रागवस्थायामेवं यथोक्ता हृदयस्था वासना विद्याकर्मनिमित्तं भाविदेहं स्पृशति जीवोऽपि तत्राभिमानं करोति पुरस्तु पूर्वदेहं त्यजतीत्येतस्मिन्नर्थे तृणजलायुकादृष्टान्तः श्रुत्या दर्शितस्तस्मात्पूर्वदेहविशिष्टस्यैव परलोकगमनमित्युक्तमिति ॥४॥ एवं जलूकावद्वासनयैव शरीरान्तरं गच्छत आत्मनस्तदारम्भकाणि पञ्च भूतानीति तद्यथा राजानमित्यादावुक्तम् (७.१.४३.) तत्र किं नित्योपात्तमेव भूतपञ्चकं पूर्वपूर्वदेहस्थोपमर्देनान्यदेहस्थमारभते किं वान्यदन्यदेव भूतपञ्चकमन्यमन्यं देहं जनयतीति संदेहे तत्तद्भूतपञ्चकोत्पत्तावपि कारणान्तरस्य मृग्यत्वान्मायायाः सर्वकारणत्वेऽपि तत्तद्देहारम्भसमये तत्तदुपादानभूतपञ्चकोत्पादकत्वे प्रमाणाभावात्प्रतिदेहारम्भं भूतपञ्चकव्यक्तिभेदे मानाभावाच्च न द्वितीयः पक्षः सम्भवतीत्यभिप्रेत्य प्रथमपक्षमेवाङ्गीकारयितुं दृष्टान्तमाह॰। तत् तत्र नित्योपात्तमेव मायामयं भूतपञ्चकं प्रतिदेहारम्भमुपादानमित्यस्मिन्नर्थे दृष्टान्तः । पेशस्कारो सुवर्णकारः पेशसः सुवर्णस्य मात्रां पूर्वरचनामपादायापच्छिद्योपमृद्य अन्यत्पूर्वस्माद्रचनाविशेषाद्भिन्नं रूपं तनुते निर्मिनोति (!) । पितृभ्यो हितं पित्र्यं पितृलोकोपभोग्यम् । ब्रह्म हिरण्यगर्भः तल्लोकोपभोग्यम् । प्रजापतिर्विराट् । यथाकर्म यथाश्रुतमन्येभ्यो भूतेभ्यः प्रेततिर्यगादिभ्यः सकाशात् शरीरं तनुते । त[illegible]देहारम्भकाण्येव भूतानि शरीरान्तरारम्भकाणि तद्वशाच्चास्य संसरणमिति भावः ॥५॥ योऽयमात्मनः संसारसम्बन्धः स वास्तवो न भवति किं त्वौपाधिक एवेति तदुपाधीन्दर्शयितुमात्मनो वास्तवं स्वरूपमाह स वाऽइति स प्रकृतः संसारी अयमविद्यातत्कार्यविनिर्मुक्तः स्वप्रकाशापरोक्ष आत्मा कूटस्थसाक्षिचिज्ज्ञातुरेवम्भूतः सोऽयमात्मा वै ब्रह्म अशनायाद्यतीतपरमात्मैवास्य संसारिणो वास्तवं रूपमित्यर्थः । ब्रह्मैव सन्नयमात्माविद्ययाब्रह्मवत्प्रतिपन्नः पुनः सम्यग्ज्ञानात्तद्ध्वंसे ब्रह्मैवावतिष्ठतऽइति भावः । इदानीं यत्प्रयुक्त एवंविधब्रह्मात्मनो बन्धस्तानुपाधीनाह विज्ञानमय इति विज्ञानं बुद्धिस्तन्मयः तत्प्रायः बुद्ध्यैक्याध्यासाद्धि तद्धर्मस्य कर्तृत्वादेरात्मन्यारोपोऽतस्तत्प्रायः अस्मिन्प्रकरणे सर्वोऽपि मयट् प्रायार्थो न तु विकारार्थः । सर्वमयत्वं साधयति तद्यदेति यदा [य]स्मिन्समयेऽयमात्मा गृह्यमाणविषयादिमयः तदा इदंमय इत्यर्थः तथा कार्येणानुमीयमानभावनात्मकविषयादिमयोऽदोमयः तदिति पदं सर्वमयत्वसाधनोपसंहारार्थं तदिदं सर्वमयत्वं सिद्धमित्यर्थः ॥६॥ पुण्यपापयोरेव संसारासाधारणकारणत्वमिति यदिदमुक्तं तत्पूर्वपक्षीकृत्येदानीं कामस्यैव संसारा[सा]धारणकारणत्वमिति सिद्धान्तमभिप्रेत्याह अथो इति कामो विषयादित्सा तन्मयः । न चैवं सत्यविद्यायाः संसारहेतुत्वानुपपत्तिः तस्याः स्वतस्तद्धेतुत्वानुपपत्तेरिष्टत्वात् सहकार्यपेक्षायां तु कामस्यैव प्राधान्यात्काम एवासाधारणं कारणं संसारस्य उक्तयोः पुण्यापुण्ययोरपि तदभावेऽनुदयात् । कया प्रणाड्या कामस्य संसारणत्वमित्यपेक्षामाह स यथाकाम इति । क्रतुर्नामाध्यवसायो यदनन्तरा क्रिया प्रवर्तते काम एव ईषदभिलाषमात्रे यस्मिन्विषयेऽभिव्यक्तो भवति स तस्मिन्विषयेऽविहन्यमानः स्फुटीभवन्क्रतुत्वमापद्यते । तदीयं फलमभिसम्पद्यते प्राप्नोति तस्मात्सर्वमयत्वे काममयत्वं हेतुः ॥७॥ ब्राह्मणोक्तेऽर्थे मन्त्रसंमतिमाह अस्योद्भूताभिलाषस्य लिङ्गं सप्तदशाव-

यदात्मकं मनःप्रधानत्वान्मनःशब्दवाच्यं यद्वा प्रमात्रादिसाक्षी येन साक्ष्येण मनसा लिङ्ग्यते तन्मनो लिङ्गमिति तल्लिङ्गं मनो यत्र यस्मिन्गन्तव्ये फले निषक्तं निश्चयेन सक्तं भवति तन्मनः तत् गन्तव्यफलरूपापन्नं सत्कर्मणा फलारम्भकीभूतकर्मणा सह तदेव गन्तव्यं फलमेति गच्छति । तथा च यदभिलाषायत्कर्म कृतवांस्तत्र मनोऽभिषङ्गवशात्तेन कर्मणा सहास्य तत्फलप्राप्तिरिति वाक्यार्थे स्थिते कामो मूलं संसारस्येत्यवगतम् । ननु कामप्रधानः संसरति चेत्कर्मफलभोगानन्तरं कामाभावान्मुक्तिरेव भविष्यतीत्याशङ्कायामाह प्राप्येति कर्मफलभोगसमाप्तिं गत्वा तस्माल्लोकाद्भुक्तभोगादागच्छति अस्मिन्मनुष्यलोके कर्मकरणार्थम् । इदानीमज्ञानकारणकः काम एव संसारासाधारणकारणमित्युक्तमुपसंहरति इति एवं नु खलु कामयमानः संसरतीति शेषः । एवमियता प्रबन्धेनावस्थाद्वयदृष्टान्तस्य दार्ष्टान्तिकभूतः संसारः सकारणको दर्शितः इदानीं योषिदालिङ्गनेनेव पुंसः सुषुप्तिं प्राप्तस्यात्मनः कामादिहीनं रूपं मोक्षदृष्टान्तभूतं यदतिच्छन्दोवाक्येनोक्तं (७. १. २१.) तस्य दार्ष्टान्तिकभूतं सोपायं मोक्षस्वरूपमाह अथाकामयमान इत्यादिना । किमेवंविधस्य भवतीत्यपेक्षायां मोक्ष एव भवतीत्याह न तस्मादिति अत्रैव ब्रह्मस्वरूपऽएव समवनीयन्ते सम्प्रलीयन्ते स चाकामयमानो जीवन्नेव ब्रह्मैव सन्सुषुप्त्यवस्थायामिवापरिच्छिन्ननिर्विशेषाद्वैतालुप्तचिज्ज्योतिःस्वभाव एव सन्ब्रह्म प्राप्नोति ॥८॥ उक्तोऽर्थे मन्त्रमुदाहरति । प्रमुच्यन्ते समूलतो विशीर्यन्ते । मर्त्यो मरणधर्मापि सन्नमृतोऽमरणधर्मा भवति अत्रास्मिन्नेव शरीरे स्थितः सन्ब्रह्मभूतो भवति ब्रह्मभावापत्तिलक्षणो मोक्ष एवामृतत्वं तच्च ज्ञानिशरीरे एव कामनिवृत्त्याभिव्यज्यते स्वतः सिद्धमेवेत्यर्थः ॥९॥ ननु विदुषः सर्वात्मविद्ययात्ममात्रत्वेन प्राणादिषु बाधितेष्वप्यसौ देहे चेद्वर्तते ततोऽस्य पूर्ववद्देहित्वाद्विद्यावैयर्थ्यमिवेत्याशङ्कायां तन्निराकरणार्थं तावद्दृष्टान्तमाह । अहिः सर्पो यस्यां त्वचि नितरां लीयते सा सर्पत्वगहिनिर्ल्वयनी सा यथा मृता अहिदेहवियुक्ता सर्पाश्रये प्रतिक्षिप्ता सर्पेणानात्मभावेन परित्यक्ता सती वर्तेत सर्पश्च यथा तत्र निर्गमनप्रवेशौ कुर्वन्नपि निर्ममाहंकृतिको वर्तते एवमिदं शरीरं स्थूलं सूक्ष्मं च सर्पस्थानीयेन मुक्तेन परित्यक्तं मृतमिव सम्बन्धवर्जितं शेते विद्यया सम्बन्धहेतोरविद्यायाः समुच्छेदात् । अथ सकारणस्य देहस्य त्यागादयमात्मा आत्मस्वरूपापन्नो विद्वाननस्थिकः अस्थीति मरणधर्मकशरीरगतमज्जास्थिस्नावमांसमेदोऽसृक्त्वचामुपलक्षणम् । अशरीरः अविद्वद्दृष्ट्या शरीरस्थोऽपि स्वदृष्ट्याशरीर एव । अत एव प्राज्ञः साक्षी । स चैतद्विशेषणविशिष्टो विद्वान्ब्रह्मैव अशनायादिवर्जितः परमात्मैव लोक एव स्वप्रकाश एव । यः पूर्वं मुनिना विमोक्षार्थः कामप्रश्नो वरो दत्तः स यद्यपि सहेतुको बन्धमोक्षार्थलक्षणो दृष्टान्तपूर्वको जनकयाज्ञवल्क्या[ख्या]यिकारूपधारिण्या श्रुत्या सविस्तरो निर्णीतः तथापि मोक्षसाधनात्मज्ञानहेतुसंन्यासस्य पूर्वमसकृदुक्तत्वेऽपि ज्ञानोत्पत्त्यन्तरङ्गभूतशमादीनां तत्रानुक्तत्वात्तैः सह भूयोऽपि संन्यासो विद्यासाधनत्वेन विधातव्य इति वक्तव्यशेषसम्भवात्सहस्रदानमेव राजा स्वजिज्ञासानिवृत्त्यभावं सूचयन्प्रतिजज्ञे न सर्वस्वम् ॥१०॥ अथाकामयमान इत्यादिब्राह्मणेन ज्ञानादेव मुक्तिरिति यः संक्षिप्तोऽर्थस्तस्यैव विवरणार्थान्श्लोकानुदाहरति । अणुः स्थूलादिनिखिलविशेषातीतत्वात् विततो वितीर्णो विस्तृतः दुर्विज्ञेयत्वादनन्तात्मावगाहित्वाद्वा पुराणः चिरंतनो नित्यश्रुतिप्रकाशितत्वात् पन्था ऐकात्म्यज्ञानलक्षणो मार्गः मांस्पृष्टः शास्त्राचार्योक्तितो मामनुप्राप्तः यद्वा तृतीयार्थे द्वितीया मया स्पृष्टो

लब्धः मयैव चानुवित्तः अनुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानतालक्षणा निष्ठाप्राप्तिर्भुजेरिव तृप्त्यवसानता तथा चानुवित्त उक्तलक्षणां निष्ठां प्रापितः । न केवलं मयैवायं मार्गोऽनुवित्तः किं त्वन्येऽपि प्रज्ञावन्तो सदा निर्द्वन्द्वा जीवन्त एव शरीरपातानन्तरं तेन ब्रह्मविद्यामार्गेण स्वर्गं परमानन्दलक्षणं मोक्षप्रकरणं न तु त्रिविष्टपलक्षणं लोकं स्वप्रकाशमपिगच्छन्ति ॥११॥ तस्मिन्ब्रह्मज्ञानलक्षणे मोक्षमार्गे शुक्लमतिसंशुद्धं ब्रह्मेत्याहुः अपरे शरद्व्योमवद्ब्रह्म नीलम् अन्ये तु वह्निज्वालावत्पिङ्गलम् केचित्पुनर्वैडूर्यमणिवद्धरितम् अपरे तु जपाकुसुमवल्लोहितम् । वस्तुतस्तूपासनामार्ग एवैवंविधो न मोक्षमार्गः उपासको हि नाडीद्वारा आदित्यलोकं प्रतिनिष्क्रामति नाडीनां च शुक्लस्येत्यादिना (७. १. २०.) अनेकवर्णात्मकस्योक्तत्वादुपास्यस्यादित्यादिब्रह्मणः शुक्लादिविशिष्टो मार्ग उपासनामार्ग एव न तु ब्रह्मविद्यालक्षणमोक्षमार्गः निर्गुणश्रुतिविरोधात् तस्मादाप्तकामतया निर्गुणब्रह्मात्मविषयकज्ञानमे[व] मोक्षमार्ग इत्येतदाह एष पन्था इति यथा तैलादिविलये प्रदीपस्य ज्वलनानुपपत्तौ तेजोमात्रे निर्वाणमिष्यते तथा स्थूलसूक्ष्मात्मकस्य सर्वस्यैव कामस्य ज्ञानात्प्रक्षये सति प्रवृत्त्यनुपपत्तौ अत्रैव प्रत्यगात्मनि कार्यकरणानामेकीभावेनावसानमित्येष पन्था ज्ञानमार्गो ब्रह्मणा परमात्मस्वरूपेण ब्राह्मणेन त्यक्तसर्वैषणेनानुवित्तः पूर्वोक्तनिष्ठां प्रापितः । एवं विप्रतिपत्तिनिराकरणपुरःसरं मोक्षमार्गं निश्चित्य तेन धीरा अपियन्तीत्यत्रोक्तं निगमयति तेनैतीति अन्योऽपि ब्रह्मवित्तेन ब्रह्मविद्यामार्गेण मोक्षमेति प्राप्नोति । ब्रह्मवित्त्वे हेतुस्तैजस इति तेजसि शुद्धसत्त्वे भवस्तैजसः आत्मप्रवणबुद्धिः । तैजसत्वे हेतुः पुण्यकृदिति इष्टापूर्तलक्षणं पुण्यं कर्म करोतीति पुण्यकृत् ॥१२॥ प्रस्तुतज्ञानमार्गस्तुत्यर्थं मार्गान्तरं निन्दति । अन्धमदर्शनात्मकं तमो मोहादिपदवाच्यं संसारनियामकम् । सम्भवनं सम्भूतिः तस्या अन्या असम्भूतिः तामव्याकृताख्यां प्रकृतिं कारणमविद्याकामकर्मबीजभूतामदर्शनात्मिकाम् । सम्भूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः आसक्ता उपनिषदर्थानपेक्षिणः ॥१३॥ एवं यदि तेऽदर्शनात्मकं तमः प्रविशन्ति तर्हि का क्षतिरित्याशङ्कायामाह । असुर्यास्तीव्रदुःखसमन्विताः (°र्योस्तिवदुः Cod.) असुषु रमन्तऽइति व्युत्पत्तेः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः तेषां स्वभूता असुर्या निकृष्टाः । अबुधा आत्मावगमवर्जिताः ॥१४॥ न केवलं ब्रह्मविदो विद्यया कृतकृत्यत्वे श्रुतिसम्प्रतिपत्तिरेव किं तु स्वानुभवसंवादो (दा Cod.) ऽप्यस्तीत्याह तदेवेति तदेव तत्रैव प्रसिद्धेऽनेकानर्थसंकुले देहे एवाज्ञानदीर्घनिद्रारहिताः सन्तो वर्तमाना वयं तद्ब तदानीमेव कथंचित्कल्मषक्षयात्तद्ब्रह्म भवामो वर्तामहे अहो कृतार्था वयमित्यभिप्रायः । ब्रह्मभावज्ञाने सति कृतार्थत्वं श्रुत्यनुभवाभ्यामुक्त्वा तदभावे दोषमाह यद्ब्रह्म भवामस्तद्ब्रह्मतत्त्वं न चेद्विदितवन्तः तर्ह्यहमवेदी अविद्वान्भवेयमिति शेषः वेदनं वेदः सोऽस्यास्तीति वेदी न वेदी अवेदी तदा महती अनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिर्विनशनं स्यात् ॥१५॥ तदेवं मार्गान्तरनिन्दाव्याजेनात्मज्ञानमार्गः स्तुतः पुनरपि तत्स्तुत्यर्थमेव तन्निष्ठस्य कायक्लेशराहित्यं दर्शयति । शरीरमनुसंचरत् अनुसंज्वरेत् शरीरोपाधिकृतदुःखमनु दुःखी स्यात् ॥१६॥ न केवलमात्मरसिकस्य कायक्लेशराहित्यं किं तु कृतकृत्यता चास्तीत्याह । अस्मिन्प्रसिद्धे संदेहे तेजोऽबन्नादिभिर्भूतैः संदिह्यते समुपचीयते इति संदेहो देहः तस्मिन्देहे आध्यात्मिकादीनामर्थानामतिसंकराद्गुणप्रधानभावनपृथक्करणयोग्यतया

गहने दुर्विज्ञेये जलसूर्यवत्प्रविष्ट आत्मा यस्य ब्राह्मणस्य यद्वा येन ब्राह्मणेनानुवित्तोऽनुलब्धः प्रतिबुद्धः अहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेन साक्षात्कृतश्च वर्तते स ब्राह्मणो विश्वकृत् विश्वस्य कर्ता कृत्स्नपूर्णः । तस्य सर्वोऽपि प्रपञ्चो लोक आत्मा सोऽपि सर्वस्य प्रपञ्चस्य लोक एवात्मैव ॥१७॥ किं च विदुषो विहिताकरणादिप्रयुक्तं भयं नास्तीति विद्यां स्तोतुं मन्त्रान्तरमाह । एतं हृदयस्थमात्मानं देवं द्योतनात्मकं यथाकर्मानुरूपं सर्वप्राणिकर्मफलानां दानादेव भूतभव्यस्य कालत्रयस्य स्वामिनमञ्जसा साक्षात्पश्यति अहं ब्रह्मास्मीत्यात्मत्वेन विजानाति तदानीं न विचिकित्सति न संशयानो भवति अहमस्मि सर्वात्मा परं ब्रह्मेति निश्चितमतिर्भवति ॥१८॥ इदानीमस्यात्मनोऽमृतत्वं सर्वाधिष्ठानत्वेन साधयति । पञ्चजनाः पञ्चजनसंज्ञकाः गन्धर्वाः पितरो देवा असुरा रक्षांसि यद्वा प्राणादयो वाक्यशेषादिति न्यायेन (क° २१.) प्राणश्चक्षुः श्रोत्रमन्नं मनश्चेति पञ्चजनाः । आकाशश्च अव्याकृताख्यः ॥१९॥ नन्वीश्वरोऽपि कालावच्छिन्नो न कालत्रयं प्रत्यस्येश्वरत्वसम्भव इत्यत आह अयं संवत्सराख्यः कालः स्वावयवैरहोभिरहोरात्रैः कार्यजातं परिच्छिन्दन्यस्मादीश्वरादर्वागेव परिवर्तते न तमपि परिच्छिनत्ति एवमीश्वरस्य समस्तविक्रियाहेतुका[ला]तिक्रमणोक्त्या जन्मादिविकाराः प्रतिषिद्धा वेदितव्याः एवम्भूतं तदीश्वरात्मकं ज्योतिषामादित्यादीनामपि ज्योतिरवभासकममरणधर्मकमायुरित्येवं हि निश्चितं देवा आ सामस्त्येन उपासते अनुसंदधते ॥२०॥ पूर्व[त]स्मिन्मन्त्रे पञ्चजनप्रतिष्ठाभूतो ब्रह्मविदमृतो भवतीत्युक्तम् कथं पुनरेवंविधब्रह्मविद्योदयः स्यादित्यपेक्षायां तदुदयप्रकारमाह । प्राणः स्वस्यानात्मत्वजडत्वाभ्यां सत्तास्फूर्त्योः स्वतोऽसम्भवा[त्प्रत्यग्]स्वप्रकाशात्मज्योतिषावभास्यमान एव स्फूर्तिं कुरुते चक्षुरादीनामपि ब्रह्मप्रकाशक्लृप्ते (कृत्येशे Cod.) ऽनधिष्ठितानां काष्ठलोष्टादिसमत्वेन दर्शनादिक्रियायामस्वातन्त्र्यात्तदवभासकमात्मज्योतिः । एवं प्राणादिव्यापारानुमितास्तित्वं तद्विलक्षणत्वेन शुद्धं प्रत्यगात्मानं ये विदुः ! निचिक्युः निश्चयेन ज्ञातवन्तः । अत एव त्वंपदार्थपरिशोधनप्रकारेण यथोक्तब्रह्मविद्योदयः स्यादिति भावः । एवंविध[ब्रह्मावाप्तौ] श्रवणादिसंस्कृतं मन एव साधनमित्याह उक्तलक्षणं ब्रह्म मनसैवाप्तव्यं प्राप्यं न साधनान्तरेण । नन्वेवमाप्तव्यादिभावेन भेदः स्यादित्याशङ्कायामाह इहावाप्तिविषये किंचिदपि नाना भेदोऽविद्याध्यारोपणव्यतिरेकेण परमार्थतो नास्ति ॥२१॥ इदानीं भेददर्शननिन्दया नानात्वाभावं द्रढयति । इह ब्रह्मणि । मरणात्पुनर्मृत्युमाप्नोति जन्ममरणसंसारचक्रे परिभ्रमति । द्वैताभावे कथमनुद्रष्टव्यमित्यपेक्षायामाह मनसैवेति । अप्रमयमप्रमेयं ध्रुवं नित्यमविचालि ॥२२॥ उक्तं ध्रुवत्वं [स्पष्टयति] । धर्माधर्मादिलक्षणं [रजो] विगतं यस्मात्स विरजः । [आकाशादव्याकृताख्यात्]परो व्यतिरिक्तः । न जायत इत्यजः । महान्परिणामतो महत्तमः । ध्रुवोऽविनाशी । प्रज्ञां वाक्यार्थज्ञानलक्षणामशेषशोकाकाङ्क्षाशान्तिरूपां परमपुरुषार्थहेतुभूतां तत्त्वमस्यादिवाक्यवशां (? शा Cod.) कुर्वीत सम्पादयेत् । बहुशास्त्राध्ययने दोषमाह विग्लापनं विशेषेण ग्लानिकरं श्रमजनकम् ॥२३॥ पूर्वं तदेव सदित्यादिना मन्त्रेण (क° ८.) स यत्रायमित्यादिब्राह्मणेन च (क° १.) कामादिहेतुसहितो बन्धो मुमुक्षूणां हेयत्वेनोक्तः यदा सर्वऽइत्यादिमन्त्रेण (क ९.) अथाकामयमान इत्यादिब्राह्मणेन (क° ८.) च तेषामेवाभिलषितः सम्यग्धीहेतुको मोक्ष उक्तः पुनश्च तत्स्वरूपमणुः पन्था इत्यादिश्लोकैः (क° १२.) प्रपञ्चितम् इदानीं विविदिषावाक्येन ब्रह्मात्मनि कृत्स्नस्य

वेदस्य काम्यराशिवर्जितस्य विनियोगकथनार्थमस्मिन्नध्यायऽउक्तं सफलमात्मज्ञानं स वा ऽअयमात्मेत्यादिना एषां लोकानामसम्भेदायेत्यन्तेनानूद्यते । सशब्देन ज्योतिर्ब्राह्मणोक्तविज्ञानमयलक्षणं जीवं परामृश्य तस्य विरजः पर इत्यव्यवहितेन [illegible] शब्देन श्रुतिर्निर्दिशति । सर्वस्य ब्रह्मेन्द्रादेः । नन्वेवं शासनाल्लोकवद्धर्माधर्मसंयोग ईश्वरात्मनः स्यादित्यत आह स नेति । उदकप्रवाहविष्टम्भकः सेतुः विधरणः विधारकः यथा सेतुः सीमादिव्यवस्थां विधारयति तथा वर्णाश्रमादिव्यवस्थाया विधारयिता । एषां भूरादिब्रह्मलोकान्तानां लोकानामसम्भेदाय (सं)भेदः सांकर्य तदभवाय ॥२४॥ यदर्थमेषास्मिन्नध्याये वाचो विग्लापनं हि तदिति श्लोकान्तेन (क° २३.) विहिता सफला ब्रह्मविद्यानूदिता तं [illegible]वर्जितस्य कृत्स्नस्य कर्मकाण्डस्यास्यां विद्यायां परम्परया विनियोगं दर्शयति तमेतमिति । वेदो मन्त्रब्राह्मणात्मकोऽनूच्यते गुरूच्चारणानन्तरं पठ्यतऽइति वेदानुवचनं वेदाध्ययनम् । विविदिषन्ति वेदितुमिच्छन्ति । अनाशकेन कामानशनलक्षणेन । मुनिर्मननशीलो योगी । एतमेव प्रकृतमात्मानं स्वं लोकमन्तःकरणशुद्धिद्वारा आप्तुमिच्छन्तः ॥२५॥ आत्मलोकार्थिनां पारिव्राज्ये कारणमुच्यते ॥२६॥ अस्यात्मलोकस्योत्पाद्यादिविलक्षणत्वेन कर्मासम्बन्धान्न कर्म तदर्थिनानुष्ठेयमित्यभिप्रेत्याह एष नेति । ननु य एवं सर्वैषणाविनिवृत्तः स एष नेति नेत्यादिलक्षणमात्मानमात्मत्वेनावगम्य तद्रूपेणैव वर्तते तस्य कर्मानारभमाणस्य ब्रह्मविदः किं स्यादित्यपेक्षायामाह अतः पापमिति इत्येवमुभे द्वे पापपुण्यफले कष्टहर्षरूपे तं न तरत इति शेषः । लोकः पुरुषार्थो न मीयते न हिंस्यते । ब्रह्मविदः कर्मकार्यसम्बन्धाभावान्न कर्मसम्बन्ध इति तात्पर्यार्थः ॥२७॥ एवमुक्ते ब्रह्मविद्याफले मन्त्रं संवादयति । तस्यैव महिम्नः त्वम्पदार्थस्य पदवित् पदस्य वेदिता पद्यते गम्यते ज्ञायतऽइति पदं स्वरूपम् तत्पदार्थभूतं ब्रह्मैव तस्य पदस्य वेदिता स्यात् मुमुक्षुर्वाक्यार्थज्ञानार्थं तत्पदवेदिता भवेत् । तं महिमानं स्वरूपं पदं ज्ञात्वा । तर्ह्येतत्पदसाक्षात्कारः कथं स्यादित्यपेक्षायामाह तस्मादेवंविदिति यस्मादेवमकर्मसम्बन्ध्येष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणस्तस्मात्कारणादेवंवित् आत्मा कर्मतत्फलसम्बन्धशून्य इत्यापाततो जानन् प्रथमं आन्तः संसारदुःखेन तप्तः खिन्नो वा उपरतबाह्येन्द्रियव्यापारः अनन्तरं दान्तोऽन्तःकरणतृष्णातो निवृत्तः उपरतः सर्वैषणाविनिर्मुक्तो विधिना त्यक्तसर्वकर्मा संन्यासी तितिक्षुर्जीवनविच्छेदहेतुतिरिक्तशीतोष्णादिद्वन्द्वसहिष्णुः श्रद्धावित्तः श्रद्धा आस्तिक्यबुद्धिरेव वित्तं साधनं यस्य स इन्द्रियान्तःकरणाचलनरूपव्यापारव्यावृत्त्या तदैकाग्र्यवान्भूत्वा आत्मन्येव स्वे कार्यकरणसंघाते एवात्मानं प्रत्यक्चेतयितारं पश्येत्साक्षात्कुर्यात् सर्वं समस्तमेनमात्मानं पश्यति नान्यदात्मव्यतिरिक्तं किमपि पश्यति । सर्वं पाप्मानं कृताकृतलक्षणं सर्वात्मदर्शनरूपवह्निना तपति भस्मीकरोति । विगता जिघत्सा अत्तुमिच्छा यस्मात्स विजिघत्सः ॥२८॥ एवं निरुपाधिकब्रह्मज्ञानात्कैवल्यं फलमुक्तम् सम्प्रति सोपाधिकब्रह्मध्यानादभ्युदयफलं दर्शयिष्यंस्तत्स्वरूपमाह स वाऽइति । अन्नादः सर्वभूतस्थः सन् सर्वान्नात्ता । वसु धनं भोगसाधनं सर्वप्राणिकर्मफलं ददातीति वसुदानः । अनया कण्डिकया रातेर्दातुः परायणमित्युक्तस्यैव (६. १. ३४.) कर्मफलस्योपसंहारः कृत इत्यपौनरुक्त्यं द्रष्टव्यम् ॥२९॥ इदानीं सफलं विद्यां मन्त्रब्राह्मणाभ्यामुपदिष्टामुपसंहरति । अभयं वै अविद्याकार्यरहितमेव ब्रह्म परमात्मतत्त्वं त्वं प्राप्तोऽसि । राजा

तु आत्मीयमशेषविद्यालाभं द्योतयितुं सर्वस्वदानं प्रतिजज्ञे ॥३०॥ इदानीं तिष्ठमानस्य तद्विदः परायणमित्युक्तस्यैव (६. १. ३४.) ब्रह्मैकत्वज्ञानफलस्योपसंहारार्थमिमा श्रुतिः प्रवर्तते । य इह स वाऽएष महानित्यादिनान्ते संक्षिप्तोऽर्थः स एव सर्वोपनिषत्प्रतिपाद्यः एष एव सर्वस्यास्य शास्त्रस्य तात्पर्यार्थः ॥३१॥२॥७॥

पूर्वमागमप्रधानेन मधुकाण्डेन ब्रह्मात्मतत्वं निर्धारितम् पुनस्तस्यैव तत्वस्यास्तित्वमुपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा जयपराजयप्रधानजल्पन्यायतो निर्धारितम् तदेव चास्मिन्नध्याये शिष्याचार्यसम्बन्धेन तत्वनिर्णयप्रधानेन वादन्यायेन सविस्तरं विचार्योपसंहृतम् अथेदानीमस्य निगमनस्थानीयं मैत्रेयीब्राह्मणमारभ्यते । यद्वा मधुकाण्डे मैत्रेयीब्राह्मणेनागमबलान्मुक्तिसाधनभूता संन्याससहिता आत्मविद्योक्ता सैवाधुना न्यायप्रधाने मुनिकाण्डेऽपि मुक्तिहेतुत्वेन न्यायतो मन्तव्येत्येतदभिप्रायेणेदं ब्राह्मणं प्रवर्तते । ब्रह्मवादिनी ब्रह्मवदनशीला । स्त्रिया उचिता या प्रज्ञा गृहप्रयोजनान्वेषणलक्षणा सैव विद्यते यस्यां सा स्त्रीप्रज्ञैव ॥१॥ अवृतत् अवर्तयत् वर्तितवत्यसि ॥५॥ आशितमन्नदाननिमित्तं पायितं पेयदाननिमित्तं धर्मजातम् । अयं च लोकः इदं च जन्म परश्च लोकः प्रतिपत्तव्यं च जन्म ॥११॥ अत्रैव प्रज्ञानघने न प्रेत्य संज्ञास्तीति वदन्भगवान्मा मां मोहान्तं मोहमध्यमापीपदत् आपादितवान् संमोहितवान् अतोऽहमिदमात्मतत्वमुक्तलक्षणं नैव विजानामि ॥१४॥ उच्छित्तिरुच्छेदो विकारः अनुच्छित्तिधर्मा अविक्रियः । तर्ह्यात्मनः कथं संसारादिविक्रियासम्बन्ध इत्यत आह मात्रासंसर्गः चक्षुरादिकरणसम्बन्धः मीयन्ते विषया याभिस्ता मात्रा इति विषयप्रकाशहेतुभूतानि चक्षुरादिकरणानि मात्राः ॥१५॥ यद्वै तन्न पश्यति इदं कण्डिकाष्टकं ज्योतिर्ब्राह्मणे (७. १. २३.) व्याख्यातम् ॥१६॥ एवमविद्योत्थद्वैते सत्येव विशेषविज्ञानमात्मनस्तदभावे तु तदभाव इत्यन्वयव्यतिरेकाभ्यामौपाधिकमात्मनो विशेषविज्ञानमिति दर्शयितुं न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तमिति (क° १६-२३.) व्यतिरेको दर्शितः इदानीमन्वयमाह यत्र वाऽअन्यदिवेत्यादिना यस्मिन्नेव जागरिते स्वप्ने वा अन्यदिवात्मनो वस्त्वन्तरमिवाविद्याप्रत्युपस्थापितं भवेत् तस्मिन्नवस्थाविशेषे अन्योऽविद्याकल्पिताद्वस्त्वन्तराद्भिन्नमिवात्मानं मन्यमानोऽन्यत्स्वस्माद्विभक्तं स्वाविद्योत्थं वस्त्वन्तरं पश्येत् ॥२४॥ एतावता एतेभ्यो भूतेभ्य इत्यत्र (क° १३.) सूचितो भूताविद्योपाधिकः संसार इति व्याख्यातम् इदानीं महद्भूतमनन्तमपारमित्यादि (क° १३.) सूचितं ब्रह्मदर्शनं व्याख्यास्यन्भूतोपाध्यभावेन विशेषविज्ञानलक्षणसंसाराभाव इति पुनर्व्यतिरेकमाह यत्र त्वस्येत्यादिना । अमृतत्वममृतत्वसाधनमेतावदेव यदेतत्ससंन्यासमात्मपरिज्ञानं न त्वधिकं किंचिदस्ति ॥२५॥ इदानीं याज्ञवल्कीयकाण्डप्रवर्तकगुरुशिष्यपरम्पराकथनाय वंशप्रतिपादकं कण्डिकात्रितयमारभ्यते । प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुः ॥२६॥३॥७॥

तदेवं यद्विज्ञानं केवलममृतत्वसाधनं स आत्मा निरुपाधिकोऽशनायाद्यतीतो यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरो नेति नेत्यादिलक्षणः काण्डद्वयेन निर्धारितः अधुना तस्यैवोपाधिवैशिष्ट्यमापन्नस्य प्रमाणप्रमेयादिव्यवहारविषयतामुपगतस्याभ्युदयफलानि क्रममुक्तिफलानि कर्मसमृद्ध्यर्थानि चोति त्रिविधोपासनानि पूर्वत्रानुक्तानि वक्तव्यानीत्येतदर्थं खिलकाण्डं प्रवर्तते । पूर्वत्रानुक्तं वक्तव्यत्वेन परिशिष्टं खिलमिति हि खिललक्षणम् । तत्र

सर्वोपास्त्यङ्गभूतान् ओंकारो दमो दानं दयेति पदार्थान्विधित्सन्तो श्रुतिः पूर्वमात्मयाथात्म्यविज्ञानप्रसिद्धये मिथ्याभूतकार्यकारणसम्बन्धमाश्रित्य तात्पर्येण व्याख्यातस्य ब्रह्मणः शुद्धस्वरूपं पूर्वोपात्तकार्यकारणसम्बन्धस्य हेयत्वं द्योतयितुमनुवदति पूर्णमद इति मन्त्रेण । अद इति परोऽक्षाभिधायि सर्वनाम पूर्णमिति वा दान्तेत्यादिना (पा° ७.२.२७.) कर्तरि निष्ठान्तं निपातितम् अदः परोक्षं ब्रह्म पूर्णमाकाशवद्व्यापि निरन्तरं निरुपाधिकं चेत्यर्थः अनेन लक्ष्यं तत्पदार्थं दर्शयित्वा लक्ष्यं त्वंपदार्थं दर्शयति पूर्णमिदमिति यदिदं नामरूपोपाधिविशिष्टव्यवहारापन्नं तदपि केवलेन स्वेन निरुपाध्यात्मना परमात्मस्वरूपेण पूर्णं व्यापि न तूपहितेन विशिष्टेन रूपेण पूर्णम् । एवं लक्ष्यौ तत्त्वंपदार्थावुक्त्वा तावेव वाच्यभूतौ कथयंस्त्वंपदार्थस्य पूर्णत्वे हेतुं दर्शयति पूर्णात्कारणात्मनोऽविद्यासहायात्पूर्णमेवोदच्यते उद्रिच्यते उद्गच्छति । सम्प्रत्यैक्यज्ञानफलमाह पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमादाय गृहीत्वा आत्मस्वरूपैकरसत्वमापाद्य अविद्याकृतं भूतमात्रोपाधिसंसर्गजं अन्यत्वावभासं विद्यया तिरस्कृत्य पूर्णमेवानन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यते । अधुना ध्यानविधानार्थं तस्मिन्विनियुक्तं मन्त्रं तावदाह ओं खं ब्रह्मेति   इह ध्यानसाधनत्वेनैव ओंकारस्योपदेशः अत्र ब्रह्मपदमोंकारालम्बनस्य विशेषस्याभिधानम् तस्य ब्रह्मशब्दस्य बृहद्वस्तुसामान्यवाचिनः सर्वत्र प्रसक्तौ खमिति विशेषणम् नीलमुत्पलमितिवत्खब्रह्मणोः सामानाधिकरण्यान्नयोरेकत्वसिद्धिः तथा च यथा विष्णवङ्काङ्कितायां शिलादिप्रतिमायां विष्णुबुद्धिः क्रियते तथोंकारे खब्रह्मणः उपासनं (खंब्रह्मेणः त्युपा° Cod.) कर्तव्यमिति वाक्यार्थः । अस्मिन्मन्त्रे खशब्दाद्भौतिकखप्रतीतिर्मा भूदित्यभिप्रायेण मन्त्रविनियोजकं ब्राह्मणं प्रवर्तते खं पुराणमित्यादि पुराणं चिरंतनं खं परमात्माकाशमिति यावत् तथा च खमिति विशेषणेन बृहदर्थसामान्यवाचिनो ब्रह्मशब्दस्यानादिकारणचैतन्यविषयत्वं निश्चितमित्यर्थः । नन्वस्य कारणब्रह्मणोऽतीन्द्रियत्वात्कथमोंकारे तदुपास्यमित्यतः कल्पान्तरमाह वायुरं खमिति हेति वायुर्विद्यते यस्मिंस्तद्वायुरं खं भौतिकाकाशं तदवच्छिन्नं ब्रह्मोंकारालम्बनम् भौतिकाकाशे खशब्दप्रयोगस्य बहुलमुपलम्भादिति कौरव्यायणीपुत्र उक्तवान् । एवं सति कारणब्रह्माकाशब्रह्मपक्षयोरुभयोरपि श्रौतत्वाविशेषादोंकारे दृष्टिद्वयमैच्छिकमिति भावः । एवमोंकारप्रतीकं कार्यकारणोभयविधं ब्रह्म ध्येयमित्युक्तम् । इदानीं प्रणवस्य यथोक्तब्रह्मवाचकत्वं वेति पक्षान्तरमाश्रित्योंकारवाच्यत्वेन ब्रह्म ध्येयमित्यभिप्रेत्योंकारस्य वेदत्वनिरुक्त्या ब्रह्मवाचकत्वं साधयति वेदोऽयमिति यस्माद्यद्वेदितव्यं प्रकाश्यमानमभिधीयमानं ब्रह्म तदनेनोंकारेण वेद साधकः पुमान्विजानाति उपलभते तस्माद्वेदोऽयमोंकार इति ब्राह्मणा विदुरित्यन्वयः । यद्यपि ब्रह्मात्मशब्दा ब्रह्मणो वाचकाः सन्ति तथापि श्रुतिप्रामाण्यादोंकारो ब्रह्मणो नेदिष्ठमभिधानमतिप्रियतमं नामेत्यवगम्यते । इतरस्यापि वेदत्वं तु वेदितव्यवेदनहेतुत्वादेव तस्माद्विशिष्टोऽयमोंकारो ब्रह्मोपास्तिसाधनत्वेन प्रतिपत्तव्य इत्यर्थः ॥१॥१॥८॥

एवमाभ्यन्तरं सर्वोपास्तिसाधनमोंकार इत्युक्तम् इदानीं बाह्यं दमादि साधनत्रयं विधातव्यम् तेनापि विशिष्ट एव बाह्याभ्यन्तरशुचिः सन्सर्वोपास्तिष्वधिक्रियतेऽतस्तद्विधानायार्थवादमाह । प्रजापतौ विराडात्मनि पितरि ॥१॥ स्वभावतोऽदान्ता यूयमतो दाम्यत दान्ता भवत ॥२॥ स्वभावतो लुब्धा यूयमतो दत्त ॥३॥ एवं क्रूरा यूयं हिंसादिपरा अतो दयध्वं

प्राणिषु दयां कुरुत । शिक्षेदुपादथात् प्रजापतेरनुशासनमस्माभिः कर्तव्यमिति मतिं कुर्याद-धुनातनो मनुष्य इत्यर्थः ॥४॥२॥८॥

नन्वेवं दमादियुक्तस्यापि शरीरपाते तु नामृतत्वमाध्यात्मिकवाय्वादिप्रतिबन्धादित्यत आह वायुरनिलमिति । ममामृतस्य सत्यस्य शरीरपाते सति तत्स्थोऽध्यात्मिकप्राणरूपो वायुरनिलं बाह्यं वायुममृतमाधिदैविकं प्रति गच्छत्विति शेषः । एतद्वायुग्रहणमन्येषामपि देवानामुपलक्षणार्थम् अन्येऽपि देवाः स्वां-स्वां प्रकृतिं गच्छन्त्वित्यर्थः । नन्वेवं देहस्थदेवताना-मप्रतिबन्धकत्वेऽपि देहस्यैव मूर्तमतां गतस्य प्रतिबन्धकत्वान्नामृतत्वसिद्धिरित्यत आह भस्मा-न्तमिति शरीरमपि भस्मान्तं सत्पृथिवीं प्रति यातु भस्मान्तलिङ्गात्कर्मिण एवैतदुपस्थानं न संन्यासिनामिति गम्यते तेषां दाहासम्भवादित्यर्थः । एवमुपस्थानमुक्त्वाग्निरूपस्थानमाह ओं३ क्रतो स्मर क्लिबे (!) स्मरेति ओमिति क्रतोऽइति चाग्निदेवतासम्बोधनार्थावेव शब्दौ । अव-तीत्योमीश्वरः सर्वरक्षकः स च जाठरप्रतीकत्वेनोपासितत्वादग्निः । अग्निश्च क्रतुसाध्यत्वेन क्रतु-रित्युच्यते । तथा च हे ओं क्रतो अग्ने स्मर इति इष्टां गतिं जिगमिषता मया स्मरणे त्वं नियुज्यसे अन्तकाले हि त्वया स्मरणे कृते सति इष्टा गतिः प्राप्यतेऽतः प्रार्थ्यसे । क्लिबे (!) कृताय लोकाय स्मर । पुनरप्यग्निविषयं प्रार्थनान्तरमाह अग्ने नयेति । वयुनानि प्रज्ञानानि ज्ञानवाचि वयुनपदं कर्मपूर्वप्रज्ञयोरुपलक्षणार्थम् । सुपथा शोभनेनोत्तरेण शुक्लेन मार्गेण पुनरावृत्तिरहितेन । राये धनाय कर्मफलभोगाय । जुहुराणं कुटिलं वञ्चनात्मकं देवयानप्राप्ति-प्रतिबन्धकमेनः पापं वियोजय विनाशय । वयं तु देहावसानकालेऽन्यत्कर्तुमशक्ता इदानीं तुभ्यं बहुतमां नमउक्तिं नमस्कारवचनं समर्पयेम ॥१॥३॥८॥

इदानीं सोपाधिकस्य ब्रह्मणो निरुपाधिकस्वरूपेऽनधिकृतानां ध्यानभेदोक्त्यर्थमुत्तरं ग्रन्थजातं प्रवर्तते । तत्र प्रजापतिर्देवादीनामनुशास्तेति सामान्यतः श्रवणाद्दक्षादिष्वपि प्रजा-पतित्वशङ्का मा भूदिति प्रजापतिं विशिनष्टि एष इति । हृदयशब्दस्तत्स्थबुद्धिविषयः यस्मि-न्हृदये शाकल्यब्राह्मणे किंदेवतोऽस्यामित्यादिना (६. ९. २१.) नामरूपकर्मणां दिग्विभागेनो-पसंहार उक्तस्तद्धृदयमेष एव देवाद्यनुशास्ता प्रजापतिर्न तु दक्षादिरित्यर्थः । उक्तहृदय-स्योपास्यत्वार्थं ब्रह्मत्वमाह एतद्ब्रह्मेति एतद्धृदयं ब्रह्म ज्ञेयजातस्य हृदयेन व्याप्तत्वात् अतो हृदयं ब्रह्मेत्येव दीर्घकालादरनैरन्तर्येण भावेनोपास्यमित्यर्थः । ननु कथं हृदयस्य प्रजापतिना सहैक्यमुच्यत हृदयस्य सूक्ष्मत्वात्प्रजापतेश्च सर्वात्मकत्वादित्यत आहैतत्सर्वमिति एतद्धृदयं सर्वं सर्वात्मकं शाकल्यब्राह्मणोक्तरीत्यैव । प्रजापतिरपि अन्नब्राह्मणोक्तरीत्या (४. ३. १.) सर्वा-त्मकः अत उभयोः सर्वात्मकत्वाद्युक्तं तयोरैक्यवचनमित्यर्थः । एवमुपास्यत्वेन सिद्धस्य हृद-यस्य स्तुत्यर्थं तन्नामाक्षरैकदेशोपासनमाह तत्त्र्यक्षरमित्यादिना । अस्मै हृदयब्रह्मणे स्वा इन्द्रियाणि अन्ये च विषयाः शब्दादयः स्वं-स्वं कार्यमभिहरन्ति हृदयं च भोक्त्रर्थं स्वविष-यसुखादिकमभिहरति तस्माद्धृदयनामाक्षरत्वेन सम्बद्धं हरतेराहरतिकर्मणो हृ इत्येतद्रूपं यो वेद अस्मै विदुषे स्वा ज्ञातयोऽन्ये च सम्बन्धिनोऽभिहरन्ति बलिमिति वाक्यशेषः । य-स्मात्पूर्वोक्ताः स्वा अन्ये च हृदयब्रह्मणे स्वं-स्वं वीर्यं ददन्ति ददन्ते प्रयच्छन्ति हृदयं च भोक्त्रे तद्ददाति तस्माद्ददतेर्दानकर्मणो द इत्येतद्रूपं हृदयनामाक्षरं सम्बद्धं यो वेद अस्मै विदुषे स्वाश्चान्ये च स्वं-स्वं वीर्यं ददन्ति प्रयच्छन्ति दद दाने इत्यस्य धातोरात्मनेप-

दिनोऽपि भौवादिकस्य व्यत्ययेन परस्मैपदं बोद्धव्यम् । यस्मात्स्वा अन्ये च विषया हृदयब्रह्म प्रति यन्ति हृदयं च भेद्यं प्रत्येति तस्मादिणो गत्यर्थस्य यमित्येतद्रूपं हृदयनामाक्षरत्वेन सम्बद्धम् । तथा च हृदयनामाक्षरैकदेशोपासनादपि विशिष्टं फलं प्राप्नोति किमु वक्तव्यं हृदयस्वरूपोपासनादिति हृदयस्तुत्यर्थमेव नामाक्षरोपासनोपन्यासो न तु नामाक्षरोपासनानि त्रीणि हृदयस्वरूपोपासनमपरमिति चत्वार्यत्रोपासनानि विवक्षितानीति बोद्धव्यम् ॥१॥४॥८॥

एतस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनान्तरं विधित्सन्ती श्रुतिराह तद्वै तदेतदेव तदासेति अत्र प्रथमस्तच्छब्दो हृदयाख्यब्रह्मपरामर्शी वैशब्दः स्मरणार्थः तदुच्यते विधान्तरेणेत्येवं हृदयाख्यब्रह्मण एव विधान्तरप्रतिज्ञार्थो द्वितीयस्तच्छब्दः किं तद्विधान्तरमित्यपेक्षायां वक्ष्यमाणं विधान्तरमेतदेवेत्यनेन शब्देनोक्ता तस्य पूर्वोक्तहृदयब्रह्मणा सामानाधिकरण्यप्रदर्शनार्थस्तृतीयस्तच्छब्दः तथा च तद्वै हृदयं ब्रह्म एतदेव वक्ष्यमाणप्रकारं तदासेति पर्यवसितोऽर्थः । कोऽसौ वक्ष्यमाणः प्रकार इत्यपेक्षायामाह सत्यमेवेति यद्ब्रह्म हृदयात्मनोक्तं तत्सत्यमेव सच्च त्यच्च सत्यं पञ्चभूतात्मकमाधिदैविकं तत्त्वं हिरण्यगर्भात्मकमित्यर्थः । तस्य स्वरूपकथनपूर्वकं तद्विज्ञानफलमाह स य इति महद्यक्षं महत्त्वात् यक्षं पूज्यम् प्रथमजं सर्वस्माद्विराडादेः संसारिणः सकाशात्पूर्वमेवोत्पन्नम् । यथा सत्येन ब्रह्मणा इमे लोका आत्मसात्कृतास्तद्वत् । कैमुतिकन्यायेन फलान्तरमाह इन्नु इत्थं यथा सत्येन ब्रह्मणानृतात्मा शत्रुर्जितस्तथानेनाप्युपासकेनासौ शत्रुर्जितोऽसत् अस्तु भवतु तथा च लोका येन जितास्तस्य शत्रुजये किं वक्तव्यमित्यर्थः । कथमीदृग्विधज्ञानादुपासकस्येदं फलमित्यपेक्षायामुक्तोपासकस्यानुवादपूर्वकं हेतुमाह य एवमित्यादि सत्यं हीत्यन्तम् हि यस्मात्सत्यमेव ब्रह्माकरोत्या लोकजिच्छत्रुजिच्च तस्मात्तदुपासकस्याप्युपासनानुरूपमुक्तं फलं युक्तमेवेत्यर्थः ॥१॥५॥८॥

इदानीं सत्यस्य ब्रह्मणः स्तुत्यर्थं तस्य प्रथमजत्वं साधयति आप एवेति । अग्निहोत्रादिकर्मसु हूयमाना आहुतयः पयःसोमादिका अत्राप्शब्देनोच्यन्ते तथा च यथोक्ता आपो जगतो बीजभूता अव्याकृतात्मना अवस्थिता एवेदं सर्वं नामरूपात्मकं विकारजातं जगत् अग्रे सृष्टेः पूर्वमासुः नान्यत्किंचिद्विकारजातमासीदिति वाक्यार्थः । इदानीमप्शब्दोपलक्षितान्मूलकारणात्सूत्रोत्पत्तिमाह उक्तलक्षणाः पुनरापो भूतान्तरसहिताः सत्यं सूत्रात्मकं हिरण्यगर्भं सृष्टवत्यः एतेन सत्यस्य ब्रह्मणः प्रथमजत्वं सिद्धमित्यर्थः । एतस्य पूर्वोपक्रान्ताद्धृदयसत्यब्रह्मणः सकाशाद्भिन्नत्वशङ्कां वारयति सत्यं ब्रह्मेति । एवं सत्यस्य ब्रह्मणः प्रथमजत्वं निरूप्य तस्यैव महत्त्वं साधयति ब्रह्म प्रजापतिमिति तत्सत्यं ब्रह्म हिरण्यगर्भाख्यं प्रजापतिं विराजमसृजत तथा च सर्वजगदात्मकविराडात्मस्रष्टृत्वात्सूत्रात्मकं सत्यं ब्रह्म महदित्यर्थः । इदानीं तस्य यक्षत्वं निरूपयितुमुत्पन्नाद्विराडात्मनः सकाशादिन्द्रादिदेवतासृष्टिमाह प्रजापतिर्देवानिति । देवतासृष्टिश्रुतिरपि महत्त्वसाधनायेति वा व्याख्या बोध्या ॥१॥ अथ यक्षत्वमाह यस्मादेवं सृष्टास्ते देवाः पितरमपि विराजमतीत्य सत्यं ब्रह्मोपासते इत्यतो यक्षं तदित्यर्थः तथा चैवं सिद्धं प्रथमजं महद्यक्षं सत्यं ब्रह्म सर्वात्मनोपास्यमिति भावः । हृदयब्रह्मवदस्यापि सत्यस्य ब्रह्मणः स्तुत्यर्थं वर्णत्रयात्मकं नामाह तदेतदिति । अक्षरस्वरूपदर्शनानुरूपं फलं कथयितुं तेषां स्वरूपं तावदाह सकारमकारौ सत्यममृतं मृत्युरूपाभावात् मध्यतो

मध्ये वर्तमानं तीत्यक्षरमनृतं मृत्युरूपं मृत्वनृतयोस्तकारसामान्यात् तदेतदनृतं तीकाराख्यं (!) मृत्युरूपं सत्येन सकारामकारलक्षणेन परिगृहितं व्याप्तमन्तर्भावितम् अतस्तस्याकिंचित्करत्वात्सत्यभूयमेव सत्यबाहुल्यमेव भवति । एवं सत्यबाहुल्यमनृतस्य मृत्योरकिंचित्करत्वं च विज्ञानतः फलमाह इत्थं ज्ञानिनमनृतं कदाचित्प्रमादोक्तं न हिनस्ति स्वफलदानेन न व्याप्नोति बुद्धिपूर्वकस्यानृतस्य विदुषोऽपि बाधकत्वादित्यर्थः ॥२॥ एवं विशिष्टसत्योपास्तिमुक्त्वेदानीं तस्यैवाध्यात्मिकाधिदैविकसंस्थानभेदवैशिष्ट्यं कल्पयित्वा तदुपास्त्यर्थमाह यत्सत्यं ब्रह्म पूर्वोक्तं तदसौ स प्रसिद्धः कोऽसौ आदित्यः कः पुनरादित्यः य एष पुरुषो मण्डलाभिमानी यश्च दक्षिणेऽक्षिणि पुरुषः । ननु प्रदेशभेदवर्तिनोः स्थानभेदादुपासनाभेदः स्यादित्याशङ्कायामाह तावेतावादित्याक्षिस्थौ पुरुषावेकस्यैव सत्यब्रह्मणः स्थानविशेषौ यस्मात्तस्मादन्योऽन्यस्मिन्नादित्यश्चाक्षुषे चाक्षुषश्चादित्ये प्रतिष्ठितौ अतस्तयोर्भिन्नत्वेनेव प्रतिभासमानत्वेऽपि वस्तुतो भेदाभावान्नोपासनाभेद इत्यर्थः । कथं तावन्योऽन्यस्मिन्प्रतिष्ठिताविर्त्यपेक्षायां परस्परोपकार्योपकारकभावेनेत्याह आदित्योऽस्मिंश्चक्षुष्यध्यात्मे रश्मिभिः प्रकाशेनोपकुर्वन्प्रतिष्ठितः अयं च चाक्षुषः प्राणैश्चक्षुरादिभिरिन्द्रियैर्मण्डलं प्रकाशयन्नमुष्मिन्नादित्येऽधिदैवते प्रतिष्ठितः । इदानीं ज्ञातारिष्टः पुमान्कथं नाम हितमाचरेदित्यभिप्रायवती श्रुतिश्चक्षुरादित्यपुरुषप्रसङ्गागतमरिष्टदर्शनमाह सोऽस्मिञ्छरीरे भोक्ता विज्ञानमयो यस्मिन्काले प्राणास्त्यक्ष्यन्भवति तदा स विज्ञानमयश्चाक्षुष एतद्रविमण्डलं शुद्धमेव विरश्म्येव केवलं चन्द्रमण्डलमिव पश्यति उत्क्रमणकाले चाक्षुषादित्ययोरदृष्टनिबन्धनोपकार्योपकारकभावनिवृत्तेरौदासीन्येनावतिष्ठमानत्वादित्यर्थः । संसारिणः परलोकहिताय यत्नकर्तव्यत्वे सावधानार्थं प्रासङ्गिकमरिष्टदर्शनं प्रदर्श्येदानीं प्रकृतयोः परस्परोपकार्योपकारकत्वमुक्तं निगमयति नैनमिति एते रश्मय एनं चाक्षुषं पुरुषं न प्रत्यायन्ति स्वामिकर्मानुरोधेन पूर्वमागच्छन्तोऽपि तत्कर्मक्षये पुनर्नावर्तन्त इत्यर्थः ॥३॥ एवं स्थानद्वयसम्बन्धि सत्यब्रह्मणो ध्यानमुक्त्वा तस्यैव प्रत्येकं व्याहृत्यवयवकत्वेन ध्यानमाह कण्डिकाद्वयेन । प्रतितिष्ठत्यनयेति प्रतिष्ठा पादौ । सुवरिति वर्णविशेषेणैते अक्षरे द्वे । तस्य व्याहृत्यवयवस्य सत्यब्रह्मणोऽहरित्युपनिषद्रहस्यं नाम येनाभिधानेनाभिधीयमानं ब्रह्म लोकवदभिमुखी त्रति तदिदं नामेत्यर्थः उपास्तिफलमाह आङ्पूर्वस्य हन्तेर्जहातेर्वा अस् प्रत्यये कृते ह्रस्वत्वे चोपसर्गस्य टिलोपे च सति सिद्धमहरित्येतद्रूपं हन्तर्जहातेश्चेति यो वेद स पाप्मानं हन्ति च त्यजति चेत्यर्थः ॥४॥ एवमाधिदैविकं व्याहृत्यवयवं ब्रह्मोक्त्वाध्यात्मिकमाह ॥५॥६॥८॥

तस्यैव सत्यब्रह्मणोऽशेषपापध्वंसकमुपासनान्तरमाह विद्युद्ब्रह्मेतीति । मेघान्धकारस्य दि[illegible]खण्डनाद्विदारणाद्विद्युत् पापहेतुज्ञानान्धकारस्य विदारणाद्ब्रह्म विद्युदित्यर्थः । एनमुपासकं समस्तात्पापात् विद्यति अवखण्डयति पृथक्करोति ब्रह्मेति शेषः ॥१॥७॥८॥

उपाधीनामनेकत्वात्प्रत्येकमनेकविशेषणत्वाच्च तस्यैव प्रकृतस्य ब्रह्मणो मनउपाधिकस्योपासनं विधित्सन्ती श्रुतिराह । मनोमयो मनःप्रायो मनस्युपलभ्यमानत्वान्मनसा वोपलभ्यमानत्वाच्च (°य Cod.) मनस्यहमित्यभिमानज्ञानवत्त्वाद्वा । भाःसत्यः भा एव सत्यं स्वरूपं यस्य भास्वरः सर्वार्थावभासकमनोमयत्वादित्यर्थः । तस्य ध्यानार्थमौपाधिकं स्वरूपं कथयन्ती स्थानविशेषमाह तस्मिन्प्रसिद्धेऽन्तर्हृदये हृदयमध्ये योगिभिर्दृश्यते । इदं वौपाधिकं परिमाणं

स्वाभाविकं वानन्त्यमेवेत्यभिप्रेत्य दार्ष्टान्तिकमाह एवमयमिति । एवंविधं मनोमयं ब्रह्मोपासतस्तादृग्रूपापत्तिरेव फलम् ॥१॥८॥८॥

अथ पुनस्तस्यैव ब्रह्मणो वाङ्मयधेनुसम्बन्धेनोपासनं महाफलार्थमाह वाचमिति । वाक्शब्देनात्र वेदत्रयी ग्राह्या न तु करणम् तत्स्थानं वा तद्देवता वा तदन्यतमेषु स्वाहाकारादीनामसम्भवात् । हन्तशब्दोऽपेक्षितार्थवाचकः । स्वामिभ्यो धेनुः पय इव वाग्धेनुरेतैश्चतुर्भि स्तनैर्देवेभ्योऽन्नं क्षरति, । स्वाहावषड्भ्यां (भ्यो Cod.) हि देवेभ्यो हविर्दीयते हन्तेति हि मनुष्येभ्योऽन्नं प्रयच्छन्ति स्वधेति हि पितृभ्यः कव्यं ददति । कः पुनरस्याः प्रसूतिहेतुः सेक्ता को वा पुन स्तन्यप्रस्रवहेतुर्वत्स इत्यपेक्षायां तावाह तस्याः प्राण इति । प्राणेन हि बललक्षणेन वाक् प्रसूयते अप्राणस्य वागुच्चारणादर्शनात् तथा मनसा ह्यालोच्य वाक् स्वाहाकाराद्यर्थं क्षरति ॥१॥९॥८॥

प्रकृतस्यैव ब्रह्मणः कौक्षेयाग्निवमापन्नस्यापरोऽक्षत्वं दर्शयितुं पुनरुपासनान्तरमाह अयमग्निर्वैश्वानर इति यदिदमद्यतेऽन्नं तद्येन पच्यते स विराडात्मा प्रजापतिर्जाठरोऽग्निरित्यर्थः । तत्सद्भावे किं मानमित्यपेक्षायामाह तस्येति तस्याग्नेरन्नं पचमानस्य एष शब्दो भवति । स घोषो यथोक्तवैश्वानरसद्भावे प्रमाणमित्यर्थः । एतं वैश्वानरमग्निं प्रजापतिरूपमुपासतः फलं तु तद्भावापत्तिरेवेति द्रष्टव्यम् प्रासङ्गिकमरिष्टदर्शनमाह स यदेति सोऽत्र शरीरे भोक्ता ॥१॥१०॥८॥

एवं ब्रह्मोपासनानि कानिचित्सफलान्युक्तानि इदानीमब्रह्मोपासनानि कानिचित्फलवन्ति दर्शयति । व्याहितो व्याधियुक्तो ज्वरादिपरिगृहीतः सन् । व्याधिनाभिभूयमानस्तमनिन्दन्नविषीदंश्च संस्तपस्तप्यते मयेति बुद्धिं कुर्यादित्यर्थः । एवं चिन्तयतः किं फलं भवतीत्यपेक्षायामाह परममिति । परमं तपसोऽनुकूलं लोकं प्राप्नोति । तथोपासनान्तरमाह यं प्रेतं मामृत्विजो ज्ञातयो वारण्यं प्रत्यभिहरन्ति एतद्वै परमं तप इति मुमूर्षावस्थायां चिन्तयेत् वानप्रस्थवद्ग्रामादरण्यगमनसामान्यात् स तपोऽनुरूपं लोकं जयति । तथा पुनरुपासनान्तरमाह यं प्रेतं मां ज्ञातयोऽग्नौ प्रक्षिपन्ति एतद्वै परमं तप इति मरणात्प्रागेव चिन्तयेत् अग्निप्रवेशसामान्यात्सोऽग्निप्रवेशानुरूपं लोकं जयति । अत्र परमलोकशब्देन तत्तदुपासनयोग्यफलभेदस्य विवक्षितत्वान्नोपासनैक्यशङ्केति भावः ॥१॥११॥८॥

इदानीमस्मिन्प्रकरणे उक्तानां सर्वोपासनानां गतिमनुक्तं फलं च दर्शयितुमिदं ब्राह्मणामारभ्यते । स च वायु स्तिमितरूपस्तिर्यग्भूतोऽभेद्योऽन्तरिक्षे तिष्ठंस्तस्मै सम्प्राप्ताय विदुषे तदर्थं तत्र स्वात्मनि विजिहीते स्वात्मावयवान्विगमयति छिद्रीकरोत्यात्मानमित्यर्थः यावत्प्रमाणं रथचक्रस्य खं छिद्रं तावत्परिमाणेन छिद्रेण स विद्वानूर्ध्व ऊर्ध्वमाक्रमते उपरि गच्छति । उम्बरो वादित्रविशेषः । एवमुपर्युपरि गच्छतः कुत्र विश्राम इत्यपेक्षायां विराडात्मनीत्याह स लोकमिति ॥१॥१२॥८॥

इदानीं पुनः प्रकृतब्रह्मोपासनमेवानुवर्तयन्ती श्रुतिर्विं रमिति गुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनं विशिष्टफलकं विधातुमादावेतस्यैवोपास्यत्वनिर्णयार्थां युक्तिमाह । एकधाभूयमेकधाभावं भूत्वा गत्वा ॥१॥ अन्नप्राणयोरेकत्वेन ब्रह्मदृष्टिः कार्येत्यर्थमितिहासोक्त्या दृढयति तदेतदुक्तप्रकारेणैकत्वदर्शनं विद्वान् किल प्रातृदनामा ऋषीश्वरो दृष्टः सन्स्वपितरं प्रत्याह यथा मया ब्रह्म परिकल्पितमेवं ब्रह्म विदुषे साधु शोभनं पुत्रा किं स्वित्कुर्यात्

न किंचिदस्य कर्तव्यमिष्यतेऽनेन सर्वस्यापि प्राप्तव्यस्य प्राप्तत्वात् तथा अशोभनं वा न किंचिदपि कुर्यात् लोक इति शेषः अस्य निरस्ताशेषासाधुत्वात् । एवमन्नप्राणयोरेकत्वविज्ञानवतो न साधुकरणेन महत्त्वं नाप्यसाधुकरणेन खण्डितत्वम् किं तु तस्य कृतकृत्यत्वमेवेति पुत्रेणोक्ते सति नैतावन्मात्रविज्ञानात्कृतकृत्यता पुरुषस्य किंत्वस्ति ज्ञातव्यान्तरमित्यभिप्रेत्य पिता पुत्रं वारयतीत्याह स हेति । हस्तेन वारयन्मैवं वोच इति प्रत्यषेधयत् एनयोरन्नप्राणयोरेकधाभूयं भूत्वा कस्तु को वा विद्वान् परमतां गच्छति न कश्चिदपि तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽसावितीत्यर्थः ॥२॥ कथं तर्हि ज्ञानात्कृतकृत्यः स्यादित्यपेक्षायामन्नप्राणयोः सशक्तिकयोरेकत्वविज्ञानात्तथा स्यान्न केवलयोरेकत्वविज्ञानादित्याशयवान्पिता तयोः शक्तिभूतं गुणद्वयं क्रमेणोपदिष्टवान् तस्माऽइति तस्मै प्रातृदाय उ ह किल पिता वि रमित्येतदन्नप्राणयोः क्रमेण गुणद्वयमुवाचोपदिष्टवानिति योजना । सर्वभूताश्रयत्वलक्षणविशब्दवाच्यगुणकमन्नं सर्वभूतरतिलक्षणरम्शब्दवाच्यगुणकश्च प्राणस्तथाविधयोरेव तयोरेकत्वमापन्नयोः परमत्वमिति तथाविधमेव ब्रह्मोपासितव्यमिति समुदायार्थः ॥३॥ १३॥ ८॥

पुनस्तस्यैव ब्रह्मणः उक्थादिगुणपूगविशिष्टत्वेनोपासनमाह (उत्था° Cod.) । महाव्रताख्ये क्रतौ प्रधानभूतं शस्त्रमुक्थशब्दार्थः (मुत्थ Cod.) । किमात्मकं तदुत्थमित्यत (!) आह प्राण इति प्राणो ह्यध्यात्मेषु मुख्य उत्थं (!) च सर्वशस्त्राणां प्रधानमतः प्राण उत्थगुण (!) उपास्य इत्यर्थः । अप्राणस्योत्थानाशक्तेः अतः प्राण उत्थापनादुत्थमित्यर्थः । उत्थवित् (!) प्राणविद्वीरः पुत्रः । उत्थस्य (!) प्राणस्य सायुज्यम् ॥१॥ इदानीं प्राणस्य योक्तृतागुणवत्त्वेनोपासनमाह । प्राणे सति सर्वाणि भूतानि परस्परं युज्यन्ते अतो युनक्तीति यजुरिति योगत्वशात्प्राणो यजुरित्यर्थः । श्रैष्ठ्याय श्रेष्ठभावायायं नः श्रेष्ठो भवत्वित्यभिप्रायेण युज्यन्ते उद्यमं कुर्वन्ति ॥२॥ इदानीं प्राणस्य सर्वप्राणिसम्यग्गमनहेतुत्वगुणेनोपासनमाह । सम्यग्यन्ति संगच्छन्ते इति सम्यञ्चि ॥३॥ इदानीं प्राणस्य पालकगुणत्वेनोपासनमाह । एनं देहपिण्डं प्राणो ह क्षणितोः शस्त्रादिहिंसितात्पुनर्मांसपूरणं कुर्वन्यस्मात्त्रायते पालयति तस्मात्क्षतत्राणात्प्राणो वै प्रसिद्धं क्षत्रम् । क्षत्रमात्रं प्राप्नोति प्राण एव भवतीत्यर्थः मात्रं कार्त्स्न्येऽवधारणे इत्यमरः यद्वा क्षत्रं प्राणं प्राप्नोति किंविशिष्टम् आ सामस्त्येन त्रायते पालयतीत्यात्रस्तम् ॥४॥ १४॥ ८॥

पूर्वं हृदयं सत्यमित्यादिबहूपाधिसमाश्रयं बहुफलकं ब्रह्मोपासनमुक्तम् इदानीं सर्वोपाध्युपसंहारिगायत्र्युपाधिकब्रह्मोपासनं वक्तुमिदं ब्राह्मणमारभ्यते । गायत्रीछन्दो हि सर्वच्छन्दसां प्रधानं तत्प्रयोक्तृवागादिप्राणत्राणसामर्थ्यात्सर्वच्छन्दःस्वरूपभूतप्राणात्मकत्वाच्च । किं च ब्राह्मणस्य गायत्रीतो जन्म श्रूयते श्रुत्यन्तरे तस्माद्गायत्र्याः प्रधानभूतत्वात्तदुपाधि[illegible]नविधानायाह भूमिरिति । द्यौरिति विश्लेषे सति । तत्सवितुर्वरेणियमिति वर्णविश्लेषेण । एकं पदं प्रथमः पादः । गायत्रीप्रथमपादस्य त्रैलोक्यनाम्नश्च संख्यासामान्यप्रयुक्तं कार्यमाह अस्या गायत्र्या एतत्प्रथमपादस्वरूपम् ह खलु एतदेव भूम्यादित्रैलोक्यलक्षणमेवेत्युपासीतेत्यर्थः ॥१॥ एवं प्रथमपादे भूम्यादिलक्षणाशेषरूपराश्युपसंहार उक्त इदानीं द्वितीयपादे नामराश्युपसंहारमभिप्रेत्य तस्य त्रैविद्यात्मकत्वमाह । त्रय्या विद्यया यावत्फलजातमवाप्यते तावज्ज खलु गायत्र्या द्वितीयं पादमेवं विद्वाञ्जयति ॥२॥ अथ तृतीयपादे कर्मोपसंहारमभि-

प्रेत्य तस्य त्रैलोक्यत्रैविद्यात्मकसर्वजगद्विधृतिलक्षणप्राणाद्यात्मकत्वमाह । प्राणः अपानः वियान इति विश्लेषेण । एवं नामरूपकर्मात्मकं जगद्गायत्रीपादत्रयात्मनोपसंहृतम् ॥३॥ इदानीमभिधानरूपायास्त्रिपदाया गायत्र्या अभिधेयभूतादित्यात्मकहिरण्यगर्भाभिधानाय चतुर्थं पादमारभते । अथ शब्दात्मकगायत्रीकथनानन्तरमस्याः प्रकृताया त्रिपदाया गायत्र्या अभिधेयभूतमेतदेव वक्ष्यमाणमित्यर्थः । तुरीयादिपदानां गूढार्थत्वात्स्वयमेव तत्तत्प्रतीकग्रहणेन व्याकुर्वन्ती श्रुतिस्तावत्तुरीयपदस्यार्थमाह यद्वाऽइति । अनन्तरं पदं गृहीत्वा व्याकरोति दर्शतमिति एष मण्डलान्तर्गतः पुरुषो हि यस्माद्दृशऽइव दृश्यते-इव न तु साक्षाद्दृश्यते ईश्वरस्यातीन्द्रियत्वादतस्तद्दर्शतं पदमित्युच्यतऽइत्यर्थः । प्रवृत्तिकारणीभूतः सङ्गात्समुत्पद्यमानो रञ्जनात्मको रागो रज इत्युच्यते यद्वा सर्वे लोका रजःशब्देनोच्यन्ते रज्यमानत्वात् सर्वमेव वै प्रसिद्धं रजोजातमुपर्युपरि हि यस्मादेष सविता तपति रजःशब्दवाच्यात्सर्वस्मादुपरिष्टादेव तपन्वर्ततऽइति यावत् अतो रजसः पर इति परोरजा उच्यतऽइत्यर्थः । श्रिया वसुदोग्ध्या ॥४॥ एवमभिधानाभिधेयात्मिकां गायत्रीं व्याख्यायाभिधानस्याभिधेयतत्त्वमाह सैषा त्रैलोक्यत्रैविद्यसर्वप्राणस्वरूपत्वेनोक्ता त्रिपदा गायत्री [illegible] मूर्तामूर्तरसभूते आदित्ये प्रतिष्ठिता । सत्येऽध्यात्मे प्रतिष्ठिता बोद्धव्या । किं पुनस्तत्सत्यमित्यत आह चक्षुरिति । तस्य सत्यत्वं सर्वज्ञानानुभवप्रमाणसिद्धमित्युपपादयति तस्मादिति । सत्यप्रतिपत्तिहेतुत्वाच्चक्षुः सत्यं तस्मिन्सत्ये चक्षुषि त्रिपदा गायत्री प्रतिष्ठितेति वाक्यार्थः ॥५॥ सत्यस्यापि स्वातन्त्र्यं वारयति तदिति । एवं त्रिपदा गायत्र्यधिदैवते आदित्ये प्रतिष्ठिता सा चाध्यात्मं चक्षुर्द्वारा प्राणे प्रतिष्ठितेत्येवं प्रणाड्या गायत्र्याः सूत्रात्मत्वं सिद्धम् अध्यात्ममध्यात्मे सर्वविद्याद्यात्मके सूत्रात्मभूते प्राणे प्रतिष्ठिताऽतोऽध्यात्मप्राणरूपा सती जगत आत्मा ॥६॥ इदानीं गायत्रीनामनिर्वचनेन तस्या जगज्जीवनहेतुत्वमाह । सैषा ईश्वरात्मिका गायत्री । गायत्तीति गयाः । तत्रे त्रातवती रक्षितवती । प्राणा वागादयो गयाः शब्दनिष्पत्तिहेतुत्वात् । एवं गायत्र्याः प्राणजीवनत्वमुक्त्वा तस्या (स्मा Cod.) एव ब्राह्मण्यमूलत्वेन स्तुत्यर्थमाह स आचार्योऽष्टवर्षं माणवकमुपनीय याममूं गायत्रीमेव पादशोऽर्धर्चशः समस्तां चान्वाह अनुवक्ति पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन्निति गृह्यवाक्यात् (पारस्कर° २. ३.) सा माणवकायोपदेष्टव्या प्रसिद्धा एषैवोक्तजगत्प्राणात्मिका गायत्र्येव नान्येत्यर्थः । कुत एषा गायत्र्येवेति निश्चय इत्यत आह स गायत्र्युपासक आचार्यः सादरः सन्यस्मै बटवे इमां गायत्रीमन्वाहानुवक्ति तस्य प्राणान्सा नरकादिपतनाद्यस्मात्त्रायते तस्माद्गायत्र्येवेति निश्चयो नात्र संदेहः ॥७॥ मतान्तरं दृष्ट्वा बटवऽउपदेश्या गायत्री इयमेव भविष्यतीति विभ्रमो मा भूदित्यभिप्रेत्य मतान्तरं दूषयितुमुपन्यस्यति । एके शाखिनः तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहीत्यनुष्टुप्छन्दस्कां तां प्रसिद्धां सावित्रीं सवितृदेवताकामुपनीतायान्वाऽनुवदन्ति । वागनुष्टुबिति तद्य एव वातो महिमेत्यग्निरहस्ये (१०. ३. १. ४.) प्रतिपादितत्वादनुष्टुब्वाक् तस्याश्च वाचः [illegible]रूपत्वाद्वागात्मिकानुष्टुबेव बटवे वक्तव्या तत्समर्पणे हि सरस्वती समर्पिता स्यादतो वयमेतदनुष्टुब्लक्षणां वाचं सरस्वतीमेवापेक्ष्यमाणा माणवकायानुब्रूम इति वदन्तस्तामेवोपदिशन्ति । तन्मृषैव गायत्रीमेवानुब्रूयात् तदुपदेशे हि सर्वमपि परमार्थसाधनजातं बटवऽउपदिष्टं [illegible]विद्यसर्वप्राणात्मकत्वकथनेन

सर्वात्मकत्वस्योक्तत्वात् अनुष्टुब्उपदेशे तु सरस्वतीमात्रमेवोपदिष्टं स्यात् । एवं प्रसङ्गाद्गायत्रीं निश्चित्येदानीं गायत्रीज्ञानफलकथनाभिप्रायेण तद्विदं स्तौति यदीति यद्यपि उक्तलक्षणगायत्रीवित् बह्विव प्रतिगृह्णाति तथापि तत्प्रतिग्रहजातं गायत्र्या एकमपि पदं प्रति पादविज्ञानफलं प्रति नैव ह किल पर्याप्तम् इतरस्तु दोषाधायकत्वं तस्येत्यर्थः ॥ ८॥ एवं गायत्रीविदः प्रतिगृह्णतः सामान्येन दोषाभावमुक्त्वा विशेषतोऽपि तमाह । प्रथमपादविज्ञानफलं तेन भुक्तं स्यान्न त्वधिकदोषोत्पादकः स प्रतिग्रहः । शेषमेवमेव व्याख्येयम् । तथा च त्रैलोक्यावच्छिन्नस्य त्रैविद्यावच्छिन्नस्य सर्वप्राण्यवच्छिन्नस्य च प्रतिग्रहे पादत्रयविज्ञानफलमेवानेन भुक्तं स्यात् नाधिकदोषभाक्त्वं तस्येति गायत्रीविज्ञानस्तुत्यर्थमेव श्रुत्यैवं कल्पयित्वोच्यते न तु वस्तुत एवं दाता प्रतिग्रहीता वा सम्भवति यद्यप्येवं सम्भाव्यते तथापि नासावस्य प्रतिग्रहोऽपराधक्षम इति स्तुतिसिद्धेः एवं च सति न शूद्राद्युपादानकप्रतिग्रहनिषेधकशास्त्रविरोध इत्यर्थः । यथैवं सम्भावितप्रतिग्रहादिना पादत्रयविज्ञानफलक्षय एवं तुरीयपादविज्ञानस्य फलक्षयः सम्भावयितुमपि न शक्यते तत्फलस्यानन्त्यादित्याह अथास्या इति तत्फलं केनापि प्रतिग्रहादिना नैव प्राप्यं तेन न तत्क्षयः स्यादित्यर्थः चतुर्थपादविज्ञानसमानप्रतिग्राह्यस्य वस्तुनोऽसम्भवात् ॥ ९॥ एवमुक्तगायत्र्युपासनासंग्रहविषयमेव मन्त्रमैहिकफलविशेषोपायकथनार्थमवतारयति । त्रैलोक्यात्मकपादेनैकपदी भवसि त्रैविद्यरूपपादेन त्वं द्विपदी प्राणाद्यात्मकपादेन त्वं त्रिपदी मण्डलान्तर्गतपुरुषलक्षणेन पादेन त्वं चतुष्पदी । परेण निरुपाधिकेन स्वेनात्मनापदसि पद्यसे ज्ञायसे येन तत्पदं न विद्यते यस्याः सा त्वमपदसि कुतः हि यस्मात् केनापि न पद्यसे न ज्ञायसे नेतिनेत्यादिलक्षणत्वात् तादृग्रूपस्य च चक्षुराद्यविषयत्वात् अतस्त्वमपदसीति । अथ पादत्रयापेक्षया चतुर्थपादस्य प्राधान्यमभिप्रेत्य तस्य नमस्करणमुच्यते नम इति । एवं नमस्करणमुक्त्वा शेषेण यथोक्तनमस्कारप्रयोजनमुच्यते असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः अदः पाप्मरूपस्य शत्रोर्यत्त्वत्प्राप्तिविघ्नकर्तृत्वं मम तच्च मा प्रापत् मा प्राप्नोतु इतिशब्दः पापक्षयफलोपस्थानमन्त्रपरिसमाप्त्यर्थः । इदानीं प्रवृद्धद्वेषवन्तं प्रत्युक्तोपस्थानमंत्रे [ऊ]हप्रदर्शनेनाभिचारिकमुपस्थानान्तरमाह असौ शत्रुरमुकनामेति तस्य नाम गृहीत्वा अस्मै अमुकनाम्ने शत्रवे कामोऽभिलषितोऽर्थो मा समर्धि समृद्धिं मा प्राप्नोतु तथा चासावदो मा प्रापदित्यस्य स्थाने असावस्मै कामो मा समर्धीत्यूहं कृत्वा गायत्र्यसीत्यादिपूर्वोक्तेन मन्त्रेणाभिचरन्नुपतिष्ठेतेति वाक्यार्थः । यस्मै यदर्थमेवमुपतिष्ठते तस्मै शत्रवे । कामिनं प्रत्याभ्युदयिकमुपस्थानान्तरमाह अहमदो देवदत्ताभिलषितं मदभिलषितं वा प्राप्यं प्राप्नुयाम् ॥ १०॥ गायत्रीमुखज्ञानमन्तरेण तद्विज्ञानं पूर्णं न भवतीत्यतस्तद्विधानार्थं तत्स्तुतिभूतमर्थवादं तावदाह । यन्नु इति वितर्के हो अहो आश्चर्यमेतत् तदिति यदर्थो यत्त्वं गायत्रीविदस्मीत्यब्रूथा अथ पूर्वापरविरुद्धमिदं तर्हि कथं प्रतिग्रहदोषेण हस्तीभूतो हस्ती भूत्वा वृथाभिमानं वहसि । गायत्रीवित्त्वं प्रतिग्रहवहनं चेति परस्परविरुद्धम् । न विदां चकर नाज्ञासिषम् ॥ ११॥ एवं वदन्तं प्रति राजा मुखमुपदिशति तस्या इति । एवमुक्तस्य गायत्रीमुखविज्ञानस्य फलं सदृष्टान्तमाह एवंविदुपासकः स्वयमग्निमुखगायत्र्यात्मा सन्यद्यपि बह्विव बह्विव पापं प्रतिग्रहादिदोषं करोति तत्सर्वं पापजातं सम्प्साय सम्यक् भक्षयित्वाग्निवत् शुद्धः पापस्पर्शरहितः पूतश्च प्रतिग्रहजनितपापफलसम्बन्धरहितः सम्भवति ॥ १२॥ १५॥ ८॥

ओंकारो दमादित्रयं वाय्वादिदेवतायाचनपूर्वकमग्न्युपासनं ब्रह्मात्रब्रह्मोपासनानि तत्फलं तदर्थावगतिरित्येतेऽर्था अस्मिन्खिलकाण्डे पञ्चमाध्याये निर्वृत्ताः सम्प्रति प्राधान्येन ब्रह्मोपासनानि सफलानि श्रीमन्थादिकर्म च सर्वं वक्तव्यमित्येतदर्थं षष्ठोऽध्यायः प्रवर्तते । तत्र कर्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन नोक्तं तदस्मिन्काण्डे वक्तव्यम् अस्य खिलाधिकारत्वात् तथा च तद्वक्तुमिदं श्वेतकेतुब्राह्मणमिति सामान्यसंगतिः । पूर्वं द्वया हेत्युद्गीथब्राह्मणे (४. १. १.) स्वाभाविकज्ञानकर्मलक्षणः पाप्मा सूचितः परं तु तस्येदं कार्यमिति विपाकस्तु नोक्तः । तथा शास्त्रीययोरपि ज्ञानकर्मणोः केवलेन कर्मणा पितृलोको विद्यासहितेन विद्यामात्रेण वा देवलोक इति विपाको ब्रह्मविद्यारम्भप्रयोजकीभूतवैराग्यसिद्ध्यर्थं त्र्यन्नात्मप्रतिपत्त्यन्तेन ग्रन्थेन प्रदर्शितः अस्य तु विपाकस्य प्रतिपत्तिमार्गो नोक्तः स च वक्तव्यः । तथा पञ्चमाध्याये च ज्ञानकर्मसमुच्चयकारिणा मुमूर्षुणाग्ने नय सुपथेति (८. ३. १.) मार्गयाचनं कृतम् तत्र सुपथेति विशेषणादनेकेषां पथां सद्भावो मन्त्रेण प्रदर्शितः एतावन्तः कर्मविपाकप्रतिपत्तिमार्गा इति तु नोक्तम् अतो विहितस्य केवलस्य कर्मणस्तत्सहितस्य च ज्ञानस्य निषिद्धयोश्च तयोः क्रमेण दक्षिणोदगधोमार्गा इति कथनायेदं ब्राह्मणं प्रवर्तते इत्येका विशेषसंगतिः । एतावदरे खल्वमृतत्वम् अमृतत्वस्य तु नाशास्ति वित्तेनेत्यत्र (५. ४. २.) कर्मव्युदासेन ज्ञानमेवामृतत्वसाधनमित्युक्तं तत्र हेतुर्नोक्तस्तत्कथनायेदं ब्राह्मणमित्यपरा विशेषसंगतिः । आख्यायिका तु धनं मानं च हित्वा यत्नपूर्वकं वृद्धेन ब्राह्मणेनाब्राह्मणादपीयं पञ्चाग्निविद्या गृहीतेति तस्या स्तुत्यर्थं प्रणीता ॥ पित्रा मत्तः सकाशादधीतविद्यादार्ढ्यार्थं त्वं विद्वज्जनान्प्रति गत्वा परीक्षां कुर्वित्यनुज्ञातः सन् स्वकीयविद्याख्यापनाय विद्वत्सभां पर्यटमानः पञ्चालानां विद्वज्जनविशिष्टत्वेन प्रसिद्धानां देशविशेषाणां सभामाजगाम । आगत्य ब्राह्मणान्विद्योत्कर्षवशाज्जित्वा राजानमपि जेष्यामीति गर्वेण जैवलं जीवलस्यापत्यं पञ्चालानां जनानं परिचारयमाणं स्वभृत्यैरात्मनः परिचर्यां कारयन्तं प्रत्याजगाम । स तु राजा पूर्वमेव तस्य विद्यागर्वं श्रुत्वा शमादिब्राह्मणधर्माद्व्युत्थितत्वात्सन्मार्गप्रवृत्त्यर्थं विनेतव्योऽयमिति मत्वा तमुद्वीक्ष्योत्प्रेक्ष्यागतमात्रमेव कुमारा३इति बालवत्सम्बोध्याभ्युक्तवान्पुनर्भर्त्सनार्थत्वाद्भर्त्सितवान् । यद्यपि भो इति प्रतिवचनमाचार्यं प्रत्येवोचितं न क्षत्रियं प्रति तस्य हीनत्वात् तथापि क्रोधवशात्तथा प्रतिवचनं कृतवान् ॥१॥ प्रयत्यो म्रियमाणाः । नाडीरूपेण साधारणेन मार्गेणाभ्युदयं गच्छन्तं यत्र मार्गे द्वैविध्यप्रतिपत्त्या विप्रतिपत्तिस्तद्विप्रतिपत्तिविषयं मार्गं किं जानासि ॥२॥ आपः पुरुषाकारपरिणताः सत्यः पुरुष इति वाक् वाचकभूता यासां ताः पुरुषवाचः पुरुषशब्दवाच्या भूत्वा सम्युगुत्थायोद्भूताः सत्यो यथा वदनादिव्यापारं कुर्वन्ति । प्रतिपद्यतेऽनयेति प्रतिपत्साधनम् किं तत्र[illegible]वाच्यमित्यपेक्षायां श्रुतिः स्वयमेव तदाह यत्कृत्वेति यत्कर्म कृत्वा ॥३॥ ननु मार्गद्वयमेव नास्ति तत्सद्भावे प्रमाणाभावात्त्वं तूत्प्रेक्षामात्रेण मद्व्यामोहार्थं पृच्छसीत्याशङ्कायामाह अपि हीति । ऋषेर्मन्त्रस्यापि वचो वाक्यं नोऽस्माकं श्रुतमस्ति । मर्त्यानां मनुष्याणां द्वे सृती द्वौ मार्गौ श्रुतवानस्मि तयोर्मध्ये एका पितृलोकप्रापिका द्वितीया तु देवलोकप्रापिका । मध्यमकाण्डे तृतीयप्रपाठकान्त्यब्राह्मणे (१२. ८. १. २१.) द्यावापृथिव्योः पितृमत्त्वमुक्तम् ॥४॥ पुरा समावर्तनकाले । राज्ञः पुत्रा राजन्यास्ते बन्धवो यस्य स राजन्यबन्धुः राजन्याभास इति परिभववचनमेतत् । प्रतीकानि

मुखानि प्रश्नानामेकदेशान् ॥५॥ जीवलस्यापत्यं जैवलिः । पुरोधसा सार्धं मन्त्रपूर्वकमर्घं चकार मधुपर्कं कृतवान् ॥७॥ बहुतरस्यापि हिरण्यस्यापात्तं प्राप्तमस्ति एतत्त्वयापि ह किल विज्ञायते । प्रवाराणां परिवाराणां परिधानानां परिधानयोग्यक्षौमादीनाम् । अन्यस्मिन्नर्थिजने वदान्यो दानशीलो भूत्वा नोऽस्मानेवाभि अभिलक्ष्यास्मान्प्रति अवदान्यः कदर्यो विभवे सत्यदाता मा भूद्भवान् । तीर्थेन उपसदनशास्त्रविहितेन मार्गेण । उपैमि शिष्यत्वेनोपगच्छामि । पूर्वे किल ब्राह्मणा विद्यामर्थयमानाः सन्तः क्षत्रियान्वैश्यान्वा विद्याप्राप्त्यसम्भवावस्थायां शिष्यवृत्त्या वाचैवोपगच्छन्ति स्म नोपायनशुश्रूषादिभिरित्यर्थः ॥१०॥ उपायनमुपगमनं पादोपस्पर्शनं तस्य कीर्त्या कीर्तनमात्रे उक्तवान् नोपायनमकारयदित्यर्थः । तव च पितामहा अस्मत्पितामहेषु यथापराधं क्षमन्ते स्म तथा त्वमपि नोऽस्मान्प्रति मापराधा अपराधं मा कार्षीः अस्मदीयोऽपराधः क्षन्तव्यः पितामहानां वृत्तमस्मास्वपि भवता रक्षणीयमित्यर्थः । सर्वदा क्षत्रियपरम्परयैवेयमागतेति कृत्वा सा स्थितिर्मयापि रक्षणीया यदि शक्यते रक्षितुम् ॥११॥ इदानीं मनुष्यजन्मस्थितिलयानां यतिष्यामित्यादिचतुर्थप्रश्ननिर्णयाधीनतया तस्य प्राधान्यात्प्राथम्ये सति अर्थक्रममाश्रित्याविवक्षितं पाठक्रमं भङ्क्त्वा चतुर्थप्रश्नस्यैव निर्णयमाह । द्युलोक आहवनीयोऽग्निः । आदित्येन हि द्युलोकः समिध्यतेऽत इन्धनत्वसामान्याददित्ये समिद्दृष्टिः कार्या । रश्मयो धूमः तयोरादित्यसमिद्ध्यामुद्भवसामान्यात् अहरर्चिरुभयोः प्रकाशात्मत्वसामान्यात् चन्द्रमा मण्डलात्मा अङ्गारः (!) उभयोरुपशान्तत्वसामान्यात् नक्षत्राणि विष्फुलिङ्गा अग्निकणाः विक्षेपात्मत्वसामान्यादल्पप्रकाशकत्वसामान्याद्वा । तस्मिन्नेवं गुणविशिष्टे द्युलोकाग्नौ देवा इन्द्रादयः श्रद्धां द्रव्यस्थानीयां प्रक्षिपन्ति तस्या आहुतेः सकाशात्सोमः पितॄणां ब्राह्मणानां च राजाधिपतिः उत्पद्यते । ननु कथं द्युलोकादेराहवनीयाग्नित्वम् कथं च कर्मानधिकारिणामिन्द्रादीनां होमकर्तृत्वम् कथं वा प्रत्ययरूपायाः श्रद्धाया होम्यत्वम् कीदृग्विधो वा तस्य होमः कश्च पुनः सोमः कीदृशो वा तस्य सम्भव इति । उच्यते । यथा जीवदवस्थायामाहवनीयादिविष्फुलिङ्गान्तैः साधनैर्विशिष्टमग्निहोत्रं हुतं तथैव तदग्निहोत्रम् शरीरपातादूर्ध्वमपूर्वीभूतमव्याकृतावस्थमपि प्रातिस्विकशक्तियुक्तैः सूक्ष्मैस्तैः साधनैर्विशिष्टमेव सत् अस्माल्लोकादमुं लोकमुत्क्रम्य तथैवाहवनी[illegible] द्युलोकमारभते ते वाऽएतेऽआहुती हुतेऽइत्याद्यष्टाध्यायीकाण्डे (११.६.२.६-७.) श्रुतत्वात् अतो युक्तमसौ वै लोकोऽग्निरिति द्युलोकस्याहवनीयाग्नित्ववचनमिति । यऽएव जीवदवस्थायां यजमानस्याध्यात्मिकाः प्राणा अग्निहोत्रस्य होतारोऽभूवन् तऽएव तच्छरीरान्ते तत्कर्मफलभोगाय द्युलोकपर्जन्यादिसम्बन्धयोग्याकारेण परिणममाना आधिदैविकरूपमापन्ना इन्द्रादिशब्दवाच्याः सन्तोऽग्निहोत्रकर्मफलपरिणामकाले तद्धोतृत्वलक्षणं तत्र-तत्र होतृत्वं प्रतिपद्यन्तऽइति युक्तं देवा जुह्वतीति वचनमिति । तथात्र श्रद्धाशब्देन भूतान्तरसहिता आप एवोच्यन्ते श्रद्धा वाऽआप इति श्रुतेः ताश्च द्रवद्रव्यत्वात्पयःसोमादिलक्षणा एवेत्यवोचाम (८.६.१.) अतो युक्तं श्रद्धाया होम्यत्ववचनमिति । तासां चापां कर्तुः शरीरारम्भाय द्युलोकं प्रति प्रवेशनमेव होम इत्युच्यतऽइति । सोमो नाम चन्द्रमण्डलवर्ती प्रकाशात्मा पुरुषः ननु चन्द्रसोमयोः को विवेक इति चेत् शृणु चन्द्र इत्यप्रकाशस्वरूपं मण्डलमुच्यते चन्द्रशब्दवाच्यार्कोण तुल्यरूपत्वात् प्रकाशस्वभावो वृद्धिक्षयधर्मा श्वेतस्तदन्तर्गतो देवः सोम इत्यभिधीयते सोमशब्दवाच्यलतागतवृद्धिक्षयवत्त्वसामान्यात्

अतो मण्डलात्मत्वेन तदन्तर्गतत्वेन च चन्द्रसोमयोर्विवेक इत्यनवद्यम् कृष्णपक्षे चीयमाणः सोमोऽमावास्यायामादित्यान्तर्गतः, संस्तद्गततेजोयेन शुक्लपक्षे क्रमेणाप्याय्यते तदेतदाप्यायनं सोमलोके कर्तृशरीरात्मकस्य सोमस्य सम्भव इति द्रष्टव्यम् ॥ १२ ॥ स सोमः पर्जन्याग्नौ हुतः सन्वृष्टिरूपेण परिणमतऽइत्याह । पर्जन्यो वृष्ट्युपकरणाभिमानिदेवतात्माग्निः स च आहुत्यावृत्तिक्रमेण द्वितीय आहुत्याधारः । तस्य संवत्सर एव समित् संवत्सरेण हि शरदादिग्रीष्मान्तैः स्वावयवैर्विपरिवर्तमानेन पर्जन्याग्निर्दीप्यते । अभ्राणि धूमः तेषां धूमप्रभवत्वप्रसिद्धेर्धूमवदुपलक्षकत्वाद्वा । विद्युदर्चिः प्रकाशनसामान्यात् अशनिः प्रकाशाश्रयभूतोऽङ्गारः (!) उपशान्तत्वकठिनत्वसामान्याभ्याम् ह्रादुनयः स्तनयित्नुशब्दा विष्फुलिङ्गाः विक्षेपानेकत्वसामान्याभ्याम् ॥ १३ ॥ एवमुत्पन्ना वृष्टिरस्मिन्लोके हुता सत्यन्नरूपेण परिणमतऽइत्याह । अयं लोकः पृथिव्यभिमानिदेवताया देहभूतः प्राणिजन्मोपभोगाश्रयः क्रियाकारणफलविशिष्टस्तृतीयोऽग्निः । तस्याग्नेः पृथिव्यभिमानिदेवतैव समित् तया ह्ययं लोकोऽनेकप्राणिभोगसम्पन्नतया समिध्यते । वायुर्धूमः उभयोः पार्थिवद्रव्याश्रितत्वेनोत्थानसामान्यात् । रात्रिरर्चिः उभयोः समित्सम्बन्धप्रभवत्वसामान्यात् अग्नेः समित्सम्बन्धेन ह्यर्चिः सम्भवति तथा एतल्लोकरूपाग्नेः पृथिवीरूपसमित्सम्बन्धेन च रात्रिस्तस्याः पृथिवीछायारूपत्वात् । दिशोऽङ्गारा उभयोरुपशान्तत्वसामान्यात् अवान्तरदिशो विष्फुलिङ्गा उभयोर्विक्षेपात्मत्वसामान्यात् ॥ १४ ॥ तदन्न पुनः पुरुषाग्नौ हुतं सद्रेतोरूपेण परिणमतऽइत्याह । प्रसिद्धः शिरःपाण्यादिमान्पुरुषश्चतुर्थोऽग्निः । तस्य व्यात्तं विवृतं मुखं समित् समिधाग्निरिव पुरुषोऽपि वचनस्वाध्यायादौ विवृतेन मुखेन दीप्यते । प्राणोऽध्यात्मवायुर्धूमः मुखसमिद्भ्यामुत्थानसामान्यात् वाक् शब्दोऽर्चिः उभयोरभिधेयव्यञ्जकत्वसामान्यात् । चक्षुरङ्गारः (!) उपशमसामान्यात्प्रकाशाश्रयत्वसामान्याद्वा । श्रोत्रं विष्फुलिङ्गा विक्षेपसामान्यात् । देवा आध्यात्मिका वागादयस्ते स्वेनाधिदैविकरूपेण देवत्वाद्देवाः ॥ १५ ॥ तत्तु रेतः पुनर्योषाग्नौ हुतं सत्पुरुषाकारेण परिणमतऽइत्याह । योषा स्त्री पञ्चमोऽग्निः । तस्या उपस्थ एव समित् तेन हि योषित्समिध्यते लोमानि रोमाणि धूमः उभयोरुपस्थसमिद्भ्यामुत्थानसामान्यात् योनिरिन्द्रियाश्रयप्रदेशोऽर्चिः वर्णसामान्यात् यत्कर्म अन्तः करोति मैथुनव्यापाररूपं ते अङ्गाराः ते खल्वग्नेरुपशान्तिहेतवस्तथेदमपि कर्म योषिदग्नेः पुरुषस्य च तेजोवीर्यादिनाशकत्वेनोपशान्तिकारमतस्तस्मिन्कर्मण्यङ्गारदृष्टिर्युक्ता । तस्मात्कर्मण उत्पन्ना अभिनन्दाः सुखलवा विष्फुलिङ्गाः क्षुद्रत्वसामान्यात् । एतावता ग्रन्थेन वेत्थ यतिथ्यामिति चतुर्थप्रश्नस्याग्निहोत्रे हुताः पयोघृतादिलक्षणा आपो भूतसूक्ष्मलक्षणा भूतान्तरसहिताः पूर्वोक्ताग्निपरिपाकतः सूक्ष्मत्वं हित्वा करचरणादिरूपेण विपरिणम्य स्थूलतां गच्छन्त्यः पुरुषाख्यां लभन्त ऽइत्येतादृशो निर्णय उक्त इत्यर्थः । एवम्भूतस्य स्वाभाविकं व्यापारमाह स जायतऽइति यावत्कालपर्यन्तमस्मिञ्छरीरे स्थितिनिमित्तं कर्म विद्यते तावत्कालं जीवते जीवननिमित्तकर्मक्षये सति यस्मिन्काले म्रियते तदा एनं मृतं पुरुषमग्नयऽर्थमन्त्याहुत्यै ऋत्विजो हरन्ति निक्षिपन्ति ॥ १६ ॥ एवं पञ्चाग्निविदो गतिं विवक्षुर्वक्ष्यमाणगत्युपयोगिदेहप्रदर्शनार्थमन्त्येष्टिं निरूपयन्ती श्रुतिरेवमग्निजत्वात्तद्व्यत्वाच्च पुरुषस्याहमग्न्यात्मेति ध्यानसिद्धये षष्ठमग्निमन्त्याहुत्यधिकरणं प्रसिद्धमेव [illegible]भिदादिविशिष्टमनारोपितं दर्शयति तस्याग्निरिति । देवा ऋत्विजः । भास्वरवर्णोऽतिशयदीप्तिमान्सात्त्विकः पुरुषः उत्पद्यते । निषेकादिभिरन्त्याहुत्यन्तैः कर्मभिर्दर्श-

नविशिष्टैः संस्कृतत्वादयं भास्वरवर्णः केवलकर्मिणां राजसानामुभयहीनानां तामसानां च पित्र्यादिलोककीटादिदेहप्राप्तेर्वक्ष्यमाणत्वादित्यर्थः ॥१७॥ एवं पञ्चाग्निविदो मृतस्य गतिं वक्तु मार्गविप्रतिपत्तितत्साधनविषययोः प्रथमपञ्चमयोर्निर्णयार्थमाह । ते ये विदुरिति बहुवचनात्त्रैवर्णिका गृहस्था एवाधिकारिणः पञ्चाग्निदर्शने तस्य गृहस्थकर्मसम्बद्धत्वात् अत एव ये चामी अरण्ये वानप्रस्थाः श्रवणाद्यनधिकृता आश्रमधर्ममात्रनिरताः संन्यासिनश्च श्रद्धामितिकर्तव्यतया प्राप्तामनुष्ठाय सत्यं सत्याख्यं ब्रह्मोपासते इति तेषां पृथक्साधनाभिधानम् सम्यग्ज्ञाननिष्ठानां परमहंसानां तु न तस्मात्प्राणा उत्क्रामन्तीति (७. २. ८.) श्रुतिप्रामाण्यात्प्राणोत्क्रमणाभावेन देवयानमार्गप्रवेशाभावात्तत्साधनेऽनधिकारात् नैष्ठिकब्रह्मचारिणामपि गुरुपरतन्त्रतयोपासने स्वातन्त्र्याभावात् तेषां चोत्तरमार्गप्रतिपत्तिस्तु गुरुशुश्रूषापूर्वकगुरुकुलवासादेव सम्भवति । अष्टाशीतिसहस्राणां मुनीनामूर्ध्वरेतसाम् उत्तरेणार्यम्णः पन्थास्ते ऽमृतत्वं हि भेजिरे इति स्मृतेः । अतः परिशेषाद्गृहस्थानामेवाधिकारः । अर्चिःशब्देनात्रार्चिरभिमानिनी देवतोत्तरमार्गलक्षणा गृह्यते न तु ज्वलनात्मनोऽर्चिषो ग्रहणम् तस्यास्थिरत्वात्परित्राजकानां च साक्षात्तत्सम्बन्धाभावाच्च । अतोऽर्चिरभिमानिदेवतामेवाभिसम्भवन्ति प्रतिपद्यन्तऽइत्यर्थः । ततः क्व गच्छन्तीत्यपेक्षायामहरादिदेवताप्राप्तिक्रमेणापुनरावृत्तिलक्षणं हिरण्यगर्भलोकं गच्छन्तीत्याह अर्चिष इति । अत्राहरादिशब्दैस्तत्तदभिमानिन्यो देवता एव विवक्षिता न तु कालविशेषाः । अनेन क्रमेण विद्युद्देवतां प्राप्तांस्तानुपासकान्वैद्युतात्सकाशान्मानसो ब्रह्मणा मनसा सृष्टो ब्रह्मलोकवासी पुरुषः कश्चिदेत्यागत्य ब्रह्मलोकान्गमयति नयति । ब्रह्मलोकाख्यस्य सूत्रदेहस्य सामान्यविशेषात्मना बहुत्वमपेक्ष्य बहुवचनप्रयोग उपासनातारतम्यात् सायुज्यसमानैश्वर्यसालोक्यापेक्षया वा । ते ब्रह्मलोकान्प्राप्ता उपासकास्तेषु ब्रह्मलोकेषु स्वयं पराः प्रकृष्टाः सन्तः परावतः प्रकृष्टान्ब्राह्ममानमितान्संवत्सरान्ब्रह्मायुरवधिकान्शतसंख्याकान्वसन्ति तेषामुपासकानामिहास्मिन्कल्पे पुनरावृत्तिर्नास्ति कल्पान्तरे त्वावर्तन्तऽएव ॥१८॥ एवं देवयानं मार्गं ससाधनमुक्त्वा पितृयाणं मार्गमाह ये नैवं विदुः केवलकर्मिणः लोकं पितृलोकं जयन्ति प्राप्नुवन्ति । पितृलोकशब्दः प्रसिद्धपित्रधिष्ठितलोकविषयः चन्द्रस्तूक्तलक्षणो मण्डलात्मा । ते कर्मिणश्चन्द्रं प्राप्य गत्वान्नं भवन्ति भोग्यतामापद्यन्ते । आप्यायस्वापक्षीयस्वेति न मन्त्रः किं तु आप्याय्याप्याय्यापक्षय्यापक्षय्येति प्रकारप्रदर्शनार्थः तथा च यथा यज्ञे ऋत्विजश्चमसस्थं सोमं पुनःपुनराप्याय्यापक्षय्य ह्रासं कृत्वा भक्षयन्ति तथा तत्र भोगभूमौ प्राप्तांस्तानन्नभूतान्देवाः स्वामिन इवैनान्सोमलोके लब्धशरीरान्कर्मिण उपकरणभूतान्भृत्यानिव कर्मानुरूपफलदानेन विश्रमाभ्यनुज्ञानलक्षणमाप्यायनं कृत्वा स्वनियोगकरणेनाविश्रामलक्षणमपक्षयं च कुर्वन्तो भक्षयन्ति उपभुञ्जते न तु खादन्ति तथा सति चन्द्रलोकप्राप्तेरनर्थार्थत्वेन तत्साधनस्याननुष्ठानप्रसङ्गादित्यर्थः । एवं ते यऽएवमेतदित्यथ ये यज्ञेनेति च दक्षिणोत्तरमार्गप्रतिपत्तिसाधनोक्त्या पञ्चमं प्रश्नं निर्णीय तेऽर्चिरभीत्यादिना च दक्षिणोत्तरमार्गप्रदर्शनेन प्रथमं प्रश्नं च निर्णीयेदानीमेतल्लोकप्राप्तिप्रकारप्रदर्शनेन द्वितीयतृतीयप्रश्नयोर्निर्णयमाह तेषां यदेति । तेषां कर्मिणां यस्मिन्काले तद्यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म परिगच्छति सर्वात्मना क्षीयते तदा ते इममेव प्रसिद्धमाकाशमभिनिष्पद्यन्ते याभिर्द्युलोकाग्नौ हुताभिः श्रद्धाशब्दवाच्याभिरद्भिः सोमलोके कर्मिणामुपभोगायाम्मयं शरीरमारब्धं ताः पुनः कर्मक्षयाद्धिमपिण्ड इवातपसम्प-

कीत्प्रविलीनाः सत्यः आकाशं प्राप्तास्तद्वदेव सूक्ष्मभावं प्रतिपद्यन्तइति भावः । ते पृथिवीं प्राप्य व्रीहियवाद्यन्नं भवन्ति अन्नभावोऽत्र व्रीह्यादिसंश्लेषमात्रं बोद्धव्यम् । ते पुनरन्नभूता रेतःसिक्पुरुषाग्नौ हुता रेतोभूता योषाग्नौ हुताः पुरुषाख्या अग्निहोत्रादिकर्मानुतिष्ठन्तो म्रियमाणास्तेन धूमादिमार्गेण सोमलोकं गच्छन्ति कर्मफलभोगाय ततः कर्मक्षये सतीमं लोकं पुनरागच्छन्तीत्येवमेव कर्मिणोऽनु वारं-वारं कर्मवायुसमीरिता आ ब्रह्मज्ञानाद्घटीयन्त्रवच्चक्रीभूताः परिभ्रमन्ति । एवं स्थानद्वयमावृत्तिसहितमुक्त्वा स्थानान्तरमाह अथ यइति कीटाः गोमयादिकुत्सितस्थानेषु कृमयो जायन्ते पतङ्गाः शलभाः दन्दशूकं दशनशीलं दंशमशकपन्नगादेलक्षणम् । अतोऽस्यां गतौ निमग्नस्य पुनरुद्धारदौर्लभ्यादिमां गतिं जुगुप्सद्भिः स्वाभाविकज्ञानकर्मप्रहाणेन शास्त्रीयज्ञानकर्मणी दक्षिणोत्तरमार्गप्रतिपत्तिसाधनभूते समाश्रयणीये ततोऽपि परममुक्तिहेतुभूततत्त्वज्ञानाय यत्नः कर्तव्य इति वाक्यार्थः । तथा च द्वितीयः प्रश्न आकाशादिद्वारागमनकथनान्निर्णीतः परलोकं गतानां पुनरावृत्तिकथनेन तृतीयप्रश्नश्च निर्णीत ॥ १६ ॥ १ ॥ ६ ॥

पूर्वं गायत्रीब्राह्मणे सत्स्वपि वागादिषु प्राणस्यैव गायत्र्यात्मकत्वं किमुक्तमित्याकाङ्क्षाय प्राणस्य ज्येष्ठत्वादिगुणवत्त्वादिति परिहारमभिप्रेत्य तस्यैव ज्येष्ठत्वादिनिर्दिधारयिषयेदं ब्राह्मणं प्रवर्तते । यद्वा सत्स्वपि चक्षुरादिषूक्थब्राह्मणे (!) उक्थयजुःसामक्षत्रादिभावैः (!) प्राणस्यैवोपासनमभिहितं तत्र हेतुमात्रापेक्षायां ज्येष्ठत्वश्रेष्ठत्वादिहेतुमात्रकथनायेदं ब्राह्मणं प्रवर्तते इह तु स्वतन्त्रमेव प्राणोपासनं विधीयते वक्ष्यमाणप्राणोपासनस्य गुणभेदात्फलभेदाच्च तः तावदुपासकसम्पत्त्यर्थं फलं कथयति यो ह वाइति । ननु निषेककाले प्राणस्येव वागादीनामपि शुक्रशोणितसम्बन्धस्याविशिष्टत्वात्कथमवधार्यते प्राणो वै ज्येष्ठश्च श्रेष्ठश्चेति चेत् सत्यम् तथापि नाप्राणं शुक्रं प्ररोहतीति निषेककालादारभ्य प्राणस्यैव गर्भवृद्धिहेतुतया प्रथमो वृत्तिलाभो न चक्षुरादेरतोऽवगम्यते चक्षुरादिषु प्राणस्यैव ज्येष्ठत्वम् ॥ १ ॥ इदानीं प्राणस्यैव वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वप्रजातिवल्लक्षणाः पञ्च गुणा इति दर्शयितुं प्रथमं तेषामेकैकस्य क्रमेण वाक्चक्षुःश्रोत्रमनोरेतसां गुणत्वमाह । अतिशयेन वासयतीति वसिष्ठा निवासार्थस्य वसे रूपं वाग्मिनो ह्यतिशयेन वसन्ति वासयन्ति चान्यान् यद्वातिशयेन वस्ते इति वसिष्ठा आच्छादनार्थस्य वसे रूपं वाग्मिनो हि वाचान्यानभिभवन्ति ॥ २ ॥ मनो वा आयतनं विषयाणामिन्द्रियाणां च ॥ ५ ॥ रेतःशब्देनात्र प्रजननेन्द्रियं लक्ष्यते ॥ ६ ॥ एवमुक्ता वसिष्ठत्वादिगुणा न वागादिगताः किं तु मुख्यप्राणगता एवेति दर्शयितुं तावदाख्यायिकामधिकरोति । वागादयोऽहंश्रेयसेऽहं श्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं भाषमाणा ब्रह्म प्रजापतिं प्रति गतवन्तः । तत् ब्रह्म विराडात्मकं कर्तृभूतं तान्प्रत्युवाच ॥ ७ ॥ जडाः मूकाः ॥ ८ ॥ रेतः प्रजननेन्द्रियम् ॥ १२ ॥ महांश्चासौ सुहयश्च । सिन्धुदेशे भवः सैन्धवः । पड्वीशाश्च ते शङ्कवश्च ते पड्वीशशङ्कवः पादबन्धनशङ्कवस्तान्संवृहेत् उद्यच्छेत् परीक्षणाया आरोहे आरूढे सति युगपच्चतुरोऽपि शङ्कूनुत्खनेत् । संववर्ह चिच्छेद स्वस्थानाद्भ्रंशितवान् । बलिं करम् ॥ १३ ॥ वागादयः स्वस्वासाधारण्येनोक्तानेव गुणान्मुख्यप्राणस्य बलित्वेन समर्पयामासुः । यन्मम वसिष्ठत्वं तद्वसिष्ठत्वगुणस्त्वमेव । एवं वागादिभिर्दत्तं बलिदानमङ्गीकृत्य प्राणः स्वात्मनोऽन्नवाससी पृच्छति तस्योइति । भक्ष्यमाणा आपः सर्वास्तव वास

आच्छादनस्थानीयाः । इदानीं तत्स्तुत्यर्थकमर्थवादमाह न हेति यः एतत्सर्वप्राणिभिरद्यमानं सर्वमन्नमनस्य प्राणस्यैवान्नमित्येवं वेद पश्यति अस्य प्राणान्नविदोऽनदनीयं नैव ह किल भक्षितं भवति यद्यपि कदाचिदनेनाभक्ष्यमपि भक्षितं स्यात्तदासौ तद्दोषेण न लिप्यते । तथा यद्यप्ययमप्रतिग्राह्यं हस्त्यादिकं प्रतिगृह्णाति तदप्यन्नमेव भोग्यं वस्तु प्रतिग्राह्यमनेन प्रतिगृहीतं स्यान्न तत्प्रतिग्रहदोषेण लिप्यतऽइति विद्यैव स्तूयते न वस्तुतस्तस्य दोषाभावः अभक्ष्यभक्षणाप्रतिग्राह्यप्रतिग्रहयोर्निषिद्धत्वात् ॥१४॥ आपो वास इत्यनेन भक्ष्यमाणास्वप्सु विहितवासोदृष्टेरर्थवादमाह । आचामन्ति अपो भक्षयन्ति । अनं प्राणमुभयतोऽग्रां भक्षणेनानग्नमाच्छादितं कुर्वन्तः अपोऽशानलक्षणवासोदानेनानग्नं कर्म इति श्रोत्रिया मन्यन्ते ॥१५॥२॥१॥

एवं प्राणोपासनसाधनीभूते ज्ञानकर्मणी दर्शिते तत्र ज्ञानं वित्तानपेक्षम् कर्म तु दृष्टादृष्टार्थविषयं वित्तसाध्यम् अतो येनोपायेन प्रत्यवायानुत्पादकेन वित्तोपार्जनं कर्तव्यं तदुपायभूतं श्रीमन्थाख्यं कर्म प्रदर्शयितुं ब्राह्मणान्तरमारभ्यते । अधिकारिनिरूपणापुरःसरं सेतिकर्तव्यताकं सम्भारमाह यः कर्माधिकृतो गृही प्राणविन्महत्त्वं प्राप्नुयामित्येवं कामयते स पुण्यदिवसमेवारभ्य द्वादशदिवसपर्यन्तमुपसद्व्रती भूत्वा । उपसदो नाम ज्योतिष्टोमे इष्टिविशेषाः प्रवर्ग्याहस्तु प्रसिद्धाः तासु यद्व्रतं स्तनोपचयापचयाभ्यां पयोभक्षणं भूमिशयनं ब्रह्मचर्यं वाङ्नियमश्चेति चतुष्टयं यजमानस्य प्रसिद्धं तत्सर्वं स्तनोपचयापचयेतिकर्तव्यताशून्यमत्रोपादीयते तथा चोपसत्सु व्रतमुपसद्व्रतं तद्विद्यते यस्य स उपसद्व्रतीति समासः । न तूपसद एव व्रतमिति कर्मधारयः सामान्याधिकरण्यलक्षणः समासः तस्य श्रौतत्वेनेह मन्थाख्ये स्मार्ते कर्मण्युपसद्ग्रहणायोगात् । तस्मात्पयोभक्षणादिमात्रोपसद्व्रती भूत्वा सर्वौषधं सर्वासामोषधीनां समूहं वक्ष्यमाणव्रीह्यादिधान्यदशकमवश्यसम्पाद्यमन्यदपि धान्यविशेषं फलानि चानिषिद्धान्यमादकानि भक्ष्याणि तत्कालतद्देशलभ्यानि अन्यदपि पुष्पादिकं सम्भरणीयं सर्वं सम्भृत्य । पुण्याहे पुण्यदिवसे आत्मनः कर्मसिद्धिकरे पुंसा पुंनामकेन हस्तादिना नक्षत्रेण संयुक्ते व्रतान्त्यदिवसे । परिलेपनादिना दृष्टार्थतया परिशुद्धे देशे स्वगृह्योक्तविधिना परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्येत्यदृष्टार्थतया पञ्च भूसंस्कारान्कृत्वा । तस्मिन्संस्कृते स्थाने अग्निमुपसमाधायेत्यत्राग्नेरेकवचनश्रवणात्स्मार्तमेवावसथ्याग्निं संस्थाप्याग्नेरुत्तरतो वक्ष्यमाणपात्रासादनं दक्षिणतो ब्रह्मासनं च दत्त्वा पवित्रकरणाद्याज्यनिर्वपणावधि स्वगृह्योक्तं सर्वं विधाय । आवृतेतिकर्तव्यतया अस्य कर्मणः स्मार्तत्वात्स्थालीपाकोक्तकर्तव्यतया आज्यं संस्कृत्य स्रुवं च प्रतपनादिना संस्कृत्येध्माधानाद्याघारपर्यन्तं तूष्णीमेव सर्वं स्वगृह्योक्तं विधाय । अग्नये स्वाहा सोमाय स्वाहेति मन्त्राभ्यामाज्यभागौ हुत्वा उदुम्बरवृक्षमये कंसे कंसाकारे वर्तुलाकारे चमसे चमसाकारे वा पात्रे मन्थमुक्तसर्वौषधफलानां पिष्टं दधिमधुघृतैरुपसिच्य वक्ष्यमाणोपमन्थनीद्वयमध्ये एकयोपमन्थन्योपमथ्य संनीय अग्नेः स्वस्य च मध्ये दक्षिणभिते देशे संस्थाप्यौदुम्बरेण स्रुवेण संस्कृतमाज्यं गृहीत्वा वक्ष्यमाणैर्मन्त्रैर्जुहुयात् ॥१॥ कैर्मन्त्रैराज्यं होतव्यमित्यपेक्षायामाहुतित्रयाङ्गभूतं मन्त्रत्रयं देवताप्रार्थनात्मकं तावदाह । जातं-जातं वेत्ति जाते-जाते प्राणिनि जाठरत्वेन विद्य इति वा जातवेदाः तस्य सम्बुद्धिः त्वयि त्वदधीना यावन्तो देवाः वक्रमतयः सन्तः मम अभीप्सितार्थान्प्रतिबध्नन्ति ॥२॥ भो जातवेदः या देवता तिरश्ची कुटिलमतिर्भूत्वाहमेव विधरणी सर्वस्य धारयित्री इति च

मन्यतऽइति शेषः तां तिरश्चीं देवतां त्वं निपद्यसे व्याप्नोषि । संराधनीं सर्वसाधनीं देवतां तां त्वा त्वामहं यजे । तृतीयाहुतिमन्त्रस्य स्वश्रुतौ विद्यमानत्वात्प्रतीकग्रहणं श्रुत्या कृतम् प्रजापतऽइति । अस्मिन्नाहुतित्रये संस्रवो न धर्तव्योऽश्रुतत्वात् ॥ ३ ॥ एवमाहुतित्रयहोमानन्तरं षड्द्वन्द्वाहुतीः प्रतिद्वन्द्वं संस्रवावनयनयुक्ताः कर्तव्या एकाहुतिश्च रेतसे स्वाहेति संस्रवावनयनयुक्तेत्येवं सप्ताहुतयः कर्तव्या इति तत्साधनभूतान्मन्त्रानाह ज्येष्ठायेति । संस्रवं स्रुवावलिप्तमाज्यं मन्थे सिञ्चेत् । अत्र ज्येष्ठश्रेष्ठादेः प्राणलिङ्गात् ज्येष्ठादिगुणकप्राणविद् एव मन्थकर्मण्यधिकार इति ध्वनितोऽर्थः ॥ ४ ॥ प्रत्येकाहुतिसंस्रवावनयनं कार्यमित्यत आहुतीः समन्त्रका अनुष्ठेया आह ॥ ५ ॥ पूर्वोक्तगुणा एव षडाहुतीराह ॥ ६ ॥ एवं चतस्रः ॥ ७ ॥ एवं नव ॥ ८ ॥ एवमाज्याहुत्यन्ते यत्कर्मणात्यरीरिचमिति वक्ष्यमाणमन्त्रेण (१.४.२४.) स्विष्टकृद्धोमं कृत्वा संस्रवविशिष्टं मन्थद्रव्यमपरयोपमन्थन्या पुनर्मन्थनीयं तस्या अन्यत्र विनियोगादर्शनादित्येतावानितिकर्तव्यताविशेषो बोद्धव्यः । एवं संस्कृतं मन्थद्रव्यं किं कर्तव्यमित्यपेक्षायामाह अथैवमालोडनानन्तरमेनं मन्थं मन्त्रं पठन् तदर्थं च स्मरन्सन् हस्तेनाभिमृशति हे मन्थ त्वं भ्रमतीति भ्रम् असि भवसि तव चलनात्मकप्राणदेवताकत्वात्त्वं प्राणरूपेण भ्रमसीत्यभिप्रायः अग्निरूपेण त्वं ज्वलदसि ब्रह्मरूपेण पूर्णम् नभोरूपेण प्रस्तब्धं निःक्रियम् । या खल्वेका सभा जगदात्मिका सा त्वदात्मिकैवेति त्वमेकसभमसि । यज्ञारम्भे प्रस्तोत्रा यद्धिंकृतम् तेनैव च यज्ञमध्ये हिंक्रियमाणम् यज्ञारम्भे उद्गातृकृतमुद्गीथम् तेनैव च यज्ञमध्ये उद्गीयमानम् अध्वर्युणा श्रावितम् आग्नीध्रेण च प्रत्याश्रावितम् त्वमसि । आर्द्रे मेघोदरे सम्यग्विद्युद्रूपेण दीप्तं संदीप्तमसि । विभूर्व्यापकः भाग्यरूपेण प्रभूः समर्थः भोक्तृरूपेणाग्न्यात्मना ज्योतिः भोग्यरूपेण सोमात्मनावस्थितत्वात्त्वमन्नमसि कारणत्वात्त्वमध्यात्माधिदैवयोर्निधनं लयस्थानमसि वागादीनामग्न्यादीनां च संहरणत्वात्त्वं संवर्गोऽसि ॥ ९ ॥ एवं मन्त्रपूतं मन्थद्रव्यं किं कर्तव्यमित्यपेक्षायां तद्विनियोगमाह । उद्यच्छति हस्ते गृह्णाति । मन ज्ञानऽइत्यस्य धातोराङ्पूर्वस्य कृदन्ते डप्रत्यये टिलोपे च कृते सति आम इत्येतद्रूपं सिद्धम् हे मन्थ त्वमामं आमन्ता आ समन्ताद्भावेन ज्ञातासि भवसि ते तव मद्युपासके आममामन्नमा समन्ताद्भावेन ज्ञानमस्तीति शेषः यतस्त्वं सर्वज्ञोऽसि अतो मामपि ज्ञानासीति वाक्यार्थः । स हि प्राणस्त्वं राजा । एवंगुणविशिष्टः स भवान् मा मामधिपतिं तथाभूतमेव करोतु ॥ १० ॥ ग्रासचतुष्टयं मन्थस्य कृत्वा पृथक्पृथगवस्थाप्य प्रथमो ग्रासो गायत्रीप्रथमपादमधुमतीप्रथमर्कप्रथमव्याहृतिरूपं मन्त्रमुच्चार्य भक्षणीयः ॥ ११ ॥ एतैः सर्वैः सम्पूर्णैर्मन्त्रैश्चतुर्थो ग्रासो भक्षणीय इत्याह सर्वामिति । अन्ततो भक्षणान्ते शुद्ध्यर्थं स्मार्तमाचमनं कृत्वा हस्तौ प्रक्षाल्य शुद्धाचमनं विधाय अग्नेः पश्चिमतः प्राक्शिरा रात्रौ शयीत ॥ १३ ॥ ततः प्रातःसंध्यामुपास्य भक्तिश्रद्धाभ्यां प्रातरुदयसमये आदित्यं वीक्षमाणः संस्तदुपस्थानं मन्त्रेण कुर्यात् एकपुण्डरीकमखण्डश्रेष्ठः । तत एतद्विद्योपदेशकाचार्यपरम्पराख्यस्य वंशस्य जपः कर्तव्य इत्याह यथेतमिति ॥ १४ ॥ तं मन्थमेतमुक्तेतिकर्तव्यताकम् । यः प्राणोपासकः एनमुक्तविधया संस्कृतं मन्थम् । किमु वक्तव्यम् अनेन कर्मणा कामः सिध्येदित्यतो ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतदुक्तमित्यर्थः ॥ १५ ॥ एवं वंशे पठिते सति समाप्तमेतत्कर्म । अथैतत्प्राणदर्शनात्मकस्य मन्थविज्ञानस्य शिष्यः श्रोत्रियो मेधावी धनदायी प्रियपुत्रो विद्यार्थं विद्यादातेति प्रसिद्धेषु षट्सु विद्यासम्प्रदानभू-

तेषु मध्ये द्वयमेव सम्प्रदानमिह भवेदित्याह तमेतं नेति तमेतं मन्थं मन्थविज्ञानम् ॥२०॥ पूर्वं सर्वौषधमिति सामान्येनोक्तम् इदमिदमिति विशेषतो वक्तुमनुक्तं स्रुवादिकं च कथयितुमुत्तरं कण्डिकाद्वयं प्रवर्तते । उडुम्बरस्य वृक्षस्य विकार औडुम्बरश्चतुःसंख्याको भवति ॥२१॥ मन्थोपादानभूतग्राम्यधान्यग्रहणे नियममाश्रित्याह । अणुशब्दवाच्यं धान्यं मोरिय इति गूर्जरदेशे पल्यां प्रसिद्धम् प्रियङ्गवस्तत्रैव कङ्गुशब्दवाच्यत्वेन प्रसिद्धाः । खल्वा निष्पावा वल्लशब्दवाच्याः । खलकुलाः कुलत्थाः । तान् व्रीह्यादीन् चुर्णयित्वा पात्रे निक्षिप्य दधिमधुभ्यां सार्धं घृतेनोपसिञ्चति दध्यादित्रयाक्तं करोति अथ स्वगृह्योक्तविधिनाज्याभागान्तं कृत्वा पूर्वोक्ता आज्याहुतीर्जुहोति ॥२२॥३॥१॥

एवं प्राणोपासकस्य वित्तार्थिनः श्रीमन्थाख्यं कर्मोपदिश्य तस्यैव विशिष्टपुत्रार्थिनः पुत्रमन्थाख्यं कर्म वक्तुमुत्तरं ब्राह्मणं प्रवर्तते । तत्रादौ पुत्रोत्पत्तिहेतु रेतो बीजं स्तोतुमाह एषामिति । रसः सारभूता इयं पृथिवी सर्वेषां भूतानां मध्वित्युक्तत्वात् (५.५.१.) । पृथिव्या आपो रसः सारभूताः यदिदं सर्वमप्स्वोतं च प्रोतं चेति (६.६.१.) अपां पृथिवीकारणत्वस्य गार्गीब्राह्मणे श्रुतत्वात् । ओषधीनामप्कार्यत्वादोषधयोऽपां रसः ॥१॥ यत एवं सर्वभूतानां सारमेतद्रेतोऽतस्तदावापस्थानं प्रजापतिर्विचारपूर्वकं सम्पादितवानित्याह स हेति । प्रजापतिर्विराडात्मा । स्त्रियं शतरूपाख्याम् । अधः प्रदेशे योन्याख्ये उपास्त मैथुनाख्यमुपासनं कृतवान् । श्रोणिगुणाख्या । अस्मिन्कर्मण्यभ्युदयफलार्थं वाजपेयदृष्टिविधा अतस्तदङ्गे प्रजननेन्द्रिये सोमाभिषवपाषाणदृष्टिं कठिनत्वसामान्यमाश्रित्याह स एतमिति एतं सोमाभिषवोपलस्थानीयं प्रजननेन्द्रियं समुदपारयत् उत्पूरितवान् (!) स्त्रीव्यञ्जनाभिमुखं कृतवान् तेन पाषाणवत्कठिनेनैनां स्त्रियमभ्यसृजत् अभि समन्ततो मुञ्जमुञ्जः संसर्गं कृतवान् ॥२॥ अवाच्ये देशे वेदिदर्शनमाह अवाच्यदेशस्थलोमसु बर्हिर्दृष्टिम् अवाच्यदेशस्थचर्मण्यानडुहचर्मदृष्टिम् । पुरुषवृषणयोः स्त्रीयोन्यन्तर्गतप्रदेशे च क्रमेणाधिषवणफलकवह्निदृष्टी विदधाति मुष्कौ वृषणौ अधिषवणे सोमाभिषवफलके स्त्रीव्यञ्जनस्य मध्यतो मध्यप्रदेशः समिद्धो दीप्तोऽग्निः । नन्वेवमवाच्ये कर्मणि वाजपेयदर्शने कृते सति किं स्यादित्यत आह स यावानिति । एवमुपासतः फलान्तरमप्याह य एवमिति अधोपहासमवाच्यं कर्म । सुकृतं शुभं कर्म आवृङ्क्ते आवर्जयति स्वीकरोति ॥३॥ अविदुषामतिगर्हितमिदं कर्मेत्यत्रानेकाचार्यसंमतिमाह । ब्राह्मणा अयनं येषां ते ब्राह्मणायनाः ब्राह्मणजातिमात्रोपजीविनो ब्राह्मणाभासाः निरिन्द्रिया विश्लिष्टेन्द्रिया विसुकृतो विगतपुण्याः सन्तोऽस्माल्लोकात्प्रयन्ति परलोकभ्रष्टा अत्यन्तपापहेतुमैथुनकर्मासक्ता नरकं गच्छन्ति ॥४॥ एवं प्राणोपासकस्य श्रीमन्थं कृतवतो न हि यदा कदाचित्पुत्रार्थिनो भार्योपगतिः किं तु ऋतुकाले अतस्तं कालं प्रतीक्षमाणस्य प्रमादाद्रेतःपाते प्रायश्चित्तमाह बह्विति । एवमभिमृष्टमभिमन्त्रितं गृहीतं च रेतः क्व विनियोज्यमित्यपेक्षायां समन्त्रकं तस्य विनियोगमाह पुनरिति । तेजस्त्वग्गता कान्तिः भगः सौभाग्यं ज्ञानं वा । धिष्ण्या अग्नयः शरीराश्रिता देवाः तद्रेतो यथास्थानं स्थानमनतिक्रम्य पुनः कल्पन्तां कल्पयन्तामित्यनेन मन्त्रेण भ्रुवोः स्तनयोर्वा मध्ये निमृञ्ज्यात् लेपयेत् संस्पर्शयेत् ॥५॥ एवमयोनौ रेतस्खलने प्रायश्चित्तमुक्त्वा रेतोयोनावुदके रेतःसिचस्तत्र स्वच्छायादर्शने प्रायश्चित्तमाह । यदि कदाचित्प्रमादतः उदके रेतःसिक् आत्मच्छायां पश्येत् । इन्द्रियं रेतो मयि अस्त्वित्यध्याहारः

। इन्द्रियस्य रेतसो विशेषणानि विज्ञानं कीर्तिः वित्तं सत्कर्म तादृग्गुणकपुत्रोत्पादनहेतुत्वात् तथा च रेतःस्वरूपे जले स्वदृष्टिकृतापराधसमाधिरित्यर्थः ॥६॥ रेतःसिचो देशकालावतिक्रम्य ग्रामादिकोरेतस्खलनंप्रयुक्तं प्रायश्चित्तमभिधायेदानीं प्रकृतेन रेतःसिचा यस्यां पुत्रो जनयितव्य-स्तां स्तुवती श्रुतिस्तस्यामृतुकालगमनं विधत्ते । श्रीर्ह्वाख्या । मलोद्वासा उद्गतमलवद्वस्त्रा तां यशस्विनीं वीर्यवत्पुत्रहेतुत्वात्कीर्तिमतीं वक्ष्यमाणं त्रिरात्रव्रतं कृत्वा चतुर्थेऽह्नि स्नातां सतीम् । तदा एनां स्वपत्नीं वस्त्राभरणभोग्यादिदानेन कामं यथाशक्तिवैभवमपक्रीणीयाद्वशं नयेत् । यष्ट्या दण्डेन उपहत्य संताड्य कामं यथेष्टं भीतिमुत्पाद्यातिक्रामेत् अभिगच्छेत् । एवं बलात्कारासम्भवे शप्स्यामि त्वां दुर्भगां करिष्यामीति प्रख्याप्य तामनेन मन्त्रेणोपगच्छेदि-ति पुनरुपायान्तरमाह । इन्द्रियेण यशसा यशोहेतुना पश्चमेन्द्रियेण कृत्वा तव यशो यशोभूतं पुत्रोत्पत्तिकरं रेतोऽहं गृह्णामीति मन्त्रेण रुषा शपेत् सा चैव शप्ता सती अयशा एव अपुत्रैव वन्ध्यैव भवति ॥७॥ एवं भर्तुर्भार्यावशीकरणोपायमुक्त्वा पुरुषद्वेषिण्यास्तस्यास्तद्विषये प्रीति-सम्पत्त्युपायमाह । तस्यां तद्योनौ अर्थं प्रजननेन्द्रियं निष्ठाप्य निक्षिप्य । हे रेतस्त्वं मदीया-त्सर्वस्मादङ्गात्समुत्पद्यसे विशेषतश्च हृदयान्नाडीद्वारेण प्रकटीभवसि । एवंविधः स त्वमङ्गा-नां कषायो रसोऽसि अतो विषलिप्तशरविद्धां मृगीमिव मदीयां भार्यां मयि विषये मादय मद्युक्तां कुरु मद्वशां कुरु ॥८॥ एवं स्ववशमापद्यावाच्यकर्मानुष्ठानदशायामभिप्रायविशेषा-नुसारिणानुष्ठानविशेषं दर्शयति । रूपभ्रंशयौवनहानिभयात् यां स्वभार्यामिच्छेत् गर्भं न धार-येत् गर्भिणी इयं मा भूदिति । अभिप्राण्यापान्यात् पशुकर्मकाले प्रथमं स्वीयपुंस्त्वद्वारा तदी-यस्त्रीत्वे वायुविसर्जनरूपमभिप्राणनं कृत्वा तेनैव द्वारेण ततस्तदादानलक्षणमपाननं च कुर्यात ॥९॥ पुनर्भर्तुरिव पूर्वोक्तविपरीताभिप्राये उपायान्तरमाह । स्वकीयपञ्चमेन्द्रियेण तदीयपञ्च-मेन्द्रियाद्रेतः स्वीकृत्य तत्पुत्रोत्पत्तिसमर्थं कृतमिति मत्वा स्वकीयरेतसा सह निक्षिपेत् ॥१०॥ प्रासङ्गिकमाभिचारिकं कर्म प्रवृद्धरागवन्तं क्रुध्यन्तमधिकृत्याह । आमपात्रे अपक्वे मृन्मयभाजने उदकादिसम्बन्धे सति विशीर्यमाणतया शत्रुभेदनकर्मणि योग्ये परिसमूहनादिपञ्चभूसंस्का-रपूर्वकमग्निमुपसमाधाय एकवचनादुपधानवचनाच्चावसथ्याग्निमेव प्रज्वाल्यास्य कर्मणः प्रति-लोमत्वात्प्रतिलोमं पश्चिमाग्रं दक्षिणाग्रं वा यथा स्यात्तथा शरमयं बर्हिः स्तीर्त्वा आस्तीर्य त-स्मिन्नग्नौ एताः प्रसिद्धास्त्रिसंख्याकाः शरभृष्टीर्वाणेषीकाः प्रतिलोमाः विपरीताग्राः घृतेनाभ्यक्ताः कृत्वा जुहुयात् । तव आशापराकाशौ आददे फडिति मन्त्रमुच्चार्य मन्त्रान्ते चासावित्यात्मनः शत्रोर्वा नाम गृह्णीयात् आशा प्रार्थना वाचा यत्प्रतिज्ञातं कर्मणा च नोपपादितं तस्य परोक्षा पराकाशः । एवंविन्मन्थकर्मविद्वान्प्राणदर्शी यं ब्राह्मणं (!) शपति स ब्राह्मणो निर्गतेन्द्रियो गतपुण्यकर्मा सन्नस्माल्लोकादृच्छति । एवंवित् परदारगमने यथोक्तवक्ष्यमाणदोषवित् श्रोत्रि-यस्याधीतवेदस्योपासकस्य भार्यया उपहासं नर्मापि न कुर्यात् किमुताधोपहासम् ॥११॥ एवं सफलोऽभिचारः पशुकर्मद्वारा जारप्रसङ्गेनोक्तो न तु प्राधान्येन तस्य सत्पुत्रफलककर्म-विरोधित्वात् । इदानीं पूर्वप्रस्तुतऋतुकालानुष्ठेयं व्रतकलापमुपदिशति । आर्तवमृतुभावः । दि-वसत्रयं कंसे कांस्यपात्रे उदकादिकं न पिबेत् न वाश्नीयात् अनुपहतवासाश्च स्यात् एतत्तु स्नानोत्तरकाले बोध्यम् आर्तवपूर्वकालस्य तु ज्ञातुमशक्यत्वात् वृषलः शूद्रो वृषली तद्भार्यान्यो वा पापकृत्कश्चिदपि स्नानात्पूर्वमनन्तरं वा नोपस्पृशेत् एतत्सम्भाषणादीनामप्युपलक्षणम्

अन्यदपि शास्त्रान्तरोक्तं कर्म कुर्यादित्यर्थः । त्रिरात्रान्ते व्रतसमाप्तौ चतुर्थेऽहनि प्रातःकाले आप्लूय स्नात्वा पूर्वोक्तविशेषेणाहतवासाः स्यात् तथा चैवमाप्लुतामहतवस्त्रां तां व्रीहीनवघातयेत् चरुश्रपणार्थं व्रीह्यवघाताय भर्ता तामेव विनियुञ्ज्यात् ॥१२॥ किं पुनरवघातनिष्पन्नैस्तण्डुलैरनुष्ठेयमित्यपेक्षायां तस्मिन्नेव चतुर्थेऽहनि प्रातश्चरुहोमानन्तरं यथाकामं पत्नीं भक्षणीयमिति क्रममभिप्रेत्य कामनाविशेषे पाकादिविशेषणे भक्षणप्रभेदं तावदाह । गौरो बलदेववच्छुभ्रः शुद्धो वा । अनुब्रुवीत पठेत् । सर्वं शतवर्षप्रमितमायुरवाप्नुयात् । क्षीरौदनं स्वभार्ययैव पाचयित्वा घृताप्लुतं तमोदनं कृत्वा ॥१३॥ कपिलो वर्णतः पिङ्गलः पिङ्गाक्षः । दध्यौदनं(!) दध्ना चरुं श्रपयित्वा ॥१४॥ उदौदनमुदकेनौदनं पाचयित्वा उदकं विनौदनपाकस्यासम्भवेन तस्य प्राप्तावप्युदकग्रहणं क्षीरादिनिवृत्त्यर्थम् ॥१५॥ दुहितुः पाण्डित्यं स्त्रीणामुचिते गृहकर्मणि कौशलं न तु वेदादिविषयं स्त्रीणां तत्रानधिकारात् । तिलमिश्रमोदनं कृशरमित्यर्थः ॥१६॥ विविधं विगीथं प्रख्यातिरस्य स विगिगीथोऽतिप्रख्यातः । समितिं विद्वत्सभां प्रति पूज्यतया गच्छतीति समितिंगमः प्रगल्भः । श्रोतुमीप्सितां वाणीं भाषिता सुसंस्कृतार्थवद्वचनवक्ता । मांसमिश्रितमोदनम् । तन्नियममाह उक्षा सेचनसमर्थस्तदीयं मांसमौक्षम् ततोऽप्यधिकवया ऋषभस्तदीयं मांसमार्षभम् अयं तु मांसनियमो देशकालविशेषापेक्षयावगन्तव्यः गोमांसस्य निषिद्धत्वात्कृष्णमृगविषयं छागविषयं वोक्षादिवचनमत्र ग्राह्यम् तन्मांसमप्यनुपहतं क्रीत्वा सम्पाद्यं हिंसायाः प्रतिषिद्धत्वात् ॥१७॥ कदा पुनरित्थमोदनपाकादि कर्तव्यमित्यपेक्षायां व्रीह्यवघातदिवसे एवेत्यभिप्रेत्य तत्प्राक्कालकर्तव्यमाह । चतुर्थदिवसे प्रातःकालऽएव स्नानाद्यशेषनित्यानुष्ठानानन्तरं भार्ययावघातनिर्वृत्तांस्तण्डुलानादाय स्थालीपाकेतिकर्तव्यतया आज्यं संस्कृत्याधिश्रयणादिसंस्कारं कृत्वा एतच्चर्वादिसंस्काराणामप्युपलक्षणम् ततश्चरुं श्रपयित्वोद्वास्य स्वगृह्योक्तविधानेनाघारादिनित्याङ्गतीर्हुत्वा स्थालीपाकस्येति कर्मणि षष्ठी स्थालीपाकस्योपघातं स्थालीपाकमुपहत्योपहत्य स्वल्पं स्वल्पं पौनःपुन्येन गृहीत्वा प्रधानाङ्गतीर्जुहोति । इति प्रधानाङ्गतित्रयं हुत्वा स्विष्टकृतं चाग्नये स्विष्टकृते स्वाहेति हुत्वा पश्चात्स्थालीस्थं चरुशेषं पात्रान्तरे उद्धृत्य सर्पिषाक्तं कृत्वा पतिः प्रथमं प्राश्नाति प्राश्य च तदेवोच्छिष्टं पत्न्यै प्रयच्छति ततः शुद्ध्यर्थं स्मार्ताचमनं च कृत्वा उदपात्रं पूरयित्वा तेनोदकेन भार्यां त्रिवारमभ्युक्षति । विश्वावसुर्नाम कन्यानामधिपतिर्देवगन्धर्वः भो विश्वावसो देवगन्धर्व त्वं मद्भार्यातः सकाशादुदृच्छ अन्यां कामपि प्रफर्व्यं प्रथमयुवतिं तरुणीं भर्त्रा सह क्रीडमानामिच्छ फर्वतिर्गतिकर्मा प्रकर्षेण फर्व्या गम्यां ताम् । अहं पुनर्जायां स्वीयामिमां भार्यां समिति समुपैमीत्यध्याहारः तत्रावकाशस्त्वया देय इत्यर्थः ॥१८॥ एवं गन्धर्वं प्रस्थाप्य यथाकामं क्षीरौदनादि भुक्त्वा स्त्रियमालिङ्गेदिति क्रममभिप्रेत्याह । अहं पतिरमः प्राणोऽस्मि त्वं सा वागसि । कथमावयोरेतद्रूपत्वमित्याशङ्क्य वाचः प्राणाधीनत्वं प्राणस्य वागाधीनत्वं च प्रसिद्धमित्यभिप्रेत्य सा त्वमस्यमोऽहमिति पुनर्वचनम् । तथा अहं सामास्मि त्वं च ऋगसि ऋगाधार हि साम गीयते अस्ति चावाच्यकर्मसमये मदाधारत्वं तवेत्याधाराधेयभावसामान्यात् । द्यौरहं जनयितव्यस्य पितृत्वात् पृथिवी त्वं तस्य मातृत्वात् । तावावां संरम्भमुद्यमं करवावहै एहि त्वमागच्छ सह मिलित्वा रेतोधारणमावाभ्यां कार्यम् पुंस्त्वविशिष्टाय पुत्राय वित्तये लाभाय वीर्यवत्पुत्रलाभाय ॥१९॥ विहापयति विश्लेषयति । अवाच्यकर्मान्ते कर्तव्यशेषमुपदिशति त्रिरेणामिति

एनां योनौ प्रक्षिप्तरेतोवीजां भार्यामनुलोमं मूर्धानमारभ्य पादान्तं मन्त्रमुच्चरंस्त्रिवारं पाणिनानुमार्ष्टि । विष्णुः व्यापनशीलो भगवान्नारायणः तव योनिं कल्पयतु पुत्रोत्पत्तिसमर्थां करोतु । त्वष्टा सविता तव मम सुतस्य वा रूपाण्यवयवान् पिंशतु विभागशो दर्शनयोग्यान्करोतु । प्रजापतिर्विराडात्मा मदात्मना स्थित्वा । धाता पुनः सूत्रात्मा त्वदीयं गर्भं त्वदात्मना स्थित्वा पुष्णातु । हे सिनीवाली (!) अन्नवती (!) एतत्संज्ञा वा देवी (!) त्वं निषिक्तगर्भं धारय । पृथुर्विस्तीर्णा स्तुका स्तुतिर्यस्याः सा पृथुष्टुका तदात्मना वर्तमाना तस्याः सम्बुद्धिर्हे पृथुष्टुके हे महास्तुते त्वं गर्भं धारय । पुष्करस्रजौ स्वर्णकमलाभरणौ ॥२०॥ हिरण्मयी हिरण्मय्यौ ज्योतिर्मय्यौ अरणी प्रागबभूवतुरिति शेषः याभ्यामरणिभ्यां पुरा अमृतरूपं गर्भमश्विनौ निर्मन्थतां निर्मथितवन्तौ तं तथाभूतं गर्भं ते तव जठरे धारयामहे दशमे मासि प्रसोतुम् । इन्द्रेण सूर्येण । अन्ते भर्ता असावहमिति स्वात्मनो नाम गृह्णाति भार्याया वा ॥२१॥ एवं गर्भाधानेतिकर्तव्यताजातमुपदिश्यासन्नप्रसवायां भार्यायां कर्तव्यमुपदिशति । यथा वातः वायुः पुष्करिणीं तडागं समन्ततः सर्वतः इङ्गयति स्वरूपोपघातमकृत्वैव चालयति । एवा एवमेव । जरायुणा गर्भवेष्टनचर्मणा मांसपेशीरूपेण सह निर्गच्छतु । इन्द्रस्य प्राणस्य गर्भस्य वायं योन्यात्मको व्रजो मार्गः सर्गकाले गर्भाधानकाले सार्गडया निरोधेन सह वर्तमानः सार्गडः कृतः सम्पादितः सपरिश्रयः परिश्रयेण परिवेष्टनेन जरायुणा सहितः तं तथाभूतं मार्गं प्राप्य हे इन्द्र प्राण प्रसूतिमारुतात्म त्वं गर्भेण सह निर्जहि निर्गच्छ तन्निःसरणानन्तरं निर्गम्यमानमांसपेशी सावरशब्दवाच्या तं सावरं च निर्गमय ॥२२॥ पुत्रजनने सति तस्मिन्नेव दिने यत्कर्तव्यं तदाह । अङ्के उत्सङ्गे संस्थाप्य स्वगृह्योक्तमग्न्युपसमाधानादि कृत्वा कांस्यपात्रे दधिमिश्रितं घृतमवस्थाप्य पृषदाज्यस्योपघातं पृषदाज्यमुपहत्योपहत्य स्वल्पं गृहीत्वा जुहोति । अस्मिन्स्वगृहे अहमेव पुत्ररूपेण वर्धमानो मनुष्याणां सहस्रं पुष्यासमनेकपोषको भूयासम् । अस्य मत्पुत्रस्य उपसंद्यां (!) संततौ प्रजया पशुभिश्च सह श्रीर्मा विच्छिन्ना भूत् स्वाहेति होमः । मयि पितरि ये प्राणाः सन्ति तान्पुत्रे समर्पयामि स्वाहा इति प्रधानाहुतिद्वयम् तृतीयाहुति स्विष्टकृद्धोमः इति विवेकः ॥२३॥ तृतीयाहुतिमन्त्रमाह ॥२४॥ जातस्य शिशोरायुष्यकर्मोपदिशति । स्विष्टकृद्धोमानन्तरमस्य जातस्य शिशोरायुषे हितमायुष्यमायुर्वृद्धिकरं कर्म करोति । जातस्य शिशोर्दक्षिणं कर्णमभि अभिलक्ष्य पिता स्वमुखं निधाय तत्र विलक्षणा (त्रयील° ?) वाक्त्वयि प्रविशत्वित्यभिप्रायवान्वाग्वागिति त्रिवारं जपेत् । एवमायुष्यं कर्म कृत्वा नामधेयं कुर्यात् । वेदोऽनुभवः (अनु° Cod.) सर्वस्य निजं स्वरूपं परमात्मलक्षणमसि । गुह्यं गोप्यमेव स्यान्न तु लोकप्रसिद्धम् । दधि मधु घृतमेकीकृत्य अनन्तर्हितेन वस्त्वन्तराव्यवहितेन जातरूपेण हिरण्येन । भूरिति व्या[illegible]वेदं त्वयि दधामि धारयामि भुव इत्युपलक्षितं यजुर्वेदं स्वरिति सामवेदम् ॥२५॥ इदानीं जातं कुमारं पिता हृदि स्पृशति । अश्मेव पाषाण इव दृढः स्थिरश्च भव । परशुरिव वज्र इव यथा तेजःसंघो वज्रः पर्वतान्भिनत्ति त[illegible]रिन्द्रियादिभिश्च दृढः उदितः[illegible]च्छेदकश्च भव वज्रो वै परशुरिति श्रुतेः (३. ६. ४. १०.) यद्वा परशुः कुठारः सोऽपि लोहमयः । हिरण्यं सुवर्णं यथा अस्तृतम् (!) अच्युतमक्षीणं शुद्धं तेजोमयं तथा त्वमपि अस्तृतो (!) ऽच्युतोऽक्षीणः शुद्धस्तेजोमयश्च भव । आत्मा देहः सन्वै निश्चयेन पुत्रेतिसंज्ञामात्रेण भिन्नोऽसि न तु स्वरूपेण

॥२६॥ इडा भोग्यासि यद्वा इडापात्र्यसि यस्यां पुरोडाशो विभज्यते सा यद्वा इडा पृथिवीरूपा । किं च मैत्रावरुणी मित्रावरुणाभ्यां सम्भूता मैत्रावरुणो वसिष्ठस्तस्य भार्या मैत्रावरुणि अरुन्धतीत्यर्थः यद्वा मैत्रावरुणी ऋत्विग्विषयिणी यद्वा मित्रावरुणयोरुत्पन्ना । हे वीरे सम्भृतिके (न्नके Cod. 1. त्तिके 2.) त्वं वीरं पुत्रमजीजनथाः असौषीः ॥२७॥ अथानन्तरं स्वाङ्कस्थं पुत्रं तन्मात्रे प्रदाय तस्याः स्तनं पिता पुत्रस्य मुखे प्रयच्छति । हे सरस्वति यस्ते स्तनवह्निशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूप स्तनः शशयः शशयानस्तव देहे (ह Cod.) वर्तमानोऽन्येरुपभुक्तः (°रनुप° ?) सुप्त-इवास्ते इति शेषः । तं तादृशं सर्वप्राण्युपकारकं स्तनमिह मदीयभार्यास्तने प्रविष्टा सती (सति Cod.) धातवे पानाय अकः कुरु प्रयच्छ धातवऽइति धेट्र पाने ॥२८॥ एवं मन्त्रवद्गर्भाधानादिकर्मण्यनुष्ठिते सति किं स्यादित्यपेक्षायां महान्स्तुत्यः पुत्रो भवतीत्याह । बत विस्मये । पितरमतीत्य वर्तसऽइत्यतिपिता त्वमभूः ॥२९॥ इदानीं समस्तस्यापि वेदस्याध्यापकपरम्परामाह । पूर्वत्वद्विधाभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभाक्त्वेऽपि अस्य पृथक्त्वभावित्वमस्य (भागित्व° ?) खिलकाण्डत्वेन सर्ववेदशेषत्वात् तथा च समाप्तौ पठितो (°प्तपठीतो Cod.) ऽयं वंशः समस्तस्यैव प्रवचनस्य भवति न व्यवहितखिलकाण्डस्यैव । उक्तवेदार्थविज्ञानस्य साकल्येन प्रतिपत्त्यर्थं सर्वत्र प्रवचनसमाप्तौ वंशः कीर्तनीयः यतः सर्वज्ञानां (नांते Cod.) तेषां स्मरणे सति सम्यक् ज्ञानभानूदयो भवतीति । पुत्रमन्थकर्मणः स्त्रीसंस्कारार्थत्वेनोक्तत्वात्तत्संनिधानदयं वंश स्त्रीप्राधान्येनोच्यते ॥३०॥ आदित्येन सूर्येण प्रोक्तत्वादादित्यानि । वाजिशाखावच्छिन्नानां यजुषां सूर्येणोपदिष्टत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेषु प्रसिद्धम् । यद्वा आदित्यात्मत्वादादित्यानीति निरुपचरितेत्यर्थः (?) । आदित्यो हि वेदात्मा हिरण्यगर्भः प्रसिद्धः तत एव हिरण्यगर्भात्सम्प्रदायोक्ततदादिकान्सर्वानेव प्रति पारम्पर्येणागतोऽयं सम्प्रदाय इति युक्तं यजुषामादित्यत्वम् । कथम्भूतानि यजूंषि शुक्लानि शुद्धानि यद्वा ब्राह्मणेनामिश्रितमन्त्रात्मकानि ॥ ३३ ॥ ४ ॥ ९ ॥

इति श्रीविद्वज्जनतिलकद्विवेदश्रीनारायणसूनुना द्विवेदगङ्गेन विरचिता माध्यन्दिनारण्यकव्याख्या मुख्यार्थप्रकाशिका सम्पूर्णा ॥ ॥

## VARIOUS READINGS.

To Mr. Thomann of Zürich I am indebted for a collation of E. I. H. 309 (E) concerning several passages in the two first prapâ*t*hakas, and to my dear and learned friend Dr. W. Pertsch for a very minute collation of M., which beautiful ms. does however not exhibit the whole kâ*nd*a — as I have in the Preface (p. IX) erroneously stated — but contains only the B*r*ihad-Âra*n*yaka portion, beginning with the third prapâ*t*haka.

The accentuation of the B*r*ihad-Âra*n*yaka, especially in its three last adhyâyas, is in a very strange state and offers much cause of perplexity, the accentual signs being frequently either wholly wanting or strangely misplaced. The thorough coincidence of M. with A. (Chambers 15) in almost all these blunders leads me to suspect, that the fault is not exclusively that of the copists, but partly an original one, such as might be ascribed to the later addition of these last chapters to the more ancient body of the work. I feel authorized to this assumption by similar instances in the Pariçish*t*as to the several Vedasa*m*hitâs as well as in the Nirukti and (as I learn from Dr. Pertsch) in the Taittirîya-Âra*n*yaka, and moreover by the fact that the va*n*ças which are unquestionably of a late origin particularly abound in such blunders and mistakes (see already the va*n*ça at the end of the tenth kâ*nd*a p. ८२६.).

The reason of this strange circumstance may be sought for either in a less careful preservation of these portions before their becoming a canonical part of the holy text, or in a partial misapplication of the accentual

rules by their authors themselves. I should like to adopt at once both these views, as I have no doubt, that the codification as well as the composition of these portions reach in part down to a time, when the language of the Brâhmaṇas was no longer the spoken dialect of the people or even of the Brâhmans, but though in common use with the latter as their medium of disputations and literary pursuit still by them even was only learned by exercise and study.

In consequence of the constant fluctuation of these readings some of which bear the appearence of having been produced by a mingling of the different systems of denotation of the saṁhitâsvara and the brâhmaṇasvara I have generally thought myself authorized to remove all evident blunders from my text, yet carefully recording as follows all those anomalies from the common mode of accentuation as might be more than mere mistakes of the copists. The exceptions I have made occur in the vaṅças which I have given throughout in their original form — in some words which in the same passages are constantly accentuated in the same way, though differently from their usual accentuation, as for instance पाप वेद् — and finally in a few others which are also likely to have really fluctuated between different accents.

*Adhyâya* १. १. १ मखो A. — ६ विष्णुरुत्यौ A. — ११ मह्वान्मत A. मह्न्वत् E. — ibid. °त्सम्राट् A. — १२ बित्तिं A. sec. h. — २३ नावनुवद्वासि स A. — २५ ? °चेत्ययत्तडुवा° A. first h. °चेत्ययतत्तडुवा° sec. h. — २६ तपस्व्यवानुब्रवा A. — ३२ ता इसय्चो A. ताᳮ सरय्चो E. Read: ताᳮ सय्चो. — ibid. अतिदिशानीति A. — ३३ °तमभिप्रस्रावया A. — ibid. रात्रावस्नीया° A. — २. १ °नित्या चेत्याच्च A. — १० तदनयेनर्मेतत्स° A. — ११ वराह्नविह्नितं

A. E., but see कात्या° २६. १. ३. — ibid. स्योस्यां: पतिः A. — १२ वत A. — १५ ब्रह्मणस्पति°, प्रवर्ग्य° A. — १५ °कृयत्येव देवा A. — ibid. गोप्त्रे करोति A. first h. गोप्त्रेन्क° sec. h. — १९ यज्ञिरे A. — २१ अथेनांश्रूपयति A. — ibid. पवचमवधाय A. first h. — २३ क्लोमा लोका° A. Initial *l* after final *n* or *m* is in A. almost throughout doubled, and the nasal changed to anusvâra. The latter is very frequently dropped, but as it seems by mistake. — २४ °स्मिल्लोके A. — २६ This ka*n*d*i*kâ returns like a burthen at the end of all the following brâhma*n*as as far as the end of the third adhyâya. — ३. १ यद्ग वान्य° A. first h. यद्ग घान्य° sec. h. — २ आस्व A. आश्व E. — ४ सर्वं यत एष A., but see Mahîdhara at वाज° सं ३७. ११. — ६ स्थूणा निर्ल्लिख्य A. Final *m* standing before *n* or any other dental consonant is in A. usually changed into *n*, whereas final *n* in the same case is replaced by anusvâra (see p. 222). — ९ ऊर्जंनवेतमेतद्रसेन A. — १५. १६ The accent of आदीप्त is remarkable as in contradiction to the general rule. Are we perhaps to read उभयतआदीप्ता or उभयतआदीप्ता as a compound? — १६ प्रमुआदिति A. — २४ पितृतमकृत्रया वै A. For the sake of perspicuity I have supplied here (as well as at ३१. and २, १, ११. १४. ३५.) the *galitam* रसा व्यन्तरत्स. — २५ मनुमुकृ A. — ४. ४ and ५ The Pada reads गत at वाज° सं° ३७, १४. १५. — ९ गोप्त्र मनिपश्चमान° A. both times. — १३ माघवीभ्यामिति A. first hand, both times. —

*Adhyâya* २. १. २ स्वर्गंल्लोकाः A. — ३ तत्सादुपक्रोरात्राभ्यां परिगृहीत A. — १६ शफवांदते A. — २. १ इममत्त रक्षांश्सि A. — ibid. °तत्पुरेवाकृ°

A. — २ ?समुद्रवत्ति A. E. — २० अश्विना घर्म A. — २१ According to the Saṃhitâ (३८. १२.) the accentuation ought to be thus: ह्वार्द्वानमह्वर्दिवाभिद्रू°. — २१ प्राङ्विवोद्दु° A. — ibid. वृष वै धर्मो A. — ३४ The accent of प्रतिरतं is deserving notice. — ३५ and ३८ अकुर्वे° A. — ४५ आयुः प्रमायुको A. See आयुर्देवताः १३. ५. २. १०. — ४८ अपवर्ग्योज्य A. —

*Adhyâya* ३. १. ३ °न्यामुं क७ शुगा° A. — ११ यज्ञाश्हरी° A. — २२ वृषा पिन्वने A. — ibid. पश्चाद्रुषी A. E. — ibid. प्रवरणीयौ A. — २६ वार्षह्वर७ A. — २७ उपावति A. — २१ प्रसूते A. — ३१ सह ब्रह्मणा and सह पय° A. — ३३ °धर्युर्निक्रामति A. E. but see ११. २. ७. ३२. — २. ४ and ५ तत्सर्वा° — °मात्मा is wanting in A., supplied by conjecture, confirmed by E. — २८ and २१ यत्किं चि वि° A. — २१? माल्मया A. मार्त्सया E. मार्त्स्नया is my conjecture, see ६. १. ३. ४. — ibid. दृ७ is here paroxytonon! — २५ and २७-२१ यदधिश्रितं! A. —

*Adhyâya* ४. १. ९ Dvivedagaṅga (D.) derives असक्त from सञ्ज्, instead of सच्. — १७ स चन्द्रमभव° A. first h. — २० D. divides erroneously प्रतिप्रतिः into two words. — २. ७ सा गौरभवत् A. M. — २८ Read: यद्व ह वा. — २८ मीमा७सितं A. M. — ३. ७ प्रश७सा A. M. — १० क्वात्त-मायत्तेषा A. आत्तं seems indeed to be the reading also of D., still on account of the accent I prefer to read अत्तं. — १८-२० ज्योती रूप° A. M. The commentary treats these words as a compound, which seems to be demanded also by the sense, but is prohibited by the accent. — २६ अ-भुनजत् D. against the accent. — ibid. D. divides अन्नाद्यं कृतं into अन्नाद्या

अकृतं. — २७ तत्तंद्भवति AM. — ३३ अधिदेवतं D. (?). — ३४ मृत्युरासवदिति A. आप्नुवत् D. — ४. १ and २ बिभर्ति AM. —

*Adhyâya* ५. १. ३ and १५ पाण्डर॰ AM. पाण्डुर D. — ७ त्रिषासक्तिरिति A. — १५ द त्रियामुपेया॰ A. — १७ अन्तर्हृदयं D. (?!). — १८ यदा निगृह्णाति A. — १९ स्वप्नया D. — २. २ स्थूणा is here oxytonon, whereas at १. ३. ७. paroxytonon. — ६ भरद्वाज, जमदग्निरि॰, [illegible]॰ AM. Read: व-सिष्ठक॰. — ३. ५ अधिदेवतं D. (?). — ४. १ Are we to read उद्यास्यन्त्वा? — ४ व्याचक्षाणस्य AM. — ५ We expect मैत्रेय्यात्मना. — ७ भवति? — १० निःश्वसितं D. — ११ स्पर्श is here and ७. ३. १२. oxytonon, whereas paroxytonon at ६. २. ९. — ५. १५ समर्थिता A. — २० बैजवापा॰ R. (*) — ibid. वैष्टपुरे॰ A. — २१ ॰जवापा॰ R. — ibid. ॰जंघनेरौपजंघनि॰ R. — २२ विदर्भी-कौण्डि॰ A. — ibid. स्वयमू R. — ibid. ब्रह्मणे नमः AM. The coincidence of both these mss. in all the other strange accentuations of the vança as given in the text is a thorough one: this observation refers also to both the later vanças.

*Adhyâya* ६. १. ६ and ११ कतिभिरय॰ AM. — १० दीप्यतऽइव AM. — १२ व्यानः शस्या A. — २. २-४ गृहीतो unaccented AM. — ६ गृहीतस्त्वचा AM. — १४ वेत वेदि A. Read: ॰वेतस्य वेदि. — ibid. यद्रूचतुः unaccent.

*) For the three vanças I have made use of the Rishitarpana (R.) in Chambers 736 (see my Verzeichniss der Berliner Sanscrit-Handschriften nro. 206. p. 46.): though the accents are not given in the ms., the little work is still of some importance as confirming the readings themselves and moreover as showing the importance attached in later times to the vanças, whose recital is here forming even a part of the ritual, and the care taken by the Brâhmans to preserve them with their original readings.

AM. — ibid. पाप as parox. AM. see ७, १, १७. २२. २, ६. २७. — ३. १ काप्यस्य AM. — ibid. and २ पारिक्षिता unaccented throughout AM. — २ व्यष्टिर्वा° AM. — ibid. The accent shows द्विस्तावत् to be a compound. — ४. १ मृत्युमत्येत्येतं A. — ibid. तस्माद्ब्राह्मणाः पाण्डित्यं D. — ibid. मुनिर्° unacc. AM. — ५. १ समानिति AM. — ibid. न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं AM. — ६. १ प्रजापतिलोकेषु, प्रजापतिलोका AM. — ibid. We expect मूर्धा व्यपत°. — ७. १ काप्यस्य AM. — ४ °गवीरुदजसि AM. — ६ °कुर्व्यसंसिपता° AM. — ७ एष तऽआत्मा D. — ७-१५ °न्तर्याम्य° unacc. AM. — १७ वेद oxytonon AM., see ७, ३, ६. ७. and १, ४, १४. १५. — २६ यस्त्वचि तिष्ठन् AM. — ८. १ and १२ जातु parox. AM. (oxyt. २. २. २. २०.). — ३-७ यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते AM. — ५ We expect धारयस्वेति. — ८ °त्यस्थूलमनण्वह्रस्वमदीर्घम° AM. — ibid. °मभयम° parox. AM. see ७, २, ३०. ३१. — ibid. °मविवृतमसंवृत° AM. — ibid. न तद्श्नोति AM. — १० गार्गि acc. throughout AM. — ibid. ददाति AM. — ९. २० दिशो वेद AM. — २१-२४ हृदये क्वेव - - भव° AM. Read: भव°. — ibid. and २५ किंदेवत्ता AM. — २२ ऽस्यां दक्षिणायां AM. — ibid. इति दक्षिणम° AM. — ibid. क्वेव दक्षिणा AM. — २३ प्रतिरूपं AM. — ibid. सृष्टो parox.! — २५. २६ भवतीति ॥२५॥ अह्निर° AM. — २६ एनद् acc. AM. — २८ न हि गृह्यते - - न सज्यते (सज्जते A.) AM.: thus also at ११, ६ and ७, २, २७. — ibid. औपनिषदं AM. — २९ मा पृच्छय AM. D. पृच्छत is my conjecture. — ३० वृक्षो, ऽमृषा, पर्णाणि, वक्त्रिः AM. — ३१ त्वच उत्पटः AM. — ३२ and ३३ मज्जोपमा कृता ॥३२॥ यद्वृक्षो वृक्णो - पुनः AM. — ३४ मा वो-

चत, ज्ञात एव, ज्ञनयेत्पुनः, धानारुह्, प्रेत्य सम्भवः AM. — १०. १ कश्चिद्ब्रवीत्° A. — २ and ५. ८. ११. १४. १७. हि किं स्यादित्य° AM. — ३ प्राणा इवायतन° D. — ibid. प्रतिगृह्णात्यपि AM. — ibid. and ६. ९. १२. १५. १८. वै सम्राट् परमं AM. — ४ and ७. १०. १३. १६. १९. नाननुशिष्य AM. — १२ प्रतिष्ठानन्त इत्येनदुपासीत कानन्तता, गच्छत्यनन्ता हि दिशः AM. — १५ प्रतिष्ठानन्द इत्येनदुपासीत कानन्दता AM. — ibid. सम्राट् स्त्रियमभि° AM. Read: स्त्रियम° see १. ४. २. — १८°स्थिति oxyt.! — ११. १ सम्राएमन्द्वान्त° उक्तोपनिषत्क AM. — २ परोऽक्षेणेव A. — ३ सृति paroxyt.! — ६ भगवन्नभयं AM. —

*Adhyâya* ७. १ १ समेनेन वदिष्य AM. This wrong accentuation is proved as ancient by the interpretation स मेने न given by Çankara (and D.) which appears to be produced by it. — ibid. °ग्निहोत्रे समूदतु° AM. — २ किंज्योतिरयं AM. — ३-६ किंज्योतिरेवायं AM. — ६ शान्ते ग्नौ २ ान्तायां AM. — ७ लोकमतिक्रामति AM. — १० रथान्रथयोगान्पथः AM. — १२ शारीरमभिप्रहृत्यासुतः, पुनरैति, एकहंसः AM. — १३ कुलायं oyxt.! — ibid. बहिष्कुलायादमृत°, एकहंसः AM. — १४ स्त्रीभिः सह AM. — ibid. and २० भय parox.! — १५ आराममस्य पश्यन्ति, बोधयेदित्याहुर्दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते AM. — १८ अनुसंचरति पूर्वं चापरं च AM. — ५१ सह्ययैव AMD., see अहन्निक ६, १, २६. and the note at १. २. २३. — २० नील oxyton.! see ७. २. १२. — अतिछन्दोऽपहतपाप्माभयं रूप° AM. — ibid. भ्रूणहाभ्रूणहा पौल्कसोऽपौल्कसः श्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणस्त° AM. — २३-३० (and ३, १६-२३. where all the same blunders occur) ऽविनाशित्वान्न तु तद्विद्वंती° AM. — २३ यत्पश्येत्, २४ यज्जिघ्रेत्, २५ यद्रसयेत्, २६

यद्वदेत् AM. — २५ (३.१८.) यद्वै तन्न रसयति । विजानन्वै AM. — २६ (३.१९.) यद्वै तन्न वदति AM. — ibid. न हि च कुर्वतो विपरिलोपो A. first hand. न हि वक्तुर्वचो विपरि° A. sec. h. M. (and at ३.१९. AM.). I am at a loss to explain the वचो otherwise than by the assumption of its standing instead of वचसो. Perhaps also we are to read वक्तुर्वाचो? — २७ (३.२०.) यद्वै तन्न शृणोति AM. — २८ (३.२१.) यद्वै तन्न मनुते AM. — २९ (३.२२.) यद्वै तन्न स्पृशति । स्पृशन्वै तत्स्प्रष्टव्यं AM. — ३० (३.२३.) यद्वै तन्न विजानाति । विजानन्वै तद्विज्ञेयं न विजानाति AM. — ३१ भवति । एष ब्रह्मलोकः सम्राडिति हैनमनुशशास AM. — ३२ संपन्नतमः AM. — ३५-३९ श्रोत्रिय oxyt. or parox.! (instead of âdyudâtta). — ३८. ३९ प्रजापतिलोक AM. — ४१ उदरौत्सी° A. — ibid. उडुम्बरं acc.! — ४२ सुसमाहितम् AM. — ४३ (and ४४) उग्र acc.! — ibid. प्रतिकल्पन्तेऽयमायात्ययमागछतीति°, इदं ब्रह्मायातीदमागछतीति AM. — ४४ उपसमायन्त्येवं AM. — २. २ न विजानातीत्याहुः AM. — ३ प्राणमनूत्क्रामन्तं, संज्ञानमेवान्ववक्रामति स एष ज्ञः सविज्ञानो भवति AM. — ६ पृथ्वीमयः A. first hand. — ibid. यथाचारी तथा, पापकारी पापो, पापः पापेनेति AM. — ७ यथाक्रतुर्भवति यथाक्रतुर्भवति AM. — ८ तदेव सक्तस्सह, निषक्तमस्य, तस्माल्लोकात्पुनरैत्यस्मै, योऽकामो निष्काम न तस्मात्प्राणा AM. — १० °निर्ल्वयनी AM. D The original reading may have been निर्ल्वयनी, see Böhtlingk-Roth, Sanskrit-Wörterbuch sub अहिनि°. — ibid. °नस्थिकोऽशरीरः acc.! — ११ मयैव अपियन्ति AM. — १२ शुक्लमुत AM. — ibid. नील, पिङ्गल acc.! — १३ अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपा°, सम्भूत्यां रताः AM. — १४ असुर्या नाम ते लोकाः । अन्धेन तांस्ते

ऽपि ह्यापिग° AM. — १५ न चेद्वेदी महती विनष्टिः AM. see Kenopanishad २. १३. — ibid. °मृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति AM. — १६ स्मीति, कि-मिच्छन्कस्य A. — १७ यस्यानुवित्तः, विश्वकृत्स, स उ लोक एव A. — १९ तमेव मन्यऽआत्मानं विद्वान्ब्रह्मा° A. —. २० °पासते AM. — २१ प्राणस्य प्राणम् । । उत, °श्चनुरुत AM. — २२ मृत्युमाप्नोति, °दप्रमयं ध्रुवं A. — २३ महान् D. — ibid. नानुध्याया° AM. — २४ (and ८, ८, २) वशी acc.! — ibid. न साधुना. एवासाधुना AM. — २५ प्रव्राजिनो लोकमी° AM. — २६ न कामयन्ते किं प्र-जया करिष्यामो येषान्नो AM. — २७ साधसाधुनी AM. — २८ विजिघत्सोऽपि-पासो AM. — २९ न्नादो A. — ३० and ३१ महाव्रत, ऽमरोऽभयोऽमृतो ब्रह्मा-भयं AM. — ३. १ भार्ये acc.! — २ Are we to read °ज्ञास्यन्वा? — ५ प्रिया खलु नो भवती, वाचं तु मे व्याचक्षाणस्य A. — ६. ७ the accent of वेद (in १२ वेद as usually) seems to imply the later addition of the respective passage, which is moreover wanting at ५, ४, ५. ६. — ६ मैत्रेय्या° acc.! ibid. मते विज्ञात AM. — १३ सैन्धवघनो । अनन्तरो AM. — १६ ऽयमात्मानु° AM. — ibid. भवति acc.! — २४ तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्य-द्रसयेदन्योऽन्यदभिवदेदन्योऽन्यच्छृणुयादन्योऽन्न्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्य-द्विजानीयात् AM. — २५ मैत्रेय्ये° acc.! — २६ बैजवा° R. — ibid. वैष्टपुरे° A. वैष्टपुरे° MR. — २७ [illegible]° R. — ibid. °पञ्चवनेरौपञ्चवनिः साकायनात्सा-कायनः R., but °ञ्चधनेरौपञ्चधनिरासुरे° R. — २८ विदर्भीकौण्डि° A. — ibid स्वयम्भू R. — ibid. ब्रह्मणे नमः AM. —

*Adhyâya* ८. १. १ °मिदं पूर्णात्पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशि-ष्यत AM. — ibid. ओ ओम् । M. — ibid. पुराणं वायुरं AM., which rea-

ding is to be restituted in the text. — २. २-४ इति व्यज्ञासिष्टा३इति व्य-ज्ञासिष्मेति, होवाच व्यज्ञासिष्टेति AM. — २ होचुर्दाम्यतेति AM. — ३ and ४ °स्मुवाच द इति AM. — ४ दाम्यत दत्त दयध्वमिति AM. — ibid. शिक्षेद्दम acc.! — ३. १ वायुरनिलम° AM. — ibid. ओ३म् क्रतो स्मर AM. — ibid. क्लबे A. क्लिबे MD. — ४. १ तदेतत्त्र्यक्षरꣳ AM. — ५. १ लोकाञ्जितः AM. Read: लोकाञ्जित. — ६. २ तदेतत्त्र्यक्षरꣳ AM. — ४ and ५ अक्षरे स्वरिति AM. — ७. १ °दानाद्विद्युद्विद्यत्ये° AM. — ८. १ वशी acc.! — ९. १ स्वधाकार acc.! — ibid. ऋषभो मनो वत्सः AM. — १०. १ यदिदमश्नुते A. — ११. १ प्रेत acc.! — १२. १ दुन्दुभि acc.! — ibid. शश्वतीः समाः AM. — १३. १ भूत्वा परमतां गच्छतः AM. — २ भूत्वा परमतां गच्छतीति AM. — ३ वीत्यन्नं वै व्यन्ने, विशन्ते AM. — १४. १ उक्थ throughout D. — ४ क्षणीतो acc.! — १५. ४ एतदेव तुरीयं A. Read: एतदेव। तुरीयं. — ibid. तत्तुरीयं A. — ५ °स्मिंस्तुरीये A. — ७ सा हैषा गयांस्तत्रे AM. — ८ न हैव तद्गायत्र्या एकं चन पदं प्रति AM. — ९ यावदिदं प्राणि AM. — ibid. एतदेव तुरीयं A. Read: एतदेव तुरीयं. — ibid. नैव केन चनाप्यं कुत उ एतावत्प्रतिगृह्णीयात् AM. — १० गायत्र्यस्यैकपदी AM. — ibid. तुरीयाय A. Read: तुरीयाय. — ११ माश्वतराश्विमु° AM. — ibid. तद्गायत्रीविदब्रूथा, मुखꣳ ह्यस्याः सम्राण्न विदां AM. —

*Adhyâya* ६. १. १ स भो३इति AM. The accented syllable preceding a pluta generally retains its accentual sign in the mss. — °शिष्टो न्वसि AM. — २ प्रज्ञाः। प्रयत्यो, प्रयद्भिर्न संपूर्यता३ AM. संपूर्यते D. — ३ यतिथ acc.! — ibid. पुरुषवाचो AM. — ibid. देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा, पितृयाणं वा AM. — ४ अपि हि न ऋषेर्वचः

AM. न is taken by D. (and Çankara) erroneously and against the accent for नः, see सप्तऋषि, एकऋषि. — ibid. °त्समेति, चेति नाकुमत AM. — ५ वसति° acc.! — ibid. कुमारः A. — ibid. वाव किल नो भवान्पुरा AM. — ibid. अवोचः acc.! — °पूर्प्राह्मीत्ततो नेकं, इतीमऽइति ह AM. — ibid. प्रतीकान्यु° acc.! — ६ नस्त्वं तात, तत्तुभ्यमवो°, भवानेव AM. — ७ गौतमः। M. — गौतमो। A. — ८ गौतमाय, यां तु कुमारस्या° वाचमभाषथा° AM.— १० विज्ञायते ह्यास्ति, भवान्व°ो° AM. — D. divides अभ्यवदान्य into two words अभि and अव°. — ibid. स घै गौतम AM. The reply of the king beginning with स not with गौतम, this latter ist left unaccented. — ibid. इत्युपैम्यहं, वाचा ह AM. — ११ गौतम मापराधास्तवं च पितामहा यथेयं विद्येतः पूर्वं न, तां त्वहं तुभ्यं वक्ष्यामि को हि AM. — १२ देवाः श्रद्धां जुह्वति AM. — १३ धूमो विद्युदर्चिरशु° AM. — ibid. सोमं (म A.) जुह्वति AM. सोमं राजानं जुह्वति D. — १४-१७ जुह्वति AM. — १७ धूमोऽर्चिरर्चिरङ्गारा AM. — १८ य चामी (वामी A.) अरण्ये AM. — ibid. °र्चिरभिसम्भवन्त्यर्चिषो A. — ibid. मासेभ्यो देवलोकं AM. — १९ धूमाद्रात्रिं रात्रेरप°, मासेभ्यः पितृलोकं तेषां यदा तत्पर्यवैत्यथे°, वायोर्वृष्टिं वृष्टेः, एवमेवानुपरिवर्तन्तेऽथ AM. — २. °त्यपि च येषां वुभूषति AM. — यो ह वै प्रतिष्ठां वेद, चक्षुषा हि समे AM — ६ यो ह वै प्रजापतिं वेद A. — ७ आह्वश्रेयसे A. — ibid. पापीयो मन्यते AM. — ८ °यथा कडा अवदन्तो वाचा, पश्यन्तश्चक्षुषा AM. — ibid. and ९-१ °वमजीविष्मेति AM. — ९ °यथान्धा अपश्यन्त°, वदन्तो वाचा AM. — १० °यथा वधिरा अशृण्वन्तः AM. — ibid. and ११-१२ वाचा पश्यन्तश्चक्षुषा AM. — १ °यथा मुग्धा अविद्वांसो AM. — १२ °यथा क्लीबा [illegible]मानाः AM. — १

पड्वीशशङ्कूत्संवृह्णेदेवछ, न वै शक्यामस्व° AM. — १४ अहं वसिष्ठास्मि त्वं तद्वसिष्ठो, सम्पदस्मि, °यतनमस्मि AM. — ibid. अहं प्रजापतिरस्मि त्वत्प्रजापति° A. — ibid. आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्ते AM. — १५ तदनमनग्नं कुर्वन्तो मन्यन्ते, तदनमनग्नं कुरुते AM. — ३. १ °मामापन्ने पुण्याह्ने (!) द्वादशाह्न(!)मुपसद्वती मूलेदुम्बरे, पुछसा, मन्थछ(!) संनीय AM. — २ जातवेदः, तृप्ताः कामैस्तर्पयन्तु AM. — ३ या तिरश्ची निपद्यतेऽहं (अहं M.) विधरणी इति AM. The want of sandhi at the last two words is deserving notice. — ibid. तृतीयां जुहोति AM. — ४ ज्येष्ठाय स्वाहा श्रेष्ठाय, प्रतिष्ठायै AM. — ibid. and ५-८ मन्थे acc.! — ६ ज्वलत् to संदीप्तम् acc.! AM. — ibid. संवर्गोऽसीति AM. — १० °स्यामछ हि ते मयि स हि राजेशानोऽधिपतिः स मा राजेशानी AM. — १२ नक्तमुतोषसो AM. — १३ पाणी AM. — १४ प्रातरादित्यमुपतिष्ठते दिशामेक° AM. — ibid. यथेतम् acc.! — १५-२० °न्तेवासिन (सिभ्य २०) प्ररोहेयुः AM. — ibid. पलाश acc.! — ibid. The accent of the names is printed in the form given by AM.: याज्ञवल्क्य here and ४. ३३ instead of याज्ञवल्क्य! — १६ Read: °रायस्थूणाः. — २१ औदुम्बरश्चमस औदुम्बरः स्रुव औदुम्बर इध्म औदुम्बर्या AM. — २२ व्रीहियवास्तिलमाषा अणुप्रियङ्गवो acc.! — ibid. दध्ना मधुना घृतेनोपरि स्वत्याज्यस्य जु° AM. — ४. १ पृथिव्या आपो AM. — ibid. पुष्प acc.! — २ स स्त्रियछ ससृजे तस्मात्स्त्रियमध उपासीत AM. — ३ वेदिरूपस्थो लोमानि, समिद्धो, °मविद्वानधोपहासं चरत्यास्य स्त्रियः AM. — ४ इदमविद्वाछसो (सो M.) ऽधोपहासं AM. — ५ यन्मेऽद्य रेतः, °धीस्ययसस्यदपः, पुनर्मामैत्विन्द्रियं, धिष्ण्या, °न्तामित्यनामिकाङ्गुष्ठाभ्या°, स्तनौ वा भ्रुवौ AM. — ६ सुकृतमिति AM. — ७ एषा स्त्रीणां यन्म°, पाणिना वोपहत्यातिक्रामेदिन्द्रियेण AM. —

८-१० (and २०) अर्थं, मुखेन मुखं AM. — ८ संधायोपस्थमस्या, °यादधिज्ञायसे स [illegible] ऽसि AM. — ९ (is left out in A, but merely by chance, as the numeration of the kaṇḍikâs shows) दधीतेति, संधायाभिप्राण्यापान्यादिन्द्रियेण M. — १० दधीतेति, सं[...]थापान्याभिप्राण्यादिन्द्रियेण AM. — ११ ज्ञायेये ज्ञाः स्यात् AM. — ibid. मम समिद्धेऽहौषी° AM. throughout. — ibid. य[illegible]: A. यमेवंविद्वाह्मणा D. — १२ [...]पामार्त°, कांसे न [illegible]वासा नैनां वृषलो न वृषल्युप°, व्रीहीनवघातयेत् AM. — १३-१७ पुत्रो मे (दुहिता मे in १६), [...]चयित्वा, °मश्नीयातामीश्वरौ जनयितवै AM. — १३ वेदमनुब्रुवीत AM. — ibid. क्षीरौदन acc.! — १४ जायेत द्वौ वेदावनुब्रुवीत AM. — ibid. दध्यौदनं D.? — १५ त्रीन्वेदाननुब्रु° AM. — १७ शुश्रूषितां acc.! — ibid. जायेत सर्वान्वेदाननुब्रु° AM. — ibid. औक्षा acc.! — १८ स्थालीपाकावृतांऽयं चेष्टित्वा स्थालीपाकस्यो°, स्वाऽनुमतये, पाणी ऽउदपात्रं पूरयित्वा, °ष्ठातो विश्वावसोऽन्यामिच्छ AM. — १९ °मभिपद्यते । अमो (अमो M.) ऽहमस्मि सा त्वं, सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्, तावेहि, सह रेतो दधावहै पुंसे पुत्राय वित्तयऽइति AM. — ibid. Read दधावहै. — २० ऊरू विहापयति AM.— ibid. [illegible]नु° D. — ibid. °योनिं कल्पयतु, पिंशतु, °धाता गर्भं, सिनीवालि, पृथुष्टुके, देवावाधत्तां AM. — २१ देवौ, दधामहे दशमे, पृथिवी, गर्भिणी, [...]र्दिशां यथा गर्भ एवं गर्भं दधामि AM. — २२ [...]भ्यन्तीमद्भिरभ्युक्षति, पुष्करिणीं समीङ्गयति (°मीङ्ग° A), एवा ते, सहावैतु, [...]श्रयः AM. — २३ कांसे, पुष्यास° AM. — ibid. [illegible] D. — ibid. मा हिंसी° (हिंसी° M.), मयि प्राणांस्त्वयि AM. — २४ °मणात्य[...]चम् । यद्वा न्यूनमिहाकरम् AM. — २५ आपुष्यं acc.! — ibid. नामधेयं करोति, °स्य[...] त्वमेव नाम स्या°, दधामि स्वस्त्यथि

AM. — २६ ह्रिरण्यमश्रुतं A., °स्नूतं D., °श्रुतं M. and Pâraskara १.१६. — ibid. आत्मा वै पुत्रनामासि AM. — २७ मैत्रावरुणी, वीरमजीजनथाः, वीरवती भव या° AM. — २८ मात्रे, स्तनं (स्तनं M first hand) AM. — परमां बत (वत A) काष्ठां प्राप, पुत्रो जायतऽइति AM. — ३० वाडेयीपुत्राद्वा° A. बाडेयीपुत्राद्वा° R. — ३१ वालाक्या A. बालाक्या R. — ibid. वौधीपुत्राद्वौ° A. बौधीपुत्राद्वौ° R. — ३२°लंवी°, °लंवा° A. °लंबी°, °लंबा° R. — ibid. जायतीपुत्रा-ज्जायती° A. जायंतीपुत्राज्जायंती° R. — ibid. माण्डुकीपुत्रान्माण्डुकीपु॰ R. — ३३ आसुरीवासिनः R. — ibid. वाध्यो° A. बाध्यौ° R. — ibid. °विर्वाचो! AM. Read °विर्वाचो. — ibid. यज्ञवल्क्ये नाख्यायन्ते AM. —